THE

# KASHI SANSKRIT SERIES

( *HARIDĀS SANSKRIT GRANTHAMĀLĀ* )

## NO. 105.

(Veda Section, No. 6)

THE

# TANDYAMAHĀBRĀHMAṆA

BELONGING TO The SĀMA VEDA

WITH THE COMMENTARY OF

SĀYĀṆACHĀRYA

*Edited with Notes, Introduction, etc.,*

By

VEDAVISĀRADA, MĪMĀṂSĀKESARI,

*Pandit. A. Chinnaswami S'astri*

AND

Pandit PATTĀBHĪRĀMA S'ĀSTRĪ "Mimāmsāchārya"

Professors, Benares Hindu University.

( **Part II** )

PUBLISHED & SOLD BY

JAYA KRISHNADAS—HARIDAS GUPTA,

*The Chowkhamba Sanskrit Series Office,*

*BENARES.*

1936.

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़पुस्तकमालायाः
१०५
वेदविभागे ( ६ ) षष्ठं पुष्पम् ।

सामवेदीय-

# ताण्ड्यमहाब्राह्मणम् ।

## सायणाचार्यविरचितभाष्यसहितम् ।

श्रीकाशीहिन्दूविश्वविद्यालयप्रधानमीमांसाध्यापकेन
"वेदविशारदेन, मीमांसाकेसरिणा"
पण्डितप्रवरेण श्रीचिन्नस्वामिशास्त्रिणा
मीमांसाचार्येण पं० पट्टाभिरामशास्त्रिणा च
भूमिकाटिप्पण्यादिभिस्संयोज्य संशोधितम् ।

( द्वितीयो भागः )

प्रकाशकः—
जयकृष्णदास हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज़ आफिस,
बनारस सिटी ।

वि० सं० १९९३

* श्रीः *

# पुरस्तान्निवेदनं किञ्चित् ॥

इदमिदानीं ताण्ड्यमहाब्राह्मणाख्यं सामवेदीयं ब्राह्मणं पुनः प्रकाशपथमानीयतेऽध्येतृगणसौकर्याय मुद्राप्य । तदिदं बह्वोः प्रागनेहसः ( षट्षष्ठिवर्षेभ्यः पूर्वं ) कलिकातानगरतो भारतीयसमितेः ( Asiatic Society ) लम्भितप्रकाशमपीदानीं नोपलब्धिगोचरीभवति तदन्वेषिणो मनीषिमण्डलस्य । तत्कष्टपरिजिहीर्षुरयं विद्याविलासमुद्रणालयाधिपः श्रीमान् **जयकृष्णदासगुप्तमहोदयः** प्राचीनग्रन्थोद्धरणेऽनवरतं बद्धोत्साहः एतन्मुद्रणे प्रवृत्तः कियन्ति चन पृष्ठान्यन्यतस्संशोधयंस्तेनाऽनवाप्तात्मतृप्तिरग्रे मां न्ययूयुजदेतत्संशोधने । अहमपि ऊरीकृततदभ्यर्थनोऽप्यध्यापनाद्यनेककार्यव्यापृतोऽशक्नुवन्नेककः कार्यमिदं निर्वोढुमात्मसमेन मत्प्रियशिष्येण **पं० पट्टाभिरामशास्त्रिणा** मीमांसाचार्येण विहितनैकविधसाहाय्योऽपूरयमिदानीमस्य संशोधनकार्यम् । संशोधनकार्ये पुस्तकानीमान्युपयोजितानि—

( १ ) कलिकातानगरे मुद्रितमेकं सभाष्यम् ।

( २ ) मद्रपुरस्थाड्यार् (Adyar Library, Madras) पुस्तकालयात् प्राप्तमपरमसमग्रं सभाष्यं ग्रन्थाक्षरेषु लिखितं तालपत्रात्मकम् ।

( ३ ) बडोदाराजधानीस्थ गाइक्वाड पुस्तकालयाल्लब्धं तादृशमेव ग्रन्थाक्षरलिखितं सभाष्यं तालपत्रात्मकमसमग्रं तृतीयम् ।

एवं भाष्यपुस्तकत्रयमवलम्ब्य संशोधनं निरवर्तिषि । तत्र द्वितीयतृतीययोरादर्शपुस्तकयोरेकोनविंशाध्याये समाप्तत्वेन तदुत्तरभाष्यग्रन्थसंशोधने सामग्र्यन्तरालाभेन स्वबुद्धिरेव शरणीकरणीयाऽऽसीत् । मूलग्रन्थस्तु—

( १ ) लवपुरीय D. A. V. पुस्तकालयतो लब्धं देवनागरीलिप्यां लिखितमेकम्,

( २ ) तादृशमेव तत एव लब्धमपरं,

( ३ ) काश्यामेव कस्यचन पण्डितस्य सकाशाल्लब्धं पूर्वोक्तसदृशमेव तृतीयम्,

पूर्वनिर्दिष्टभाष्यपुस्तकत्रयमिति पुस्तकषट्कमाश्रित्य संशोधितः । पूर्वसंस्करणापेक्षयेदं संस्करणं मन्ये छन्दोगानामधीतिनामवश्यं कञ्चनोपकारविशेषमादध्यादिति । छन्दोगा हि इतरब्राह्मणग्रन्थापेक्षयाऽत्रैव ग्रन्थे सविशेषामीरयन्ति दृष्टिम् ।

## ब्राह्मणभागस्याऽष्टविधत्वम् ।

तेषां ह्यष्टौ ब्राह्मणग्रन्थाः—(१) ताण्ड्यब्राह्मणम् (२) षड्विंशब्राह्मणम् (३)सामविधानब्राह्मणम् (४) आर्षेयब्राह्मणम् । (५) दैवतब्राह्मणम् (६) छान्दोग्यो-

पनिषत् (७) संहितोपनिषत् (८) वंशब्राह्मणञ्चेति । उक्तं हि सायणाचार्यैरेव दैवतब्राह्मणादिभाष्यारम्भे—

> अष्टौ हि ब्राह्मणग्रन्थाः प्रौढं ब्राह्मणमादिमम् ।
> षड्विंशाख्यं तृतीयं स्यात् ततस्सामविधिर्भवेत् ॥
> आर्षेयं देवताध्यायो भवेदुपनिषत्ततः ।
> संहितोपनिषद्वंशो ग्रन्था अष्टावुदीरिताः ॥ इति ।

इतरब्राह्मणग्रन्थानपेक्ष्य बृहत्वात् निखिलसोमयागतदङ्गस्तोत्रादिविधायकत्वाच्चाऽस्यैव प्राधान्यमध्यवसीयते । अत एवाऽऽदिमत्वमस्य । बृहत्वाच्च प्रौढं ब्राह्मणमित्यप्यभिधीयते ।

## नाम्नः प्रवृत्तिनिमित्तम् ।

ताण्डिर्नाम कश्चिदृषिरासीत्सामवेदाचार्यः । तेनेदं दृष्टं ब्राह्मणमिति ताण्डिब्राह्मणं, ताण्ड्यमहाब्राह्मणमित्यादिना व्यपदिश्यते । अत्र च पञ्चविंशतिरध्यायाः । तेन कारणेन पञ्चविंशतिब्राह्मणमित्यपि व्यपदिश्यते । भाष्यग्रन्थेष्वेवाऽस्याऽध्यायव्यपदेशो दृश्यते । मूलपुस्तकेषु तु प्रपाठकव्यपदेश एव । एकं प्रपाठकपञ्चकमवलम्ब्यैका पञ्चिकेत्यपि व्यवहारो यथैतरेयब्राह्मणे । एवञ्च पञ्चपञ्चिकात्मकमिदं ताण्ड्यमहाब्राह्मणम् । एतच्छेषभूतान्येवाऽन्यानि ब्राह्मणानि षड्विंशादीनि ।

## प्रतिपाद्यविषयाः ।

अत्रैव ह्यग्निष्टोमसंस्थाकं ज्योतिष्टोममारभ्य सहस्रसंवत्सरपर्यन्तास्सोमयागा अनुक्रमेण विहिताः । तदङ्गभूतानि यानि सामवेदीयान्यङ्गानि, स्तोत्राणि, तद्गतसंख्याविशेषाः स्तोमाः, तेषां विष्टुतिप्रकारः, स्तोमभागाश्चेत्यादीनि तान्यपि विहितानि । तत्र प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रम् । 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यात्' ( तै. सं. ३. १. २ ) इति विधिना तत्तद्ग्रहचमसादिपात्रेषु तत्तद्देवताभ्यः सोमरसे गृहीत्वा स्थापिते अनन्तरं सदोनामकमण्डपे औदुम्बर्याख्यस्थूणासमीपे उपविष्टैरुद्गातृप्रस्तोतृप्रतिहर्त्राख्यैस्त्रिभिर्ऋत्विग्भिः सामविशिष्टाभिर्ऋग्भिः क्रियमाणस्स्तुतिविशेषः स्तोत्रपदाभिधेयः । तेषां च स्तोत्राणां 'एकं साम तृचे क्रियते स्तोत्रीयम्' इति विधिबलात् तिसृषु ऋक्षु एकं साम गातव्यं भवति । तत्र ये संख्याविशेषा उक्तास्ते स्तोमपदवाच्याः । ते च संख्याविशेषाः त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंशः, त्रिणवः, त्रयस्त्रिंशः, चतुर्विंशः, चतुश्चत्वारिंशः, अष्टाचत्वारिंशः इति नव प्रकाराः । इमे एव प्रकारास्तत्तत्क्रतुषु क्वचिदभ्यस्ताः क्वचिदनभ्यस्ताश्च तत्तद्विध्यनुसारं क्रियेरन् । त्रिवृत् इति नवसंख्या, त्रिणवः सप्तविंशतिः, अन्यत् सर्वं सुगमम् ।

## स्तोमप्रकारः ।

इयं च संख्या ( या यत्र विहिता तत्र सा ) वारत्रयमावृत्ताभिस्तिसृभिर्ऋग्भिस्सम्पादनीया । तद्यथा—माध्यन्दिनपवमानाख्यमेकं स्तोत्रम् । तत् तिसृषु ऋक्षु पञ्चदश

वारमावृत्या गातव्यम् । तत्र प्रथमे पर्याये–प्रथमामृचं त्रिः, द्वितीयातृतीये सकृत्सकृच्च गायेत् । द्वितीये पर्याये–तामेव प्रथमामृचं सकृत्, द्वितीयां त्रिः, तृतीयां सकृच्च गायेत् । तृतीये पर्याये प्रथमाद्वितीये सकृत्, तृतीयां च त्रिर्गायेत् । एवं पञ्चदशसंख्या सम्पद्यते । अयमेकः प्रकारः । एवं नवप्रकारेषु स्तोमेषु मिलित्वा (२८) अष्टाविंशतिसंख्याका विष्टुतयस्सन्ति । एते सर्वेऽपि प्रकारा अत्र ताण्ड्यब्राह्मणे विहिताः । तेषां च यथागानं गणनार्थं गानकाले कुशानिक्षेपो गायद्भिरेवर्त्विग्भिः कर्तव्यतया सूत्रकारैर्विहितः । अत्र तीक्ष्णाग्रः प्रादेशमात्र उदुम्बरवृक्षीयः एकत्र तष्टः काष्ठविशेषो लघुकायः कुशाशब्दवाच्यः । तासु तासु विष्टुतिषु विभिन्नप्रकारतया कुशा निक्षेपणीयाः । तन्निक्षेपणप्रकारश्च याज्ञिकाचारपरम्परासिद्धः विदुषामधीतिनां च सुखावबोधार्थमुपरितनचित्रेण प्रकाश्यते । तत्र त्रिवृत्स्तोमविष्टुतौ सत्यपि प्रकारत्रये कुशानिक्षेपप्रकारे भेदाभावादेक एव प्रकारः प्रदर्शितश्चित्रे । अन्यस्तोमविष्टुतिषु च यथायथं सर्वे प्रकाराः प्रदर्श्यन्ते—

**त्रिवृत्स्तोमस्य विष्टुतिः—**

<table>
<tr><th></th><th>१.</th><th>२.</th><th>३.</th></tr>
<tr><td>तृ. प.</td><td>—</td><td>—</td><td>—</td></tr>
<tr><td>द्वि. प.</td><td>|</td><td>|</td><td>|</td></tr>
<tr><td>प्र. प.</td><td>—</td><td>—</td><td>—</td></tr>
</table>

**पञ्चदशस्तोमस्य तिस्रो विष्टुतयः–**

(१) पञ्चपञ्चिनी—

<table>
<tr><td>तृ. प.</td><td>—</td><td>—</td><td>≡</td></tr>
<tr><td>द्वि. प.</td><td>|</td><td>|||</td><td>|</td></tr>
<tr><td>प्र. प.</td><td>≡</td><td>—</td><td>—</td></tr>
</table>

(२) अपरा विष्टुतिः—

<table>
<tr><td>तृ. प.</td><td>—</td><td>≡</td><td>≡</td></tr>
<tr><td>द्वि. प.</td><td>|</td><td>|</td><td>|</td></tr>
<tr><td>प्र. प.</td><td>≡</td><td>—</td><td>—</td></tr>
</table>

(३) उद्यती—

<table>
<tr><th></th><th>१.</th><th>२.</th><th>३.</th></tr>
<tr><td>तृ. प.</td><td>≡</td><td>—</td><td>≡</td></tr>
<tr><td>द्वि. प.</td><td>|</td><td>|||</td><td>|</td></tr>
<tr><td>प्र. प.</td><td>—</td><td>—</td><td>—</td></tr>
</table>

**सप्तदशस्तोमस्य सप्त विष्टुतयः–**

(१) दशसप्ता—

<table>
<tr><td>तृ. प.</td><td>—</td><td>≡</td><td>≡</td></tr>
<tr><td>द्वि. प.</td><td>|</td><td>|||</td><td>|</td></tr>
<tr><td>प्र. प.</td><td>≡</td><td>—</td><td>—</td></tr>
</table>

(२) अस्याएवाऽन्यः प्रकारः—

<table>
<tr><td>तृ. प.</td><td>≡</td><td>|</td><td>≡</td></tr>
<tr><td>द्वि. प.</td><td>|</td><td>|||</td><td>|</td></tr>
<tr><td>प्र. प.</td><td>≡</td><td>—</td><td>—</td></tr>
</table>

---

तृ. प. तृतीयः पर्यायः । द्वि. प. द्वितीयः पर्यायः । प्र. प. प्रथमः पर्यायः ।

१. प्रथमा ऋक्; २. द्वितीया ऋक्, ३. तृतीया ऋक्. प्रथमे पर्याये तिरश्चीनाः द्वितीये अनूचीनाः, पुनस्तृतीये तिरश्चीनाश्च कुशा निक्षेपणीयाः ।

(३) सप्तास्थिता:—

१. २. ३.

तृ. प. — ≡ ≡

द्वि. प. | | |

प्र. प. ≡ ≡ —

(४) अन्यः प्रकारः—

तृ. प. ≡ — ≡

द्वि. प. | | |

प्र. प. ≡ — ≡

(५) अन्यः प्रकारः—

तृ. प. ≡ ≡ ≡

द्वि. प. | | |

प्र. प. ≡ — —

(६) अन्यः प्रकारः—

तृ. प. ≡ ≡ ≡

द्वि. प. | ||| |

प्र. प. — — —

(७) मध्याख्या—

तृ. प. — — ≡

द्वि. प. | ||| |

प्र. प. ≡ ≡ —

## एकविंशस्तोमस्य चतस्रो विष्टुतयः—

(१) सप्तसप्तिनी—

१. २. ३.

तृ. प. ≡ — ≡

द्वि. प. | ||| |||

प्र. प. ≡ ≡ —

(२) उद्यती—

तृ. प. ≡ ≡ ≡

द्वि. प. | ||| |||

प्र. प. ≡ — —

(३) प्रतिष्ठुतिः—

तृ. प. ≡ — ≡

द्वि. प. | ||| |

प्र. प. ≡ ≡ ≡

(४) सूर्म्यो—

तृ. प. ≡ ≡ ≡

द्वि. प. | | |

प्र. प. ≡ ≡ ≡

---

तृ. प. तृतीयः पर्यायः । द्वि. प. द्वितीयः पर्यायः । प्र. प. प्रथमः पर्यायः ।
१. प्रथमा ऋक्, २. द्वितीया ऋक्, ३. तृतीया ऋक्.

## त्रिणवस्तोमस्य द्वे विष्टुती—

(१) प्रतिष्ठिता—

१. २. ३.

तृ. प. ————— — ———

द्वि. प. | ||| |||||

प्र. प. ——— ————— —

(२) उद्यती—

तृ. प. ————— ——— ———

द्वि. प. | ||| |||||

प्र. प. ——— ——— —

## त्रयस्त्रिंशस्तोमस्य पञ्च विष्टुतयः—

(१) समत्र्यंशा—

तृ. प. ——————— — ———

द्वि. प. | ||| |||||||

प्र. प. ——— ——————— —

(२) नेदीयस्सङ्क्रमा—

तृ. प. ————— ——— ———

द्वि. प. ||| ||| |||||

प्र. प. ——— ————— ———

(३) उद्यती—

१. २. ३.

तृ. प. ——————— ||| |||

द्वि. प. | ||| |||||||

प्र. प. ——— ————— —

(४) प्रत्यवरोहिणी—

तृ. प. ——— ——— ———

द्वि. प. ||||| ||| |||

प्र. प. ——— ————— —————

(५) अन्या विष्टुतिः—

तृ. प. ——— — ———

द्वि. प. ||||| ||| |||

प्र. प. ——— ——————— —————

## चतुर्विंशस्तोमस्यैका विष्टुतिः—

(१) प्रतिष्ठिता—

तृ. प. ———— — |||

द्वि. प. | ||| ||||

प्र. प. ——— ———— —

---

तृ. प. तृतीयः पर्यायः । द्वि. प. द्वितीयः पर्यायः । प्र. प. प्रथमः पर्यायः ।
१. प्रथमा ऋक् , २. द्वितीया ऋक् , ३. तृतीया ऋक् .

## चतुश्चत्वारिंशस्तोमस्य तिस्रो विष्टुतयः—

(१) प्रतिष्ठिता—

| | १. | २. | ३. |
|---|---|---|---|
| तृ. प. | ≡≡≡≡ | — | ≡ |
| द्वि. प. | \| | \|\|\| | \|\|\|\|\|\|\|\|\|\| |
| प्र. प. | ≡ | ≡≡≡≡ | — |

(२) निर्मध्या—

| | | | |
|---|---|---|---|
| तृ. प. | ≡≡≡≡ | — | ≡ |
| द्वि. प. | \| | \|\|\| | \|\|\|\|\|\|\|\|\|\| |
| प्र. प. | ≡ | ≡≡≡≡ | — |

(३) तृतीया—

| | | | |
|---|---|---|---|
| तृ. प. | ≡≡≡≡ | — | ≡ |
| द्वि. प. | \| | \|\|\| | \|\|\|\|\|\|\|\|\|\| |
| प्र. प. | ≡ | ≡≡≡≡ | — |

## अष्टाचत्वारिंशस्य द्वे विष्टुती—

(१) प्रथमा—

| | १. | २. | ३. |
|---|---|---|---|
| तृ. प. | ≡≡≡≡ | — | ≡ |
| द्वि. प. | \| | \|\|\| | \|\|\|\|\|\|\|\|\|\| |
| प्र. प. | ≡ | ≡≡≡≡ | — |

(२) नेदीयस्संक्रमा—

| | | | |
|---|---|---|---|
| तृ. प. | ≡≡≡≡ | ≡ | ≡ |
| द्वि. प. | \|\|\| | \|\|\| | \|\|\|\|\|\|\|\|\|\| |
| प्र. प. | ≡ | ≡≡≡≡ | ≡ |

आहत्य नवप्रकारेष्वपि स्तोमेषु अष्टाविंशतिर्विष्टुतयः ॥

---

तृ. प. तृतीयः पर्यायः । द्वि. प. द्वितीयः पर्यायः । प्र. प. प्रथमः पर्यायः ।
१. प्रथमा ऋक्, २. द्वितीया ऋक्, ३. तृतीया ऋक्,

एवं चाऽत्र ब्राह्मणे उद्गातृगणकर्तव्या एव पदार्था अनुक्रान्ताः, न तु होतृगणकर्तव्या आध्वर्यवा वा। युक्तं चैतत्। वेदत्रयसम्बन्धिभिरङ्गैस्सहितो हि सोमयागोऽनुष्ठीयते। तत्र यजुर्वेदेन याजुषाण्यङ्गानि अध्वर्युगणकर्तव्यानि दीक्षा, सोमक्रयण, वेदिनिर्माण, दीक्षणीयाप्रायणीयादीष्टि, प्रवर्ग्योपसद, ग्नीषोमीयादिपशुयाग, सोमाभिषव, ग्रहचमसादिग्रहण, तदङ्गमन्त्रपाठ, होमादीनि यजुर्वेदेन, विधीयन्ते। *याज्यापुरोनुवाक्यादीनि आज्य, प्रउग, निष्केवल्य, मरुत्वतीयप्रभृतीनि शस्त्राणि, तदङ्गभूतानि प्रतिगरादीनि च ऋग्वेदेन विधीयन्ते। तत्र तत्तत्कार्योपयुक्ता मन्त्रास्तत्तन्मन्त्रभागेषु पठ्यन्ते। ते च ते च विधयस्तत्तद्ब्राह्मणभागेषु पठ्यन्ते। तत्र सामवेदोक्तक्रियाकलापानुष्ठातारश्चत्वार ऋत्विजः (क)उद्गातारः इति उद्गातृगण इति वोच्यन्ते। यजुर्वेदविहितकर्मकलापानुष्ठा-

---

* तत्तद्देवतामुद्दिश्य तत्तद्धविषां त्याग एव याग इत्युच्यते। तादृशहविस्त्यागप्रकार इत्थम्—अध्वर्युः जुह्वादिपात्रे हविर्गृहीत्वा होतारमवलोक्य तमाज्ञापयति—'अग्नयेऽनुब्रूही'ति, अग्नये अनुवाक्यां पठ इत्यर्थः। अनुवाक्या ऋक्, प्रैषमनुवचनादनुवाक्येति संज्ञाशब्दोऽयम्। तेन तद्देवतायामृचि पठितायां ततः आग्नीध्रनामकमृत्विजं ब्रूयात्—'आश्रावये'ति। मयेदानीं हविः प्रदातुमिष्यते, तत् अग्नये श्रावयेत्यर्थः। एतच्छ्रुत्वा स प्रतिब्रूयात्—'अस्तु श्रौषडि'ति। अस्तु इत्यङ्गीकारे, श्रावयामीत्यर्थः। श्रौषट् इति श्रावणप्रकारः। अनन्तरं अध्वर्युः 'यज' इति होतारं वदेत्। हे! होतः प्रकृतदेवताकां याज्यां पठ इति तदर्थः। ततो होता तामृचं पठित्वा तदन्ते वषट्कारमपि 'वौषट्' 'वषट्' इत्यादिकं पठेत्। ततोऽध्वर्युः स्वहस्तस्थितं हविरग्नौ प्रक्षिपेत्। तत्समकालमेव यजमानः तत्तद्देवतोद्देश्यकत्यागप्रतिपादकं वाक्यमुच्चारयेत् स्वस्वत्वनिवृत्तिबोधकं च, यथा—'इदमग्नये न मम' 'अग्नय इदं न मम' इत्यादि। इदं अग्नौ प्रक्षिप्यमाणं हविः अग्नये भवतु। न मम मदीयस्सम्बन्धो योऽत्राऽऽसीत् इतः परं स नेति तदर्थः। अयमेव प्रकार औत्सर्गिकः इष्टिषु। पशुसोमयागेषु तु मैत्रावरुण इति होतुरनन्तर ऋत्विक् पुरोनुवाक्यां पठेत्। अनन्तरं च होता याज्यां पठेदिति विशेषः। गानमन्तरा त्रैस्वर्यं विहाय चैकस्वर्येणर्चां पाठपूर्वकं क्रियमाणः देवतास्तुतिविशेषः शस्त्रमित्युच्यते। होत्रा शस्त्रे पठ्यमाने तत्पुरतस्स्थितेनाऽध्वर्युणा तत्प्रोत्साहनार्थं पठ्यमानः 'ओथामो देव' 'मदामोद इव' इत्यादिश्शब्दराशिः प्रतिगर इत्युच्यते। अत्र च प्रकारभेदा उक्तास्तत्तत्सूत्रेषु।

| | | | |
|---|---|---|---|
| (क) १ उद्गाता | १ अध्वर्युः | १ होता | १ ब्रह्मा |
| २ प्रस्तोता | २ प्रतिप्रस्थाता | २ मैत्रावरुणः | २ ब्राह्मणाच्छंसी |
| ३ प्रतिहर्ता | ३ नेष्टा | ३ अच्छावाकः | ३ आग्नीध्रः |
| ४ सुब्रह्मण्यः | ४ उन्नेता | ४ ग्रावस्तुत् | ४ पोता |
| इत्युद्गातृगणः। | इत्यध्वर्युगणः। | इति होतृगणः। | इति ब्रह्मगणः। |

तारः अध्वर्यव इति अध्वर्युगण इति वोच्यन्ते । होतृगण इति होतार इति वा ऋग्वेद-विहितकर्मानुष्ठातारः कथ्यन्ते । कर्मस्वेतेषु बह्वङ्गकलापविस्तृतेषु न्यूनातिरेकतायास्सम्भावितया तदभावाय निरीक्षितारस्सन्ति केचन ये ब्रह्माणः ब्रह्मगण इति वोच्यन्ते । ते च वेदत्रयकुशला निरीक्षणपटवश्च भवेयुः ।

एवमेभिष्षोडशभिर्ऋत्विग्भिर्मिलितैरेककाले कर्तव्यतया विहितस्सोमयागः । तादृशा एव सोमयागा ब्राह्मणेऽत्र निरूपिता बहवः । तेषां स्वरूपमग्रे विवरिष्यते । तत्सुखग्रहणाय ततः पूर्वमिदमत्र कर्मणां प्रत्यक्षवेदविहितानां स्वरूपं किञ्चिदिव निरूपयामः ।

## वेदोक्तकर्मणां चातुर्विध्यम् ।

वेदेषु तावच्चतुःप्रकाराणि कर्माणि विहितानि-(१) दर्विहोमाः (२) इष्टयः (३) पशुयागाः (४) सोमयागाश्चेति । तत्र प्रतिदिनं सायम्प्रातःकालयोः दध्ना, पयसा, तण्डुलैः, एवमादिभिर्वाऽन्यैर्विहितैर्द्रव्यैः क्रियमाणोऽग्निहोत्रसंज्ञको होमः, एतादृशाश्चाऽन्ये होमविशेषाः केचन दर्विहोमपदवाच्याः । ते च होमपदेनैव व्यपदेशमर्हन्ति, नेष्टिपदेन यागपदेन वा ।

एवं प्रत्यमावास्यं प्रतिपौर्णमासं वा चरुपुरोडाशादिभिः तत्र तत्र विहितैर्द्रव्यविशेषैः क्रियमाणा यागविशेषा इष्टय इत्युच्यन्ते । इमा यागपदेनाऽपि व्यपदेशमर्हन्ति । अल्पकालसाध्यत्वात्तु प्रायेणेष्टिपदेनैव व्यपदेशः ।

एवं प्रतिवर्षर्तु अन्येषु वा कालेषु तत्तत्फलोद्देशेन पशोर्हृदयादिभिरङ्गैरनुष्ठीयमाना यागाः पशुयागाः ।

एवं प्रतिवसन्तमन्यदा वा तेषु तेषु फलेष्वभिलषितेषु तत्सिद्धये सोमाख्यां लतां क्रयेणाऽधिगम्य तामभिषुत्य ग्रहचमसादिषु तदर्थविहितपात्रेषु तं रसं पूरयित्वा ततस्तत्तद्देवताभ्यो दानं सोमयाग इत्युच्यते । सर्वेऽपीमे होमा यागाश्च सदारेणाऽऽहिताग्निनैव त्रैवर्णिकेन कर्तव्यानि न निरग्निना । अतस्तदर्थं गार्हपत्यदक्षिणाग्न्याहवनीयरूपास्त्रयोऽग्नयस्सम्पादनीयाः । तदर्थं च यत् कर्म तदग्न्याधानमित्युच्यते । तच्च पूर्वोक्तक्रतुचतुष्टय्या भिन्नम् । तेन चाऽग्न्याधेयेन कर्मणा सम्पादिता एवाऽग्नयो† यज्ञकर्मसूपयुज्यन्ते । तदपि च येन पुरुषेणाऽऽधानं कृतं तस्मा एव ते, नाऽन्यस्मै । नाऽन्यकृताधानसिद्धेष्वग्निषु अन्यो यागादिकमनुष्ठातुमर्हति । तत्राऽऽधानप्रभृति यावज्जीवं गार्हपत्यो धार्यः । दक्षिणाग्न्याहवनीयौ तु तत्तत्कर्मकाले गार्हपत्यादुद्धृत्य तत्तदायतने स्थापनीयौ । यदर्थमुपात्तौ समाप्ते तस्मिन् कर्मणि तत्रैवाऽऽयतनयोः स्वयमेव शाम्यतः । अथ वा ततो गृहीत्वा लौकिककार्ये उपयोक्तुं शक्येते, न यज्ञेषु ।

---

† यद्यपि सभ्यावसथ्ययोरप्यग्न्योराधानसम्पाद्यत्वमुक्तम्, तथाऽपि न तयोर्यज्ञकर्मण्युपयोगः । सभायां योग्यः सभ्यः । आवसथं गृहमर्हतीत्यावसथ्यः । अतश्चाऽग्नित्रयसाध्यत्वमेव यज्ञकर्मणाम् । तत्राऽपि नित्यधार्यत्वं गार्हपत्यस्यैवेति ध्येयम् ।।

एवं नित्यं धार्यमाणस्य गार्हपत्यस्य केनाऽपि निमित्तेन नाशे तदानीमेवाऽग्न्य-नुगतप्रायश्चित्तं कृत्वा पुनर्गार्हपत्य उत्पादनीयः । बहुकालपर्यन्तमग्निविच्छित्तौ सत्यां पुनराधानविधिना स निष्पादयितव्यः ।

एतावत्प्रकाराण्येव वेदे तत्तदधिकारिभिरनुष्ठेयत्वेन विहितानि कर्माणि । एतेषामेव च विकृतिभूता बहवो यागा एतेषामेव विस्तृतानि रूपाणि ।

## यागानां प्रकृतिविकृतिभावः ।

तत्र—इष्टिसदृशा इष्टीनां विकृतयः । पशुयागसदृशाः पशुयागानां विकृतयः । सोमयागसदृशास्सोमयागानां विकृतयः । सादृश्यञ्च क्वचित् द्रव्यघटितत्वेन, क्वचिद्देवताघटितत्वेन, क्वचिच्च देवतावाचिपदनिष्ठाक्षरसाम्यादिनाऽवगन्तव्यम् ।

## प्रकृतिविकृतिलक्षणम् ।

यस्य कर्मणस्सन्निधौ तदपेक्षितानुष्ठेयाङ्गानामखिलानामपि विधानं तत् कर्म प्रकृतिशब्देनोच्यते । यस्य कर्मणस्समीपे वैशेषिकाण्येवाऽङ्गानि विहितानि, सामान्याङ्गानि तु पूर्वनिरूपितसादृश्यादिना तत्प्रकृतिं निश्चित्य तत एवाऽऽनेतव्यानि भवन्ति सा विकृतिः । 'यत्र हि समग्राङ्गोपदेशस्सा प्रकृतिः' 'यत्र हि अन्यत अङ्गानामानयनं सा विकृतिः' इति हि तयोर्लक्षणं सामान्यतः कथयन्ति न्यायविदः ।

## कर्मणां प्रकृतिविकृतिभावविभागः ।

तत्र कर्मणां सामान्यतः प्रकृतिविकृतिभावविभाग इत्थम्—सर्वासामिष्टीनां प्रकृतिभूते दर्शपूर्णमासेष्टी अग्नीषोमीयपशुयागस्य च । सर्वेषां पशुयागानां प्रकृतिभूतोऽग्नीषोमीयपशुयागः । सर्वेषां सोमयागानां प्रकृतिभूतो ज्योतिष्टोमोऽग्निष्टोमसंस्थाकस्सोमयागः । अयञ्च सामान्यनियमः । विशिष्टसादृश्यादिना तु तत्र तत्र प्रकृतिविकृतिभाव आपस्तम्बादिभिर्महर्षिभिर्जैमिन्यादिभिश्चोक्त उपपादितश्चेति तत एवाऽवगन्तव्यम् ।

## इष्ट्यादीनामङ्गाङ्गिभावः ।

इष्टीनामन्येष्ट्यङ्गत्वं, पशुयागाङ्गत्वं सोमयागाङ्गत्वं च भवति । पशुयागानां सोमयागाङ्गत्वमेव, नेष्ट्यङ्गत्वं न वा पशुयागान्तराङ्गत्वम् । सोमयागा अपि सोमयागान्तराङ्गानि भवन्ति, नेष्ट्यङ्गानि, न वा पश्वङ्गानीति मन्तव्यम् ।

## तत्तत्कर्मणां तत्तद्वेदविहितत्वम् ।

तत्राऽग्निहोत्रं याजुर्वेदिकं यजुर्वेदविहिताङ्गकलापविशिष्टं सदनुष्ठीयते । न तत्र ऋग्वेदसामवेदयोरुपयोगोऽस्ति । दर्शपूर्णमासादीष्टयः पशुयागाश्च ऋग्वेदयजुर्वेदाभ्याम् । तत्र-ग्वेदेन याज्यापुरोनुवाक्यासामिधेनीप्रैषादयस्समर्प्यन्ते । तदनुरोधेन ते क्रियन्ते । अन्यान्यङ्गानि शाखाच्छेदन, हविर्निर्वाप, अवघात, प्रोक्षण, पेषण, पुरोडाशश्रपण, प्रयाजा,

नुयाजादिक्रियाकलापास्सर्वे यजुर्वेदेन विधीयन्ते । एवं पशुयागेऽपि यूपच्छेदनादि उपाकरणादिक्रियासमूहो यजुर्वेदेन । याज्यादयस्तु ऋग्वेदेन । सोमयागस्तु ऋक्साम-यजुर्वेदैस्त्रिभिरपि । उक्तं चाऽऽपस्तम्बेन—"यज्ञं व्याख्यास्यामः । स त्रिभिर्वेदैर्विधीयते ऋग्वेदयजुर्वेदसामवेदैः । ऋग्वेदयजुर्वेदाभ्यां दर्शपूर्णमासौ । यजुर्वेदेनाऽग्निहोत्रम् । सर्वैरग्निष्टोमः" ( आप० प० १. १–७ ) इति

## कर्मणां नित्यत्वादिविवेकः ।

एतानि कर्माणि त्रिधा विभक्तानि नित्यनैमित्तिककाम्यभेदेन । तत्र तत्तन्नियतकालेषु अवश्यकर्तव्यान्यकरणे प्रत्यवायजनकतया च कथितानि नित्यानि । क्वचिन्निमित्त-सम्पाते तदानीमेवाऽवश्यानुष्ठेयतया विहितानि नैमित्तिकानि । तत्तत्फलप्राप्त्यर्थमनुष्ठेयानि काम्यानि । तत्र नित्येषु नैमित्तिकेषु चाऽवश्यानुष्ठेयता अकरणे प्रत्यवायजनकता च, काम्येषु तु कर्मसु सत्यां फलेच्छायां कर्तव्यता, असत्यां तु न । अतो न तत्राऽवश्य-कर्तव्यता, न वाऽकरणे प्रत्यवायजनकतेति विवेकः । यद्यपि वस्तुतो विवेचने नित्यनैमित्तिकयोरुभयोरपि नैमित्तिकत्व एव पर्यवसानम् , उभयोरपि निमित्ते सत्येव कर्तव्यतया विधानात्, तथाऽपि यत्र निमित्तप्राप्तिर्नियता तत् नित्यं, यत्र तु सा अनियता तन्नैमित्तिकमिति शास्त्रीयो व्यवहारः ।

## त्रय्या उद्देशः, प्रमाणत्वञ्च ।

एतादृशामेतेषामुच्चावचानां कर्मणां विधानमेव वेदत्रय्या मुख्यमुद्देश्यम्, तदर्थमेव चेयं प्रवृत्ता, तेनैव चाऽस्याः प्रमाणत्वमपि । प्रमाणान्तरानवगताबाधितार्थबोधकत्वं हि प्रमाणलक्षणं प्रामाणिकाः कथयन्ति । यदि चेयं तादृमेवाऽर्थमवबोधयेत्, तर्ह्येव प्रमाणपद-वीमर्हेदारोढुम् । अन्यथाऽस्या लौकिकप्रमाणसिद्धवस्तूपपादकत्वे वैज्ञानिकपदार्थप्रतिपाद-नपरत्वे वाऽऽख्यायिकामात्रपर्यवसायित्वे वाऽऽनर्थक्यमप्रमाणता चाऽऽपद्येत । अभिषिक्ता चेयमार्यैस्त्रयीविद्भिरास्माकीनैः प्राचीनैः प्रमाणकोटिप्रथमस्थाने । सति चैवं आधुनिकाः केचन तत्तादृशेऽतिकर्कशे पथि विविधविद्यामर्मसर्वस्वसमभिलाषिणि पदनिक्षेपणेनाऽऽत्मानं क्लेशयितुमनिच्छन्तोऽपारयन्तो वा, तृणाग्रचर्विणां पल्लवग्राहिणां वा केषां चन लौकिकानां मनःपरितोषणमेवाऽऽत्मीयविद्यापरिपोषणं मन्वनाः तदनुचितमध्वानमन्विष्यन्तो वेदेषु नैकविधान् वैज्ञानिकप्रभृतीन् वादान् तत आविर्भावयन्तस्तेनैवाऽऽत्मानं धन्यं मन्यन्ते, आत्मविद्याञ्च कृतार्थयन्ति प्राचीनार्यमहर्षिमार्गगामिनश्च विचारचातुरी-विहीनान् विगतधिषणान् वा विचिन्तयन्तीति नैतच्चित्रमिदानीं निरर्गलस्वच्छन्दप्रवृत्ति-मति कलिहतककलुषिते कालेऽस्मिन् ।

## ऋग्वेदयजुर्वेदयोर्गवामयनान्तपरत्वम् ।

अस्तु, प्रकृतमनुसरामः । एवं कर्मस्वरूपतदङ्गविधानप्रवृत्तेष्वपि वेदेषु ऋग्वेदयजु-र्वेदयोरग्निहोत्रमिष्टयः पशवश्च विविधा इति तिस्र एव विधा विशेषतो विहिताः । ज्यो-

तिष्टोम(१)श्चतुस्संस्थः, वाजपेयः, राजसूयः, अश्वमेधः, द्वादशाहः, गवामयनञ्चेत्येतावन्त एव सोमयागा विहिताः । तथा हि—सत्स्वप्यास्माकीनपूर्वपुरुषाद्दतेषु बहुषु प्रमाणेषु तत्तद्वेदानामनेकशाखोपबृंहितत्वबोधकेषु इदानीमुपलभ्यमाना द्वित्रा एव शाखाग्रन्था एकैकस्मिन् वेदे दृश्यन्ते। ऋग्वेदे ऐतरेयब्राह्मणं, शाङ्खायनब्राह्मणं( कौषीतकिब्राह्मणं )चेति द्वे एव । संहिता त्वेकैव शाकलीया । यजुर्वेदे—तैत्तिरीयशाखा, कठशाखा, मैत्रायणीयशाखा, कपिष्ठलशाखा चेति शाखाचतुष्टयं कृष्णयजुर्वेदे । काण्वशाखा माध्यन्दिनशाखेति द्वे शुक्लयजुर्वेदे । तत्र कृष्णयजुर्वेदीयासु शाखासु चतसृष्वपि मन्त्रभागो ब्राह्मणभागश्च परस्परं संश्लिष्टावेव । शुक्लयजुर्वेदे तु ते पृथक्भूते । माध्यन्दिनसंहिता, माध्यन्दिनीयं शतपथब्राह्मणम् , काण्वसंहिता काण्वशतपथब्राह्मणमिति व्यपदिश्यन्ते च ते भागाः । परन्तु शाखयोरनयोः मन्त्रभागे ब्राह्मणभागे वा सूक्ष्मात् सूक्ष्मतमः पारस्परिको भेदः ।

तत्र सर्वास्वपि याजुर्वैदिकशाखासु दर्शपूर्णमासादीष्टयः, अग्न्याधानम् , अग्निहोत्रम् , पुनराधानम् , आग्रयणं, चातुर्मास्यानि, काम्या इष्टयः, काम्याः पशवः, सौत्रामणी, अग्निचयनम् , तद्भेदाः, (२)सप्त सोमसंस्थाः, राजसूयः, अन्त्येष्टिः, पुरुषमेधो, ऽश्वमेधो, गवामयनं चेत्येतावन्त्येव कर्माणि, तदङ्गभूतान् याज्यापुरोनुवाक्यादींश्च पदार्थान् विदधत्यामनन्ति च । तत्र त्वयं विशेषः—तैत्तिरीयशाखामेकां विहायाऽन्या याजुष्यश्शाखाः पूर्वोक्तेष्वेव कर्मसु पर्यवसन्नाः । तैत्तिरीयशाखा परमितोऽप्यधिकमग्रे किञ्चिदिवाऽऽत्मानं व्यापारयति । तत्र हि सावित्र,नाचिकेत, वैश्वसृजा, रुणकेतुकप्रभृतयः क्षुद्रचयनविशेषाः, सवाः, नक्षत्रेष्टयः, एकाहाः, केचनाऽहीनाः, सत्राणि द्वादशाहप्रभृत्येकोनपञ्चाशद्रात्रपर्यन्तानि, सहस्रसंवत्सरसत्रं च विधीयन्ते । समासेन कथने यजुर्वेदस्सप्तहविर्यज्ञाः , सप्त सोमसंस्थाः, केचन सोमयागविशेषाः इत्यत्रैव पर्यवस्यति, नोपरितनीषूत्तरततिषु प्रवर्तते । प्रायेणाऽमुमेवाऽनुधावतः पन्थानमुभे अपि बह्वृचब्राह्मणे इदानीमुपलभ्यमाने । यद्यप्यनुपलभ्यमानासु प्रतिपाद्यविषयविषये नेदन्ता निर्णेतुं पार्यते, तथाऽपि सामान्यतो दृष्टेनाऽनुमानेनेदमभ्यूहितुं शक्यते कुशलैरनुमातृ-

---

( १ ) अग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रश्चेति चतस्रस्सोमसंस्थाः । संस्था नाम क्रतूपरमः । यस्मिन् साम्नि क्रतुस्समाप्यते स तत्संस्थाकः कथ्यते । यथा—अग्निष्टोम इति कस्यचित् सामविशेषस्य नाम । तत् अन्तिमं साम यस्मिन् सोमयागे, अर्थात् तदेवाऽन्ते गेयतया विहितम्, ततो न सामान्तरस्य गानं तस्मिन् यागे । सा समाप्तिरग्निष्टोमाख्ये साम्नि क्रियमाणाऽग्निष्टोमसंस्थेत्युच्यते । तद्विशिष्टः क्रतुरग्निष्टोमसंस्थाकः, एवमुक्थ्यसंस्थाकः, षोडशिसंस्थाकः, अतिरात्रसंस्थाकः इति व्यवह्रियन्ते क्रतवः । एवं संस्थापदं विहायाऽपि अग्निष्टोमः उक्थ्यः इत्यपि व्यवहारो भवत्येतेषाम् ।

( २ ) अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रः, वाजपेयः, अप्तोर्यामः, इति सोमसंस्थाः । इमाः पूर्वततय इत्युच्यन्ते ।

भिः—एषैव रीतिरनुसृता भवेत्ताभिरपि तत्तद्वेदीयाभिरिति। न चाऽयमस्ति मनस्समाधेरवकाशो–यद्द्वादशाहाख्यस्य सत्रस्याऽहीनस्य वा विधानात् तस्यैव चोत्तरक्रतुततेः प्रकृतित्वात् तद्गतानां पदार्थानामानुलोम्येन प्रातिलोम्येन वा कयाचिद्विधयाऽनुष्ठानात् तदतिरिक्तस्याऽनधिगतस्य नवीनतयाऽधिगन्तव्यस्य कस्यचिदभावात् तेनैव गतार्थाऽधिगतार्थो वोत्तरक्रतुततिरिति। यतो हि प्रमाणान्तराविषयेषु पुरुषबुध्यगोचरेषु वैदैकसमधिगम्येषूच्चावचेषु कर्मस्वरूपेषु नैकविधेषु अपुरुषतन्त्रं विधिं विना तत्स्वरूपावगतिः, तदनुष्ठाने निश्शङ्कप्रवृत्तिर्वा न कदाऽपि केषाञ्चिदपि भवेत्। अन्यथा तत्तत्प्रकृतिभूतान्, एकामिष्टिं, एकं पशुयागं, एकं सोमयागं च विधाय तावतैव विरमन्त्यामपि भगवत्यां श्रुतौ तत्तद्विकृतिभूतान् विविधानपि क्रतुगणान् स्वमनीषाबलेनैव प्रकल्प्याऽनुष्ठातुं प्रभवन्त्येव मनीषिणः इति किमर्थं तद्विधानायेयान् प्रयास आश्रितस्त्वयेति पर्यनुयोगस्य किमन्यदुचितमुत्तरं भवेत्? अत उत्तरेषामपि क्रतूनां यदि ज्ञापनमभिलषितं, ततो विधानमावश्यकमेवेत्यभ्युपगन्तव्यम्। अतश्च सत्यामपि विधेरावश्यकतायां यदा तत्र तूष्णींभावः, तदा नूनमवगम्यते उभयीषाममूषां शाखानामत्रैव विरमणमभिप्रेतमिति। तत्रेतरशाखापेक्षया यत् किञ्चिदिवाऽग्रे गतं तैत्तिरीयशाखया, तदनन्तरगतया द्वितीयविवरणपत्रिकया स्पष्टं ज्ञातुं शक्यते। तत्र संहितायां काण्डषट्के नाऽस्ति वक्तव्यो विशेषः। सप्तमे परं योऽस्ति सोमयागविषये स एव तत्र पत्रिकायां प्रदर्श्यते।

## सामवेदे प्रतिपाद्या विषयाः।

सामवेदे त्विष्टिपशुचातुर्मास्यादीनि सर्वथोपेक्ष्य कर्माणि सोमयागानामेव बहूनां बहुविधानां विधानमुपलभ्यते। तत्र शाखासहस्रसम्मिततया प्रथमाने सामवेदे इदानीमुपलभ्यमानास्तिस्र एव शाखाः कौथुमी राणायनीया जैमिनीया (तलवकारीया) चेति। तत्राऽपि कौथुमशाखैव विशेषतो वितता जगति। इतरे तूभे अत्यल्पेषु पुरुषेषु परं विश्रान्ता। तत्र ताण्ड्यब्राह्मणमिदं कौथुमशाखीयम्। अत्रैवाऽग्निष्टोममुखास्सहस्रसम्वत्सरान्तास्सोमयागास्सर्वेऽपि विहिताः। यद्यप्यन्यदस्ति तलवकारशाखीयं जैमिनीयं ब्राह्मणं, तथाऽप्यद्ययावदस्मच्छ्रवणगोचरमात्रे व्यवतिष्ठते। अतो यावदामूलाग्रं तस्याऽनवलोकनं तावन्न तद्विषये किञ्चित् वर्णयितुमीश्महे।

## षड्विंशब्राह्मणविषयाः।

यच्च द्वितीयं षड्विंशब्राह्मणं "षड्विंशाख्यं द्वितीयं स्यात्" इत्युक्तं, तत् अस्यैव ताण्ड्यब्राह्मणस्यांऽशभूतम्। अत एव तस्य "ताण्ड्यशेषः" इत्यप्यपरं नाम। भाष्यकारोऽपि च "अथाऽस्मिन् ताण्ड्यशेषब्राह्मणे" इत्येव भाष्यमवतारयति। ताण्ड्योक्तानामेव केषांचित् कर्मणां भेदादिकं अनुक्तानां चाऽल्पीयसां कर्मणां स्वरूपं चैतेषामेवाऽत्र

प्रतिपादनात् । तत्र विधीयमाना अपूर्वतया ( ताण्ड्येऽविहिताः ) यागाः पञ्चैव येषां नामान्यधस्तादुल्लिख्यन्ते—

| | | | | | | |
|---|---|---|---|---|---|---|
| १ श्येनयागः | ( अभिचारफलकः ) | प्रपा० | ३ | खं० | ८ |
| २ इषुः | ” | ” | ३ | ” | ९ |
| ३ संदंशः | ” | ” | ३ | ” | १० |
| ४ वज्रः | ” | ” | ३ | ” | ११ |
| ५ वैश्वदेवाख्यं त्रयोदशरात्रं सत्रम् | | ” | ३ | ” | १२ |

अतः परं सायं प्रातस्सन्ध्यानुष्ठानं, अद्भुतशान्तिश्च प्रपाठकद्वयेनोक्ते । एतावत्येव षड्विंशब्राह्मणीया कथा ।

## कात्यायनापस्तम्बीययोः श्रौतसूत्रयोरेतदवलम्बित्वमेवोत्सरततिषु ।

इदमेव ताण्ड्यमहाब्राह्मणमवलम्ब्यते स्म प्राधान्येन कात्यायनापस्तम्बाभ्यां महर्षिभ्यां स्वश्रौतसूत्र एकाहादिसहस्रसंवत्सरान्तानां क्रतूनां स्वरूपविवरणायेति प्रतीयते करतलामलकवत् । यतः कात्यायनेनाऽन्यूनानतिरिक्तमिदंब्राह्मणोक्ताः क्रमास्संख्याश्च यथायथमादृताः क्वचित् क्वचिदतिसूक्ष्मं भेदं विहाय । आपस्तम्बेन तु तैत्तिरीयशाखोक्तान् प्रथमतोऽभिधाय तत्रानुक्तविषय इदमीय एव क्रम आश्रितः संख्या च ।

इदन्त्विह किञ्चिद्वक्तव्यम्—महर्षिरापस्तम्ब उत्तरततिविधानप्रस्तावे ब्राह्मणत्रयमुदाहरति–ताण्डकम्, शाट्यायनकम्, भाल्लविकं चेति । ( आप० श्रौ० सू० २१. १६. ५, १४. २१. १६. ४, १८. २१. १६. १५. ) परं तदीयाऽऽनुपूर्वी तदर्थो वा न ताण्ड्ये उपलभ्यते । शाट्यायनकादिकं तु नाम्नैव परमवशिष्टं न तत्र विचारणीयमस्ति ।

एवमन्यत्राऽपि 'इति छन्दोगब्राह्मणं भवति' ( आ० श्रौ० १०, १, ३, ३५, ) इति यदुल्लिखितं तदप्यत्र नोपलभ्यते । परं तु नामनिर्देशमन्तरा बहूनि वाक्यान्युद्धृतानि महर्षिणाऽऽपस्तम्बेन ताण्ड्यतस्स्वसूत्रे । तेषु कानि चन स्थलान्यधस्तादुद्ध्रियन्ते । संख्यातश्च तत्रत्यानि वाक्यान्यवलोकनीयानि—

| आपस्तम्बश्रौतसूत्रे | | | ताण्ड्यब्राह्मणे | | |
|---|---|---|---|---|---|
| प्रपा. | कं. | सू. | अध्या. | खं | ब्रा. |
| १०. | १. | ४. | १. | १. | १. |
| १०. | १. | ५. | १. | १. | ४. |
| १०. | १. | ६. | १. | १. | २,३. |
| १०. | १. | ५. | १. | १. | ४. |

| आपस्तम्बश्रौतसूत्रे | | | ताण्ड्यब्राह्मणे | | |
|---|---|---|---|---|---|
| प्रपा. | कं | सू. | अध्या | खं | ब्रा. |
| २२. | २२. | ९. | २२. | ३. | १. |
| २२. | २२. | १४. | २२. | ४. | १. |
| २२. | २२. | १८. | २२. | ६. | १ |
| २२. | २३. | १०. | २२. | १२. | १. |
| २२. | २४. | ५. | २२ | १६. | १. |
| २३. | २. | १८. | २३. | १३. | १. |
| २३. | ३. | ९. | २३ | १६. | १ |
| २३. | ६. | ६. | २४ | ७ | १. |
| २३. | ६. | ११. | २४. | १०. | ३. |
| २३. | १०. | ११. | २५ | ४. | ४ |
| २३. | ११. | ११. | २५. | ७. | ३. |
| २३. | १२. | ९–१७. | २५. | १०. | ४–७. |

एषु तान्येव वाक्यान्युभयत्र समानाक्षराणि परिदृश्यन्ते । अपि चैतेभ्य इदानीमुपलभ्यमानेभ्यो बौधायनीयापस्तम्बीयकात्यायनीयादिभ्यः कल्पसूत्रेभ्योऽतिप्राचीनं सामवेदीयमार्षेयकल्पनाम्ना कल्पनाम्नैव वा सुप्रसिद्धं किञ्चन कल्पसूत्रमासीत् यस्य प्रणेता महर्षिर्मशक आसीत्, यच्चोदाजहार भगवान् आचार्यशबरस्वामी स्वग्रन्थे पूर्वमीमांसाभाष्ये कल्पसूत्राधिकरणे । एतद्भाष्यकारोऽपि बहुत्रोदाहरति 'अत्र कल्पः' 'इति कल्पः' 'अत्र कल्पकारस्तु' 'इति मशककल्पो द्रष्टव्यः' इत्यादिना । तदपि नाम्नैव परमवशिष्टं न रूपेण । सत्यप्येवं क्वचित् क्वचिदेषु विषयेषु अत्यल्पं विसंवादमैतो महर्षी कात्यायनापस्तम्बौ । तत्र च कारणं शाखान्तरानुसरणं अर्थात् ब्राह्मणान्तरोक्तार्थोपसंहरणाभिलाष एव तयोरिति प्रतिभाति । विषयस्याऽस्य पाठकमहाशयानां सुखज्ञानाय पट्टिका काचिदधस्तान्निर्दिश्यते । मन्ये सा विशदयेत् या च यावती च मात्राऽनुसृता कात्यायनापस्तम्बाभ्यामेतद्ब्राह्मणत इति ।

| सं. | क्रतुनामानि | ताण्ड्य ब्रा. अ. | खं. | कात्याय. श्रौ. अ. | खं. | सू. | आपस्तं. श्रौ. प्र. | खं. | सू. | सुत्याहस्संख्या |
|---|---|---|---|---|---|---|---|---|---|---|
| १ | गवामयनम् | ४,५ अध्यायौ | | १३ अयाय: | | | २१ | १५ | | ३६१ |
| २ | अग्निष्टोमः | ६ अध्यायः | | ७—११ अध्यायाः | | | ११—१४ प्रपाठकाः | | | १ |
| ३ | व्यूढद्वादशाहः | १०–१५.अध्यायाः | | १२ अध्यायः | | | अग्रे | | | १२ |
| | **एकाहाः षट्—** | | | | | | | | | |
| १ | ज्योतिः | १६ | १ | २२ | १ | ४ | २२ | १ | ३ | १ |
| २ | गौः | १६ | २ | २२ | १ | ५ | २२ | १ | ६ | १ |
| ३ | आयुः | १६ | ३ | ,, | ,, | ,, | २२ | १ | ६ | १ |
| ४ | अभिजित् | १६ | ४ | ,, | ,, | ६ | २२ | १ | १२ | १ |
| ५ | विश्वजित् | १६ | ५,६ | ,, | ,, | ,, | २२ | १ | ६ | १ |
| ६ | सर्वजित् | १६ | ७ | २२ | १ | ४४ | २२ | १ | १६ | १ |
| | **साहस्राः चत्वारः—** | | | | | | | | | |
| १ | ज्योतिः | १६ | ८ | २२ | २ | ८ | २२ | २ | ५ | १ |
| २ | सर्वज्योतिः | १६ | ९ | ,, | ,, | ,, | २२ | २ | ५ | १ |
| ३ | विश्वज्योतिः | १६ | १० | ,, | ,, | ,, | २२ | २ | ५ | १ |
| ४ | त्रिरात्रसम्मितः | १६ | ११ | ,, | ,, | ,, | २२ | २ | ५ | १ |
| | **साद्यस्काः पञ्च—** | | | | | | | | | |
| १ | स्वर्गकामादीनां प्रथमः | १६ | १२ | २२ | २ | १० | २२ | २ | ८ | १ |

| सं. क्रतुनामानि | ताण्ड्य. ब्रा. | | कात्याय. श्रौ. | | | आपस्तं. श्रौ. | | | सुत्याहस्संख्या |
|---|---|---|---|---|---|---|---|---|---|
| | अ. | खं. | अ. | खं. | सू. | प्र. | खं. | सू. | |
| २ आमयाविप्रभृतीनां द्वितीयः | १६ | १३ | ,, | ,, | १७ | २२ | ४ | २ | १ |
| ३ अङ्गिरसामनुक्रीस्तृतीयः | १६ | १४ | ,, | ,, | १९ | २२ | ४ | ३ | १ |
| ४ विश्वजिच्छिल्पः चतुर्थः | १६ | १५ | ,, | ,, | २१ | २२ | ४ | ११ | १ |
| * श्येनः | | | २२ | ३ | १ | २२ | ४ | १३ | — |
| ५ एकत्रिकः पञ्चमः | १६ | १६ | ,, | ,, | २५ | २२ | ४ | २८ | १ |
| **व्रात्ययज्ञाः चत्वारः—** | | | | | | | | | |
| १ व्रात्यगणशिक्षकाणां प्रथमः | १७ | १ | २२ | ४ | ३ | २२ | ५ | ४ | १ |
| २ निन्दितानां द्वितीयः | १७ | २ | ,, | ,, | ४ | २२ | ५ | ४ | १ |
| ३ कनिष्ठानां तृतीयः | १७ | ३ | ,, | ,, | ५ | २२ | ५ | ४ | १ |
| ४ ज्येष्ठानां चतुर्थः | १७ | ४ | ,, | ,, | ६ | २२ | ५ | ४ | १ |
| **अग्निष्टुतः पञ्च—** | | | | | | | | | |
| १ पापनिर्हरणार्थः प्रथमः | १७ | ५ | २२ | ४ | ३१ | २२ | ६ | ५ | १ |
| २ ब्रह्मवर्चसकामस्य द्वितीयः | १७ | ६ | ,, | ,, | ,, | २२ | ६ | १० | १ |
| ३ पशुकामस्य तृतीयः | १७ | ७ | ,, | ,, | ,, | २२ | ६ | १० | १ |
| ४ यज्ञविभ्रष्टस्य चतुर्थः | १७ | ८ | ,, | ,, | ,, | २२ | ६ | १४ | १ |

*श्येनयागष्षड्विंशब्राह्मणे विहितः ।

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| ५ अन्नाद्यकामस्य पञ्चमः | १७ | ९ | ,, | ,, | ,, | २२ | २२ | ६ | १० | १ |
| **त्रिवृत्स्तोमाः त्रयः—** | | | | | | | | | | |
| १ प्रजापतेरपूर्वः प्रथमः | १७ | १० | २२ | ५ | ७ | | २२ | ७ | २ | १ |
| २ बृहस्पतिसवो द्वितीयः | १७ | ११ | ,, | ,, | ११ | | २२ | ७ | ५ | १ |
| † इषुः | | | ,, | ,, | ३० | | २२ | ७ | १७ | |
| ३ सर्वस्वारः तृतीयः | १७ | १२ | ,, | ६ | १ | | २२ | ७ | २० | १ |
| **चातुर्मास्यानि चत्वारि—** | | | | | | | | | | |
| १ वैश्वदेवस्थानिकः अग्निष्टोमः | १७ | १३ | २२ | ७ | २ | | २२ | ८ | २ | १ |
| २ वारुणप्रघासिकस्थानिकः द्विदिवः | १७ | १३ | ,, | ,, | ६ | | २२ | ८ | ९ | २ |
| ३ साकमेधस्थानिकः त्रिरात्रः | १७ | १३ | ,, | ,, | ८ | | २२ | ८ | १३ | ३ |
| ४ शुनासीरीयस्थानिकः अग्निष्टोमः | १७ | १३ | ,, | ,, | १० | | २२ | ९ | १ | १ |
| १ उपहव्यः अनिरुक्तः | १८ | १ | ,, | ८ | ७ | | २२ | ९ | ८ | १ |
| २ ऋतपेयः | १८ | २ | २२ | ८ | १० | | २२ | ९ | ११ | १ |
| ३ अन्यः ऋतपेयः | १८ | ३ | २२ | ८ | २५ | | २२ | ९ | १९ | १ |
| ४ वैश्यस्तोमः | १८ | ४ | २२ | ९ | ७ | | २२ | १० | ४ | १ |
| ५ तीव्रसुत् | १८ | ५ | २२ | ९ | १५ | | २२ | १० | ६ | १ |
| ६ वाजपेयः | १८ | ६, ७ | १४ अध्यायः | | | | १८ | १—८ | | १ |

† इषुः षड्विंशब्राह्मणे विहितः ।

| सं. क्रतुनामानि | ताण्ड्य. ब्रा. | | कात्याय. श्रौ. | | | आपस्तं. श्रौ. | | | सुत्याहस्संख्या |
|---|---|---|---|---|---|---|---|---|---|
| | अ. | खं. | अ. | खं. | सू. | प्र. | खं. | सू. | |
| **राजसूयः—** | | | १५ अध्यायः | | | १८ | ८—१२ | | — |
| १ पवित्रः | १८ | ८ | ,, | | | ,, | | | १ |
| २ अभिषेचनीयः | १८ | ८ | ,, | | | ,, | | | १ |
| ३ दशपेयः | १८ | ९ | ,, | | | ,, | | | १ |
| ४ केशवपनीयः | १८ | १० | ,, | | | ,, | | | १ |
| ५ व्युष्टिद्विरात्रः | १८ | ११ | ,, | | | ,, | | | २ |
| **द्वन्द्वसोमाः—** | | | | | | | | | |
| १ राट् | १९ | १ | २२ | १० | ७ | २२ | १० | २० | १ |
| २ विराट् | १९ | २ | २२ | १० | १० | २२ | १० | २१ | १ |
| ३ औपशदः | १९ | ३ | २२ | १० | १३ | २२ | १० | २१ | १ |
| +४ पुनस्तोमः | १९ | ४ | २२ | १० | १६ | २२ | ११ | १ | १ |
| ५ चतुष्टोमः | १९ | ५ | २२ | १० | १८ | २२ | ११ | १४ | १ |
| ६ अन्यश्चतुष्टोमः | १९ | ६ | २२ | १० | १८ | २२ | ११ | १४ | १ |
| ७ उद्भित् | १९ | ७ | २२ | १० | २१ | २२ | ११ | १२ | १ |
| ८ बलभित् | ,, | ,, | ,, | ,, | ,, | ,, | ,, | ,, | १ |

+ एतदनन्तरं उपच्छदः, छदः, सर्वतोमुखं इति यागत्रयं विहितं आपस्तम्बीये ।

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| ९ अपचितिः प्रथमः | १९ | ८ | २२ | १० | २८ | २२ | १२ | २ | १ |
| १० अपचितिर्द्वितीयः | १९ | ९ | ,, | ,, | ,, | २२ | १२ | २ | १ |
| ११ पक्षी | १९ | १० | २२ | १० | ३३ | २२ | १२ | १० | १ |
| १२ ज्योतिः | १९ | ११ | २२ | १० | ३३ | २२ | १२ | १० | १ |
| १३ ऋषभः | १९ | १२ | २२ | ११ | ३३ | २२ | १२ | १७ | १ |
| १४ गोसवः | १९ | १३ | ,, | ,, | ,, | २२ | १२ | १७ | १ |
| १५ मरुत्सोमः | १९ | १४ | २२ | ११ | ११ | २२ | १३ | ४ | १ |
| १६ कुलायः | १९ | १५ | २२ | ११ | १२ | २२ | १३ | ७ | १ |
| १७ इन्द्रस्तोमः | १९ | १६ | २२ | ११ | १३ | २२ | १३ | ८ | १ |
| १८ इन्द्राग्निस्तोमः | १९ | १७ | २२ | ११ | १४ | २२ | १३ | १० | १ |
| १९ विघनः प्रथमः | १९ | १८ | २२ | ११ | ११ | २२ | १३ | १२ | १ |
| २० विघनो द्वितीयः | १९ | १९ | ,, | ,, | ,, | २२ | १३ | १२ | १ |

एतदनन्तरं वज्रसन्दंशौ षड्विंशब्राह्मणोक्तौ आपस्तम्बेनाऽत्र निरूपितौ

* **त्रयोदशाऽतिरात्राः**—

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १ ज्योतिष्टोमः | २० | १ | २३ | १ | १८ | २२ | १३ | १६ | १ |
| २ सर्वस्तोमः | २० | २ | २३ | १ | २१ | २२ | १३ | १७ | १ |
| ३ अप्तोर्यामः | २० | ३ | २३ | १ | १९ | २२ | १३ | १९ | १ |

* अत्र यागानां क्रमे कात्यायनः किंचित् विसंवदति ।

| सं. क्रतुनामानि | ताण्ड्य. ब्रा. | | कात्याय. श्रौ. | | | आपस्तं. श्रौ. | | | सुत्याहस्संख्या |
|---|---|---|---|---|---|---|---|---|---|
| | अ. | खं. | अ. | खं. | सू. | प्र. | खं. | सू. | |
| ४ नवसप्तदशः | २० | ४ | २३ | १ | १४ | २२ | १३ | २० | १ |
| ५ विषुवदतिरात्रः | २० | ५ | २३ | १ | १५ | २२ | १३ | २० | १ |
| ६ गोष्टोमातिरात्रः | २० | ६ | २३ | १ | १६ | २२ | १३ | २२ | १ |
| ७ आयुष्टोमातिरात्रः | २० | ७ | २३ | १ | १७ | २२ | १३ | २३ | १ |
| ८ अभिजिदतिरात्रः | २० | ८ | २३ | १ | २० | २२ | १३ | २४ | १ |
| ९ विश्वजिदतिरात्रः | २० | ९ | २३ | १ | १८ | २२ | १३ | २५ | १ |
| १० त्रिवृदतिरात्रः | २० | १० | २३ | १ | १८ | २२ | १३ | २६ | १ |
| ११ पञ्चदशातिरात्रः | २० | १० | २३ | १ | १८ | २२ | १३ | २७ | १ |
| १२ सप्तदशातिरात्रः | २० | १० | २३ | १ | १८ | २२ | १३ | २८ | १ |
| १३ एकविंशातिरात्रः | २० | १० | २३ | १ | १८ | २२ | १३ | २९ | १ |
| **अथ अहीनाः** | | | | | | | | | |
| **त्रयो द्विरात्राः**— | | | | | | | | | |
| १ अङ्गिरसां द्विरात्रः | २० | ११ | २३ | २ | ३ | २२ | १४ | १८ | २ |
| २ चैत्ररथो द्विरात्रः | २० | १२ | २३ | २ | ३ | २२ | १४ | २२ | २ |
| ३ कापिवनो द्विरात्रः | २० | १३ | २३ | २ | ३ | २२ | १४ | २३ | २ |
| **षट् त्रिरात्राः**— | | | | | | | | | |
| १ गर्गत्रिरात्रः | २०,१४—२१,३ | | २३ | २ | ८ | २२ | १५ | १ | ३ |

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| २ अश्वत्रिरात्रः ( अश्वमेधः ) | २१ | ४ | २० | अध्याये | | २२ | १८ | १ | ३ |
| ३ वैदत्रिरात्रः | २१ | ५ | २३ | २ | ८ | २२ | १८ | ४ | ३ |
| ४ छन्दोमपवमानः | २१ | ६ | २३ | २ | ८ | २२ | १८ | ८ | ३ |
| ५ अन्तर्वसुः | २१ | ७ | २३ | २ | ८ | २२ | १८ | ९ | ३ |
| ६ पराकः | २१ | ८ | २३ | २ | ८ | २२ | १८ | १० | ३ |
| **चत्वारः चतूरात्राः—** | | | | | | | | | |
| १ चतुर्वीरः | २१ | ९ | २३ | २ | ११ | २२ | १८ | १२ | ४ |
| २ जामदग्न्यः | २१ | १० | २३ | २ | ११ | २२ | १८ | १६ | ४ |
| ३ वाशिष्ठः | २१ | ११ | २३ | २ | ११ | २२ | २० | १ | ४ |
| ४ विश्वामित्रस्य संजयः | २१ | १२ | २३ | २ | ११ | २२ | २० | २ | ४ |
| **त्रयः पञ्चरात्राः—** | | | | | | | | | |
| *१ अभ्यासंगयः | २१ | १३ | २३ | ४ | २ | २२ | २० | ५ | ५ |
| २ पञ्चशारदीयः | २१ | १४ | २३ | ४ | ३ | २२ | २० | ९ | ५ |
| † ३ अन्तर्महाव्रतः | २१ | १५ | २३ | ४ | २७ | २२ | २१ | १२ | ५ |
| **त्रयः षड्रात्राः—** | | | | | | | | | |
| १ ऋतूनां षड्रात्रः | २२ | १ | २३ | ५ | २ | २२ | २२ | ४ | ६ |

* अस्य देवपञ्चाहः इति संज्ञा कात्यायनीये ।

† अस्य व्रतवान् इति संज्ञा कात्यायनीये ।

| सं. क्रतुनामानि | ताण्ड्य. ब्रां. | | कात्याय. श्रौ. | | | आपस्तं. श्रौ. | | | सुत्याहस्संख्या |
|---|---|---|---|---|---|---|---|---|---|
| | अ. | खं. | अ. | खं. | सू. | प्र. | खं. | सू. | |
| २ त्रिकद्रुकः | २२ | २ | २३ | ५ | ४ | २२ | २२ | ६ | ६ |
| ‡ ३ अभ्यासंग्यः | २२ | ३ | २३ | ५ | ३ | २२ | २२ | ९ | ६ |
| **सप्त सप्तरात्राः**— | | | | | | | | | |
| १ सप्तर्षीणां सप्तरात्रः | २२ | ४ | २३ | ५ | ६ | २२ | २२ | १३ | ७ |
| २ प्रजापतेः सप्तरात्रः | २२ | ५ | २३ | ५ | ६ | २२ | २२ | १५ | ७ |
| ३ छन्दोमपवमानः | २२ | ६ | २३ | ५ | ६ | २२ | २२ | १७ | ७ |
| ४ जामदग्न्यः | २२ | ७ | २३ | ५ | ६ | २२ | २२ | १९ | ७ |
| ५ प्रजापतेरवधानम् | २२ | ८ | २३ | ५ | ६ | २२ | २३ | १ | ७ |
| ६ जनकसप्तरात्रः | २२ | ९ | २३ | ५ | ११ | २२ | २३ | ५ | ७ |
| ७ पृष्ठ्यस्तोमः | २२ | १० | २३ | ५ | १३ | २२ | २३ | २० | ७ |
| १ अष्टरात्रः | २२ | ११ | २३ | ५ | १५ | २२ | २३ | ७ | ८ |
| **नवरात्रौ द्वौ**— | | | | | | | | | |
| १ देवानां नवरात्रः | २२ | १२ | २३ | ५ | १६ | २२ | २३ | ९ | ९ |
| २ अन्यो नवरात्रः | २२ | १३ | २३ | ५ | १७ | २२ | २३ | १३ | ९ |
| **चत्वारो दशरात्राः**— | | | | | | | | | |
| १ त्रिककुप् | २२ | १४ | २३ | ५ | १९ | २२ | २३ | १७ | १० |

‡ अस्य पृष्ठ्यावलम्ब्य इति संज्ञा कात्यायनीये ।

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| * | २ कौसुरुविन्दः | *२२ | १५ | २३ | ५ | २२ | २२ | २४ | ६ | १० |
| § | ३ अन्यः कश्चित् | २२ | १६ | २३ | ५ | ३१ | २२ | २४ | ३ | १० |
| | ४ देवपुरम् | २२ | १७ | २३ | ५ | २७ | २२ | २४ | १ | १० |
| | १ एकादशरात्रः पौण्डरीकः | २२ | १८ | २३ | ५ | ३३ | २२ | २४ | ८ | ११ |

इतः परं तैत्तिरीयब्राह्मणोक्तास्सवाख्या एकादश एकाहा आपस्तम्बेनाऽनुक्रान्ताः ।

**द्वौ त्रयोदशरात्रौ—**

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १ | आप्तद्वादशाहः | २३ | १ | २४ | १ | १४ | १३ | १ | ८ | १३ |
| २ | प्रतिष्ठाफलकः | २३ | २ | २४ | १ | १५ | २३ | १ | १० | १३ |

**त्रयः चतुर्दशरात्राः—**

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १ | सर्वर्धिसाधनम् | २३ | ३ | २४ | १ | १८ | २३ | १ | १५ | १४ |
| २ | अन्यः चतुर्दशरात्रः | २३ | ४ | २४ | १ | २१ | २३ | १ | १५ | १४ |
| ३ | प्रतिष्ठासाधनम् | २३ | ५ | २४ | २ | २४ | २३ | १ | १७ | १४ |

**चत्वारः पञ्चदशरात्राः—**

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १ | देवत्वप्राप्तिफलकः | २३ | ६ | २४ | १ | २५ | २३ | २ | २ | १५ |
| २ | ब्रह्मवर्चसफलकः | २३ | ७ | २४ | १ | २५ | २३ | २ | ५ | १५ |
| ३ | सत्राहीनोभयफलकः | २३ | ८ | २४ | १ | २५ | २३ | २ | ७ | १५ |

---

* अस्य पूर्दशरात्र इति संज्ञा कात्यायनीये ।

§ अस्य छन्दोमदशाह इति कात्यायनीये संज्ञा ।

| सं. | क्रतुनामानि | ताण्ड्य ब्रा. अ. | ताण्ड्य ब्रा. खं. | कात्याय. श्रौ. अ. | कात्याय. श्रौ. खं. | कात्याय. श्रौ. सू. | आपस्तं. श्रौ. प्र. | आपस्तं. श्रौ. खं. | आपस्तं. श्रौ. सू. | सुत्याहस्संख्या |
|---|---|---|---|---|---|---|---|---|---|---|
| ४ | प्रजाफलकः | २३ | ९ | २४ | १ | २५ | २३ | २ | ९ | १५ |
| १ | ऐन्द्रः षोडशरात्रः | २३ | १० | २३ | २ | १ | २३ | २ | ११ | १६ |
| १ | प्रजापतेः सप्तदशरात्रः | २३ | ११ | २४ | २ | १ | २३ | २ | १३ | १७ |
| १ | देवानां अष्टादशरात्रः | २३ | १२ | २४ | २ | १ | २३ | २ | १५ | १८ |
| १ | वायोरेकोनविंशतिरात्रः | २३ | १३ | २४ | २ | १ | २३ | २ | १७ | १९ |
| १ | पुरुषफलसाधनं विंशतिरात्रः | २३ | १४ | २४ | २ | १ | २३ | २ | १९ | २० |
| | **द्वौ एकविंशतिरात्रौ—** | | | | | | | | | |
| १ | पशुफलसाधनः | २३ | १५ | २४ | २ | ३ | २३ | ३ | २ | २१ |
| २ | ब्रह्मवर्चसफलकः | २३ | १६ | २४ | २ | ३ | २३ | ३ | ४ | २१ |
| १ | द्वाविंशतिरात्रः | २३ | १७ | २४ | २ | ११ | २३ | ३ | १० | २२ |
| १ | त्रयोविंशतिरात्रः | २३ | १८ | २४ | २ | १२ | २३ | ६ | १२ | २३ |
| | **द्वौ चतुर्विंशतिरात्रौ—** | | | | | | | | | |
| १ | स्वर्गसाधनम् | २३ | १९ | २४ | २ | १३ | २३ | ३ | १९ | २४ |
| २ | प्रजापशुसाधनम् | २३ | २० | २४ | २ | १४ | २३ | ४ | १ | २४ |
| १ | प्रजापतेः पञ्चविंशतिरात्रः | २३ | २१ | २४ | २ | २२ | २३ | ४ | ३ | २५ |
| १ | षड्विंशतिरात्रः | २३ | २२ | २४ | २ | २२ | २३ | ४ | ५ | २६ |
| १ | सप्तविंशतिरात्रः | २३ | २२ | २४ | २ | २२ | २३ | ४ | ७ | २७ |
| १ | अष्टाविंशतिरात्रः | २३ | २४ | २४ | २ | २२ | २३ | ४ | ९ | २८ |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १ एकोनत्रिंशद्रात्रः | २३ | २५ | नास्ति | | | २३ | ४ | ११ | २९ |
| १ त्रिंशद्रात्रः | २३ | २६ | ,, | | | २३ | ४ | १३ | ३० |
| १ प्रजापतेरेकत्रिंशद्रात्रः | २३ | २७ | ,, | | | २३ | ५ | १ | ३१ |
| १ द्वात्रिंशद्रात्रः | २३ | २८ | २४ | २ | २२ | २३ | ५ | ३ | ३२ |
| **त्रयस्त्रिंशद्रात्राः त्रयः—** | | | | | | | | | |
| १ प्रतिष्ठाफलकः | २४ | १ | २४ | २ | २४ | २३ | ५ | ६ | ३३ |
| २ ऋद्धिफलकः | २४ | २ | २४ | २ | २७ | २३ | ५ | १० | ३३ |
| ३ सर्वफलसाधनः | २४ | ३ | २४ | २ | २९ | २३ | ५ | ८ | ३३ |
| १ चतुस्त्रिंशद्रात्रः | २४ | ४ | २४ | २ | ३२ | २३ | ५ | १२ | ३४ |
| १ पञ्चत्रिंशद्रात्रः | २४ | ५ | २ | नास्ति | | २३ | ६ | १ | ३५ |
| १ षट्त्रिंशद्रात्रः | २४ | ६ | २४ | २ | ३३ | २३ | ६ | ३ | ३६ |
| १ सप्तत्रिंशद्रात्रः | २४ | ७ | २४ | २ | ३४ | २३ | ६ | ५ | ३७ |
| १ अष्टत्रिंशद्रात्रः | २४ | ८ | २४ | २ | ३५ | २३ | ६ | ७ | ३८ |
| १ एकोनचत्वारिंशद्रात्रः | २४ | ९ | | नास्ति | | २३ | ६ | ९ | ३९ |
| १ चत्वारिंशद्रात्रः | ३४ | १० | २४ | २ | ३६ | २३ | ६ | ११ | ४० |
| **एकोनपञ्चाशद्रात्राः सप्त—** | | | | | | | | | |
| १ पापव्यावृत्तिफलकः | २४ | ११ | २४ | २ | ३८ | २३ | ७ | २ | ४१ |
| २ श्रीफलकः | २४ | १२ | २४ | ३ | ६ | २३ | ७ | ४ | ४१ |
| ३ आंजनाभ्यञ्जनाख्यः | २४ | १३ | २४ | ३ | ८ | २३ | ७ | ७ | ४१ |

| सं. | क्रतुनामानि | ताण्ड्य ब्रा. |  | कात्याय. श्रौ. |  |  | आपस्तं. श्रौ. |  |  | सुत्याहस्संख्या |
|---|---|---|---|---|---|---|---|---|---|---|
|  |  | अ. | खं. | अ. | खं. | सू. | प्र. | खं. | सू. |  |
| ४ | संवत्सरसम्मितः | २४ | १४ | २४ | ३ | १५ | २३ | ७ | ११ | ५२ |
| ५ | सवितुः ककुभः | २४ | १५ | २४ | ३ | १९ | २३ | ८ | १ | ४९ |
| ६ | प्रतिष्ठाफलकः | २४ | १६ | २४ | ३ | २२ | २३ | ८ | ४ | ४९ |
| ७ | प्रजाविभवफलकः | २४ | १७ | २४ | ३ | २२ | २३ | ८ | ६ | ४९ |
| १ | एकषष्टिरात्रः | २४ | १८ | २४ | ३ | १७ | २३ | ८ | ८ | ६१ |
| १ | शतरात्रः | २४ | १९ | २४ | ३ | २५ | २३ | ८ | ११ | १०० |
|  | गवामयनं (पूर्वविहितम्) | २४ | २० | २४ | ४ | २ | २३ | ९ | २ | — |
| १ | आदित्यानामयनम् | २५ | १ | २४ | ४ | ३ | २३ | ९ | १ | ३६१ |
| १ | अङ्गिरसामयनम् | २५ | २ | २४ | ४ | ११ | २३ | ९ | १० | ३६१ |
| १ | दृतिवातवतोरयनम् | २५ | ३ | २४ | ४ | १६ | २३ | १० | १ | ३६३ |
| १ | कुण्डपायिनामयनम् | २५ | ४ | २४ | ४ | २१ | २३ | १० | ६ | १८० |
| १ | तपश्चितामयमम् | २५ | ५ | २४ | ५ | १ | २३ | ११ | १ | ३६१ |
| १ | प्रजापतेर्द्वादशसंवत्सरम् | २५ | ६ | २४ | ५ | १२ | २३ | ११ | ८ | ४३३० |
| १ | शाक्त्यानामयनम् षट्त्रिंशत्संवत्सरम् | २५ | ७ | २४ | ५ | २० | २३ | ११ | १ | १२९९६ |
| १ | शतसंवत्सरम् | २५ | ८ | २४ | ५ | २३ | २३ | १२ | १ | ३६१०० |
| १ | अग्नेः सहस्रम् | २५ | ९ | २४ | ५ | १० | २३ | १२ | २ | १००२ |

* अत्र क्रमे वैपरीत्यं कात्यायनीये ।

| सं. | क्रतुनामानि | ताण्ड्य. ब्रा. | | कात्याय. श्रौ. | | | आपस्तं. श्रौ. | | | सुत्याहस्संख्या |
|---|---|---|---|---|---|---|---|---|---|---|
| | | अ. | खं. | अ. | खं. | सू. | प्र. | खं. | सू. | |
| | **त्रीणि सारस्वतसत्राणि**— | | | | | | | | | |
| १ | मित्रावरुणयोरयनम् | २५ | १० | २४ | ५ | ३१ | २३ | १२ | ४ | ३ |
| २ | इन्द्राग्न्योरयनम् | २५ | ११ | २४ | ६ | २४ | २३ | १२ | ४ | ४ |
| ३ | अर्यम्णोयनम् | २५ | १२ | २४ | ६ | २७ | २३ | १२ | ४ | ६ |
| | **द्वे इष्ट्ययने**— | | | | | | | | | |
| १ | दार्षद्वतम् | २५ | १३ | २४ | ६ | ३० | २३ | १३ | ११ | — |
| २ | तुरायणम् | २५ | १४ | २४ | ७ | १ | २३ | १४ | १ | — |
| १ | सर्पाणां सत्रम् | २५ | १५ | २४ | ४ | ४८ | २३ | १४ | ८ | ३६१ |
| १ | त्रिसंवत्सरम् | २५ | १६ | नास्ति | | | २३ | १४ | १० | १०८३ |
| १ | प्रजापतेः *सहस्रसंवत्सरम् | २५ | १७ | नास्ति | | | २३ | १४ | १२ | ३६१००२ |
| १ | विश्वसृजामयनं सहस्रसंवत्सरम् | २५ | १८ | २४ | ५ | २४ | २३ | १४ | १४ | ३६१००० |
| १७८ | आहत्य क्रतुसंख्या | | | | | | आहत्य सुत्यासंख्या— | | | ७८१६११ |

* अत्रत्यसंवत्सरशब्दो दिनपरक इति मीमांसकैर्निर्णीतम्। परन्तु तदेतद्ब्राह्मणसम्बद्धेन सूत्रकाराभिप्रायेण च विरुद्धं। अतो यथाश्रुतमेवाऽस्माभिर्गृहीतम्।

एवं च ताण्ड्यमहाब्राह्मणे सर्वसङ्कलनया १७८ संख्याकाः ७८१६११ सुत्याकास्सोमयागा विहिताः। ते तथैवोद्धृताः कात्यायनेन, आपस्तम्बेन तु तैत्तिरीयशाखोक्तैस्तैस्सहेति। तदिदमुपरितन्या पट्टिकया स्पष्टीभवति।

## शांखायनबौधायनयोरन्यावलम्बित्वम्।

यद्यपि शांखायानबौधायनावपीमा उत्तरततीः काश्चित् विधातुं प्रवृत्तौ, परन्तु तावन्यामेव कां चन विलक्षणां रीतिमनुसरत इति न तयोः ताण्ड्यानुसारित्वं मनागपीति स्फुटमेव।

तैत्तिरीयशाखा तु कियन्तं चिदध्वानमनुसरति ताण्ड्यमहाब्राह्मणं इत्युक्तम्। न तावत्यप्यध्वनि सर्वांशेन। तत्र हि सप्तमकाण्डे एकाह एकः, द्विरात्रप्रभृत्येकोनपञ्चाशद्रात्रान्ता अहीनाः सत्राणि च क्रतव उक्ताः। ते च संख्यायामल्पीयांसः। तत्राऽपि केचनैव ताण्ड्योक्ताः केचिच्च न। तदिदमधस्तनी पट्टिका विवरिष्यति—

| | तैत्तिरीयसंहितायां सप्तमकाण्डे— | प्रपा. | अनु. |
|---|---|---|---|
| * | अग्निष्टोमः | १ | १ |
| * | अतिरात्रस्सर्वस्तोमः | १ | ३ |
| | **अथाऽहीनाः—** | | |
| | अङ्गिरसां द्विरात्रः | १ | ४ |
| | गर्गत्रिरात्रः | १ | ५–७ |
| १ | अत्रेश्चतूरात्रः | १ | ८ |
| २ | जमदग्नेश्चतूरात्रः | ,, | ९ |
| ३ | पञ्चरात्रः | ,, | १० |
| ४ | साध्यानां षड्रात्रः | २ | १ |
| ५ | कौसुरुविन्दस्सप्तरात्रः | ,, | २ |
| ६ | बृहस्पतेरष्टरात्रः | ,, | ३ |
| ७ | प्रजापतेर्नवरात्रः | ,, | ४ |
| ८ | दशरात्रः | ,, | ५ |
| ९ | एकादशरात्रः | ,, | ६ |
| १० | द्वादशरात्रः | ,, | ७–१० |
| ११ | त्रयोदशरात्रः | ३ | ३ |
| | सप्तमकाण्डे— | प्रपा. | अनु |
| १२ | चतुर्दशरात्रः | ३ | ४ |
| १३ | ,, | ३ | ५ |
| १४ | पञ्चदशरात्रः | ३ | ६ |
| १५ | ,, | ३ | ७ |
| १६ | सप्तदशरात्रः | ३ | ८ |
| १७ | विंशतिरात्रः | ३ | ९ |
| १८ | एकविंशतिरात्रः | ३ | १० |
| १९ | चतुर्विंशतिरात्रः | ४ | १ |
| २० | ,, | ४ | २ |
| २१ | त्रिंशद्रात्रः | ४ | ३ |
| २२ | द्वात्रिंशद्रात्रः | ४ | ४ |
| २३ | त्रयस्त्रिंशद्रात्रः | ४ | ५ |
| २४ | षट्त्रिंशद्रात्रः | ४ | ६ |
| २५ | एकोनपञ्चाशद्रात्रः | ४ | ७ |
| २६ | गवामयनम् | ५ | १ |
| २७ | ,, | ५ | २ |
| २८ | उत्सर्गिणामयनम् | ५ | ७ |

एवं सर्वसम्मेलनेनाऽष्टाविंशतिरेव सोमयागास्तैत्तिरीयसंहितायां निरूपिताः। ब्राह्मणे तु केचन सवाः प्रतिपादिताः। ते यथा—

तैत्तिरीयब्राह्मणे द्वितीयाष्टके सप्तमप्रपाठके–

| | | | | | |
|---|---|---|---|---|---|
| १ | बृहस्पतिसवः | १ | ७ | ओदनसवः | ७–९ |
| २ | वैश्यसवः | २ | ८ | पञ्चशारदीयः | १०, ११ |
| ३ | ब्राह्मणसवः | ३ | ९ | अग्निष्टुत् | १२ |
| ४ | सोमसवः | ४ | १० | इन्द्रस्तुत् | १३ |
| ५ | पृथिसवः | ५ | ११ | आप्तोर्यामः | १४ |
| ६ | गोसवः | ६ | १२ | विघनः | १६ |

मेलनेन द्वादश सवाः ब्राह्मणे विहिताः । पूर्वमुक्तास्संहितागताः क्रतवोऽष्टाविंशतिः । सर्वे मिलिताश्चत्वारिंशत् इतरशाखापेक्षया तैत्तिरीयकेऽधिकाः । अश्वमेधान्तं तु समानमितराभिरिति पूर्वमुक्तम् । किञ्चेदमप्यपरमवश्यं वक्तव्यमवधेयं च यदितरशाखापेक्षया तैत्तिरीयशाखायां संहिताभागे ब्राह्मणभागे ताण्ड्यकेन सह च परस्परमक्षरशास्संवादीनि बहूनि समुपलभ्यन्ते वाक्यानि । कथमेतादृशमक्षरसाम्यमत्रैव शाखायां समापतितं नाऽन्यत्रेति बहु विचारयन्तोऽपि वयं न कामपि हृदयंगमां युक्तिं प्रामाणिकीमुपलब्धवन्तोऽद्ययावत् । तेषां बहूनां वाक्यानां मध्ये केषांचन स्थलनिर्देशिनीं संख्यां परस्तान्निर्दिशामः । शक्यते च तया स्थलं तेषामधिगमयितुं ताण्ड्यादिषु ।

| तां.ब्राह्मण. | | | तैत्तिरीयसंहिता. | | | | तैत्ति.ब्राह्मण. | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| अ. | खं. | ब्रा. | का. | प्र. | अ. | पं. | अ. | प्र. | अ. | द. |
| १७ | १३ | १७ | | | | | १ | ४ | ११ | |
| १७ | १४ | १ | | | | | १ | ४ | १० | ४ |
| १८ | ८ | १२ | | | | | १ | ८ | ८ | २ |
| १८ | ८ | १३ | | | | | १ | ८ | ८ | २ |
| १८ | ८ | १६ | | | | | १ | ८ | ८ | २ |
| १८ | ८ | १८ | | | | | १ | ८ | ८ | ३ |
| १८ | १० | ५ | | | | | १ | ८ | ८ | ३ |
| १८ | ११ | ५ | | | | | २ | ७ | १४ | ३ |
| २० | ३ | ३ | | | | | २ | ७ | १४ | ३ |
| २० | ३ | ४ | | | | | २ | ७ | १४ | ३ |
| २० | ११ | ३ | ७ | १ | ३ | १ | | | | |
| २० | ११ | ११ | ५ | ४ | १२ | ३ | | | | |
| २० | १५ | ६ | २ | ४ | १२ | | | | | |
| २१ | ४ | ४ | ५ | ४ | १२ | २ | | | | |
| २१ | ४ | ५ | ५ | ४ | १२ | १ | | | | |

| तां. ब्राह्मण. | | | तैत्ति. संहिता. | | | | तैत्ति. ब्राह्मण. | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| अ. | खं. | ब्रा. | का. | प्र. | अ. | पं. | अ. | प्र. | अ. | द. |
| २१ | ४ | १२ | ५ | ३ | १४ | २ | | | | |
| २१ | ४ | १३ | | | | | ३ | ८ | १९ | |
| २२ | १४ | ६ | ७ | २ | ५ | २ | | | | |
| २३ | १ | २ | ७ | ३ | ३ | १ | | | | |
| २५ | १८ | १ | | | | | ३ | १२ | ९ | |
| २५ | १८ | २ | | | | | ३ | १२ | ५ | |
| २५ | १८ | ३ | | | | | ३ | १२ | ९ | |
| २५ | १८ | ५ | | | | | ३ | १२ | ९ | |

एतावता प्रबन्धेन ताण्ड्यषड्विंशयोः प्रतिपाद्या ( विषयाः ) यागाः, तेषां संख्या ताण्ड्यब्राह्मणस्य शाखान्तरीयब्राह्मणादिसादृश्यं, शाखान्तरीययोरपि श्रौतसूत्रयोरेतदनुसारित्वं चेत्यादिकं सप्रमाणमुपन्यस्तं सोदाहरणमपि । सर्वमिदमुत्तरततिस्वरूपतदङ्गादिनिरूपणमौद्गात्रपदार्थेष्वेव सामवेदीयेषु । तत्रैवाऽस्य प्रवृत्तेरौचित्यात् । नाऽऽध्वर्यवेषु हौत्रेषु वा । ते तु उक्ताभ्य एव संस्थाभ्य आवापोद्वापादिना स्वयमूहित्वाऽनुष्ठेयाः । उत्तरक्रतवो हि अग्निष्टोमादिषु चतसृषु संस्थासु अन्यतमसंस्थायामेव सन्तिष्ठन्ते । ताश्च समुपपादितास्तदङ्गानि च वेदान्तरयोर्यथायथम् । अतो यस्यां संस्थायां सन्तिष्ठते क्रतुस्तदीया आध्वर्यवाः पदार्था हौत्राश्च तत्र कर्तव्याः । अयमेव न्यायस्सर्वक्रतुष्वपीति ध्येयम् ।

## सामविधानब्राह्मणविषयः ।

अनन्तरं सामविधानब्राह्मणम् । न तत्र यज्ञादिकं तदङ्गानि वा विधीयन्ते । कृच्छ्रचान्द्रायणादीनि प्रायश्चित्तानि विधीयन्ते तत्तत्पापक्षयार्थम् । तानि च प्रायश्चित्तानि तत्तत्सामाध्ययनरूपाण्येव । होमा अपि तदङ्गतया केचन तत्र क्वचित् क्वचिद्विहिताः । एतच्च प्रपाठकत्रयात्मकम् ।

## आर्षेयब्राह्मणविषयः ।

तत आर्षेयब्राह्मणम् । तदपि प्रपाठकत्रयपरिमितम् । तत्र संहिताग्रन्थोक्तानां साम्नामृष्यादिकं प्रतिपाद्यते ।

## दैवतब्राह्मणविषयः ।

अनन्तरं दैवतब्राह्मणम् । तच्च खण्डत्रयात्मकम् । तत्र निधनानां देवताः, छन्दांसि तेषां वर्णसंख्या, तेषां देवताः, तन्नामनिर्वचनं चेति प्रतिपाद्यन्ते ॥

## छान्दोग्योपनिषत् ।

तत उपनिषत् । साऽष्टाध्यायी परब्रह्मविषयिणी * छान्दोग्योपनिषदिति प्रसिद्धा । सा जीवात्मपरमात्मनोरैक्यादिकं जगन्मिथ्यात्वादिकमित्याद्यात्मज्ञानौपयिकान् विषया प्रतिपादयति ।

## संहितोपनिषत् ।

ततस्संहितोपनिषत् । अत्र मन्त्रसंहिताभेदाः, तत्तदध्ययनप्रशंसा, मन्त्रदर्शनादिकम् , तत्तत्फलादिकं चेति कथ्यते ।

## वंशब्राह्मणविषयः ।

अनन्तरं वंशब्राह्मणाख्यमन्तिमं ब्राह्मणम् । तत्र च सम्प्रदायप्रवर्तकाणामाचार्याणां परम्परानुकीर्तनम् । सेयं विद्यापरम्परा न जन्मपरम्परा । वंशो हि द्विविधो—विद्यया जन्मना च । सेयं विद्यापरम्परेत्यवगन्तव्यम् । एवं सामवेदीया ब्राह्मणग्रन्थास्तद्विषयाश्चाऽनुक्रान्ता यथामति । तत्प्रसङ्गागताश्शाखान्तरसम्बन्धिन्योऽपि वार्तास्तदुपष्टम्भिकाः काश्चिद्विवृताः । इदानीं सामवेदसंहिताविषये कश्चनांऽशः परिशिष्यते विवरीतुम् । तमिदानीं विवृणुमः ॥

## सामवेदसंहिताविभागः ।

सामवेदसंहितायां भागद्वयमस्ति–आर्चिकः गानं चेति । आर्चिकोऽपि द्विविधः–(छन्दआर्चिकः), पूर्वार्चिकः उत्तरार्चिकश्चेति । भागद्वय्यामपि केवलमृचामेव पाठः । अनयोः योनिग्रन्थः उत्तराग्रन्थः, इत्यपि व्यवहारः । तत्राऽग्रे गीयमानानां साम्नामाधारभूता ऋच एव पठिताः । उत्तराग्रन्थे च क्रतुषु गीयमानानां साम्नां क्रमेणाऽऽधारभूता ऋच एव सूक्तात्मना पठिताः । सूक्तं नामर्चां समुदायः । स्तोत्रं हि सूक्तनिर्वर्त्यम् । तथा हि–'एकं साम तृचे क्रियते स्तोत्रीयम्' इति सामगानां साधारणो विधिः । तृचम् ऋक्त्रयम् । अस्याऽयमर्थः—एकस्य साम्नः एकाऽऽधारभूता ऋक् । तस्यामेवोत्पन्नं साम । तयर्चा सह उत्तरे द्वे मिलित्वा तिसृषु एकस्य साम्नः आवृत्त्या गाने कृते स्तोत्रसम्पत्तिर्भवतीति । तस्यैव गानस्याऽऽवृत्तिसम्पादनप्रकारः पूर्वं स्तोमविष्टुतिप्रदर्शनेन प्रदर्शितः । एवमृक्त्रयसमुदायस्तृच इत्युच्यते । यावति समुदाये स्तुतिर्निष्पाद्यते तत् सूक्तमित्युच्यते । तत्र छन्दआर्चिकग्रन्थे एकैकस्य साम्नः उत्पत्त्याधारभूताः ऋच एकैकश एवाऽऽ-

---

* छान्दोग्योपनिषदियं सायणाचार्यैरपि व्याख्यातेति गम्यते । यतस्तैर्वंशब्राह्मणभाष्यादौ लिख्यते–"प्रौढादिब्राह्मणान्यादौ सप्त व्याख्याय चाऽन्तिमम् । वंशाख्यं ब्राह्मणं विद्वान् सायणो व्याचिकीर्षति" इति ।

म्नायन्ते, न सूक्तरूपेण । तासां समुच्चितसंख्या (५८५) पञ्चाशीत्युत्तरा पञ्चशती । विशेषविवरणञ्चेत्थम्—

ऋचः

| | | | |
|---|---|---|---|
| प्रथमप्रपाठके— | ९६ | चतुर्थे— | ९८ |
| द्वितीये— | ९७ | पञ्चमे— | ९६ |
| तृतीये— | ९९ | षष्ठे— | ९९ |

समुच्चितसं० ५८५

उत्तरार्चिके तु सूक्तसंख्या (४००) चतुश्शतम् । यद्यप्येकस्य साम्नः तिसृषु ऋक्षु गानेन स्तोत्रं सम्पाद्यत इत्युक्तम्, स सामान्यविधिः, एकस्यामृचि गानं विहितं स्तोत्रसम्पादकम् । तस्यैकर्चगानमिति व्यवहारः । तत्र ऋग्द्वयात्मकसूक्ते न तथैव गानम् । किन्तु ये द्वे ऋचौ ते ऋक्त्रयात्मना प्रग्रथनं कृत्वा गानं कर्तव्यम् । अस्यैव प्रगाथ इति नाम । एवं चाऽऽज्यपृष्ठादिषु स्तोत्रेष्वेकर्चगानं तृचगानं चेति द्वयमेव । ऋक्चतुष्टयादिघटितानां तु सूक्तानां उत्तराग्रन्थे पठितानां बहिष्पवमानस्तोत्र उपयोग इति विवेक्तव्यम् ॥ तदर्थमेव हि तासां तत्र पाठः । तत्र—एकर्चसूक्तानि संख्यायां ( १३ ) त्रयोदश । द्व्यृचानि ( ६६ ) षट्षष्टिः । तृचात्मकानि ( २८७ ) सप्ताशीत्यधिकं शतद्वयम् । चतुर्ऋगात्मकानि ( ९ ) नव । पञ्चर्चात्मकानि ( ४ ) चत्वारि । षड्वृचात्मकानि ( १० ) दश । सप्तर्चात्मके द्वे । अष्टर्चात्मकमेकम् । नवर्चात्मकानि ( ३ ) त्रीणि । दशर्चात्मकानि ( ३ ) त्रीणि । द्वादशर्चात्मके द्वे । एवमुत्तरार्चिके नवप्रपाठात्मके एकादशप्रकाराणां सूक्तानां समुदिता संख्या चतुश्शती । एतेषां सूक्तानामृक्संख्या ( १२२५ ) पञ्चविंशत्युत्तरशतद्वयाधिकमेकं सहस्रम् । उभयोरार्चिकग्रन्थयोर्मिलित्वा ( १८१० ) दशाधिकमष्टादशशतम् । तत्र काश्चनर्चः पुनपुनरावृत्ताः । तां पुनरावृत्तिं विहाय गणने (१५४९) एकोनपञ्चाशदधिकं पञ्चदशशतम् । उत्तराग्रन्थस्थानां सूक्तानामृचां च विशेषविवरणी पट्टिकाऽधस्तनी अवलोकनीया(१) ।

---

( १ ) इदं परिगणनपट्टिकानिर्माणादिकं सर्वमपि स्वबुद्धिपरिश्रमेणैव सम्पादितम् । न तु ग्रन्थान्तरे पुस्तकान्तरे वाऽन्यैस्सज्जीकृत्य लिखितं मुद्रापितं वा तत्तथैवोद्धृत्याऽत्र सन्निवेशितमिति पाठकैरवगन्तव्यम् ॥ एवमेवाऽग्रे पूर्वं वा यो विषयविवेचन, परिगणन, पट्टिकानिर्माणादिरूपस्स सर्वोऽपि व्यापार आत्मीय एव । न तु चौर्येणाऽन्यत आहृत्याऽऽत्मीयत्वप्रकाशनं कृतमित्यपि सुधियो विदांकुर्वन्तु ।

# सामवेदीयोत्तराग्रन्थस्थानां स्तोत्रीयाणां सूक्तानां संख्याप्रदर्शिनी पट्टिका

| प्र० | एकर्चं | द्व्यृचं | तृचं | च० ऋ० | पञ्चर्चं | षडृचं | सप्तर्चं | अष्ट | नवर्चं | दशर्चं | द्वा० | आहत्यसू० | ऋ० सं० |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | | ११ | ३४ | | | | | | | | | ४५ | १२४ |
| २ | | ६ | ३० | १ | १ | | | | | | | ३८ | १११ |
| ३ | | ५ | ३५ | १ | | २ | २ | | | | | ४५ | १४५ |
| ४ | | ३ | ३० | १ | | | | | | २ | २ | ३८ | १४४ |
| ५ | | ४ | २८ | २ | १ | ५ | | १ | ३ | १ | | ४३ | १७२ |
| ६ | २ | ९ | ३३ | ३ | १ | १ | | | | | | ४९ | १४२ |
| ७ | ७ | १४ | २८ | १ | १ | | | | | | | ५१ | १२८ |
| ८ | | १० | ३८ | २ | | १ | | | | | | ५१ | १४८ |
| ९ | ४ | ४ | २१ | | | १ | | | | | | ४० | १११ |
| | १३ | ६६ | २८७ | ९ | ४ | १० | २ | १ | ३ | ३ | २ | ४०० | १२२५ |

## गाने प्रकृतिग्रन्थः ।

इदानीं गानभागो निरूप्यते । गानभागश्चतुर्विधः—प्रकृतिः, आरण्यकम्, ऊहो, रहस्यं चेति । तत्र प्रकृतिभागे तावत् एकैकस्यामृच्येकैकं साम समुत्पन्नम् । अत्रत्या ऋचः प्रायेण पूर्वार्चिकाम्नाता एव । तासामेव चोपरि रथन्तरादीनि सामानि गीयन्ते । अत्र च वेदान्तरवत् न त्रैस्वर्यमात्रं चातुस्वर्यमात्रं वा, किन्तु निषादादिस्वरसप्तकमत्र नियतम् । लोकेऽपि गान्धर्वविद्याया इम एव स्वरास्सप्त निदानभूताः प्रसिद्धाः । अत एव गानशास्त्रमूलभूतो गान्धर्ववेदोऽपि सामवेदीयोपवेदत्वेन पूर्वाचार्यैः परिगण्यते । एवं विजातीयस्वरसमाहारस्यैव सामशब्दाभिधेयत्वं रथन्तरादिशब्दवाच्यत्वं चेत्यध्यवसीयते । अमुनैव चाऽभिसन्धिना मीमांसका अपि रथन्तरादिशब्दानां गीतिमात्रवाचित्वं सिद्धान्तयन्ति । एतादृशानि सामानि परश्शतानि पठ्यन्ते प्रकृतिग्रन्थे ।

## गाने आरण्यकम् ।

आरण्यकाख्येऽपि ग्रन्थे प्रकृतिवदेव सामानि पठितानि । वस्तुतोऽयमारण्यकभागः प्रकृतिग्रन्थस्यैवांऽशभूतः, न पृथग्गणनमर्हति । परं तत्र पठितानां साम्नामरण्यमात्रगेयत्वप्रतिपादनात् ग्रन्थस्यैवाऽऽरण्यकत्वव्यवहारः प्रवृत्तः । अत एव प्रकृतेः पूर्वभागस्य ग्रामगेयत्वं उत्तरभागस्याऽरण्यगेयत्वमिति ग्रामारण्यभेदेन व्यवहारभेदः प्रवृत्त इति भाति ॥

## ऊहग्रन्थस्वरूपम् ।

ऊहग्रन्थे तु 'एकं साम तृचे क्रियते स्तोत्रीयम्' इति विधिमनुसृत्य तत्तत्क्रतुषु तृचे कर्तव्यानां स्तोत्राणां सम्पत्तये तृचात्मके ऋक्समुदाये साम्नां पाठः । तत्राऽपि 'यद्योन्यां तदुत्तरयोर्गायति' इति विधिबलात् योन्यृचमादायैव त्रित्वसम्पादनं कर्तव्यम् । तथैव चोत्तरार्चिके पाठ ऋचाम् । तत्र येन क्रमेणर्चः पठितास्तेनैव क्रमेणोपादीयन्ते ऊहग्रन्थे गीयन्ते च क्रतुकाले । तदर्थमेवोहग्रन्थप्रवृत्तिः । योनिग्रन्थे हि (प्रकृतौ) एकैकस्यामृच्येकैकं सामोत्पन्नमिति पूर्वमुक्तम् । तानि तथैव क्रतौ नोपयोक्तुमर्हन्ति । तृचगानस्यैव तत्र कर्तव्यताविधानात् । तादृशं तृचगानं तु तत्काले ऊहित्वा कर्तव्यम् । तत्र मन्दबुद्धीनामस्माकमशक्तिमन्यथाकरणं वा सम्भावयन्तोऽस्मत्पूर्वाचार्याः तत्र तत्र यज्ञेषु स्तोत्रसम्पत्तये यथा गातव्यं, तथोहं कृत्वा तं ग्रन्थात्मकं कृत्वाऽरक्षन् । सोऽयमूहग्रन्थः । अत एव च मीमांसका ऊहग्रन्थं पौरुषेयमभिदधति ।

तत्र प्रकृतिग्रन्थदृष्टक्रमापेक्षयाऽत्राऽन्यादृश एव क्रम आश्रितः । स च क्रमो द्वादशाहान्तर्गतदशरात्रमारभ्याऽनुष्ठेयेषु क्रतुषु कर्तव्यानां स्तोत्राणां क्रममनुसृत्य । सोऽपि च क्रमः ताण्ड्येऽत्र क्रतुविधावादृतः क्रम एव । एवं च ब्राह्मणक्रममेवोपादत्ते ऊहग्रन्थो-

ऽपि । प्रकृतिग्रन्थस्तु न तथेति व्यक्तीभवति । अनयैव रीत्याऽतिप्राचीनकालतः दक्षिण-देशेऽध्ययनाध्यापनपरिपाटी प्रचलति । तत्रोहग्रन्थस्तथैव मुद्रितोऽपि । सति चैवमेतत्पूर्वसंस्करणभूमिकायां पण्डितप्रवरैः श्रीसत्यव्रतसामश्रमिमहोदयैः सामवेदसंहिताग्रन्थे एकैकस्मिन् सूक्ते यत्र कुत्रचिदाम्नातान्यपि सामान्येकत्र कृत्वा यन्मुद्रापणं कृतम् , तदन्वेषकाणां सौकर्याय परम् , न त्वध्ययनरीत्यनुसारेण, सा तु पूर्वोक्तप्रकारेणैव । सा च रीतिः दक्षिणदेशे ग्रन्थाक्षरेषु मुद्रितेभ्यस्सामवेदीयसंहिताग्रन्थेभ्योऽवगन्तव्या । सत्यवसरे सति च सामाग्रीसमुत्पादे वयमपि यतिष्यामहे तान् मुद्रापयितुं प्रकाशयितुं च ।

## रहस्यग्रन्थस्वरूपम् ।

एवमेव रहस्यग्रन्थोऽरण्यगेयसामभिरेव दशरात्रादिक्रतूपयोगिभिस्तृचगतैस्सङ्ग्रथितः । तत्राऽप्ययमेव क्रतूनां क्रम आदृतो योऽस्त्यूहग्रन्थे । एवं च प्रकृतिग्रन्थमूलक ऊहग्रन्थः, आरण्यकग्रन्थमूलको रहस्यग्रन्थः इति विवेक्तव्यम् ।

* तत्र **प्रकृतिग्रन्थे**—(१)आग्नेयम् , (२)ऐन्द्रम्, (३)पावमानम्, इति पर्वत्रयम् । ऐन्द्रेऽवान्तरभेदाः पञ्च बहुसामप्रभृतयः । **आरण्यके च**–(१)अर्कपर्व (२)द्वन्द्वपर्व (३)व्रतपर्व (४)शुक्रियपर्व (५)महानाम्नीपर्व, इति पञ्च पर्वाणि । **ऊहे**-(१)दशरात्रम् (२)संवत्सरम् (३)एकाहः, (४) अहीनः, (५) सत्रम् (६) प्रायश्चित्तम् (७) क्षुद्रम्, इति सप्त विभागाः । अनेनैव क्रमेणेम एव सप्त विभागा **रहस्येऽपि**। तत्र प्रकृतौ (वेयगाने) आरण्यके, ऊहे, रहस्ये च कुत्र कियन्ति सामानि, इति सुखावबोधाय तद्विवरणी सूचिका काचिदत्रोद्ध्रियते—

**प्रकृतौ ( वेयगाने )**—

| | पर्वनाम | | सामसंख्या |
|---|---|---|---|
| | गायत्रसाम | | १ |
| १ | आग्नेयपर्वणि | | १८० |
| २ | ऐन्द्रपर्वणि बहुसाम्नि | | १३२ |
| | ,, | एकसाम्नि | ६४ |
| | ,, | बृहत्याम् | १५० |
| | ,, | त्रिष्टुभि | ४९ |
| | ,, | अनुष्टुभि | ७६ |
| | ,, | इन्द्रपुच्छे | १६२ |
| ३ | पावमाने | | ३८४ |
| | आहत्य सामसंख्या | | ११९८ |

**आरण्यके**—

| पर्वनाम | सामसंख्या |
|---|---|
| अर्कपर्वणि | ८९ |
| द्वन्द्वपर्वणि | ७७ |
| व्रतपर्वणि | ८४ |
| शुक्रियपर्वणि | ४० |
| महानाम्नीपर्वणि | ६ |
| आहत्य सामसंख्या | २९६ |
| प्रकृत्यारण्यकयोस्संकलनेन सामसंख्या | १४९४ |

* प्रकृतिग्रन्थस्य 'वेयगानमि'त्यपि संज्ञाऽध्येतृपरम्परासिद्धा ।

| ऊहग्रन्थे— | | रहस्यग्रन्थे— | |
|---|---|---|---|
| क्रतुनाम. | सा. सं. | क्रतुनाम. | सा. सं. |
| १ दशरात्रे | २२२ | दशरात्रे | २९ |
| २ संवत्सरे | १५२ | संवत्सरे | ४१ |
| ३ एकाहे | १५८ | एकाहे | २३ |
| ४ अहीने | १४६ | अहीने | ३१ |
| ५ सत्रे | १२१ | सत्रे | १४ |
| ६ प्रायश्चित्ते | ५० | प्रायश्चित्ते | १९ |
| ७ क्षुद्रे | ८७ | क्षुद्रे | ५२ |
| आहत्य सामसंख्या | ९३६ | आहत्य सामसंख्या | २०९ |

## उपसंहारः ।

एवं सामवेदीया मन्त्रभागगता ब्राह्मणभागगताश्च विषया यथायथमनतिक्रम्य स्वबुद्धिशक्तिं विवृताः । तदुपष्टम्भनायैव च वेदान्तरीया अपि केचन विषया विवृतिपथमानीताः । यज्ञादिस्वरूपमपि यथोचितं किञ्चिदिव विवेचितम् । ग्रन्थेऽत्र यतस्संशोधनमारब्धमस्माभिः ततः प्रभृति तत्तत्सामाधारभूतामुत्तराग्रन्थस्थानामृचां तत्तत्स्थले टिप्पण्यां समग्रतयोल्लेखनं कृतम् । एतन्मूलवाक्यसदृशानां शाखान्तरीयवाक्यानां स्थानोल्लेखो यथोपलम्भमकारि । ग्रन्थान्ते एतद्ग्रन्थोपलब्धानां लोकसिद्धार्थावबोधकानामर्थवादगताभाणकवाक्यानां सूची काचन संयोजिताऽनादिकालसिद्धास्मत्प्राचीनार्यसभ्यतागौरवसंसूचनाय । पूर्वमीमांसायां विषयवाक्यतया उदाहरणतया वा गृहीतानामेतद्ब्राह्मणवाक्यानामेकात्रीकरणं कृतम् । विश्वसिमि व्यापारेणाऽनेन सामवेदविषयविवरणेन यज्ञादिस्वरूपविवेचनेन च भगवान् समगानप्रियः प्रियार्धतनुराशुतोषो विश्वम्भरो यज्ञेश्वरो यज्ञात्मा सन्तुष्टस्स्यादिति । यदि सुमनसोऽपि परितुष्येयुर्निर्मत्सराः, सावधानेन मनसा कृतशोधनेऽपि अपरिहार्येण मनुष्यदोषेणाऽवस्थितिमुपगतानुपेक्ष्य कांश्चन दोषान्, तर्ह्ययं महाननुग्रहः, परिश्रमस्य परमं साफल्यम्, ग्रन्थस्याऽपि च महदुद्धरणम् । अन्यथा त्वस्त्येव परमेश्वरपरितोषणमनुत्तमं फलमिति तावतैव सन्तुष्यत्ययं जनः ।

## उपहारः ।

कार्ये प्रतिक्षणं स्मृतिपथमागत्य मामकीनमुत्साहमभिवर्धयतां संस्कृतविद्याजीवातूनां त्यागोत्साहमयैकजीवितानां पवित्रतमभुवनादर्शभूतचरितानां **पूज्यपण्डितप्रवरमदनमोहनमालवीयमहोदयानां** करकमलयोस्सादरं प्रणामततिपुरस्सरं समुपहरामि ग्रन्थमिमं गौरवाविष्टेन चेतसा ।

## प्रणतिसमर्पणम् ।

एवमनुकलमस्मानुचितपथप्रदर्शनेन विविधविषयोपदेशेन चाऽत्यादरेण प्रेमातिश-

येन आशीर्वचनेन चाऽनुगृहीतवद्भ्यः पण्डितकुलतिलकेभ्यः तलस्पर्शिपाण्डित्यभरसम्पादितयशःपूरपरिप्लावितदिगन्तेभ्यः पवित्रमयजीवितेभ्यः महामहोपाध्यायतर्कभूषणादिविविधोपाधिविभूषितेभ्यः **मान्यवर श्रीप्रमथनाथभट्टाचार्यमहोदयेभ्यः** समर्पयामि प्रणामपरम्पराम् ॥

## धन्यवादाः ।

एतत्पुस्तकसंशोधनाय स्वपुस्तकालयतः हस्तलिखितपुस्तकप्रेषणेनाऽस्मानतीवोपकृतवद्भ्यो बडोदाराजकीयपुस्तकालयाध्यक्षेभ्यः श्रीमद्भ्यः Dr. विनयतोषभट्टाचार्यमहोदयेभ्यः, मद्रनगरस्थाडयार पुस्तकालयाध्यक्षेभ्यः श्रीमद्भ्यः Dr. कुञ्चन्राजमहोदयेभ्यः, मूलपुस्तकप्रेषणेन नितान्तमुपकृतवद्भ्यो लवपुरीवास्तव्येभ्यः पं० श्रीभगवद्दत्तमहोदयेभ्यश्च ( येषामेवोपाकारोऽत्र मुद्रणकार्ये प्राधान्यमवालम्बत तेभ्यः ) सहार्दमनेकान् धन्यवादान् वितरामि ।

एवमेव निर्दिष्टसमये कार्यासमाप्त्या पुस्तकानां पुनरप्रतिप्रेषणेन मयोल्लङ्घ्यमानं पुस्तकालयीयं नियममप्यविगणय्य कृपयैव परं यावत्कार्यसमाप्ति कार्योपयोगीनि पुस्तकानि मन्निकट एव स्थापनायाऽनुमतवद्भ्यो विश्वविद्यालयीयपुस्तकालयाध्यक्षेभ्यः श्रीगङ्गाशङ्करमिश्रमहोदयेभ्यः, तादृशेनैव प्रेम्णा तावन्तमेवोपकारमाधत्तवद्भ्यो गोयनकामहाविद्यालयीयपुस्तकालयाध्यक्षेभ्यः श्रीकृष्णपन्तमहोदयेभ्यश्चोत्सृजामि धन्यवादाननेकान् ।

## आशिषः ।

मया सहैवाऽनवरतमवस्थाय संशोधनकार्ये सर्वविधं साह्यमनुष्ठितवन्तं मदन्तेवसन्तं श्रीमन्तं **पं० पट्टाभिरामशर्माणं** मीमांसाचार्यमभिवर्धयाम्यमन्देन वैदिकेनाऽऽशिषां राशिना ।

एतादृशप्राचीनग्रन्थमुद्रापणकृतादरातिशयं चौखम्बामुद्रणालयाधिपतिं **श्रीजयकृष्णदासहरिदासगुप्तमहोदयं सानुजमे**तादृशकार्यकारणे पुनः पुनः प्रोत्साहयन्नापूरयंश्चाशिषोपसंहरामि लेखमिमम् ।

उद्यमः पूर्णतामाप कृपाया यस्य लेशतः ।
कलाधरकृतोत्तंसं कलये तं कृपोदधिम् ॥

**इति शिवम् ॥**

बाराणसी हनुमद्घट्टः
अधिकभाद्र शु. १४.
वै. सं. १९९३
३१. ८. १९३६ ई.

इति विदुषामाश्रवो
**विधेयतमश्च**
**चिन्नस्वामिशास्त्री**

# ताण्ड्यमहाब्राह्मणद्वितीयभागान्तर्गतविषयाणां सूची ॥


| विषयाः— | पृष्ठम्— |
|---|---|
| **त्रयोदशाध्याये प्रथमखण्डे—** | |
| व्यूढद्वादशाहस्य दशरात्रान्तर्गतपञ्चमस्याऽह्नो बहिष्पवमानस्तोत्रे तृचविधानम् | १ |
| तस्मिन्नेव स्तोत्रे द्वितीयतृचविधानम् | २ |
| प्रथमद्वितीययोस्तृचयोर्विशिष्टफलहेतुताकथनम् | ३ |
| अत्रैव तृचान्तरविधानम् | ४ |
| तस्य स्तोमविधानम् | ५ |
| **त्रयोदशाध्याये द्वितीयखण्डे—** | |
| प्रथमाज्यस्तोत्रविधानम् | ५ |
| द्वितीयाज्यस्तोत्रविधानम् | ६ |
| तृतीयाज्यस्तोत्रविधानम् | ८ |
| **त्रयोदशाध्याये तृतीयखण्डे—** | |
| तत्रैव माध्यन्दिनपवमानस्य त्रयाणां तृचानां विधानम् | ९–१० |
| प्रथमतृचे गायत्रसामविधानम् | १० |
| तत्रैव सामान्तरविधानम् | १० |
| तस्य साम्नो गाने सान्तत्यविधिः | १० |
| तस्मिन् साम्नि निधनविधिः | ११ |
| तत्रैव सामान्तराणां बहूनां विधानम्, तेषां तत्तत्फलसाधनत्वेन स्तुतिश्च | ११–१६ |
| **त्रयोदशाध्याये चतुर्थखण्डे—** | |
| पृष्ठस्तोत्रनिर्वर्तकस्य शाक्वरसाम्नस्संज्ञाचतुष्टयप्रदर्शनम् | १७ |
| तदाधारभूतानां शक्वरीणां स्तुतिः | १७–१९ |
| साम्नां गानविधानम्, गाने विशेषश्च | २० |
| तत्रैव साम्नि तत्तत्फलसाधनत्वेन तत्तन्निधनानां विधिः | २१ |
| तत्रैव प्रस्तावोद्गानयोः क्षिप्रत्वविधानम् | २२ |
| तत्रैव पुरीषपदगानविधिः, तस्य प्रशंसा च | २२ |
| ब्राह्मणाच्छंसिनः पृष्ठस्तोत्रविधानम्, तत्र सामविधिः, तत्रैव विकल्पेन स्तोत्रीयान्तरविधानञ्च | २३ |
| तस्यैव तत्तत्फलसाधनत्वेन विधिः | २४ |
| तस्यैव कर्तृविशेषे व्यवस्था | २५ |
| **त्रयोदशाध्याये पञ्चमखण्डे—** | |
| आर्भवपवमाने गातव्यानां साम्नां तदाधारभूतानां तृचानाञ्च विधानम् | २६–३४ |

| विषयाः— | पृष्ठम्— |
| --- | --- |
| त्रयोदशाध्याये षष्ठखण्डे | |
| उक्थस्तोत्रसम्बन्धिस्तोत्रीयाणां साम्नाञ्च विधिः, तत्र स्तोमक्लृप्तिप्रदर्शनपूर्वकं स्तुतिश्च | ३४-३९ |
| त्रयोदशाध्याये सप्तमखण्डे— | |
| दाशरात्रिकस्य षष्ठस्याऽह्नो बहिष्पवमानस्तोत्रे तृचानां विधानम् | ३९-४४ |
| त्रयोदशाध्यायेऽष्टमखण्डे | |
| आज्यस्तोत्राणां चतुर्णां विधानम् | ४५-४६ |
| त्रयोदशाध्याये नवमखण्डे— | |
| तत्रैव माध्यन्दिनपवमाने तृचानां साम्नाञ्च विधानम् | ४७-५४ |
| त्रयोदशाध्याये दशमखण्डे— | |
| होत्रादीनां चतुर्णां पृष्ठस्तोत्रेषु ऋचां साम्नाञ्च विधानम्, तेषां स्तुतिश्च | ५५-६१ |
| त्रयोदशाध्याये एकादशखण्डे— | |
| तत्रैव षष्ठेऽहन्यार्भवपवमाने ऋचां साम्नाञ्च विधानम् | ६१-६७ |
| त्रयोदशाध्याये द्वादशखण्डे— | |
| तत्रैवोक्थस्तोत्रेषु त्रिष्वपि स्तोत्रीयाणां साम्नाञ्च विधानम् | ६८-७० |
| षडहसमाप्तौ नियमाः | ७१ |
| तत्रैव मध्वशनविधिः | ७२ |
| चतुर्दशाध्याये प्रथमखण्डे— | |
| दाशरात्रिकसप्तमस्याऽह्नो बहिष्पवमाने स्तोत्रीयाविधानम्, तासां स्तुतिश्च | ७३-८० |
| चतुर्दशाध्याये द्वितीयखण्डे— | |
| चतुर्णामाज्यस्तोत्राणां विधिः, तेषां स्तुतिश्च | ८२-८३ |
| चतुर्दशाध्याये तृतीयखण्डे— | |
| तस्मिन्नेव सप्तमेऽहनि माध्यन्दिनपवमानसम्बन्धिनां तृचानां साम्नाञ्च विधानम्, तेषां स्तुतिश्च | ८४-९३ |
| चतुर्दशाध्याये चतुर्थखण्डे— | |
| पृष्ठस्तोत्रसम्बन्धिनां प्राकृतातिरिक्तानां तृचानां साम्नाञ्च विधिः | ९३-९७ |
| चतुर्दशाध्याये पञ्चमखण्डे— | |
| तस्मिन्नेवाऽहन्यार्भवपवमाने तृचानां साम्नाञ्च विधानम्, तद्वेदनफलञ्च | ९७-१०७ |
| चतुर्दशाध्याये षष्ठखण्डे— | |
| उक्थस्तोत्राणां त्रयाणां ऋचां साम्नाञ्च विधानम्, तेषां स्तुतिश्च | १०८—१११ |
| चतुर्दशाध्याये सप्तमखण्डे— | |
| अष्टमस्याऽह्नो बहिष्पवमानस्तोत्रविधिः | ११२—११६ |
| चतुर्दशाध्यायेऽष्टमखण्डे— | |
| तस्मिन्नेवाऽहनि आज्यस्तोत्राणां विधानम्, तेषां प्रशंसा च | ११६—११८ |

विषयाः—　　　　　　　　　　　　　　　　　　　　　　　　पृ म्—

चतुर्दशाध्याये नवमखण्डे—
माध्यन्दिनपवमाने तृचानां साम्नाञ्च विधानम्　　११९—१२८
चतुर्दशाध्याये दशमखण्डे—
पृष्ठस्तोत्रसम्बन्धिनामृचां साम्नाञ्च विधानम्　　१२९—१३२
चतुर्दशाध्याये एकादशखण्डे—
तत्रैवाऽहन्यार्भवपवमानसम्बन्धिनामृचां साम्नाञ्च विधानम्　　१३२—१४१
चतुर्दशाध्याये द्वादशखण्डे—
उक्थस्तोत्रसम्बन्धिनां ऋचसाम्नां विधानम्　　१४२—१४५
पञ्चदशाध्याये प्रथमखण्डे—
दाशरात्रिकस्य नवमस्याऽह्नो बहिष्पवमानस्तोत्रे तृचानां विधानम्　　१४६—१५०
पञ्चदशाध्याये द्वितीयखण्डे—
तस्मिन्नेवाऽहनि आज्यस्तोत्राणां विधानम्, तेषां स्तुतिश्च　　१५१—१५४
पञ्चदशाध्याये तृतीयखण्डे—
तस्मिन्नेवाऽहनि माध्यन्दिनपवमाने तृचसाम्नां विधानम्　　१५५—१६४
पञ्चदशाध्याये चतुर्थखण्डे—
पृष्ठस्तोत्रसम्बन्धिनां तृचानां साम्नाञ्च विधानम्　　१६५—१६७
पञ्चादशाध्याये पञ्चमखण्डे—
आर्भवपवमाने तृचानां साम्नाञ्च विधिः तेषां स्तुतिश्च　　१६८—१७८
पञ्चदशाध्याये षष्ठखण्डे—
उक्थस्तोत्रेषु साम्नां विधानम्　　१७९—१८१
पञ्चदशाध्याये सप्तमखण्डे—
दशमेऽह्नि विस्मृतस्य पदार्थस्य परैः प्रतिबोध-निषेधकथनम्, तत्रैव धर्मविशेषविधानञ्च　　१८१—१८२
तत्रैव बहिष्पवमानस्तोत्रे ऋचां विधिः　　१८३—१८६
पञ्चदशाध्यायेऽष्टमखण्डे—
दशमेऽहनि आज्यस्तोत्रविधानम्　　१८७—१८९
पञ्चदशाध्याये नवमखण्डे—
दशमस्याऽह्नो माध्यन्दिनपवमानस्तोत्रविधिः　　१८९—१९४
पञ्चदशाध्याये दशमखण्डे—
दशमेऽहनि पृष्ठस्तोत्रे तृचानां साम्नां च विधिः　　१९४—१९९
पञ्चदशाध्याये एकादशद्वादशयोः खण्डयोः—
दशमेऽहन्यार्भवपवमानस्य स्तोत्रीयादीनां विधिः　　१९९—२०७
षोडशाध्याये प्रथमखण्डे—
ज्योतिश्शब्दनिर्वचनम्, ज्योतिष्टोमे त्रिवृदादीनां निवेशप्रकारः, दक्षिणाविधिः, तस्य स्तुतिश्च　　२०८—२१५

विषयाः— पृष्ठम्—

षोडशाध्याये द्वितीयखण्डे—

गवाख्यस्यैकाहस्य विधिः २१५—२१७

षोडशाध्याये तृतीयखण्डे—

आयुस्संज्ञकस्यैकाहस्य विधिः २१८—२२०

षोडशाध्याये चतुर्थादिषु चतुर्षु खण्डेषु—

अभिजिद्विश्वजित्सर्वजितामेकाहनां विधिः, तत्र सामविशेषाणां विधिश्च २२०—२३८

षोडशाध्यायेऽष्टमादिषु एकादशान्तेषु खण्डेषु—

चतुर्णां साहस्राणां विधिः, तेषां सामविशेषविधानं, प्रतिपद्विधानं फलार्थवादश्च २३८—२५३

षोडशाध्याये द्वादशादिषु षोडशान्तेषु खण्डेषु—

पञ्चानां साद्यस्क्राणां तत्तत्फलानां वेदेः यूपीयवृक्षस्य सोमक्रयसाधनस्य च विधिः २५३—२६८

सप्तदशाध्याये आदितश्चतुर्षु खण्डेषु—

चतुर्णां व्रात्ययज्ञानां तदधिकारिणां, स्तोत्रेषु स्तोमविशेषाणाञ्च विधानम् २६९—२८०

सप्तदशाध्याये पञ्चमादिषु नवमान्तेषु खण्डेषु—

पञ्चानामग्निष्टुतां तत्तत्फलानां तत्तत्स्तोमानाञ्च विधानम् २८०—२८८

सप्तदशाध्याये दशमादिषु त्रिषु खण्डेषु—

त्रयाणां त्रिवृतां तेषां स्तोमानाञ्च विधिः २८८—२९४

सप्तदशाध्याये त्रयोदशचतुर्दशयोः खण्डयोः—

सौमिकचातुर्मास्यानां निरूपणम् २९५—३०२

अष्टादशाध्याये आदितस्सप्तसु खण्डेषु—

उपहव्यादीनां षण्णां वाजपेयान्तानां निरूपणम् ३०२—३३२

अष्टादशाध्यायेऽष्टमखण्डे—

राजसूयस्य कालविधिः, तदन्तर्गतयोः पवित्राभिषेचनीयाख्ययोस्सोमयागयोर्विधानम्, तत्र साम्नां तृचानाञ्च विधानम् ३३३—३४०

अष्टादशाध्याये नवमखण्डे—

राजसूयान्तर्गतदशपेयस्य साङ्गस्य विधानम्, तत्र दक्षिणाद्रव्याणां रुक्मप्राकाशाश्वादीनां विधिश्च ३४१—३४७

अष्टादशाध्याये दशमैकादशखण्डयोः—

राजसूयान्तर्गतकेशवपनीयव्युष्टिद्विरात्रयोर्विधानम्, तत्र साम्नां विधिश्च ३४८—३५६

एकोनविंशाध्याये आदित एकोनविंशतिखण्डेषु—

राडादिविघनपर्यन्तानां विंशतिसंख्याकानां द्वन्द्वसोमानां क्रमशो विधानम्, तत्र साम्नां स्तोमानाञ्च विधिः ३५७—३९६

विषयाः— पृष्ठम्—

विंशाध्याये आदितो दशसु खण्डेषु—

ज्योतिष्टोमाद्येकविंशतिरात्रपर्यन्तानां त्रयोदशसंख्याकानामतिरात्राणां विधानम्, तेषु स्तोमक्लृप्तिः, तद्वेदनफलं, तत्राऽधिकारिणां निरूपणञ्च ३९७-४१२

विंशाध्याये एकादशादिषु त्रयोदशान्तेषु खण्डेषु—

अङ्गिरसादीनां त्रयाणां कापिवनान्तानां द्विरात्राणां विधानम्, तेषां नामनिर्वचनम्, तत्र फलाधिकारिणां निरूपणञ्च ४१२-४१९

विंशाध्याये चतुर्दशप्रभृतिषोडशान्तेषु खण्डेषु—

गर्गत्रिरात्रस्य विधिः, तन्नामनिर्वचनम्, तत्प्रशंसा, तत्रैकोनसहस्रसंख्याकानां गवां दिनत्रये विभज्य दानञ्च ४१९-४३४

एकविंशाध्याये आदितस्त्रिषु खण्डेषु—

गर्गत्रिरात्रे देयदक्षिणाद्रव्यप्रशंसा, तत्र साम्नां विधिः, तत्र शबलीहोमाद्यङ्गविधिश्च ४३५-४४५

एकविंशाध्याये चतुर्थखण्डे—

अश्वत्रिरात्रस्य विधिः, तत्र साम्नां स्तोत्राणाञ्च विधानम् यूपविषये विशेषाभिधानञ्च ४४५-४५०

एकविंशाध्याये पञ्चमखण्डे—

वैदत्रिरात्रस्य विधानम् ४५०-४५१

एकविंशाध्याये षष्ठखण्डे—

छन्दोमपवमानाख्यस्य त्रिरात्रस्य विधिः ४५२

एकविंशाध्याये सप्तमखण्डे—

अन्तर्वसुसंज्ञकस्य त्रिरात्रस्य विधिः ४५३-४५४

एकविंशाध्यायेऽष्टमखण्डे—

पराकाख्यस्य त्रिरात्रस्य विधानम् ४५४-४५५

एकविंशाध्याये नवमादिषु द्वादशान्तेषु खण्डेषु—

चतुर्वीरादीनां चतुर्णां चतूरात्राणां विधिः, तत्र द्विकपालादीनामङ्गयागानां विधिः, तत्र साम्नां स्तोत्राणां विधानञ्च ४५६-४७०

एकविंशाध्याये त्रयोदशादिषु पञ्चदशान्तेषु खण्डेषु—

अभ्यासंग्यादीनां त्रयाणां पञ्चरात्राणां विधानम्, तेषां प्रशंसा, तत्र कालविधानं च ४७०-४७९

द्वाविंशाध्याये आदितस्त्रिषु खण्डेषु—

षड्रात्राणां त्रयाणां विधिः, तेषां प्रशंसा, तत्राऽधिकारिनिरूपणञ्च ४८०-४८३

द्वाविंशाध्याये चतुर्थप्रभृत्येकादशान्तेषु खण्डेषु—

सप्तरात्राणां सप्तानां विधानम्, तत्र फलस्याऽधिकारिणाञ्च निरूपणम् ४८३-४९४

विषयाः— पृष्ठम्—

द्वाविंशाध्याये द्वादशत्रयोदशयोः खण्डयोः

द्वयोर्नवरात्रयोर्विधिः, तत्र फलविशेषप्रतिपादनं तद्वेदनप्रशंसा च ४९४–४९६

द्वाविंशाध्याये चतुर्दशप्रभृतिषु सप्तदशान्तेषु खण्डेषु

दशरात्राणां चतुर्णां विधिः, तत्प्रशंसा च ४९६–५०१

द्वाविंशाध्यायेऽष्टादशखण्डे—

पौण्डरीकाख्यस्यैकादशरात्रस्य विधिः ५०१–५०२

त्रयोविंशाध्याये प्रथमद्वितीययोः खण्डयोः—

त्रयोदशरात्रयोर्द्वयोस्सत्रयोर्विधिः ५०३–५०६

त्रयोविंशाध्याये तृतीयचतुर्थपञ्चमेषु खण्डेषु

चतुर्दशरात्राणां त्रयाणां सत्राणां विधिः, तेषामहःक्लृप्तिः, तत्प्रशंसा च ५०६–५१२

त्रयोविंशाध्याये षष्ठादिषु नवमान्तेषु खण्डेषु

पञ्चदशरात्राणां चतुर्णां सत्राणां विधानं, तत्प्रशंसा च ५११–५१६

त्रयोविंशाध्याये दशमखण्डे

षोडशरात्रस्य सत्रस्य विधिः ५१७

त्रयोविंशाध्याये एकादशखण्डे—

सप्तदशरात्रस्य सत्रस्य विधानम् ५१८

त्रयोविंशाध्याये द्वादशे खण्डे

अष्टादशरात्रस्य सत्रस्य विधिः ५१९

त्रयोविंशाध्याये त्रयोदशे खण्डे

एकोनविंशतिरात्रस्य सत्रस्य विधिः ५२०–५२१

त्रयोविंशाध्याये चतुर्दशे खण्डे—

विंशतिरात्रस्य सत्रस्य विधानम् ५२१–५२२

त्रयोविंशाध्याये पञ्चदशषोडशयोः खण्डयोः

द्वयोरेकविंशतिरात्रयोस्सत्रयोर्विधिः, तत्र फलविशेषप्रतिपादनञ्च ५२३–५२७

त्रयोविंशाध्याये सप्तदशे खण्डे -

अन्नाद्यफलसाधनस्य द्वाविंशतिरात्रस्य सत्रस्य विधिः, तत्राऽहःक्लृप्तिः, तत्प्रशंसा च ५२७–५२८

त्रयोविंशाध्यायेऽष्टादशे खण्डे—

प्रतिष्ठासाधनस्य त्रयोविंशतिरात्रस्य सत्रस्य विधिः ५२८

त्रयोविंशाध्याये एकोनविंशविंशयोः खण्डयोः

द्वयोश्चतुर्विंशतिरात्रयोर्विधिः, तत्प्रशंसा च ५२९–५३२

त्रयोविंशाध्याये एकविंशाद्यष्टाविंशान्तेषु खण्डेषु

पञ्चविंशतिरात्रप्रभृतिद्वात्रिंशद्रात्रपर्यन्तानामष्टानां सत्राणां क्रमेण विधानम् ५३३—५३९

विषयाः— पृष्ठम्—

चतुर्विंशाध्याये आदितस्त्रिषु खण्डेषु—

त्रयस्त्रिंशद्रात्राणां त्रयाणां स णां विधानम्
तत्राऽहःक्लृप्तिः, साम्नामृचाञ्च विधानम् } ५४०–५४७

चतुर्विंशाध्याये चतुर्थखण्डे—

समृद्धिफलकस्य चतुस्त्रिंशद्रात्रस्य सत्रस्य विधिः ५४७

चतुर्विंशाध्याये पञ्चमखण्डे—

पशुफलकस्य पञ्चत्रिंशद्रात्रस्य विधिः ५४८

चतुर्विंशाध्याये षष्ठखण्डे—

पशुसाधनकस्य षट्त्रिंशद्रात्रस्य सत्रस्य विधिः ५४८–५४९

चतुर्विंशाध्याये सप्तमखण्डे—

अन्नपशुफलकस्य सप्तत्रिंशद्रात्रस्य विधिः ५४९–५५०

चतुर्विंशाध्यायेऽष्टमखण्डे—

अष्टात्रिंशद्रात्रस्य सत्रस्य विधिः ५५०

चतुर्विंशाध्याये नवमखण्डे—

अनन्तश्रीजयफलकस्यैकोनचत्वारिंशद्रात्रस्य सत्रस्य विधानम् ५५१

चतुर्विंशाध्याये दशमखण्डे—

परमराज्यप्रतिष्ठाफलकस्य चत्वारिंशद्रात्रस्य सत्रस्य विधिः ५५१–५५२

चतुर्विंशाध्याये एकादशादिषु सप्तदशान्तेषु खण्डेषु—

विधृतिसंज्ञकानां सप्तानामेकोनपञ्चाशद्रात्राणां सत्राणां विधिः,
तेषामहःक्लृप्तिः, तत्प्रशंसा च } ५५२–५६५

चतुर्विंशाध्यायेऽष्टादशे खण्डे—

ऋद्धिफलकस्यैकषष्टिरात्रस्य साङ्गस्य सत्रस्य विधिः ५६६–५६८

चतुर्विंशाध्याये एकोनविंशे खण्डे—

अमृतफलकस्य शतरात्रस्य सत्रस्य विधिः, तत्राऽहःक्लृप्तिश्च ५६९

चतुर्विंशाध्याये विंशे खण्डे—

सर्वकामसाधनस्य गवामयनाख्यस्य संवत्सरसाध्यस्य सत्रस्य विधिः,
तदहःक्लृप्तिश्च } ५७०

पञ्चविंशाध्याये प्रथमखण्डे—

स्वर्गसाधनस्याऽऽदित्यानां पृष्ठ्यायनस्य विधिः,
तत्राऽहःक्लृप्तिः, अह्नां प्रशंसा च } ५७१–५७५

पञ्चविंशाध्याये द्वितीयखण्डे—

पुरस्तात्पृष्ठ्याख्यस्याऽङ्गिरसामयनस्य विधिः, तत्राऽहःक्लृप्तिः, तत्प्रशंसा च ५७५–५७७

पञ्चविंशाध्याये तृतीयखण्डे—

सस्तुतिकस्य दृतिवातवतोरयनस्य विधिः ५७७—५७९

विषयाः— पृष्ठम्—

पञ्चविंशाध्याये चतुर्थखण्डे-

सर्वर्द्धिसाधनस्य कुण्डपायिनामयनस्य विधिः, तदहःक्लृप्तिप्रदर्शनम्, तत्प्रशंसा च ५७९—५८१

पञ्चविंशाध्याये पञ्चमखण्डे-

सर्वर्द्धिफलकस्य तपश्चितामयनाख्यस्य सत्रस्य विधिः ५८१—५८२

पञ्चविंशाध्याये षष्ठखण्डे-

सर्वर्द्धिफलकस्य प्रजापतेर्द्वादशसंवत्सराख्यस्य सत्रस्य विधिः तत्स्तुतिश्च ५८२—५८३

पञ्चविंशाध्याये सप्तमखण्डे-

सर्वर्द्धिसाधनस्य षट्त्रिंशत्संवत्सरस्य शाक्त्यानामयनस्य विधिः ५८४

पञ्चविंशाध्यायेऽष्टमखण्डे-

स्वर्गसाधनस्य साध्यानां शतसंवत्सरस्य सत्रस्य विधिः, तत्प्रशंसा च ५८५—५८६

पञ्चविंशाध्याये नवमखण्डे-

अन्नाद्यफलकस्य अग्नेस्सहस्रसाव्याख्यस्य सत्रस्य विधिः ५८७

पञ्चविंशाध्याये दशमैकादशद्वादशेषु खण्डेषु-

सारस्वतसत्राणां त्रयाणां विधिः, तत्र दीक्षोपसदोरियत्ताकथनम्, सदः प्रभृतीनां निर्माणप्रकारश्च ५८८-५९८

पञ्चविंशाध्याये त्रयोदशखण्डे-

एकयजमानकस्य दार्षद्वताख्यस्येष्ट्ययनस्य विधिः, तत्राऽवभृथस्नानविधिश्च ५९८-६००

पञ्चविंशाध्याये चतुर्दशखण्डे-

सर्वर्द्धिसाधनस्य तुरायणाख्यस्येष्ट्ययनस्य विधिः ६०१.

पञ्चविंशाध्याये पञ्चदशखण्डे-

प्रतिष्ठाफलकस्य सर्पाणां सत्रस्य विधिः तत्प्रशंसा च ६०२-६०३

पञ्चविंशाध्याये षोडशखण्डे-

प्रजातिसाधनस्य त्रिसंवत्सरसाध्यस्य सत्रस्य विधिः ६०४-६०५

पञ्चविंशाध्याये सप्तदशखण्डे-

सर्वर्द्धिसाधनस्य प्रजापतेस्सहस्रसंवत्सरस्य सत्रस्य विधिः ६०४-६०६

पञ्चविंशाध्यायेऽष्टादशखण्डे-

सहस्रसंवत्सरसाध्यस्य विश्वसृजामयनाख्यस्य सत्रस्य विधिः, तत्राऽहःक्लृप्तिः, संवत्सरपदार्थनिर्णयपूर्वकं विश्वसृजामयनेऽधिकारप्रतिपादनं च ६०६-६१०

पञ्चविंशाध्यायेऽभिहितानां क्रतूनां सङ्ग्रहः ६१०-६११

**ताण्ड्यमहाब्राह्मणद्वितीयभागान्तर्गतविषयसूची समाप्ता ॥**

श्रीगणेशाय नमः ॥

# ताण्ड्यमहाब्राह्मणम् ॥

## त्रयोदशाध्याये

### प्रथमः खण्डः ॥

यस्य निश्वसितं वेदाः यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

इत्थं व्यूढद्वादशाहमध्यवर्तिनो दशरात्रस्याऽऽदितश्चतुर्णामह्नां स्तोमक्लृप्तिः प्रदर्शिता । अथ पञ्चमस्याऽहस्स्तोमक्लृप्तिं विधातुकामस्तावद्बहिष्पवमानस्याऽऽद्यं स्तोत्रीयं तृचं दर्शयति—

**(१)"गोवित पवस्व वसुविद्धिरण्यविदि"ति पञ्चमस्याऽह्नः प्रतिपद्भवति ॥ १ ॥**

प्रतिपद्यते प्रारभ्यतेऽनयेति प्रतिपत् । यद्यप्यत्र प्रतिपदिति एकैव ऋक् प्रतीयते, तथाऽपि (२)'तृचसूक्तानामादिग्रहणेन विधिरनादेश' इति परिभाषितत्वात् एतदादिकस्तृच एव ग्राह्यः । अयं तृचः पञ्चमस्याऽह्नः शाकरपृष्ठस्य त्रिणवस्तोमस्य यदाद्यं बहिष्पवमानस्तोत्रं तस्य प्रारम्भे कार्य इत्यर्थः ॥ १ ॥

अस्मिन्नहनि अस्य तृचस्य सङ्गतिमाह—

**गोविद्वा एतद्वसुविद्धिरण्यविद्यच्छक्वर्यः ॥ २ ॥**

अस्मिन्नहनि होतृपृष्ठस्य स्तोत्रे शक्वर्यस्तोत्रीयाः । अत एतत्पञ्चममहः शाकरं शक्वर्य इति यत् एतत् गोविद्वै गवालम्भकम् । तथा हिरण्य-

---

१. गोवित्पवस्व वसुविद्धिरण्यविद्रेतोधा इन्दो भुवनेष्वर्पितः ।
त्वं सुवीरो असि सोम विश्ववित्तं त्वा नर उपगिरेम आसते ॥ १ ॥
त्वं नृचक्षा असि सोम विश्वतः पवमान वृषभ ता विधावसि ।
स नः पवस्व वसुमद्धिरण्यवद्वयं स्याम भुवनेषु जीवसे ॥ २ ॥
ईशान इमा भुवनानि ईयसे युजान इन्दो हरितः सुपर्ण्यः ।
तास्ते क्षरन्तु मधुमद्घृतं पयस्तव व्रते सोम तिष्ठन्तु कृष्टयः ॥ ३ ॥
सा. सं. उ. ३.२.१.

२. लाट्या. श्रौ. ६. ३. १.

वित्। हिरण्यं द्विविधम्—रजतं सुवर्णञ्च। तस्य लम्भकम्। तथा वसुवित् (१) अनेकेषामपि वसूनां मणिमुक्तादीनां धनानां लम्भकम्। तत्समादेतैः पादैः शक्वर्य एव शब्दसामान्यादुच्यन्ते। ताश्च पञ्चमेऽहनि सङ्गता इति तद्द्वारेण गोविदित्यादिलिङ्गवतस्तृचस्य तेनाऽह्ना सङ्गतिः॥

ननु कथं शक्वरीणां हिरण्यादिलम्भकत्वमित्यत्राऽऽह—

**पशवश्शक्वर्यः सर्वं पशुभिर्विन्दते ॥ ३ ॥**

शक्वर्यः पशवः पशुरूपाः। पशुत्वञ्च (२) उत्तरत्रोपपादयिष्यामः। पशुभिरपेक्षितं सर्वं धनं विन्दते पुरुषो (३) लभत इति प्रसिद्धम्। तस्माच्छक्वरीणां गवादिलम्भकत्वमुपपन्नम् ॥ ३ ॥

अथाऽस्मिन्नेव तृचे लिङ्गान्तरं प्रदर्श्याऽऽनुगुण्यमाह—

**"त्वं सुवीरो असि सोमविश्ववित्" इत्येष वाव सुवीरो यस्य पशवस्तदेव तदभिवदति ॥ ४ ॥**

'त्वं सुवीर' इत्यस्मिंस्तृचे सुवीरशब्दो दृश्यते। यस्य यजमानस्य पशवः स्वभूताः एष एव सुवीरः शोभनवीर्यवान्। पञ्चमस्याऽह्नोऽनुष्ठातुश्च पशवो भवन्ति। शक्वरीणां पश्वात्मकत्वात्। यदेतदहस्सम्बन्धि पशुमत्त्वम्, तदेतत् सुवीरशब्दोपेतं मन्त्रवाक्यमभिवदति अभिलक्ष्य प्रतिपादयति ॥ ४ ॥

अथ लिङ्गान्तरं प्रदर्श्य सङ्गतिमाह—

**"तास्ते क्षरन्तु मधुमद्घृतं पय" इति मधुमद्धै घृतं पयः पशवः क्षरन्ति तदेव तदभिवदति ॥ ५ ॥**

तथा तस्मिंस्तृचे 'तास्ते क्षरन्त्वि'ति पादः श्रूयते। पशवश्च मधुमत् माधुर्यवत् घृतं क्षरणशीलं पयः क्षरन्ति स्रावयन्ति। पशवश्च शक्वर्य इत्युक्तम्। ताश्च पञ्चमेऽहनि सङ्गता इति तस्मिन्मन्त्रवाक्यं तदेवाऽभिवदति ५॥

अथाऽनुरूपाख्यं द्वितीयं तृचं विधत्ते—

**(४) "पवमानस्य विश्ववित्" इत्यनुरूपो भवति ॥ ६ ॥**

---

१. अन्येषामपीति क. ख. पु. २. (तां. ब्रा. १३. ४. १३) इत्यत्रेति शेषः।

३. लभत इत्यर्थः प्रसिद्ध इति क. ख. पु.

४. पवमानस्य विश्ववित्प्र ते सर्गा असृक्षत। सूर्यस्येव न रश्मयः ॥ १ ॥
केतुं कृण्वं दिवस्परि विश्वा रूपाभ्यर्षसि। समुद्रस्सोम पिन्वसे ॥ २ ॥
जज्ञानो वाचमिष्यसि पवमान विधर्मणि। क्रन्दं देवो न सूर्यः ॥ ३ ॥
सा.सं.उ.३.२.२.

अयमनुरूपाख्यो बहिष्पवमानस्य द्वितीयस्तृच इत्यर्थः ॥ ६ ॥

'विश्वविदि'त्यस्य पदस्य तात्पर्यं दर्शयन्नह्ना सङ्गतिमाह—

**विश्वमेव तद्वित्तमभिवदति विश्वं हि पशुभिर्वि-न्दते ॥ ७ ॥**

तत् विश्वविदिति पदं विश्वं सर्वमेव वित्तं भोगसाधनं धनमभिवदति । विश्वरूच्च तद्वित् वेदनीयं लम्भनीयमिति व्युत्पत्त्या शाक्वर्यात्मकैः पशुभिश्च विश्वं सर्वं वित्तं विन्दते लभते । हि हेतौ । हि यस्मादेवं(१) तस्माच्छाक्वरेऽहनि अयं तृचः सङ्गत इत्यर्थः ॥ ७ ॥

अथ पादान्तरमनूद्याऽऽनुगुण्यं दर्शयति—

**"प्र ते सर्गा असृक्षते"ति सृष्टानीव ह्येतर्ह्यहानि ॥ ८ ॥**

असृक्षतेति भूतकालसम्बन्धिना लङा सृष्टेर्भूतकालसम्बन्धः प्रतीयते । एतर्हि एतस्मिन् काले अहानि सृष्टानीव हि अनुष्ठानेनोत्पादितान्येव खलु (२)इतः पूर्वेषामह्नां चतुर्णां निष्पन्नत्वात् । तस्मादस्मिन्नहनि भूतकालसम्बन्धिसृष्टिलिङ्गकस्तृचो योग्य इत्यर्थः ॥ ८ ॥

पूर्वेष्वहस्स्विवाऽनुरूप इति द्वितीयतृचस्य सञ्ज्ञां निर्ब्रुवन् तद्वेदनफलञ्च प्रतिपादयन् प्रथमद्वितीयावेतौ तृचौ संयुज्य विशिष्टफलहेतुतामाह—

**पूर्वमु चैव तद्रूपमपरेण रूपेणाऽनुवदति यत्पूर्वं रूपमपरेण रूपेणाऽनुवदति तदनुरूपस्याऽनुरूपत्वम्, अनुरूप एनं पुत्रो जायते य एवं वेद स्तोत्रीयानुरूपौ तृचौ भवतः प्राणापानानामवरुद्ध्यै ॥ ९ ॥**

(३)एतत्पूर्वमेव (४)व्याख्यातम् ॥ ९ ॥

अथ तस्य बहिष्पवमानस्य स्तोत्रीयानुरूपतृचद्वयादूर्ध्वं सप्तर्चद्वयं विधत्ते—

**सप्तर्चौ भवतः छन्दसां धृत्यै ॥ १० ॥**

---

१. तस्मात्तत्कालेऽहनि इति ग. पु. २. इतः पूर्वेषामुत्पन्नत्वादिति. क. ख. पु.
३. व्याख्यातमेवैतत् इति क. ख. पु. ४. (तां. ब्रा. ११. ६. ४.) इत्यत्रेति शेषः ।

(१)एकं सप्तर्चं प्रथमं सूक्तम्-(२)'प्र सोमासो अधन्विषु' रिति। द्वितीयं सप्तर्चं सूक्तम्-(३)'प्र कविरि'ति। एतौ सप्तर्चौ कार्यौ। एतच्च सङ्ख्यासामान्याच्छन्दसां गायत्र्यादीनां सप्तसङ्ख्यानां धृत्यै धारणाय भवति ॥१०॥

अथ सप्तर्चद्वयादूर्ध्वं चतुर्ऋचं विधत्ते—

चतुर्ऋचो भवति प्रतिष्ठायै ॥ ११ ॥

चतस्र ऋचो यस्मिन्नसौ चतुर्ऋचः(४) 'यवं यवं न' इत्यादीनां चतसृणां ऋचां सङ्घो भवतीत्यर्थः। चतुर्ऋचस्य करणं प्रतिष्ठायै प्रतिष्ठानाय भवति। लोके हि चतुष्पदाः पश्वादयः फलकाम्याश्च प्रतिष्ठिता दृश्यन्ते। अत्राऽपि चतुस्सङ्ख्यायोगात् प्रतिष्ठाहेतुत्वम् ॥ ११ ॥

---

१. 'प्र सोमासो अधन्विषु' रित्येकस्सप्तर्चः।'प्रकविरि'ति द्वितीयस्सप्तर्चः इति क,ख,पु

२. प्र सोमासो अधन्विषुः पवमानास इन्दवः। श्रीणाना अप्सु वृञ्जते ॥ १ ॥
अभि गावो अधन्विषुरापो न प्रवता यतीः। पुनाना इन्द्रमाशत ॥ २ ॥
प्र पवमान धन्वसि सोमेन्द्राय मादनः। नृभिर्यतो विनीयसे ॥ ३ ॥
इन्दो यदद्रिभिस्सुतः पवित्रं परिदीयसे। अरमिन्द्रस्य धाम्ने ॥ ४ ॥
त्वं सोम नृमादनः पवस्व चर्षणीधृतिः। सस्निर्यो अनुमाद्यः ॥ ५ ॥
पवस्व वृत्रहन्तम उक्थेभिरनुमाद्यः। शुचिः पावको अद्भुतः ॥ ६ ॥
शुचिः पावक उच्यते सोमस्सुतस्समधुमान्। देवावीरघशंसहा ॥ ७ ॥
सा.सं.उ.३.२.३.

३. प्र कविर्देववीतयेऽव्या वारेभिरव्यत। साह्वान्विश्वा अभि स्पृधः ॥ १ ॥
स हि ष्मा जरितृभ्य आ वाजं गोमन्तमिन्वति। पवमानस्सहस्रिणम् ॥ २ ॥
परि विश्वानि चेतसा मृज्यसे पवसे मती। स नः सोमश्रवो विदः ॥ ३ ॥
अभ्यर्ष बृहद्यशो मघवद्भ्यो ध्रुवं रयिम्। इषं स्तोतृभ्य आभर ॥ ४ ॥
त्वं राजेव सुव्रतो गिरः सोमाऽऽविवेशिथ। पुनानो वह्ने अद्भुत ॥ ५ ॥
स वह्निरप्सु दुष्टरो मृज्यमानो गभस्त्योः। सोमश्चमूषु सीदति ॥ ६ ॥
क्रीडुर्मखो न मंहयुः पवित्रं सोम गच्छसि। दधत्स्तोत्रे सुवीर्यम् ॥ ७ ॥
सा.सं.उ.३.२.४.

४. यवं यवं नो अन्धसा पुष्टं पुष्टं परिस्रव। विश्वा च सोम सौभगा ॥ १ ॥
इन्दो यथा तव स्तवो यथा ते जातमन्धसः। निबर्हिषि प्रिये सदः ॥ २ ॥
उत नो गोविदश्ववित्पवस्व सोमाऽन्धसा। मक्षूतमेभिरहभिः ॥ ३ ॥
यो जिनाति न जीयते हन्ति शत्रुमभीत्य। स पवस्व सहस्रजित् ॥ ४ ॥
सा.सं.उ.३.२.५

(१) अथाऽन्यं तृचं विधत्ते—

**तृच उत्तमो भवति येनैव प्राणेन प्रयन्ति तमभ्युद्यन्ति ॥ १२ ॥**

(२) 'यास्ते धारा' इति तृचो बहिष्पवमानस्य उत्तमोऽन्त्यो भवति । शिष्टं सिद्धम् ॥ १२ ॥

इत्थं स्तोत्रिया ऋचो विधायाऽस्य स्तोत्रस्य स्तोमं विधत्ते—

**त्रिणव एव स्तोमो भवति प्रतिष्ठायै पुष्ट्यै त्रिवृद्धा एष पुष्टः ॥ १३ ॥**

त्रीणि ऋचां नवकानि यस्मिन् स त्रिणवः । स एव स्तोमोऽस्य बहिष्पवमानस्य भवति । प्रतिष्ठायै प्रतिष्ठार्थम् ,त्रयाणां नवानां पादत्रयसाम्यात् । पादत्रययुक्तस्य च फलकादेः लोके प्रतिष्ठानदर्शनात् त्रिणवस्य प्रतिष्ठाहेतुत्वम् । तथा पुष्ट्यै पुष्टिरभिवृद्धिः । तत्प्राप्तिहेतुश्चाऽयं त्रिणवस्तोमः । कुत एतत्? स्तोमस्त्रिवृद्वै ऋङ्नवकात्मकः त्रिवृत्स्तोम एव खलु । पुष्टः त्रिरभ्यासेनाऽभिवृद्धः । एवं त्रिणवस्तोमाख्यो भवति । अतस्त्रिणवस्य पुष्ट्यात्मकत्वात् पुष्टिहेतुत्वम ॥ १३ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोदशाध्यायस्य प्रथमः खण्डः ॥

## अथ द्वितीयः खण्डः ॥

अथ प्रथमस्याऽऽज्यस्तोत्रस्य स्तोत्रीयं तृचं दर्शयति—

**(३)"तव श्रियो वर्षस्येव विद्युत" इत्याग्नेयमाज्यं भवति ॥ १ ॥**

---

१. अथ चतुर्ऋचादूर्ध्वं 'यास्ते धारा मधुस्स्रुत' इति तृचसूक्तं विधत्त इति मुद्रितपुस्तकपाठः ।

२. यास्ते धारा मधुश्चुतोऽसृग्रमिन्द ऊतये । ताभिः पवित्रमासदः ॥ १ ॥
सो अर्षेन्द्राय पीतये तिरो वाराण्यव्यया । सीदन्नृतस्य योनिमा ॥ २ ॥
त्वं सोम परिस्रव स्वादिष्ठो अङ्गिरोभ्यः । वरिवोवित् घृतं पयः ॥ ३ ॥
सा.सं.उ.३.२.६.

३. तव श्रियो वर्ष्यस्येव विद्युतोऽग्नेश्चिकित्र उषसामिवेतयः ।

'तव श्रिय' इति तृचः आग्नेयं अग्निदेवत्यमाज्यं प्रथममाज्यस्तोत्रं भवति ॥ १ ॥

तस्य तृचस्य पञ्चमेनाऽह्ना सङ्गतिमाह—

**श्रीर्वै पशवः श्रीः शाक्वर्यः तदेव तदभिवदति ॥ २ ॥**

श्रीर्वै सम्पद्रूपा एव पशवः। लोके हि पशुमान् श्रीमानिति व्यपदिश्यते। अतश्शाक्वर्योऽपि श्रीः श्रीरूपाः। ताश्च पञ्चमेनाऽह्ना सम्बद्धाः। अतः श्रिय इति श्रीशब्देन युक्तं मन्त्रवाक्यं श्रियात्मकं पञ्चमेनाऽह्ना सम्बद्धं शाक्वर्य इति यत् तदेवाऽभिवदति ॥ २ ॥

अथ लिङ्गान्तरमनूद्याऽऽनुगुण्यं दर्शयति—

**"अग्नेश्चिकित्र उषसामिवेतय" इतीतानीव ह्येतर्ह्यहानीति ॥ ३ ॥**

'उषसामिवेतय' इत्यस्मिन्पादे इतय इति गतिप्रतिपादकशब्दो दृश्यते। एतर्हि एतस्मिन् पञ्चमस्याऽह्नोऽनुष्ठानकाले अहानि इतानीव हि। अतस्तत्प्रतिपादकेन 'इतय' इत्यनेन युक्तस्तृचस्सङ्गत इत्यर्थः ॥३॥

अथ पक्षान्तरमनूद्याऽऽनुगुण्यमाह—

**"आ ते यतन्ते रथ्यो यथा पृथगि"त्येव ह्येतर्ह्यहानि यतन्ते ॥ ४ ॥**

'आ ते यतन्त' इत्यस्मिन् पादे यतन्त इति दृश्यते। यती प्रयत्न इति धातुः। एतर्ह्येतस्मिन् काले अहानि प्रथमद्वितीयादीन्यनुष्ठितान्यहान्येव आयतन्ते तत्फलमभिलक्ष्य प्रयतन्त इव प्रयतमानानीव भवन्ति। हि यस्मादेवं तस्मात् रथ्यश्वो यथा पृथग्वहनयोग्यः एवमाङुपसर्गयतिधातुयुक्तस्तृचोऽस्मिन्नहनि विनियोगानुगुण इत्यर्थः ॥ ४ ॥

अथ द्वितीयस्याऽऽज्यस्य स्तोत्रीयं तृचं दर्शयति—

**(१)"पुरूरुणाचिद्ध्यस्त्यवो नूनं वां वरुणे"ति मैत्रा-**

---

यदोषधीरभिसृष्टो वनानि च परि स्वयं चिनुषे अन्नमासनि ॥ १ ॥
वातोपजूत इषितो वशाँ अनु तृषु यदन्ना वेविषद्वितिष्ठसे।
आ ते यतन्ते रथ्यो यथा पृथक् शर्धांस्यग्ने अजरस्य धक्षतः ॥ २ ॥
मेधाकारं विदथस्य प्रसाधनमग्निं होतारं परिभूतरं मतिम्।
त्वामर्भस्य हविषः समानमित्त्वां महो वृणते नान्यं त्वत् ॥ ३ ॥

सा.सं.उ.३.२.७.

१. पुरूरुणा चिध्यस्त्यवो नूनं वां वरुण। मित्र वंसि वां सुमतिम् ॥ १ ॥

वरुणम् ॥ ५ ॥

'पुरूरुणे'ति तृचः मैत्रावरुणं मित्रावरुणदेवताकं द्वितीयमाज्यस्तोत्रं भवति ॥ ५ ॥

तत्र वरुणशब्दप्रयोगस्य तात्पर्यं दर्शयति—

**यद्वै यज्ञस्य दुरिष्टं तद्वरुणो गृह्णाति तदेव तदवयजति ॥६॥**

यद्वै यत्खलु यज्ञस्य यज्ञसम्बन्धि दुरिष्टं दुर्यजनं (१)दुरितमित्यर्थः । तद्वरुणो देवो गृह्णाति आदत्ते । तस्मादत्रत्यं 'वरुण' इति पदं सम्बोधनं वरुणस्य देवस्य (२)प्रकाशनद्वारा तदेव यज्ञसम्बन्धि दुरिष्टमवयजति निरस्यति ॥ ६ ॥

अथ तृतीयमाज्यस्तोत्रं दर्शयति—

**(३)"उत्तिष्ठन्नोजसा सहे"त्यैन्द्रम् ॥ ७ ॥**

'उत्तिष्ठन्नि'ति तृचस्यैन्द्रं इन्द्रदेवत्यं तृतीयमाज्यस्तोत्रं भवति ॥ ७॥

अथैतस्य उत्तिष्ठन्नित्यादिपदत्रयस्य तात्पर्य्यं दर्शयन् सङ्गतिमाह—

**पञ्च वा ऋतव उत्थानस्य रूपमोजसा सहेत्योजसैव वीर्य्येण सहोत्तिष्ठन्ति ॥ ८ ॥**

अस्मिन् तृचे उत्तिष्ठन्निति पदेन उत्थानं उद्गत्याऽवस्थानं प्रतीयते । तस्य चोत्थानस्य वसन्ताद्याः पञ्चर्त्तवो रूपम् । ऋतुविशेषे हि सर्वमोषधिवनस्पत्यादिकं उद्गच्छत्युत्तिष्ठति । अत उत्थानं वसन्ताद्यृतुपञ्चकात्मकम् । तस्मादस्याह्नःपञ्चमत्वेन पञ्चसंख्यायोगात् तत्प्रतिपादकेनोत्तिष्ठन्निति पदेन युक्तस्तृचोऽस्मिन्नहनि सङ्गतः । अपि च 'ओजसा सहे'त्यपि पदं दृश्यते । ततश्च ओजसैव बलात्मनैव वीर्य्येण सहोत्तिष्ठन्ति उत्थिताः उच्छ्रिताः सर्वेभ्योऽधिका भवन्ति ॥ ८ ॥

---

ता वां सम्यगद्रुह्वाणेषमश्याम धाम च । वयं वां मित्रा स्याम ॥ २ ॥
पातं नो मित्रा पायुभिरुत त्रायेथां सुत्रात्रा । साह्याम दस्यूं तनूभिः ॥ ३ ॥
सा.सं.उ.३.२.८.

१. अन्याथाकृतकर्मजन्यं दुरितमिति ख. पु.

२. प्रमादशमनस्य द्वारेति ख. पु.

३. उत्तिष्ठन्नोजसा सह पीत्वा शिप्रे अवेपयः । सोममिन्द्र चमू सुतम् ॥ १ ॥
अनु त्वा रोदसी उभे स्पर्धमानमददेताम् । इन्द्र यद्दस्युहा भवः ॥ २ ॥
वाचमष्टापदीमहं नवस्रक्तिमृता वृधम् । इन्द्रात्परितन्वं ममे ॥ ३ ॥
सा.सं.उ. ३.२.९

अथ चतुर्थमाज्यस्तोत्रं दर्शयति—

**(१)"इन्द्राग्नी युवामिम" इति राथन्तरमैन्द्राग्नम् ॥९॥**

'इन्द्राग्नी युवामिम' इति तृचो राथन्तरं रथन्तरसाम्नस्सम्बन्धि ऐन्द्राग्नं इन्द्राग्निदेवताकं चतुर्थमाज्यस्तोत्रं भवति। कथमस्य रथन्तरसम्बन्धः? उच्यते—'इन्द्राग्नी आगतं सुतमि'ति राथन्तरेऽहनि चतुर्थमाज्यम्। तत्र चेन्द्राग्नी इति सम्बोधनेनाऽभिमुखीकृत्य आगमनं सोमपानञ्च तयोः प्राथ्र्यते। अस्मिन् तृचेऽपि तादृश एवाऽर्थ इति अर्थसामान्यादस्याऽपि राथन्तरत्वम् ॥ ८ ॥

नन्वेतत् शाक्करीपृष्ठकं पञ्चममहः न रथन्तरपृष्ठकम्। कुतोऽस्मिन्नहनि राथन्तरस्यैन्द्राग्नस्य सङ्गतिरिति तत्राऽऽह—

**रथन्तरमेतत्परोक्षं यच्छक्कर्यो राथन्तरमेव तद्रूपं निर्यातयति स्तोमः ॥ १० ॥**

यच्छक्कर्यः शाक्करं साम एतत्परोक्षं परोक्षेण रूपान्तरेण वर्त्तमानं रथन्तरं रथन्तरादुत्पन्नत्वात्। तदुत्पत्तिश्चैतरेयके समाम्नाता—(२)'बृहच्च वा इदमग्रे रथन्तरमि'ति प्रक्रम्य वैराजवैरूपयोः सृष्टिमुक्त्वा'ते द्वे भूत्वा बृहच्च वैराजञ्च रथन्तरञ्च वैरूपञ्चाऽत्यमन्येतां तद्रथन्तरं गर्भमधत्त तच्छाक्करमसृजते'ति। तस्माद्रथन्तरमेव रथन्तरसम्बन्ध्येव तद्रूपं निर्यातयति प्रकाशयति। स्तोमश्चैतेषु चतुर्ष्वाज्येषु पूर्वोक्त एव त्रिणवः कार्य्यः। बहिष्पवमानादीनां पञ्चानां प्रातस्सवनिकानामेषां स्तोत्राणां इत्थं स्तोत्रीया एव विहिताः। प्राकृतमेव गायत्रसाम गातव्यम्, अन्यस्याऽनुपदेशादिति बोद्धव्यम् ॥ १० ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोदशाध्याये द्वितीयः खण्डः ॥

---

१. इन्द्राग्नी युवामिमेऽभि स्तोमा अनूषत। पिबतं शम्भुवा सुतम् ॥ १ ॥
या वां सन्ति पुरुस्पृहो नियुता दाशुषे नरा। इन्द्राग्नी ताभिरागतम् ॥ २ ॥
ताभिरागच्छतं नरोपेदं सवनं सुतम्। इन्द्राग्नी सोमपीतये ॥ ३ ॥
सा.सं.उ.३.२.१०.

२. ऐ. ब्रा. ४. ६.

## अथ तृतीयः खण्डः ॥

अथ माध्यन्दिनस्य पवमानस्य त्रयः स्तोत्रीयास्तृचाः । तत्र प्रथमं दर्शयति—

**(१)"अर्षा सोम द्युमत्तम" इति विष्णुमत्यो गायत्र्यो भवन्ति ॥ १ ॥**

'सोमा अर्षन्तु विष्णव' इति दर्शनाच्छत्रिन्यायेन 'अर्षा सोमे'त्या-द्यास्तिस्रोऽपि विष्णुमत्यः गायत्र्यः गायत्रीच्छन्दस्काः । एता माध्यन्दिन-पवमानस्याऽऽद्या भवन्ति ॥ १ ॥

विष्णुमत्वं गायत्रत्वञ्चोभयं स्तौति—

**ब्रह्म वै गायत्री यज्ञो विष्णुर्ब्रह्मण्येव तद्यज्ञं प्रति-ष्ठापयति ॥ २ ॥**

ब्रह्म ब्राह्मणजातिरेव गायत्री, प्रजापतेर्मुखात्सहोत्पत्तेः । यज्ञश्च वि-ष्णुः व्यापनशीलत्वाद्विष्णुशब्दाभिधेयः । तत्तथा सति गायत्रीर्विष्णु-मतीस्स्तोत्रीयाः कुर्वन् ब्रह्माणि ब्राह्मणजातावेव यज्ञं प्रतिष्ठापयति ॥२॥

अथ तृचान्तरं तस्य पवमानस्य दर्शयति—

**(२)"सोम उष्वाणस्सोतृभिरि"ति सिमानां रूपꣳ-स्वेनैवैतास्तद्रूपेण समर्द्धयति ॥ ३ ॥**

'सोम उष्वाण' इति तृचः स्तोत्रीयः माध्यन्दिनपवमानस्य । तस्मिंश्च 'अनूपे गोमान् गोभिरक्षा' इति गावः प्रतीयन्ते । तच्च सिमानां शक्व-

---

१. अर्षा सोम द्युमत्तमोऽभि द्रोणानि रोरुवत् । सीदन् योनौ वनेष्वा ॥ १ ॥
अप्सा इन्द्राय वायवे वरुणाय मरुद्भ्यः । सोमा अर्षन्तु विष्णवे ॥ २ ॥
इषं तोकाय नो दधदस्मभ्यं सोम विश्वतः । आ पवस्व सहस्रिणम् ॥ ३ ॥
सा. सं. उ. ३. २. ११.

२. सोम उष्वाणस्सोतृभिरधिष्णुभिरवीनाम् ।
अश्वयेव हरिता याति धारया मन्द्राय याति धारया ॥ १ ॥
अनूपे गोमान् गोभिरक्षाः सोमो दुग्धाभिरक्षाः ।
समुद्रं न संवरणान्यग्मन्मन्दी मदाय तोशते ॥ २ ॥
सा. सं. उ. ३. २. १२.

रीणामस्मिन्नहनि पृष्ठ्यभूतानां रूपम्, तासां पश्वात्मकत्वात्। (१)'पशवो वै शक्वर्य' इति ह्याम्नातम्। तत्तस्मात्स्वेन स्वकीयेनैव रूपेण एताः स्विमाः शक्वरीः समर्धयति समृद्धाः करोति ॥ ३ ॥

अथ तृचान्तरं विधत्ते--

**(२)"यत्सोम चित्रमुक्थ्यमि"ति गायत्र्यः सत्यस्त्रिष्टुभो रूपेण तस्मात् त्रिष्टुभां लोके क्रियन्ते ॥ ४ ॥**

'यत्सोम चित्रमि'ति माध्यन्दिनपवमानस्याऽन्त्यस्तृचो भवति। तत्रस्था ऋचो गायत्र्यः अक्षरसङ्ख्यया गायत्रीछन्दस्कास्सत्यो भवन्त्यत्रैष्टुभेन रूपेण वृषणवच्छब्देन योगात् त्रिष्टुभो भवन्ति। यस्मादेवं तस्मात् त्रिष्टुभां लोके स्थाने क्रियन्ते स्तोत्रीयात्वेन विधीयन्ते। प्रकृतौ हि माध्यन्दिनपवमानस्याऽन्त्यस्तृचस्त्रैष्टुभः (३)'प्र तु द्रवे'ति। अतो माध्यन्दिनपवमानान्त्यस्य त्रिष्टुप्स्थानत्वम् ॥ ४ ॥

अथ 'अर्षा सोम द्युमत्तम' इति विहिते प्रथमे तृचे पूर्ववद्गायत्रं साम विधाय तदितिकर्त्तव्यताप्रतिपादकं ब्राह्मणञ्चाऽतिदिशति--

**गायत्रं भवति यदेव गायत्रस्य ब्राह्मणम् ॥ ५ ॥**

गतमेतत् ॥ ५ ॥

अथाऽस्मिन्नेव तृचे सामान्तरं विधत्ते—

**यण्वं भवति पशवो वै यण्वं पशूनामवरुध्यै ॥ ६ ॥**

यण्वाख्यं साम गायत्रसमनन्तरमस्मिन्नेव तृचे गातव्यम्। तच्च यण्वं पशवो वै पशव एव। तत्साधनत्वात्तच्छब्दः। तस्माद्यण्वगानं पशूनामवरुध्यै अवरोधनाय प्राप्त्यै भवति ॥ ६ ॥

अथाऽस्य साम्नो गाने सान्तत्यं विधत्ते--

**सन्ततं गायति यज्ञस्य सन्तत्यै ॥ ७ ॥**

---

१. तां. ब्रा. १३. ४. १३.

२. यत्सोम चित्रमुक्थ्यं दिव्यं पार्थिवं वसु। तं नः पुनान आ भर ॥ १ ॥
वृषा पुनान आयूंषि स्तनयन्नधि बर्हिषि। हरिस्सन्योनिमासदः ॥ २ ॥
युवं हि स्थस्स्वर्पती इन्द्रश्च सोम गोपती। ईशाना पिप्यतं धियः ॥ ३ ॥
सा. सं. उ. ३. २. १३.

३. सा. सं. उ. १. १. १०.

सन्ततमविच्छिन्नं गायति यज्ञस्य सन्तानार्थम् । सामान्तरेषु हि प्रत्यृचं प्रस्तावादिभक्तिपञ्चकसम्पूर्णस्य साम्नो गानाद्विच्छेदो भवति। अत्र तु प्रथमायामेव प्रस्तावभक्तिं कृत्वा उत्तरयोः प्रस्तावभक्तिमकृत्वा गानात्साम्नस्सान्तत्यं भवति। उत्तरयोः प्रस्तावभक्तिलोपार्थमेव योनिभूते छन्दस्साम्नि तृचे यणवस्य गानम्, इतरथा सामान्तरवदेवैकस्यामेव गानं स्यात्। एतच्च सूत्रकृता (१)'सन्तनि चोद्यमानमेकैकस्यां सर्वमि'त्यादिना प्रपञ्चितम्। (२) 'सन्ततं गायतीति च भक्तिलोपदर्शनादि'ति च वदता सूत्रकृता यणवसन्तनिनोरुत्तरयोः प्रस्तावभक्तिलोप एवाऽभिप्रेत इत्ययमेवाऽर्थो गम्यते ॥ ७ ॥

अथाऽस्य साम्नस्सम्बन्धिनीं निधनविभक्तिमनूद्याऽह्ना सङ्गतिमाह—

**अध्यर्द्धेडं तथा ह्येतस्याऽह्नो रूपम् ॥ ८ ॥**

इट् इडेत्येवं रूपा अध्यर्धा इडा यस्मिन् तदध्यर्द्धेडं एतद्यणवम्। तथा हि तादृशमेव खल्वेतस्य पञ्चमस्याऽह्नो रूपम्। 'अध्यर्धमैडं पञ्चमस्ये'ति हीडाविभक्तिरनुक्रान्ता ॥ ८ ॥

अथाऽस्मिन्नेव तृचे पुनरावृत्ते सामान्तरं विधत्ते—

**शाकलं भवति ॥ ९ ॥**

शकलेन दृष्टं साम शाकलम्। एतदाख्यं साम 'अर्षा सोमे'त्यस्मिन्नावृत्ते तृचे गेयम् ॥ ९ ॥

तदेतत्प्रतिष्ठाहेतुरिति स्तौति—

**एतेन वै शकलः पञ्चमेऽहनि प्रत्यतिष्ठत्प्रातितिष्ठति शाकलेन तुष्टुवानः ॥ १० ॥**

एतेन खलु साम्ना पुरा शकल ऋषिर्द्वाशरात्रिके पञ्चमेऽहनि प्रत्यतिष्ठत् अनेन साम्ना स्तुत्वा पुत्रपश्वादिभिः प्रतिष्ठितोऽभवत्। तस्मादिदानीन्तनोऽपि शाकलेन साम्ना स्तुवन् प्रतिष्ठां लभते ॥ १० ॥

अथाऽस्मिन्नेव तृचे पुनरावृत्ते सामान्तरं विधत्ते—

**वार्शं भवति ॥ ११ ॥**

वृशेन दृष्टं साम वार्शं 'अर्षा सोमे'त्यस्मिन्नेव तृचे गातव्यम् ॥११॥

अथोक्तमृषिसम्बन्धमाख्यायिकया प्रदर्शयन् सर्वकामप्राप्तिसा-

---

१. लाट्या. श्रौ. ६.१.१. २. लाट्या. श्रौ. ६. १. १४.

धनतयैतत् स्तौति—

**वृशो वैजानस्त्र्यरुणस्य त्रैधातवस्यैक्ष्वाकस्य पुरोहित आसीत्स ऐक्ष्वाकोऽधावयत् ब्राह्मणकुमारꣳ रथेन व्य- च्छिनत्स पुरोहितमब्रवीत्तव मा पुरोधायामिदमीदृगुपा- गादिति तमेतेन साम्ना समैरयत्तद्वाव स तर्ह्यकामयत कामसनि साम वार्शं काममेवैतेनाऽवरुन्धे ॥ १२ ॥**

विजानोः पुत्रो वृशो नाम कश्चिदृषिः। स ऐक्ष्वाकस्य इक्ष्वाकुकु- लजातस्य त्रैधातवस्य त्रिधातुः पुत्रस्य त्र्यरुणस्य एतन्नाम्नो राज्ञः पुरोहितः पुरोधा आसीत्। स ऐक्ष्वाको राजा रथवाहानश्वानधावय- त् शीघ्रमगमयत्। पथो मध्येऽवस्थितं कञ्चिद्ब्राह्मणकुमारं ब्राह्मणस्य पुत्रं रथेन रथावयवेन चक्रेण व्यच्छिनत् विच्छिन्नावयवमकरोत्। स कुमारः पुरोहितं वृशमब्रवीत्—तव पुरोधायां पौरोहित्ये वर्तमानं मां इदं इदानीं ईदृक् एवंरूपं हिंसनं उपागात् प्राप्नोदिति। एवमुक्तवन्तं एतेन वार्शेन साम्ना समैरयत् सङ्गतावयवमकरोत्। तद्वाव तत् खलु तर्हि तस्मिन् काले स ऋषिरकामयत। यस्मादेवं तस्माद्वार्शं साम कामसनि कामप्रदम्। अतोऽनेन स्तुवन् एतेन साम्ना अभिलषितं सर्वमेव काम- यितव्यं फलं अवरुन्धे लभते ॥ १२ ॥

अस्मिन् साम्नि अध्यर्द्धोपास्थाने(१)'इडा चाऽनादेश' इति सूत्रका- रेण अध्यर्द्धेडा आदिश्यत इत्युक्तम्। तत्सिद्धवदनूद्याऽस्मिन्नहनि आनु- रूप्यं दर्शयति—

**अध्यर्द्धेडं तथा ह्येतस्याऽह्नो रूपम् ॥ १३ ॥**

उपास्थाने आदिष्टा इट् इडेत्येवं रूपा अध्यर्द्धा इडा यस्य तत्तथो- क्तम्। तथा खल्वेतस्य पञ्चमस्याऽह्नो रूपं प्रागुक्तम् ॥ १३ ॥

अथाऽन्यस्मिन् तृचे सामान्तरं विधत्ते—

**मानवं भवति ॥ १४ ॥**

मनुना दृष्टं साम मानवम्। तत् 'सोम उष्वाणस्सोतृभिरि'ति विहिते तृचे गातव्यम् ॥ १४ ॥

---

१. लाट्या. श्रौ. ७. १०. ३.

अथैतत् स्तौति—

**एतेन वै मनुः प्रजापतिं भूमानमगच्छत्प्रजायते बहुर्भवति मानवेन तुष्टुवानः ॥ १५ ॥**

एतेन खलु साम्ना मनुः पुरा प्रजापतिं प्रजोत्पत्तिं भूमानमतिशयेन बहुत्वञ्चाऽगच्छत् । तस्मादद्यतनोऽपि मानवेनाऽनेन साम्ना स्तुवन् प्रजायते पुत्रपौत्रादिरूपेणोत्पद्यते । ततो (१)बहुपुत्रादिभिरनेकविधश्च भवति ॥ १५ ॥

अथाऽस्मिन्नेव तृचे पुनरावृत्ते सामान्तरं विधत्ते—

**आनूपं भवति ॥ १६ ॥**

अनूपेन दृष्टं सामाऽऽनूपम् । तत् 'सोम उष्वाण' इति तृचे गेयं भवति ॥ १६ ॥

अथैतत्पशुबाहुल्यप्राप्तिसाधनमिति स्तौति—

**एतेन वै वध्र्यश्व आनूपः पशूनां भूमानमाश्नुत पशूनां भूमानमश्नुत आनूपेन तुष्टुवानः ॥ १७ ॥**

आनूपो अनूपस्य पुत्रः वध्र्यश्वाख्य ऋषिरेतेन साम्ना पुरा पशूनां भूमानं बहुलत्वं आश्नुत प्राप्नोत् । अतोऽद्यतनोऽप्यानूपेन स्तुवन् पशूनां बहुलत्वं प्राप्नोति ॥ १७ ॥

अथाऽस्मिन्नेव तृचे सामान्तरं विधत्ते—

**वाभ्रं भवति ॥ १८ ॥**

वभ्रेण दृष्टं साम वाभ्रम् । तत् 'सोम उष्वाण' इत्यस्मिन्नेव तृचे पुनरावृत्ते गेयम् ॥ १८ ॥

अथ संज्ञयैवैतत्साम प्रशस्तम् । तेन चाऽह्न एव प्रशंसा कृता भवतीत्याह—

**सामाऽऽर्षेयेण प्रशस्तं यं वै गामश्वं पुरुषं प्रशꣳसन्ति वाम इति तं प्रशꣳसन्त्यहरेवैतेन प्रशꣳसन्ति ॥१९॥**

एतत्साम आर्षेयेण वाभ्रवत्यपि ऋषिसम्बन्धप्रदर्शनेन प्रशस्तं श्रेष्ठं लोके यं गामश्वं पुरुषं प्रशंसन्ति स्तुवन्ति लौकिकाः तं वाम इति श्रैष्ठ्यवाचकेन वामशब्देन प्रशंसन्ति । तस्मादिदं साम रेफाविकृतं

१. बहुपुत्रादिभिरनेकस्सम्भवतीति. ख. पु.

वामशब्दाभिधेयत्वात् प्रशस्तम् । एतेन साम्ना अहरेव दाशरात्रिकं पञ्चममहरेतदेव प्रशंसन्ति ॥ १९ ॥

आम्नातामध्यर्द्धोपास्थाने पूर्वमादिष्टामध्यर्द्धेडां लिङ्गवदनूद्याऽह्ना सारूप्यं दर्शयति—

**अध्यर्द्धेडं तथा ह्येतस्याऽह्नो रूपम् ॥ २० ॥**

गतमेतत् ॥ २० ॥

अथाऽस्मिन्नेव 'सोम उष्वाण' इति तृचे गेयं सामान्तरं दर्शयति—

**त्रिणिधनमाग्नेयं भवति प्रतिष्ठायै ॥ २१ ॥**

त्रीणि निधनानि यस्य तत्त्रिणिधनम् । आग्नेयं आग्निसम्बन्धि । एतत्संज्ञं साम 'सोम उष्वाण' इति तृचे गेयम् । तच्च निधनत्रयवत्त्वेन त्रित्वसंख्यायोगात् प्रतिष्ठायै प्रतिष्ठानाय साम्येनाऽवस्थानाय भवति । लोके हि त्रिपादाः फलकादयः प्रतिष्ठिता दृश्यन्ते । तानि च त्रीणि निधनानि अस्य साम्नो योन्यां(१) 'प्र सोम देव वीतये' इत्यस्यां प्रदर्श्यन्ते— १ उवा २ ३ णा २ ३ ४ सा, उवा श्रीवीः, ३ १ उवा २ ३ श्चू २ ३ ४ तामिति ॥ २१ ॥

अथोक्तमग्निसम्बन्धं प्रदर्शयन् तेजोब्रह्मवर्चसप्रापकत्वेनैतत्साम प्रशंसति—

**अग्निः सृष्टो नोददीप्यत तं प्रजापतिरेतेन साम्नोपाधमत् स उददीप्यत दीप्तिश्च वा एतत्साम ब्रह्मवर्चसञ्च दीप्तिश्चैवैतेन ब्रह्मवर्चसञ्चाऽवरुन्धे ॥ २२ ॥**

अग्निः प्रजापतेर्मुखात् सृष्ट उत्पन्नः नोददीप्यत ऊर्ध्वं नाऽज्वलत् । तमग्निं प्रजापतिः स्रष्टा एतेन साम्ना साधनेन उपाधमत् वायुना प्राज्वलयत् । ध्मा शब्दाग्निसंयोगयोरिति धातुः । सोऽग्निस्तत उददीप्यत ऊर्ध्वदीप्तोऽभूत् । तस्मादेतत्साम दीप्तिश्च दीप्तिसाधनत्वाद्दीप्त्यात्मकं तेजोरूपम्, तथा ब्रह्मवर्चसञ्च । अत एतेन दीप्तिब्रह्मवर्चसलक्षणोभयरूपेण साम्ना स्तुवन् यजमानः दीप्तिं शारीरं तेजश्चैव, ब्रह्मवर्चसं श्रुताध्ययनादिजन्यं ब्राह्मं तेजश्चाऽवरुन्धे प्राप्नोति ॥ २२ ॥

---

१. प्र सोम देव वीतये सिन्धुर्न पिप्ये अर्णसा ।
अंशोः पयसा मदिरो न जागृविरच्छा कोशं मधुश्चुतम् ॥ १ ॥
सा. सं॰ पू. प्र. ६. अ. १. द. ३. ऋ. ४.

अथ 'यत्सोम चित्रमि'ति (पृ. १०) विहितेऽन्तिमे तृचे गातव्यं साम दर्शयति—

शैशवं भवति ॥ २३ ॥

शिशुना दृष्टं साम शैशवम्। तत् 'यत्सोम चित्रमि'ति तृचे गातव्यम् ॥ २३ ॥

अथैतत्साम जयहेतुरिति विवक्षुस्तदर्थमाख्यायिकामाह—

शिशुर्वा आङ्गिरसो मन्त्रकृतां मन्त्रकृदासीत् स पितॄन् पुत्रका इत्यामन्त्रयत, तं पितरोऽब्रुवन्न धर्मं करोषि यो नः पितॄन् सतः पुत्रका इत्यामन्त्रयस इति, सोऽब्रवीदहं वाव वः पिताऽस्मि यो मन्त्रकृदस्मीति, तं देवेष्वपृच्छन्त ते देवा अब्रुवन्नेष वाव पिता यो मन्त्रकृदिति तद्वै स उदजयदुज्जयति शैशवेन तुष्टुवानः ॥ २४ ॥

शिशुर्नामाऽऽङ्गिरसः आङ्गिरोगोत्र ऋषिः मन्त्रकृतां मन्त्रस्य कर्तॄणां तपोमाहात्म्येनाऽन्तर्हितानां मन्त्राणां मध्ये मन्त्रकृत् मन्त्रस्य कर्त्ता अतिशयेन मन्त्रस्य द्रष्टाऽऽसीत्। स च विद्यातिशयेन दृप्तस्सन् पितॄन् स्वकीयान् पुत्रका इत्यामन्त्रयत। पुत्रा एव पुत्रकाः। हे पुत्रकाः इत आगच्छतेति (१)आमन्त्रणमाह्वानं कृतवान्। एवमामन्त्रणानन्तरं शिशुं पितरोऽब्रुवन्। कथमिति? हे शिशो त्वमधर्ममन्याय्यं करोषि। यत् स्वपितॄन् तव पितृभूतान् सतो भवतः नोऽस्मान् पुत्रका इति वैपरीत्येनाऽऽमन्त्रयस इति। एवं तैरुक्तस्सन् स पुनरब्रवीत्—अहं वाव अहमेव युष्माकं पिताऽस्मि भवामि। योऽहं मन्त्रकृन्मन्त्रस्य कर्त्ता द्रष्टाऽस्मीति। अतः सोऽहमेव पिताऽस्मीति। एवं परस्परं विवदमानाः ते देवेष्वपृच्छन्त विवादनिर्णेतृषु देवेषु सत्सु प्रश्नं कृतवन्तः—अस्माकं मध्ये को वा पिता, के वा पुत्राः? इति। एवं पृच्छ्यमानास्ते देवा अब्रुवन्—युष्माकं मध्ये यो यो मन्त्रकृत् एष एव पिता, अन्ये पुत्रा इति। तत्ततोऽनन्तरं स आङ्गिरसः शिशुरुदजयत् उत्कर्षेण जितवान्। तस्मादद्यतनोऽपि शैशवेन साम्ना स्तुवन् उज्जयति उत्कृष्टञ्जयति ॥ २४ ॥

---

१. आमन्त्रणमाप्रश्नमिति. क. ख. पु.

अथाऽऽधारभूतानामृचां छन्दस्संख्याद्वारेण प्रशंसति—

**गायत्रीषु स्तुवन्ति प्रतिष्ठायै ब्रह्मवर्चसाय येनैव प्राणेन प्रयन्ति तमभ्युद्यन्ति ॥ २५ ॥**

गायत्रीषु त्रिपदासु 'यत्सोम चित्रमि' त्याद्यासु शैशवेन स्तुवन्ति त-त्प्रातिष्ठायै प्रतिष्ठानाय ब्रह्मवर्चसाय च भवति। गायत्र्यास्त्रिपादत्वेन प्रतिष्ठितत्वात्तेजोरूपतया ब्रह्मवर्चसहेतुत्वाच्च। अस्य पवमानस्तोत्रस्या-ऽऽद्यस्तृचो गायत्रत्वात्प्राणसंस्तुतः। अयमन्त्यस्तृचोऽपि गायत्रत्वा-त्प्राणसंस्तुतः (१)'त्रिवृद्धि प्राणः' इति हि ब्राह्मणम्। तथा च येनैव प्रयन्ति पवमानस्तोत्रं प्रारभन्ते तमेव प्राणमभिलक्ष्य उद्यन्ति तत्स्तो-त्रं परिसमापयन्ति ॥ २५ ॥

अथैतावाद्यन्तौ तृचौ गायत्रौ कथं माध्यन्दिने सवने सङ्गच्छेते? त्रैष्टुभं हि माध्यन्दिनं सवनमित्याशङ्कायामाह—

**विष्णुमत्यो गायत्र्यो भवन्ति तद्ु त्रैष्टुभाद्रूपान्न यन्ति स्तोमः ॥ २६ ॥**

एतास्तृचद्वयगता गायत्र्यो(२)विष्णुमत्यो विष्णुशब्दयुक्ता भवन्ति विष्णुश्चेन्द्रस्याऽनुजः। त्रिष्टुभा सह जातत्वादिन्द्रस्त्रैष्टुभः। अतः पर-म्परया विष्णुशब्दवत्वात् त्रिष्टुभो रूपम्। तद्ु तस्मादेव कारणात् त्रैष्टुभात् त्रिष्टुप्सम्बन्धिनो रूपान्न यन्ति नाऽपगच्छन्ति। त्रैष्टुभेन रूपेण योगात् त्रिष्टुभ एवेमा भवन्तीत्यर्थः। एवं नवसु सामसूक्तप्रका-रेण प्रत्येकं तृचे क्रियमाणेषु यस्त्रिणवः स्तोमो निष्पद्यते स एव माध्य-न्दिनपवमानस्य स्तोमः कार्य्यः ॥ २६ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदा-र्थप्रकाशे त्रयोदशाध्यायस्य तृतीयः खण्डः ॥

---

१. तां. ब्रा. २. १५. ३.

२. 'अर्षा सोम द्युमत्तम' इत्यस्मिंस्तृचे 'सोमा अर्षन्तु विष्णव' इति विष्णुशब्दस्य दर्शनात् छत्रिन्यायेन तिस्रोऽपि गायत्र्यर्चः विष्णुमत्य इति बोध्यम्।

## अथ चतुर्थः खण्डः ॥

अथ पृष्ठस्तोत्रनिर्वर्तकं शाक्वरसाम विधित्सुः तस्य संज्ञाचतुष्टयं प्रदर्श्य निर्वक्ति—

**इन्द्रः प्रजापतिमुपाधावद्वृत्रꣳहनानीति तस्मा एतच्छन्दोऽस्य इन्द्रियं वीर्यं निर्माय प्रायच्छदेतेन शक्नुहीति तच्छक्करीणाꣳ शक्करीत्वꣳसीमानमभिनत्तात्सिमा महृयमकरोत्तन्महृया महान् घोष आसीत् तन्महानाम्न्यः ॥१॥**

वृत्रमावरकमसुरं हनानि हन्यामिति वदन् इन्द्रः पुरा प्रजापतिमुपाधावत् उपागच्छत्। तस्मा इन्द्राय प्रजापतिः एतच्छक्कर्यात्मकमिन्द्रियं बलं वीर्यं वृत्रहननक्षमं सामर्थ्यं छन्दोभ्यः गायत्र्यादिभ्यस्सकाशात् निर्माय सारत्वेनाऽऽदाय प्रायच्छत् दत्तवान्। एतेन वीर्येण वृत्रं हन्तुं शक्नुहि शक्तो भवेति वदन् यस्माच्छक्नुहीति प्रजापतिरवोचत्, तस्माच्छक्करीणां शक्करीत्वं शक्त्युत्पादकत्वात् शक्कर्य इति नाम सम्पन्नम्। आधाराधेययोरभेदविवक्षया शक्करीशब्देन बहुवचनान्तेन शक्करीषु गातव्यं सामैवोच्यते। आधारबहुत्वाद्बहुवचनम्। एवं प्रजापतिना दत्ते वीर्ये सति तेन सीमानं वृत्रासुरस्य शिरसो मध्यदेशमभिनत् इन्द्रो विदारितवान्। तत्तस्मात्सीम्नो भेदकत्वात् सिमा इति शक्वर्य उच्यन्ते। ततस्सीम्नो भेदनानन्तरं महृयं अनुकरणशब्दोऽयम्। एवंरूपं शब्दमकरोत्। तत्तस्मादेतासां महृया इति नाम सम्पन्नम्। ततो महान् घोषः शब्द आसीत्। तत्तस्मान्महानाम्न्य इति संज्ञा आसां जाता। तत्संज्ञाचतुष्टयं आर्षेये प्रदर्शितम्—'ऐन्द्यो महानाम्न्यः प्रजापतेर्वा विष्णोर्वा विश्वामित्रस्य वा सिमा वा महृया वा शक्वर्यो वे'ति। एवम्भूतं शाक्वरं साम होतुः पृष्ठतया कार्य्यमिति विधिरुन्नेतव्यः ॥१॥

अथैतस्याऽऽधारभूताः शक्वरीः पादसंख्यया स्तौति—

**दिशः पञ्चपदा दाधारत्तून् षट्पदा छन्दाꣳसि सप्तपदा पुरुषं द्विपदा ॥ २ ॥**

इदमत्राऽवगन्तव्यम्—महानाम्नीनामृचां प्रत्येकं त्रयोदशपादा अधीयन्ते। तत्र प्रत्यृचमादितो द्वौ द्वौ पादौ मिलित्वा एकैका द्विपदा शक्कर्य्या

बहिर्भूता। ततस्त्रयः पादाः-(१)'शिक्षा शचीनामि'त्याद्यास्सप्ताक्षराः शाक्वराः। ततः 'स्वर्णांशुरि'ति व्यूहेन पञ्चाक्षरः पादो धातुसंज्ञकः। ततः 'प्रचेतन प्रचेतये'ति पादो वत्ससंज्ञकः। एतावपि पादौ शाक्वर्या बहिर्भूतौ स्तोभवत्प्रयोज्यौ। अथ 'इन्द्रद्युम्नायन इष' इति ऊधस्संज्ञकः पादः शाक्करः। तत 'एवाहि शक्र' इति पञ्चाक्षरः पादः पुरुषसंज्ञकोऽशाक्करः। 'राये वाजाय वज्रिव' इत्याद्यास्त्रयः पादाः शाक्कराः। अथ 'आयाहि पिब मत्स्वे'ति अध्यास्यनामकः पादः। एवमर्धोताास्त्रयोदश पादाः। तत्र शक्वर्या अवयवभूताः सप्त, अन्ये त्वशाक्वराः स्तोभवच्छक्करीशेषतया प्रयोज्या इति प्रथमा शक्करी सप्तपदा जाता। एवमुत्तरयोरपि शाक्कराशाक्कर(२)विभागो ज्ञातव्यः। तदुक्तं सूत्रकारेण महानाम्नीः प्रकृत्य-(३)'तासां प्रथमाद्वितीये पदे द्विपदास्त्रीणि शाक्वराणि धातु वत्स ऊधस्तच्छाक्वरं पुरुषस्त्रीणि शाक्कराण्यध्यास्येति पदानि' 'उत्तमा तु अध्यासे'ति। तिसृणां शक्करीणामादित एकैका द्विपदा। ततस्त्रयस्त्रयश्शाक्वराः पादाः। ततो धातुर्वत्स ऊधश्चेति संज्ञकास्त्रयः पादाः। तत्र ऊधस्संज्ञकः पादः शाक्वरस्ततः पुरुषसंज्ञक एकः पादोऽशाक्करस्ततस्त्रयः पादाः शाक्कराः ततोऽध्यास्यैकपदा। उत्तमायान्तु(४) 'शूरो यो गोषु गच्छति सखा सुशेवो अद्वयुरि'ति द्वावध्यासाविति सूत्रार्थः।

अत्र निदानकारः—(५)'अथैतासु महानाम्नीषु विप्रतिपादयन्तीदं शाक्करमिदमशाक्वरमि'त्यारभ्य 'अशाक्वरी प्रथमा द्विपदा, शाक्वराणि त्रीणि पराणि पदानि, धातुरशाक्वरः पञ्चाक्षरः स एष कृताकृतो भवति वत्सोऽशाक्वरोऽष्टाक्षरः, ऊधः शाक्वरमष्टाक्षरं पुरुषोऽशाक्वरः पञ्चाक्षरः, शाक्कराण्येव त्रीणि पराणि पदानि अध्यासो

---

१. विदामघवन्विदा गातुमनुशंसिषो दिशः।
शिक्षा शचीनां पते पूर्वीणां पुरूवसो॥ १॥
अभिष्ट्वामभिष्टिभिः स्वर्णांशुः।
प्रचेतन प्रचेतयेन्द्रद्युम्नाय न इषे॥ २॥
एवाहि शक्रो राये वाजाय वज्रिवः।
शविष्ठ वज्रिन्नृञ्जसे मंहिष्ठ वज्रिन्नृञ्जसे। आया हि पिब मत्स्व॥ ३॥
सा. सं छं. आ. ७. १. ६. १.

२. विवेक इति ख. पु.
३. लाट्या. श्रौ. ७. ५. ९, १०.
४. सा सं. छं. आ. ७. १. ६. ३.
५. नि. सू. ३. १३. पृ. ४९.

ऽशाकरोऽष्टाक्षर' इति । नन्वेवमेतास्तिस्रोऽपि शक्वर्यः सप्तपदा जाताः कथं पञ्चपदा षट्पदेति व्यवहारः ? उच्यते—प्रातिलोम्येनेयं स्तुतिः । द्वितीयायास्सम्बन्धि(१) 'सनः स्वर्षदातिद्विष' इत्यभ्यासात् पूर्वमाम्नातोऽन्त्यः पादः उत्तमायां शक्वर्यां द्विपदाया ऊर्ध्वं द्विरभ्यस्यते । अतस्तत्पादद्वयं पुनराम्नातमेवेति कृत्वा अवशिष्टशाकरपादपञ्चकाभिप्रायेण सा तृतीया शक्वरी पञ्चपदा भवति । तथा प्रथमायाः शक्वर्याः अभ्यासात् पूर्वभावी 'सᳪंहिष्ठ वज्रिन् ऋञ्जस' इति योऽयमन्त्यः पादः स एव द्वितीयायां शक्वर्यां द्विपदाया ऊर्ध्वं पुनराम्नायत इति तदतिरिक्तपादषट्काभिप्रायेण सा द्वितीया शक्वरी षट्पदा भवति । तदुक्तं निदाने-(२) 'प्रतिलोमं वदन्ति पदतश्छिद्रोहो भविष्यतीति सप्तपदा प्रथमा शक्वरी, षट्पदा द्वितीया यद्धि प्रथमाया उत्तमं पदं तद्द्वितीयायाः प्रथमं प्रगाथस्सानुपृष्ठमिति पञ्चपदोत्तमा, यत् द्वितीयाया उत्तमं तत् तृतीयायाः प्रथमञ्च द्वितीयञ्चे'ति । अक्षरार्थस्तु-येयं पञ्चपदा तृतीया शक्वरी सा प्राच्याद्याः मध्यान्ताः पञ्च दिशो दाधार धारयति । या षट्पदा शक्वरी द्वितीया, सा वसन्तादीन् षडृतून् धारयति । सप्तपदा प्रथमा शक्वरी गायत्र्यादीनि सप्त छन्दांसि धारयति । तिसृष्वपि शक्वरीषु या प्रथमा द्विपदा सा पादद्वययुक्तं पुरुषं धारयतीति ॥ ३ ॥

अथैताः शक्वरीः प्रकारान्तरेण स्तौति—

**द्व्योपशाः सᳪंस्तुता भवन्ति तस्माद् द्व्योपशाः पशवः ॥ ३ ॥**

अस्य स्तोत्रस्य त्रिणवस्तोमकत्वात् सप्तविंशतिस्स्तोत्रीयाः । 'एवाह्येवे'त्यादीनि पुरीषपदानि पञ्च । एवं द्वात्रिंशत्सम्पद्यन्ते । तदिदमुच्यते 'द्व्योपशाः संस्तुता भवन्ती'ति संस्तुताः सहस्तुताः । विराट्सम्पत्तेरूर्ध्वं द्वे उपशे अतिरिक्ते यासां ता द्व्योपशाः भवन्ति । यस्माद्द्वोरूपाणां शक्वरीणामेवंरूपता तस्मात् पशवो गवाद्या द्व्योपशा द्विशृङ्गा आसन् ॥

अथ प्रकारान्तरेण स्तौति—

**इडे अभितोऽथकारं तस्माच्छृङ्गे तीक्ष्णीयसी स्तूपात् ॥४॥**

प्रथमायां स्तोत्रीयायां 'इन्द्रद्युम्नायन इष' इति पादं त्रिरावृत्य प्रथमोत्तमयोरुपरि इडाशब्दः प्रक्षिप्य गीयते । मध्यमे त्वथकारः । एवमुत्त-

१. सा. सं. छं. आ. ७. १. ६. ३. २. नि. सू. ३. १३. पृ. ५०.

रयोरपि (१)'इन्द्रो विदेतमु स्तुहि' 'पूर्त्तीः शाविष्ठ शस्यत' इति पादयोः। तदेतत्स्तूयते—अथकारमभितः अथा इति शब्दमभितः पार्श्वयोरिडे इडाशब्दौ भवतः। तत्र चाऽथशब्दो ह्रस्वान्तः इडाशब्दो दीर्घान्तः। यस्मादेवं तस्मात् स्तूपात् स्तूपः शृङ्गयोर्मध्यः संहतो देशः। तस्मात् सकाशात् शृङ्गे तीक्ष्णीयसी अतिशयेन तीक्ष्णे द्राघीयसी सूक्ष्माग्रे भवतः॥ ४॥

द्विपदाद्या अशाक्वराः प्रागनुक्रान्ताः तासां गानं विधत्ते—

**उपक्षुद्रा गायति तस्मादुपक्षुद्राः पशवः॥ ५॥**

उप शक्वरीणां समीपे वर्त्तमाना क्षुद्राः (२)अल्पपरिमाणास्तदङ्गभूता ऋच उपक्षुद्रास्ता गायति गायेत्। यस्मादेवंरूपाणां शक्वरीणामेवंरूपता तस्मात्पशवो गवाद्या अप्युपक्षुद्राः समीपवर्त्तिलघुदेहवत्सादियुताः॥ ५॥

अशाक्वरीणामुपक्षुद्रैर्व्यतिषज्य गानं विधत्ते—

**असंश्लिष्टा गायति तस्मादसंश्लिष्टाः पशवः॥६॥**

(३)शक्वरीरशक्वरीश्च असंश्लिष्टा विच्छिन्ना गायति गायेत्। यस्मात् गवादिरूपाः शक्वर्योऽशक्वर्यश्चाऽसंश्लिष्टाः तस्मात् पशवोऽप्यसंश्लिष्टाः स्वभावतः स्वेच्छाचारिणः॥ ६॥

शाक्वराशाक्वरपादव्यतिषङ्गेण यच्छक्वरीणां नानात्वं तत् स्तौति·

**नानारूपा गायति तस्मान्नानारूपाः पशवः॥ ७॥**

स्पष्टोऽर्थः॥ ७॥

अथ शाक्वरीणां गानसमये उदघोषञ्जनयद्भिर्गातव्यामिति विधातुमभिप्रेत्याऽऽह—

**आपो वै क्षीररसा आसꣳस्ते देवाः पापवसीयसाद बिभयुर्यदप उपनिधाय स्तुवते पापवसीयसो विधृत्यै॥८॥**

---

१. सा. सं. छं. आ. ७. १. ६. २.

२. अल्पपरिमाणा द्विपदाद्या गायति। तस्मादेव कारणात्पशवः उपाक्षुद्रा उप समीपे वर्तमानाः क्षुद्रैरल्पकायैर्वत्सैरुपेता भवन्ति इति क. ख. पु.

३. द्विपदाद्यैरशाक्वरैर्व्यतिषज्य परस्परमसंश्लिष्टा असंयुक्ताः शाक्वरीर्गायति। तस्मात्पशवोऽप्यसंश्लिष्टाः प्रविरलास्सन्तः अरण्येषु तृणानि भक्षयन्ति इति. क. ख. पु.

आपश्च खलु पुरा क्षीररसाः क्षीरस्य पयसो रस इव रसो माधुर्यं यासां तथाविधा आसन्। तथा सति भावस्वभाववैपरीत्यदर्शनात् पूर्वोक्ता देवाः पापवसीयसात् पापं निकृष्टं वसीयः श्रेष्ठं उभयोस्साङ्कर्यादबिभयुः भीता अभवन्। एवञ्च अवकाभिः सहिता अप उपनिधाय समीपे स्थापयित्वा शक्वरीभिः स्तुवत इति यत्तत्पापवसीयसः पापस्य निकृष्टस्य वसीयस उत्कृष्टस्य च विधृत्यै विधारणाय असाङ्कर्येण स्थापनाय भवति। तदुक्तं सूत्रकृता(१)–'अपः सावका उपनिधाय महानाम्नीभिः स्तुवीरन्' 'यो यः सामाङ्गं ब्रूयात् स उद्घोषञ्जनयेदि'ति ॥ ८ ॥

एतद्वेदनं(२) प्रशंसति–

**विधृतिः पापवसीयसो भवति य एवं वेद ॥ ९ ॥**

स्पष्टोऽर्थः ॥ ९ ॥

अथाऽस्य साम्नः काम्यानि निधनानि प्रदर्श्य स्तौति–

**गायत्रमयनं भवति ब्रह्मवर्चसकामस्य स्वर्णिधनं मधुनाऽमुष्मिंल्लोक उपतिष्ठते, त्रैष्टुभमयनं भवत्योजस्कामस्याऽथकारणिधनमाज्येनाऽमुष्मिँल्लोक उपतिष्ठते, जागतमयनं भवति पशुकामस्येडानिधनं पयसाऽमुष्मिँल्लोक उपतिष्ठते ॥ १० ॥**

गायत्रं गायत्र्याः सम्बन्धि अयनं गमनं अनुष्ठानं भवति। कस्य? ब्रह्मवर्चसकामस्य ब्रह्मवर्चसं कामयमानस्य यजमानस्य। किं तत् गायत्र्याः सम्बन्ध्ययनम्? स्वर्णिधनम्—स्वरिति निधनस्य करणम्। एवं कुर्वन् अमुष्मिन् स्वर्गलोके मधुना माक्षिकेन उपतिष्ठते। तिष्ठतेस्सङ्गतिकरण आत्मने पदं सङ्गच्छत इत्यर्थः। तथा ओजस्कामस्य बलकामस्य यजमानस्य त्रैष्टुभं त्रिष्टुप्सम्बन्ध्ययनं भवति। किं तत्? अथकारणिधनं अथेति निधनस्य करणं त्रैष्टुभमयनम्। एवं कृतवान् अमुष्मिन् लोके आज्येनोपतिष्ठते सङ्गच्छते। तथा पशुकामस्य यजमानस्य जागतं जगत्याः सम्बन्ध्ययनं भवति। किं तज्जागतमयनम्? इडानिधनं इडेति शब्दस्य निधनत्वेन करणम्। इडायाः पशुरूपत्वादमुष्मिन् लोके पयसा उपतिष्ठते इडानिधनप्रयोक्ता यजमानः क्षीरेण सङ्गच्छते ॥१०॥

---

१. लाट्या. श्रौ. ३. ५. १३, १४. २. पुनः प्रशंसति इति ख. पु.

अथैतासां प्रस्तावोद्गानयोः क्षिप्रत्वं विधातुमाह—

**अञ्जसाऽऽर्य्यो माल्यः शक्वरीः प्रारौत्सीदिति होवाचाऽलम्मं पारिजानतꣳरजनः कौणेयो यद्येनाः प्रतिष्ठापꣳशक्ष्यतीत्येतद्वा एतासामञ्जयति प्रतिष्ठिता य आभिः क्षिप्रं प्रस्तुत्य क्षिप्रमुद्गायति ॥ ११ ॥**

माल्य इति गोत्रनिर्देशः। एवम्भूत आर्य्यो नाम ऋषिः अञ्जसा आर्जवेन शीघ्रं शक्वरीः प्रारौत्सीत् प्रकर्षेण वृतवान् इति खलु कौणेयः कुणेः पुत्रो रजनः पारिजानतं परिजानतोऽपत्यं अलम्मं एतत्संज्ञमृषिं प्रत्युवाच उक्तवान्। तस्याऽभिप्राय उच्यते—एनाः शक्वरीः प्रतिष्ठापं प्रतिष्ठापयितुं यदि शक्ष्यति शक्तो भविष्यति, तर्ह्येवं कर्त्तव्यमिति प्ररोद्धुरभिप्रायः। एतत् एषः एतासां शक्वरीणां कर्म्मणि षष्ठी। एताः शक्वरीरञ्जयति गमयति स्पष्टीकरोति वा। अञ्जू व्यक्तिम्रक्षणकान्तिगतिष्विति धातुः। तथा प्रतिष्ठिता अनपायाश्च करोति। एष इत्युक्तम्, कोऽसावेष इति तदुच्यते—य आभिः शक्वरीभिः क्षिप्रं शीघ्रं प्रस्तुत्य प्रस्तावभागं उच्चार्य्य क्षिप्रं शीघ्रमुद्गायति उद्गानं करोति। प्रस्तुत्येति पूर्वकालतामात्र एव ल्यप्प्रत्ययः ॥ ११ ॥

(१)'एवाह्येवे'त्यादीनि पञ्च पुरीषपदानि। तेषु गानं विधत्ते—

**शक्वरीभिः स्तुत्वा पुरीषेण स्तुवते ॥ १२ ॥**

शक्वरीभिः शाक्वरेण साम्ना स्तुत्वाऽनन्तरं पुरीषेण। सामान्याभिप्रायमेकवचनम्। पुरीषैः पुरीषपदैः स्तुवते स्तुवीरन् ॥ १२ ॥

तदेतत्प्रशंसति—

**पशवो वै शक्वर्यो गोष्ठः पुरीषं गोष्ठमेव तत्पशुभ्यः पर्यस्यन्ति तमेवैनान् प्रवर्त्तयन्त्यविस्रꣳसाय ॥१३॥**

या एताः शक्वर्य्यस्ताः पशवो वै गोरूपा एव तद्वाचकैरिडाशब्दैर्बहुभिरुपेतत्वात्। यद्वा वत्ससंज्ञकेन ऊधस्संज्ञकेन च पादद्वयेन योगात् शक्वर्य्यः पशवः ऊधसा वत्सेन च युक्ताः खलु पशवो लोक उपलभ्यन्ते। यदेतत्पुरीषं पुरीषपदं एतद्गोष्ठः गवामवस्थानप्रदेशः। तत्तथा

---

१. एवाह्येव, एवाह्यग्ने, एवाहीन्द्र, एवाहि पूषन्, एवा हि देवाः (सा सं. छं. आ. ७. १. ६. ३.) इति पञ्च पुरीषपदानि बोध्यानि।

सति गोष्ठमेव तत्पशुभ्यः पर्यस्यन्ति परितः क्षिपन्ति निर्मिमते। तमेव गोष्ठदेशं प्रत्येतान् पशून् प्रवर्त्तयन्ति अविस्रंसाय विस्रंसनाभावाय अविनाशायेत्यर्थः ॥ १३ ॥

मैत्रावरुणपृष्ठं प्राकृतमेवेत्यभिप्रेत्य ब्रह्मणः पृष्ठस्तोत्रीयस्य तृचं दर्शयति—

**(१)"इन्द्रो मदाय वावृध" इत्यवर्द्धन्त ह्येतर्हि ॥ १४ ॥**

'इन्द्रो मदाय वावृध' इति तृतीयपृष्ठस्य स्तोत्रीयो भवति। तत्र वावृध इति भूतकालवाचिलिडन्तो वृधिधातुः श्रूयते। एतर्हि एतस्मिन् काले पञ्चमस्याऽह्नोऽनुष्ठानसमये अवर्द्धन्त हि यजमानास्समृद्धा अभवन्। अतो भूतकालविषयवृद्धिप्रतिपादकशब्दोपेतस्तृचस्सङ्गत इत्यर्थः ॥१४॥

अथाऽस्मिन् तृचे गेयं साम विधत्ते—

**तासु बार्हद्गिरम् ॥ १५ ॥**

बृहद्गिरेरिदं बार्हद्गिरम्। एतदाख्यं साम तासु 'इन्द्रो मदाये'त्याद्यासु गातव्यम् ॥ १५ ॥

अथ विकल्पितं स्तोत्रीयान्तरं पुनस्सामान्तरविशिष्टं विदधाति—

**(२)"स्वादोरित्था विषुवत" इति विषुवान् वै पञ्चममहस्तासु रायोवाजीयम् ॥ १६ ॥**

'स्वादोरित्थे'ति तृचो वा ब्रह्मसाम्ना स्तोत्रियः कार्यः इत्यर्थः। यदे-

---

१. इन्द्रो मदाय वावृधे शवसे वृत्रहा नृभिः।
तमिन्महत्स्वाजिषूतिमर्भे हवामहे स वाजेषु प्र नोऽविषत् ॥ १ ॥
अधि हि वीर सेन्योऽसि भूरि पारददिः।
असि दभ्रस्य चिद्वृता यजमानाय शिक्षसि सुन्वते भूरि ते वसु ॥ २ ॥
यदुदीरत वाजयः ॥ ३ ॥

सा. सं. उ° ३. २. १४.

२. स्वादोरित्था विषूवतः ॥ १ ॥
ता अस्य पृशनायुवः सोमं श्रीणन्ति पृश्नयः।
प्रिया इन्द्रस्य धेनवो वज्रं हिन्वन्ति सायकं वस्वीरनु स्वराज्यम् ॥ २ ॥
ता अस्य नमसा सहस्समर्पयन्ति प्रचेतसः।
व्रतान्यस्य सश्चिरे पुरूणि पूर्वचित्तये वस्वीरनु स्वराज्यम ॥ ३ ॥

सा. सं. उ .३. २. १५.

तद्दशरात्रस्य पञ्चममहः एष विषुवान् । यथा गवामयनस्य पक्षभूतयोः षण्मासयोर्मध्ये वर्त्तमानमहः पक्षद्वयस्पर्शनात् विषुवानित्युच्यते, तथेदं पञ्चममहरपि द्वादशाहस्य क्रतोः पूर्वभागस्य षट्कस्याऽवसाने वर्त्तमानत्वेन मध्यवर्त्तित्वात् विषुवान् (१)इत्याख्यायते । तस्माद्विषुवच्छब्दयुक्तस्तृचः सम्बन्धार्ह इत्यर्थः । तासु विषुवच्छब्दयुक्तासु 'स्वादोरित्थे' त्यादिषु रायोवाजीयं रायोवाजो नाम कश्चिदृषिः । तत्सम्बन्धि साम गातव्यम् ॥ १६ ॥

अथ कामनाभेदेन ब्रह्मसाम तथा विधित्सुराह—

इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत्तेषां त्रय उदशिष्यन्त पृथुरश्मिर्बृहद्गिरी रायोवाजस्तेऽब्रुवन् को न इमान् पुत्रान् भरिष्यतीत्यहमितीन्द्रोऽब्रवीत्तानधिनिधाय परिचार्य्यं चरद्वर्द्धयꣳस्तान् वर्द्धयित्वाऽब्रवीत् कुमारका वरान् वृणीध्वमिति, क्षत्रं मह्यमित्यब्रवीत् पृथुरश्मिस्तस्मा एतेन पार्थुरश्मेन क्षत्रं प्रायच्छत् क्षत्रकाम एतेन स्तुवीत क्षत्रस्यैवाऽस्य प्रकाशो भवति, ब्रह्मवर्चसं मह्यमित्यब्रवीत् बृहद्गिरिस्तस्मा एतेन बार्हद्गिरेण ब्रह्मवर्चसं प्रायच्छत् ब्रह्मवर्चसकाम एतेन स्तुवीत ब्रह्मवर्चसी भवति, पशून् मह्यमित्यब्रवीद्रायोवाजस्तस्मा एतेन रायोवाजीयेन पशून् प्रायच्छत् पशुकाम एतेन स्तुवीत पशुमान् भवति ॥ ७ ॥

पुरा खल्विन्द्रो यतीन् एतत्संज्ञकान् यज्ञविरोधिनो जनान् सालावृकेभ्यः सालावृक्याः पुत्रेभ्यः क्रोष्टुभ्यः प्रायच्छत् भक्षणार्थं दत्तवान् । तेषां यतीनां मध्ये त्रय उदशिष्यन्त अवशिष्टाः सालावृकैरभक्षिता आसन् । के पुनस्ते? पृथुरश्मिर्बृहद्गिरिः रायोवाजस्त्रय इति । ते अवशिष्टा एवमब्रुवन्—को नोऽस्मानिमान् पुत्रान् पुत्रात्मना स्वीकृतान् कृत्वा भरिष्यति पोषयिष्यतीति । एवमुक्ते(२) अहं वः युष्माकं पोषकोऽस्मीतीन्द्रोऽब्रवीत् । अथ तान् पृथुरश्म्यादीनधिनिधाय रथे आरोप्य वर्द्धयन् पोषयन् पर्य्यचरत् परिचर्य्यां कृतवान् । एवं वर्द्धयित्वा पुनरब्रवीत्—

१. इत्युच्यत इति. ख. पु.

१. अहमेवेति क. ख. पु.

हे कुमारकाः मम पुत्रभूताः वरान् वृणीध्वं याचध्वमिति । तत्र पृथुरश्मिर्मह्यं क्षत्रं बलमस्त्वित्यब्रवीत् अवृणोत् । ततस्तस्मै पृथुरश्मये एतेन पार्थुरश्मेन साम्ना क्षत्रं बलं प्रायच्छदिन्द्रो दत्तवान् । तस्मादद्यतनोऽपि क्षत्रकामो बलकामः एतेन पार्थुरश्मेन ब्रह्मसाम्ना स्तुवीत । अथैतद्वेदनफलम्—अस्य वेदितुः क्षत्रस्य क्षत्रियजातेरिव प्रकाशः कीर्त्तिर्भवति, प्रतितिष्ठति प्रतिष्ठितश्च भवति, य एवं ब्राह्मणार्थं जानाति । अथ बृहद्गिरिः ब्रह्मवर्चसं ब्राह्मं तेजो मह्यमस्त्विति अब्रवीत् अयाचत । ततस्तस्मै बृहद्गिरये एतेन बार्हद्गिरेण साम्ना ब्रह्मवर्चसं प्रायच्छत् इन्द्रः प्रादात् । तस्माद्ब्रह्मवर्चसकामः ब्रह्मवर्चसं कामयमानो यजमान एतेन बार्हद्गिरेण स्तुवीत, स ब्रह्मवर्चसी भवति । अथ रायोवाजो मह्यं पशून् देहीत्यब्रवीत् , ततस्तस्मै रायोवाजाय एतेन रायोवाजीयेन साम्ना पशून् इन्द्रः प्रायच्छत् दत्तवान् । तस्मात् पशुकामो यजमान एतेन रायोवाजीयेन ब्रह्मसाम्ना स्तुवीत । स पशुमान् बहुपशुको भवति ॥ १७ ॥

अथैतत्सामत्रयं कर्त्तृविशेषे व्यवस्थापयति—

**पार्थुरश्मᳫं राजन्याय ब्रह्मसाम कुर्य्यात् बार्हद्गिरं ब्राह्मणाय रायोवाजीयं वैश्याय स्वेनैवेनाᳫंस्तद्रूपेण समर्द्धयति स्तोमः ॥ १८ ॥**

राजन्याय क्षत्रियाय पार्थुरश्मं ब्रह्मसाम कुर्य्यात् । एवमुत्तरत्रापि योजना । क्षत्रियस्य हि स्वकीयं रूपं क्षत्रम् । ब्राह्मणस्य ब्रह्मवर्चसम् । वैश्यस्य पशवः । पाशुपाल्यं हि तस्य कर्म । एतानि त्रीणि सामानि एतत्त्रितयसाधनानीत्युक्तम् । तत्तथा सति स्वेन स्वकीयेन(१) नियतेनैव रूपेण एतान् राजन्यादीन् समर्द्धयति समृद्धान् करोति । अच्छावाकपृष्ठस्तोत्रमपि कृतमेवेत्यवगन्तव्यम् । एतेषु चतुर्ष्वपि पृष्ठस्तोत्रेषु पूर्वोक्तस्त्रिणव एव स्तोमः कार्य्यः ॥ १८ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोदशाध्यायस्य चतुर्थः खण्डः ॥

---

१. प्रतिनियतेनेति ख. पु.

## अथ पञ्चमः खण्डः ॥

अथाऽऽर्भवपवमानस्याऽऽद्यं तृचं दर्शयति—

**(१)"असाव्यंशुर्मदाये"ति गायत्री भवति मदव-द्वै रसवत्तृतीयसवनं मदमेव तद्रसं दधाति ॥ १ ॥**

'असाव्यंशुरि'ति गायत्री गायत्रः आर्भवपवमानस्याऽऽद्यस्तृचो भवति । शिष्टं स्पष्टम् ॥ १ ॥

अथ तृचान्तरं विधत्ते—

**(२)"अभि द्युम्नं बृहद्यश" इत्यभीति रथन्तरस्य रूपं बृहदिति बृहत उभयोस्सह रूपमुपैत्युभौ हि वर्णावेत-दहः ॥ २ ॥**

'अभि द्युम्नमि'ति द्वितीयस्तृचः कार्यः । (३)'अभि त्वा शूर नोनुम' इति रथन्तरस्य योनावभिशब्ददर्शनात् अभीतिशब्दो रथन्तरस्य रूपं रथन्तरस्य साम्नो रूपम् । बृहदिति शब्दस्तु बृहत्साम्नो वाचक-त्वात्तस्य बृहतो रूपम् । तथा चोभयोर्बृहद्रथन्तरयो रूपं 'अभि द्युम्नं बृह-दि'ति सहोपैति सहितमुपगच्छति । एतत्पञ्चममहः उभौ हि वर्णावुभ-यवर्णात्मकमेव, बार्हताच्चतुर्थादह्न आनन्तर्यात् शाक्करस्य रथन्तरप्र-भवतया रथन्तरसम्बन्धाच्च ॥ २ ॥

---

१. असाव्यंशुर्मदायाऽप्सु दक्षो गिरिष्ठाः । श्येनो न योनिमासदत् ॥ १ ॥
शुभ्रमन्धो देववातमप्सु धौतं नृभिस्सुतम् । स्वदन्ति गावः पयोभिः ॥२॥
आदीमश्वं न होतारमशूशुभन्नमृताय । मधो रसं सधमादे ॥ ३ ॥
सा. सं. उ. ३. २. १६.

२. अभि द्युम्नं बृहद्यश इषस्पते दिदीहि देव देवयुम् ।
विकोशं मध्यमं युव ॥ १ ॥
आ वच्यस्व सुदक्ष चम्वोः सुतो विशां वह्निर्न विश्पतिः ।
वृष्टिं दिव पवस्व रीतिमपो जिन्वन्गविष्टये धियः ॥ २ ॥
सा. सं. उ. ३. २. १७.

३. सा. सं. उ. १. १. ११.

अथाऽन्यं तृचं विधत्ते—

(१)"प्राणा शिशुर्महीनामि"ति सिमानाꣳ रूपं मह्यो हि सिमाः स्वेनैवैनास्तद्रूपेण समर्द्धयति ॥ ३ ॥

'प्राणा शिशुरि'ति तृतीयस्तृचः। तच्च सिमानां शक्वरीणां रूपम्। कुतः? मह्यो हि महत्यो हि सिमाः शक्वर्यः। तथा च 'प्राणा शिशुर्महीनामि'ति शक्वर्यभिधायकेन महीशब्देन योगात् स्वेन स्वकीयेनैव रूपेण एनाः सिमाः समर्द्धयति समृद्धाः करोति ॥ ३ ॥

अथ तृचान्तरं विधत्ते—

(२)"पवस्व वाजसातय" इति वैष्णव्योऽनुष्टुभो भवन्ति॥

वैष्णव्यो विष्णुशब्दयुक्ता अनुष्टुप्छन्दस्काः 'पवस्वे'त्याद्यास्तिस्रः स्तोत्रीया भवन्ति। 'इन्द्राय सोम विष्णव' इति विष्णुशब्दयोगादिमा वैष्णव्यः ॥ ४ ॥

तदेतत्प्रशंसति—

यज्ञो वै विष्णुर्यदत्र नाऽपि क्रियते तद्विष्णुना यज्ञेनाऽपि करोति ॥ ५ ॥

अत्र विष्णुशब्देन व्यापको यज्ञ एवाऽभिप्रेतः। तथा चाऽत्राऽस्मिन्न

---

१. प्राणा शिशुर्महीनां हिन्वन्नृतस्य दीधितिम्।
विश्वा परि प्रिया भुवदध द्विता ॥ १ ॥
उप त्रितस्य पाष्योरभक्त यद्गुहा पदम्।
यज्ञस्य सप्त धामभिरध प्रियम् ॥ २ ॥
त्रीणि त्रितस्य धारया पृष्ठेष्वैरयद्रयिम्।
मिमीते अस्य योजना वि सुक्रतुः ॥ ३ ॥

सा. सं. उ. ३. २. १८.

२. पवस्व वाजसातये पवित्रे धारया सुतः।
इन्द्राय सोम विष्णवे देवेभ्यो मधुमत्तरः ॥ १ ॥
त्वां रिहन्ति धीतयो हरिं पवित्रे अद्रुहः।
वत्सं जातं न मातरः पवमाना विधर्मणि ॥ २ ॥
त्वं द्यां च महिव्रत पृथिवीं चाऽति जभ्रिषे।
प्रति द्रापिममुञ्चथाः पवमान महित्वना ॥ ३ ॥

सा. सं. उ. ३. २. १९.

हनि यज्ञाऽपि क्रियते अपिगतं प्राप्तं न क्रियते नाऽनुष्ठीयते तद्यज्ञेन यज्ञात्मना विष्णुना अपिकरोति सम्पूर्णं करोति ॥ ५ ॥

अथ तृचान्तरं विधत्ते—

**(१)"इन्दुर्वाजी पवते गोन्योघा" इति सिमानाᳬं रूपं स्वेनैवैनास्तद्रूपेण समर्द्धयति ॥ ६ ॥**

'इन्दुर्वाजी'ति तृचः स्तोत्रीयः। अत्र च 'गोन्योघ' इति गोसङ्घः प्रतीयते। तच्च सिमानां शक्वरीणां रूपम्, तासां गोरूपत्वात्। गतमन्यत् ॥

ननु प्रकृतावार्भवस्याऽन्त्यस्तृचः(२) 'अभिप्रियाणी'त्याद्यो जागतः। कथं तत्स्थाने त्रैष्टुभस्तृचः सङ्गच्छत इति तत्राऽऽह—

**त्रिष्टुभः सत्यो जगत्यो रूपेण तस्माज्जगतीनां लोके क्रियन्ते ॥७॥**

त्रिष्टुभः सत्योऽप्येता रूपेण जागतरूपेण गोशब्देन योगात् जगत्यो भवन्ति। तस्मादेव जगतीनां स्थाने क्रियन्ते। 'गोन्याघा' इति गोशब्दो दृश्यते। तस्य जागतरूपत्वं प्रागाम्नातम्—(३)उद्धात्रिवद्दिग्वद्धोमदि' त्यादिना ॥ ७ ॥

अथ 'असाव्यंशुरि'ति प्रथमविहिते तृचे पूर्ववद्गायत्रं साम विधाय तत्स्तावकं(४)'इमे वै लोका गायत्रमि'त्यादिकं तद्ब्राह्मणञ्चाऽतिदिशति-

**गायत्रं भवति यदेव गायत्रस्य ब्राह्मणम् ॥ ७ ॥**

स्पष्टोऽर्थः ॥ ८ ॥

---

१. इन्दुर्वाजी पवते गोन्योघा इन्द्रे सोमः सह इन्वन्मदाय।
हन्ति रक्षो बाधते पर्यरातिं वरिवस्कृण्वन्वृजनस्य राजा ॥ १ ॥
अध धारया मध्वा पृचानस्तिरो रोम पवते अद्रिदुग्धः।
इन्दुरिन्द्रस्य सख्यं जुषाणो देवो देवस्य मत्सरो मदाय ॥ २ ॥
अभि व्रतानि पवते पुनानो देवो देवान्त्स्वेन रसेन पृञ्चन्।
इन्दुर्धर्माण्यृतुथा वसानो दश क्षिपो अव्यत सानो अव्ये ॥ ३ ॥
सा. सं. उ. ३. २. २०.

२. सा. सं. उ. १. १. १८.
३. तां. ब्रा. १०. ६. ३.
४. तां. ब्रा. ७. १. १.

अथाऽस्मिन्नेवाऽऽवृत्ते तृचे सामान्तरं विधत्ते—

**सन्तनि भवति पञ्चमस्याऽह्नस्सन्तत्यै ॥ ९ ॥**

'असाव्यंशुरि'ति तृचे सन्तनिसंज्ञकं साम कार्यम्। तच्च पञ्चमस्याऽह्नः सन्तत्यै अहरन्तरेण सन्तानाय सम्बन्धायाऽविच्छेदाय भवति। कथमस्य सन्तानहेतुतेति चेत्? उच्यते—सर्वाणि हि सामानि योनिग्रन्थे एकैकस्यामेवर्चि उत्पन्नानि। इदन्तु तत्राऽपि (१)'एषस्य धारये'ति तृचे गीयते। तदिदमत्र 'असाव्यंशुरि'ति तृचे ऊह्य गातव्यमिति विधीयते। तत्र किं तिसृषु ऋक्षु योनिभूतासु दृश्यमानं कृत्स्नं साम 'असाव्यंशुरि'त्यस्मिन् तृचे किमेकैकस्यां गातव्यम्? किं वा अत्राऽपि तृचे कृत्वा उत्तरार्थं तृचद्वयमन्यत आहर्त्तव्यम्? तथा चैकैकास्मिंस्तृचे एकस्य साम्नस्समापनात् त्रयस्तृचास्तिस्रः स्तोत्रीया भवन्तीति न त्रिणवस्तोमविरोधः, आहोस्वित् सामान्तरवत् योनिग्रन्थेऽप्येकैकस्यामेव गीतं साम पुनरुत्तरयोः प्रस्तावभक्तिलोपेन तदेव गीयते? 'असाव्यंशुरि'त्यपि तृचे तद्वदेव प्रथमायां गीत्वा उत्तरयोरपि प्रस्तावभक्तिलोपेन तदेवोद्गातव्यमिति संशये—(२)'सन्तनि चोद्यमानमेकैकस्यां सर्वमि'त्यादिना पक्षद्वयं पूर्वपक्षयित्वा अन्तिमं पक्षं सिद्धान्तितवान्-(३)'तिसृष्वाचार्याः स्मृतेर्यथाऽन्यानि सामानी'ति। तथा चैकैकस्यां सामसमाप्तावपि प्रथमकृतं प्रस्तावमेवोत्तरार्थमभ्युपेत्य उत्तरयोः पृथक् प्रस्तावाभावात् ओङ्कारेण पृथगुद्गीथादानाच्चाऽस्य साम्नः सन्तनीत्यन्वर्थसंज्ञेयम्। अत एवाऽस्याऽह्नस्सन्तानहेतुत्वम्। तदप्युक्तम्-(४)'सन्तानाच्च सन्तनी'ति ॥ ९ ॥

अथ प्रकारान्तरेण सन्तानहेतुतया स्तौति—

**वाग्वा एषा प्रतता यद्द्वादशाहस्तस्या एष विषुवान् यत् पञ्चममहस्तामेवैतेन सन्तनोति ॥ १० ॥**

यत् यो द्वादशाहः द्वादशानामह्नां समूहः क्रतुः एषा प्रतता प्रकर्षेण

---

१. एषस्य धारया सुतोऽव्या वारेभिः पवते मदिन्तमः।
क्रीडन्नूर्मिरपामिव ॥ १ ॥

सा. सं. पू. ६. २. ४. ७.

२. लाट्या. श्रौ. ६. १. १. ३. लाट्या. श्रौ. ६. १. ६.

४. लाट्या. श्रौ. ६. १. ८.

विस्तारिता वाग्वै वागेव । अतस्तस्या वाच एष विषुवान् एतद्विषुवत्सं-ज्ञकमहर्यत द्वादशाहस्य पञ्चममहः । अहष्षट्कद्वयात्मिकां तामेव वाचं एतेन सन्तनिसाम्ना सन्तनोति ॥ १० ॥

अथ 'अभिद्युम्नमि'ति विहिते तृचे गेयं साम दर्शयति—

च्यावनं भवति ॥ ११ ॥

च्यावनाख्यं साम अस्मिंस्तृचे गातव्यमित्यर्थः ॥ ११ ॥

तदेतत् स्तौति—

प्रजातिर्वै च्यावनं प्रजायते बहुर्भवति च्यावनेन तुष्टुवानः ॥ १२ ॥

प्रजातिः प्रजननहेतुः खलु च्यावनं साम । तस्माच्च्यावनेन तुष्टुवानः स्तुतवान् प्रजायते पुत्रपौत्रादिरूपेणोत्पद्यते । अस्य पुत्रादय उत्पद्यन्त इत्यर्थः । ततो बहुरनेकरूपश्च भवति ॥ १२ ॥

अथाऽस्य च्यावनसंज्ञां निर्ब्रुवन् वृष्टिफलहेतुतामाह—

एभ्यो वै लोकेभ्यो वृष्टिरपाक्रामत्तां प्रजापतिश्च्यावनेनाऽच्यावयद्यदच्यावयत्तच्च्यावनस्य च्यावनत्वं च्यावयति वृष्टिं च्यावनेन तुष्टुवानः ॥ १३ ॥

एभ्यस्त्रिभ्योऽपि लोकेभ्यः पुरा वृष्टिरपाक्रामत् अपागमत् । तामपक्रान्तां वृष्टिं प्रजापतिश्च्यावनेन साम्ना अच्यावयत् अक्षारयत् सर्वतः प्रावर्षयत् । यद्यस्मादनेन साम्ना साधनेनाऽच्यावयत्, तत्तस्माच्च्यावनस्य साम्नश्च्यावनत्वमिति नाम सम्पन्नम् । यस्मादेवं तस्मादद्यतनोऽपि च्यावनेन तुष्टुवानः स्तुवन् पुरुषः वृष्टिं च्यावयति क्षारयति ॥ १३ ॥

अथ 'प्राणा शिशुरि'ति विहिते तृचे गेयं साम दर्शयति—

क्रोशं भवति ॥ १४ ॥

क्रोशाख्यं साम तस्मिंस्तृचे गेयमित्यर्थः ॥ १४ ॥

अस्य च संज्ञामर्थान्निर्ब्रुवन् पशुप्राप्तिसाधनतामाह—

एतेन वा इन्द्र इन्द्रक्रोशे विश्वामित्रजमदग्नी इमा गाव इत्याक्रोशत् पशूनामवरुध्यै क्रोशं क्रियते ॥

एतेन खलु साम्ना साधनेन पुरा इन्द्रः इन्द्रक्रोशे एतत्संज्ञके

स्थाने हे विश्वामित्रजमदग्नी इमा गावो वर्त्तन्त इत्याकाशात् उच्चैर्घोषं कृतवान् । तस्मादस्य साम्नः क्रोशनसाधनत्वात् क्रोशमिति नाम सम्पन्नमिति भावः । तस्मादिदानीमपि पशूनां गवादीनामवरुध्यै अवरोधनाय प्राप्तये क्रोशं साम क्रियते प्रयुज्यते ॥ १५ ॥

अथ 'पवस्व वाजसातय' इति तृचे विहिते गेयं साम दर्शयन् तद्ब्राह्मणञ्चाऽतिदिशति—

गौरीवितं भवति यद्देव गौरीवितस्य ब्राह्मणम् ॥१६॥

गतमेतत् ॥ १६ ॥

अथाऽस्मिन्नेव तृचे पुनरावृत्ते सामान्तरं विधत्ते—

ऋषभः शाक्करो भवति ॥ १७ ॥

ऋषभः शाकर इति साम्नः संज्ञा । एतत्संज्ञं साम अस्मिन्नेव तृचे गातव्यमित्यर्थः ॥ १७ ॥

तदेतत् स्तौति—

पशवो वै शक्वर्यः पशुष्वेव तन्मिथुनमध्यर्ज्जति प्रजात्यै न ह वा अनृषभाः पशवः प्रजायन्ते ॥१८॥

अस्मिन् पञ्चमेऽहनि विनियुक्ताः शक्वर्यस्तावत् पशवो वै गोरूपा एव । ऋषभश्चाऽत्र विधीयते । तत्तथा च तस्मिन्नहनि शक्वरीणामृषभसंयोजनात् पशुष्वेव मिथुनं स्त्रीपुंसरूपं युगलमध्यर्ज्जयति अवस्थापयति प्रजात्यै प्रजननाय । ऋज गतिस्थानार्जनोपार्जनेष्विति धातुः । न खलु अनृषभाः ऋषभेण वियुक्ताः पशवः प्रजायन्ते वत्साञ्जनयन्ति । तस्मात् पशुसंस्तुतानां शक्वरीणां समीपे ऋषभो विनियोगयोग्य इत्यर्थः ॥ १८ ॥

अथाऽस्मिन्नेव तृचे आवृत्ते सामान्तरं विधत्ते—

पार्थं भवति ॥ १९ ॥

पृथुना दृष्टं साम पार्थम् । तदस्मिन्नेव तृचे गातव्यम् ॥ १९ ॥

अथैतत् ग्राम्यारण्यपशुसङ्घप्राप्तिसाधनमिति स्तौति—

एतेन वै पृथुर्वैन्य उभयेषां पशूनामाधिपत्यमाश्नुतोभयेषां पशूनामाधिपत्यमश्नुते पार्थेन तुष्टुवानः ॥२०॥

एतेन पार्थेन साम्ना खलु पुरा वैन्यो वेनस्य पुत्रः पृथुर्नाम राजर्षिः

उभयेषां ग्राम्यारण्यानां पशूनामाधिपत्यमधिपतित्वं स्वामित्वमाश्नुत प्राप्नोत् । अतोऽद्यतनोऽपि पार्थेन साम्ना तुष्टुवानः स्तुतवान् उभयेषां पशूनां स्वामित्वं प्राप्नोति ॥ २० ॥

अथाऽस्मिन्नेव तृचे आवृत्ते सामान्तरं विधत्ते—

**अष्टेडः पदस्तोभो भवति ॥ २१ ॥**

अष्टाविडा यस्मिन् पादे स्तोभो यस्मिन् स तथोक्तः । एतच्च पदद्वयं साम्नः संज्ञा । (१)'धर्त्ता दिव' इत्यस्यां योनौ चत्वारि सामानि गीयन्ते । तत्र प्रथममष्टेडपदस्तोभसंज्ञम् । तत् 'पवस्व वाज' इत्यस्मिन् तृचे ऊहितव्यम् ॥ २१ ॥

अथाऽस्य साम्नो गाने कञ्चिद्गुणं विधित्सुराह—

**इन्द्रो वृत्राय वज्रमुदयच्छत्तं षोडशभिर्भोगैः पर्यभुजत् स एतं पदस्तोभमपश्यत्तेनापावेष्टयदपावेष्टयन्निव गायेत् पाप्मनोऽपहत्यै ॥ २२ ॥**

इन्द्रो वृत्रमसुरं हन्तुं वज्रं कुलिशं उदयच्छदुदग्रहीत् । तं वृत्रासुरः षोडशभिः षोडशसंख्याकैर्भोगैः सर्पशरीरैः पर्यभुजत् पर्यवेष्टयत् आवेष्टितवान् । स तथाविध इन्द्रः एतं पदस्तोभं एतत्संज्ञकं सामाऽपश्यत् । तेन पदस्तोभेन स्वदेहष्टनाऽपावेष्टयत् अपगतवेष्टनमकरोत् आवेष्टकान् सर्पभोगानपसारितवानित्यर्थः । तस्मादिदानीन्तनोऽपि स्तोता अपावेष्टयन्निवाऽपगतवेष्टनं वेष्टनस्याऽपगमनं कुर्वन्निव गायेत् । किमर्थम् ? पाप्मनः पापस्याऽपहत्यै अपहननाय विनाशार्थम् ॥ २२ ॥

एतदेव विव्रियते—

**पाप्मा वाव स तमगृह्णात्तं पदस्तोभेनाऽपाहताऽपपाप्मानꣳ हते पदस्तोभेन तुष्टुवानः ॥ २३ ॥**

तमिन्द्रं स वृत्रः पाप्मा वाव पापमेव भूत्वा अगृह्णात् । तं पाप्मानं पदस्तोभेनाऽपाहत व्यनीनशत् । यत एवमतः कारणात्पदस्तोभेन तुष्टुवानः स्तुतवान् अपपाप्मानं हते पाप्मानं पापमपहते विनाशयति ॥२३॥

---

१. धर्त्ता दिवः पवते कृत्व्यो रसो दक्षो देवानामनुमाद्यो नृभिः ।
हरिस्सृजानो अत्यो न सत्वभिर्वृथा पाजांसि कृणुषे नदीष्वा ॥
सा. सं. पू. ६. २. २. ५.

अथाऽस्य पदस्तोभसंज्ञां निर्वक्ति—

**पदोरुत्तममपश्यत्तत्पदस्तोभस्य पदस्तोभत्वम् ॥२४॥**

पदः पादात् ऋचः प्रतिपाद्यं उत्तमं अतिशयेनाऽऽचरितारं स्तोभमपश्यत् अदर्शत्। तत्तस्मात्पदस्तोभस्य साम्नः पदस्तोभत्वं पदस्तोभ इति नाम सम्पन्नम् ॥ २४ ॥

अथाऽस्य प्रतिष्ठाहेतुतामाह—

**द्वादशनिधनो भवति प्रतिष्ठायै ॥ २५ ॥**

स च पदस्तोभो द्वादशनिधनः द्वादश निधनानि यस्य स द्वादशनिधनः, तादृशो भवति प्रतिष्ठायै प्रतिष्ठानाय। द्वादशमासात्मकः सम्वत्सरो हि प्रतिष्ठाहेतुः तत्सामान्यात् द्वादशनिधनोऽपि पदस्तोभः प्रतिष्ठाहेतुरित्यर्थः। तानि च द्वादशनिधनानि सूत्रकृतैवोक्तानि (१)'निधनानि पदानि पदस्तोभेषु तथेडाः' इति। अयमर्थः—पदस्तोभो नाम 'धर्त्ता दिव' इत्यस्यां गीयमानानि चत्वारि सामानि अष्टेडषडिडचतुरिडाद्विरिडानीति। अत्र चाष्टेडः पदस्तोभो विहितः। तस्य यानि चत्वारि पदानि याश्चाष्टाविडाः तानि मिलित्वा द्वादशनिधनानि भवन्ति ॥ २५ ॥

अथाऽन्तिमे तृचे गेयं साम विधत्ते—

**दाशस्पत्यं भवति ॥ २६ ॥**

दाशस्पत्याख्यं साम 'इन्दुर्वाजी पवत' इति तृचे गेयम् ॥ २६ ॥

वाम्रवदहःप्रशंसकमेतत्साम संज्ञाद्वारेण स्तौति—

**यां वै गां प्रशꣳसन्ति दाशस्पत्येति तां प्रशꣳसन्त्यहरेवैतेन प्रशꣳसन्ति ॥ २७ ॥**

लोके हि यां गां प्रशंसन्ति तां दाशस्पत्येति प्रशंसन्ति। दाशृदान इति धातुः। दाशो दानस्य पतिः दाशस्पतिः। भावपरो निर्देशः। दाशस्पतौ साधुर्दाशस्पत्या बहुलस्य क्षीरस्य प्रदातुमीश्वरेति गां स्तुवन्ति। अतो दाशस्पत्यसंज्ञा प्रशंसाहेतुः। एतेन दाशस्पत्यसंज्ञकेन साम्ना अहरेवेदमनुष्ठीयमानं प्रशंसन्ति स्तुवन्ति ॥ २७ ॥

---

१. लाट्या. श्रौ. ७. ७. १.

अथैतत्पवमानस्तोत्रमुपसंहरति—

**निधनान्ताः पवमाना भवन्त्यह्नो धृत्यै स्तोमः ॥ २८ ॥**

सर्वत्र तावच्चत्वार एव सामान्ताः स्वरो निधनमिडा वागिति। ऋचामन्त्यमक्षरं स्वरयित्वा समापितं हाइकारश्च द्वयमपि स्वर इति रूढ्या व्यपदिश्यते। स्वरवागिडाभ्योऽन्या सामान्ता ऋगेव निधनमित्युच्यते। अस्मिंश्च दाशस्पत्ये स्वरवागिडाभ्यो विलक्षणमेव पदावसानं दृश्यते। तथा पूर्वयोरपि पवमानयोः। तस्मादेते त्रयः पवमानाः निधनान्ताः निधनसंज्ञः सामान्तो येषां तथाविधा भवन्ति। तच्च निधनान्तत्वमस्यानुष्ठीयमानस्य पञ्चमस्याह्नो धृत्यै धारणाय कल्पते। एवं नवसु सामसु तृचेषु क्रियमाणेषु सप्तविंशतिस्तोत्रीयात्मकस्त्रिणवस्तोमो निष्पद्यते। स एव स्तोमोऽस्याऽऽभवस्य भवति ॥ २८ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोदशाध्यायस्य पञ्चमः खण्डः ॥

---

## अथ षष्ठः खण्डः ॥

अथोक्थानां प्रथमस्य स्तोत्रीयं तृचं दर्शयति—

**(१) "आते अग्न इधीमही"ति ॥ १ ॥**

स्पष्टोऽर्थः ॥ १ ॥

तदेतत्स्तौति—

**अपच्छिदिव वा एतद्यज्ञकाण्डं यदुक्थानि यदेति सलोमत्वायैव ॥ २ ॥**

---

१. आ ते अग्न इधीमहि द्युमन्तं देवाजरम्।
यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषं स्तोतृभ्य आ भर ॥ १ ॥
आ ते अग्न ऋचा हविः शुक्रस्य ज्योतिषस्पते।
सुश्चन्द्र दस्म विश्पते हव्यवाट्तुभ्यं हूयत इषं स्तोतृभ्य आ भर ॥ २ ॥
ओभे सुश्चन्द्र विश्पते दर्वी श्रीणीष आसनि।
उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषं स्तोतृभ्य आ भर ॥ ३ ॥
सा. सं. उ. ३. २. २१

गतमेतत् ॥ २ ॥

अथ द्वितीयस्योक्थस्य स्तोत्रीयं तृचं विधाय स्तौति—

**(१) "इन्द्राय साम गायते"ति पूर्णाः ककुभस्तेनानशनायुको भवति ॥ ३ ॥**

'इन्द्राय साम गायते'ति पूर्णाः अक्षरसङ्ख्यया सम्पूर्णाः अन्यूनाः ककुभः ककुप्छन्दस्कास्तिस्रः स्तोत्रीयाः ब्रह्मसाम भवन्ति । तेन पूर्णस्य काकुभस्य तृचस्य करणेन यजमानोऽपि पूर्णस्तृप्तः सन् अनशनायुकः अशनाया अशनेच्छा क्षुत्पीडा तद्रहितो भवति ॥ ३ ॥

प्रकारान्तरेण स्तौति—

**पुरुषो वै ककुप् पुरुषमेव तन्मध्यतः प्रीणाति ॥४॥**

यदिदं ककुप्छन्दस्तत् पुरुषो वै पुरुषात्मक एव । तत्तथा सति मध्यतः उक्थानां मध्ये पुरुषमेव यजमानस्याऽऽत्मानमेव देहमध्ये ऽवस्थितं प्रीणाति तर्पयति ॥ ४ ॥

अथ तृतीयस्योक्थस्य तृचस्य स्तोत्रीयं तृचं प्रदर्श्य स्तौति—

**(२) "असावि सोम इन्द्र त" इति सिमानाᳪं रूपᳪं स्वेनैवैनाᳪंस्तद्रूपेण समर्धयति ॥ ५ ॥**

---

१. इन्द्राय साम गायत विप्राय बृहते बृहत् ।
ब्रह्मकृते विपश्चिते पनस्यवे ॥ १ ॥
त्वमिन्द्राभिभूरसि त्वं सूर्यमरोचयः ।
विश्वकर्मा विश्वदेवो महाँ असि ॥ २ ॥
विभ्राजं ज्योतिषा स्वारगच्छो रोचनं दिवः ।
देवास्त इन्द्र सख्याय येमिरे ॥ ३ ॥

सा. सं. उ. ३. २. २२.

२. असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि ।
आ त्वा पृणक्त्विन्द्रियं रजः सूर्यो न रश्मिभिः ॥ १ ॥
आ तिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी ।
अर्वाचीनं सु ते मनो ग्रावा कृणोतु वग्नुना ॥ २ ॥
इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसम् ।
ऋषीणां सुष्टुतीरुप यज्ञं च मानुषाणाम् ॥ ३ ॥

सा. सं. उ. ३. २. २१.

'असावि सोम इन्द्र त' इत्यच्छावाकस्योक्थस्य स्तोत्रीयस्तृचो भवति। सोमः असावि अभिषुतः रसावस्थामापन्नोऽभूदित्यर्थः प्रतीयते। शक्वर्यः सिमा इत्युच्यन्ते (१)'पशवो वै शक्वर्य' इति श्रुतेः। तासां गोरूपत्वात् गवाञ्च क्षीरादिरससम्बन्धस्सिद्ध एवेति सोम इति रसप्रतिपादकशब्दः सिमानां शक्वरीणां रूपम्। गतमन्यत् ॥ ५ ॥

अथ प्रथमतृचे गेयं साम दर्शयति—

**सञ्जयं भवति ॥ ६ ॥**

सञ्जयाख्यं साम 'आते अग्न इधीमहि' त्यस्मिंस्तृचे गातव्यम् ॥६॥

अथाऽस्य संज्ञां आख्यायिकया निर्ब्रुवन् पशुसाधनतामाह—

**देवाश्च वा असुराश्च समदधत यतरे नः सञ्जयाꣳस्तेषां नः पशवोऽसानिति ते देवा असुरान् सञ्जयेन समजयन् यत्समजयꣳस्तस्मात्सञ्जयं पशूनामवरुध्यै सञ्जयं क्रियते ॥ ७ ॥**

पुरा खलु देवाश्चाऽसुराश्च पशुविषयं स्पर्धमानाः समदधत सन्धानं समकुर्वत—नोऽस्माकं मध्ये यतरे सञ्जयान् सम्यक् जयेयुः तेषामेव पशवो गवाद्या असान् सन्तु भवन्त्विति । एवं सन्धानं कृत्वा ततो युध्यमाना देवास्सञ्जयेनाऽनेन साम्ना असुरान् समजयन् अभ्यजयन्। यद्यस्मादनेन साम्ना समजयन् तस्मात् सञ्जयमिति तस्य साम्नो नाम सम्पन्नम्। अतोऽद्यत्वेऽपि यजमानस्य पशूनामवरुध्यै अवरोधनार्थं सञ्जयं साम क्रियते ॥ ७ ॥

अथ द्वितीयस्योक्थस्य साम विधत्ते—

**सौमित्रं भवति ॥ ८ ॥**

सुमित्रेण दृष्टं साम सौमित्रम्। तत् 'इन्द्राय साम गायते'ति तृचे गेयम् ॥ ८ ॥

अथैतत् सर्वकामप्राप्तिसाधनमिति विवक्षुराह—

**दीर्घजिह्वी वा इदꣳ रक्षो यज्ञहा यज्ञियानवालिहत्यचरत्तामिन्द्रः कयाचन मायया हन्तुं नाशꣳसताऽथ ह**

---

१. तां. ब्रा. १३. ४. १३.

**सुमित्रः कुत्सः कल्याण आस तमब्रवीदिमामच्छा ब्रूष्वेति तामच्छा ब्रूत सैनमब्रवीन्नाहैतन्न शुश्रुव प्रियमिव तु मे हृदयस्येति तामज्ञपयत्ताꣳ सꣳस्कृतेऽहतां तद्वाव तौ तर्ह्यकामयेतां कामसनि साम सौमित्रं काममेवैतेनाऽवरुन्धे ॥ ९ ॥**

दीर्घजिह्वी दीर्घा जिह्वा यस्याः सा दीर्घजिह्वी (१)'दीर्घजिह्वी च छन्दसी'ति निपातनादीकारः। ईदृशी रक्षः राक्षसी यज्ञहा यज्ञस्य हन्त्री याज्ञियान् यज्ञार्हान् चरुपुरोडाशसोमादीन् अवलिहन्ती दीर्घया जिह्वया अवलेहनं कुर्वती आस्वादयन्ती भक्षयन्ती अचरत् अवर्त्तत। तां दीर्घजिह्वीं राक्षसीं इन्द्रः कयाऽपि मायया हन्तुं हिंसितुं नाऽशंसत नाऽशक्नोत्। अथ तस्मिन् समये सुमित्रः शोभनेन मैत्रीभावेन युक्तः कल्याणः प्रशस्तः कुत्साख्य ऋषिरास आविरभूत्। स इन्द्रस्तमृषिमब्रवीत् इमां राक्षसीं अच्छा मदभिमुखी यथा भवति तथा ब्रूष्व ब्रूहीति। ततस्तां राक्षसीं अच्छा ब्रूत स ऋषिः यथा सा अभिमुखी भवति तथाऽब्रवीत्। एतत्साम अगायत। सा राक्षसी अभिमुखी सती एनमृषिमब्रवीत्। अहेति हर्षे। एतद्वचनं न शुश्रुव नाऽश्रौषमिति नैव, अपि तु श्रुतवत्येवाऽस्मि। मे मम हृदयस्य प्रियमिव तु प्रियमेवाऽभूदिति। एवमभिमुखीकृतां तां राक्षसीं अज्ञपयत् इन्द्राय न्यवेदयत्। ततस्तां राक्षसीं संस्कृते प्रोक्षणादिसंस्कारेण विशुद्धे यज्ञवाटे अहतां कुत्स इन्द्रश्चोभौ मिलित्वा अहिंसिष्टाम्। तदेव राक्षस्या हननं तर्हि तस्मिन् काले तावकामयेताम्। कामयित्वा च हतवन्तौ। तस्मात् सौमित्रं सुमित्रेण दृष्टं साम कामसनि कामप्रदं सर्वकामप्राप्तिसाधनम्। तस्मादेतेन सौमित्रेण सर्वमेव कामं यजमानोऽवरुन्धे ॥ ९ ॥

अथ प्रकारान्तरेणैतत् स्तौति—

**सुमित्रः सन् क्रूरमकरिस्येनं वागभ्यवदत्तꣳशुगार्च्छत्स तपोऽतप्यत स एतत्सौमित्रमपश्यत्तेन शुचमपाहतापशुचꣳ हते सौमित्रेण तुष्टुवानः १० ॥**

अस्य रक्षसो वधानन्तरं हे कुत्स सुमित्रः सर्वेषां भूतानां शोभन-

---

१. पा. सू. ४. १. ५९.

मिश्रस्सन् क्रूरं कर्म अकः अकार्षीदिति एनमृषिं अशरीरी वागभ्यवदत्
अभितोऽब्रवीत्। सऋषिस्तपोऽतप्यत तेन च तपसा एतत्सौमित्रं सामा-
ऽपश्यत्। तेन च दृष्टेन सौमित्रेण शुचं शोकं अशरीरवाग्जन्यमपाहत
व्यनाशयत्। तस्मादद्यतनोऽपि सौमित्रेण तुष्टुवानः स्तुतवान् शुचं
शोकं अपहते अपहन्ति विनाशयति ॥ १० ॥

अथ तृतीयस्योक्थस्य साम विधत्ते—

**महावैश्वामित्रं भवति ॥ ११ ॥**

एतत्संज्ञं साम 'असावि सोम इन्द्र त' इति तृचे गेयम् ॥ ११ ॥

अथैतत्संज्ञानिर्वचनेन स्तौति—

**पाप्मानꣳ हत्वा यदमहीयन्त तन्महावैश्वामित्रस्य महावैश्वामित्रत्वम् ॥ १२ ॥**

देवाः पुरा अनेन साम्ना पाप्मानं पापं हत्वाऽपनीय यस्मात्कारणा-
दमहीयन्त पूज्या अभवन्, तत्तस्मान्महावैश्वामित्रस्य साम्नो महावैश्वा-
मित्रत्वं महावैश्वामित्रमिति नाम सम्पन्नम् ॥ १२ ॥

अथाऽस्य साम्नः स्तोभमुपादाय स्तौति—

**हाया इहया ओहा ओहेति पशूनेवैतेन न्यौहन्त ॥ १३ ॥**

अस्मिन् स्तोभे ओहा ओहेति दृश्यते। एतेन स्तोभेन पशूनेव न्यौ-
हन्त नितरां प्राप्नुवन्। यद्वा समूहीकृतवन्तः ॥ १३ ॥

अस्य साम्नोऽवसाने होइडेति त्रिः प्रयुज्यते तदनूद्य स्तौति—

**त्रीडं भवति त्रिरात्रस्य धृत्यै ॥ १४ ॥**

तिस्र इडा यस्य तत्त्रीडमेतत् साम भवति। तच्च द्वितीयस्य त्रि-
रात्रस्य धृत्यै धारणाय भवति ॥ १४ ॥

अथ तत्र पूर्वस्मादिडाद्वयात् उत्तमाया इडाया गुणाविशेषं विद्-
धानः सन्तानहेतुतामाह—

**द्रवन्तीमिडामुत्तमामुपयान्ति षष्ठस्याऽह्नः सन्तत्यै ॥ १५ ॥**

हो इडेति द्रवन्तीं द्राघीयसीमुत्तमामन्त्यां तृतीयामिडामुपयान्ति
उपगच्छन्ति। सा च दीर्घीभूता षष्ठस्य करिष्यमाणस्याऽह्नः सन्तत्यै
सन्तानाय सम्बन्धाय भवति ॥ १५ ॥

अथैतेषूक्थेषु पूर्ववत्स्तोमक्लृप्तिं दर्शयित्वा स्तौति—

**त्रिणव एव स्तोमो भवति प्रतिष्ठायै पुष्ट्यै त्रिवृद्वा एष पुष्टः ॥ १६ ॥**

(१)व्याख्यातमेतत् ॥ १६ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे त्रयोदशाध्यायस्य षष्ठः खण्डः ॥

## अथ सप्तमः खण्डः ॥

एवं दाशरात्रिकस्य पञ्चमस्याऽह्नः स्तोमक्लृप्तिरुक्ता। अथ षष्ठेऽहनि बहिष्पवमानस्य प्रथमं स्तोत्रीयाख्यं तृचं दर्शयति—

**(२)"ज्योतिर्यज्ञस्य पवते मधुप्रियमि"ति षष्ठस्याऽह्नः प्रतिपद्भवति ॥ १ ॥**

त्रयस्त्रिंशत्स्तोमकं दाशरात्रिकं षष्ठमहरतः परमाध्यायपरिसमाप्तेः प्रतिपाद्यते। तस्य षष्ठस्याऽह्नो 'ज्योतिर्यज्ञस्ये'ति प्रतिपत् प्रतिपद्यते अनयेति प्रतिपदिति प्रथमा ऋगुच्यते। (३)'तृचसूक्तानामादिग्रहणेन विधिरनादेशे' इति परिभाषया एतदादिकस्तृच एव ग्राह्यः। सोऽयं बहिष्पवमानस्याऽऽद्यस्तृचो भवति ॥ १ ॥

अत्र ज्योतिश्शब्देन सूचितमर्थं प्रदर्श्य स्तौति—

**ज्योतिर्वै गायत्री छन्दसां ज्योतिः रेवती साम्नां**

---

१. ( तां. ब्रा. १३. ९. १२. ) इत्यत्र द्रष्टव्यम्।

२. ज्योतिर्यज्ञस्य पवते मधु प्रियं पिता देवानां जनिता विभूवसुः।
दधाति रत्नं स्वधयोरपीच्यं मदिन्तमो मत्सर इन्द्रियो रसः ॥ १ ॥
अभिक्रन्दन् कलशं वाज्यर्षति पतिर्दिवः शतधारो विचक्षणः।
हरिर्मित्रस्य सदनेषु सीदति मर्मृजानोऽविभिः सिन्धुभिर्वृषा ॥ २ ॥
अग्रे सिन्धूनां पवमानो अर्षस्यग्रे वाचो अग्रियो गोषु गच्छसि।
अग्रे वाजस्य भजसे महद्धनं स्वायुधः सोतृभिस्सोम सूयसे ॥ ३ ॥
सा. सं. उ. ४. १. १.

३. लाट्या. श्रौ. ६. ३. १.

**ज्योतिस्त्रयस्त्रिंशः स्तोमानां ज्योतिरेव तत्सम्यक् सन्दधात्यपि ह पुत्रस्य पुत्रो ज्योतिष्मान् भवति ॥ २ ॥**

छन्दसां मध्ये गायत्री ज्योतिर्वै तेजोरूपैव । अग्निना सह प्रजापतिमुखादुत्पत्तेः । तथा साम्नां मध्ये रेवती रैवतं साम ज्योतिस्तेजोरूपम् । रयिर्धनं तद्वदस्य प्रकाशोऽस्तीति प्रसिद्धम् । अतो रयिमच्छब्दपर्यायेण रैवच्छब्देनाऽभिधेयं साम प्रकाशात्मकम् । स्तोमानां त्रिवृदादीनां मध्ये त्रयस्त्रिंशत्स्तोमो ज्योतीरूपः, तस्य त्रयस्त्रिंशद्देवतात्मकत्वात् । तथा सति 'ज्योतिर्यज्ञस्ये'ति ज्योतिश्शब्दप्रयोगादस्मिन्नहनि ज्योतिरेव उक्तत्रितयात्मकं सम्यक् सङ्गतं यथा भवति, तथा सन्दधाति संयुनक्ति । अस्य यजमानस्य यः पुत्रस्तस्य पुत्रोऽपि ज्योतिष्मान् तेजस्वी भवतीति किमु वक्तव्यमस्य यजमानस्य ज्योतिष्मत्त्वं भवतीति ॥२॥

अथाऽत्राऽन्त्यं पादान्तरमनूद्य स्तौति—

**"मधु प्रियमि"ति पशवो वै रेवत्यो मधुप्रियं तदेव तदभिवदति ॥ ३ ॥**

रेवत्यो रैवत्याख्यं साम पशवो वै पश्वात्मकमेव । तदेव मधुप्रियं रसातिशयेनेच्छाविषयं मधु मधुरस्य क्षीरादिरसस्य प्रदानेन च पशूनां मधुरत्वं तन्मध्विति पदं पशुद्वारा रेवत्यात्मकम् । तदेव मधु अभिवदति अभिब्रवीति शब्दसामान्येनेयं स्तुतिः ॥ ३ ॥

अथ पादान्तरमनूद्य स्तौति—

**"मदिन्तमो मत्सर इन्द्रियो रस"इतीन्द्रियं वै वीर्यं रसः पशवस्तदेव तदभिवदति ॥ ४ ॥**

इन्द्रियात्मकं वीर्यं रसश्च पशवः वीर्यरसात्मकाः पशव इत्यर्थः । वृत्रं हतवत इन्द्रस्य वीर्यं भूमौ परापतत् । तच्चौषधिरूपेण परिणतमभूत् । ओषधीनाञ्च पशुभिरात्मनि धारणात् रसात्मकस्य क्षीरादेः प्रदानाच्च पशूनां वीर्यरसात्मकत्वम् । गतमन्यत् ॥ ४ ॥

अथाऽनुरूपाख्यं बहिष्पवमानस्य द्वितीयं तृचं विधत्ते—

**(१)"असृक्षत प्रवाजिन" इत्यनुरूपो भवति ॥५॥**

---

१. असृक्षत प्र वाजिनो गव्या सोमासो अश्वया । शुक्रासो वीरयाशवः ॥१॥
शुम्भमाना ऋतायुभिर्मृज्यमाना गभस्त्योः । पवन्ते वारे अव्यये ॥ २ ॥

स्पष्टोऽर्थः ॥ ५ ॥

तत्राऽसृक्षतेति पदसूचितेनार्थेनाऽहस्सङ्गतिमाह—

**सृष्टानीव ह्येतर्ह्यहानि ॥ ६ ॥**

एतर्हि एतस्मिन् काले अहान्येतदन्तानि सृष्टानीव उत्पादितान्येव । तस्माद्भूतकालविहितलुङ्शिरस्कः असृक्षतेति सृजिधातुः षष्ठेऽहनि सङ्गत इत्यर्थः ॥ ६ ॥

अथ पूर्ववदस्य तृचस्याऽनुरूपसंज्ञां निब्रुवन् तद्वेदनफलञ्च दर्शयन् स्तोत्रीयानुरूपौ तृचौ संहत्य स्तौति—

**पूर्वमु चैव तद्रूपमपरेण रूपेणाऽनुवदति यत्पूर्वं रूपमपरेण रूपेणाऽनुवदति तदनुरूपस्याऽनुरूपत्वमनुरूप एनं पुत्रो जायते य एवं वेद स्तोत्रीयानुरूपौ तृचौ भवतः प्राणापानानामवरुद्ध्यै ॥ ७ ॥**

सिद्धमेतत् ॥ ७ ॥

अथ दशर्चद्वयं विधत्ते—

**दशर्चौ भवतो दशाक्षरा विराड् वैराजमन्नमन्नाद्यस्याऽवरुद्ध्यै ॥ ८ ॥**

(१)'पवस्व देव वीरति'(२)'सना च सोम जेषि चे'ति एतौ दश-

---

ते विश्वा दाशुषे वसु सोमा दिव्यानि पार्थिवा । पवन्तामान्तरिक्ष्या ॥३॥
सा. सं. उ. ४. १. २.

१. पवस्व देववीरति पवित्रं सोम रंह्या । इन्द्रमिन्दो वृषा विश ॥ १ ॥
आ वच्यस्व महि प्सरो वृषेन्दो द्युम्नवत्तमः । आ योनिं धर्णसिस्सदः ॥ २ ॥
अधुक्षत प्रियं मधु धारा सुतस्य वेधसः । अपो वसिष्ठ सुक्रतुः ॥ ३ ॥
महान्तं त्वा महीरन्वापो अर्षन्ति सिन्धवः । यद्गोभिर्वासयिष्यसे ॥ ४ ॥
समुद्रो अप्सु मामृजे विष्टम्भो धरुणो दिवः । सोमः पवित्रे अस्मयुः ॥५॥
आचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः । संसूर्येण दिद्युते ॥ ६ ॥
गिरस्त इन्द्र ओजसा मर्मृज्यन्ते अपस्युवः । याभिर्मदाय शुम्भसे ॥ ७ ॥
तं त्वा मदाय घृष्वय उ लोककृत्नुमीमहे । तव प्रशस्तये महे ॥ ८ ॥
गोषा इन्दो नृषा अस्यश्वसा वाजसा उत । आत्मा यज्ञस्य पूर्व्यः ॥ ९ ॥
अस्मभ्यमिन्दविन्द्रियं मधोः पवस्व धारया । पर्जन्यो वृष्टिमाँ इव ॥ १० ॥
सा. सं. उ. ४. १. ३.

२. सना च सोम जेषि च पवमान महि श्रवः । अथा नो वस्यसस्कृधि ॥ १ ॥

र्चौ स्तोत्रीयानुरूपतृचद्वयानन्तरं कार्य्यौ। विराट्छन्दो दशाक्षरा अन्नञ्च दशविधेन्द्रियतर्पकत्वेन दशसंख्यायोगाद्विराजं विराट्सम्बन्धि। तस्माद्दशसंख्याद्वारा एतौ दशर्चौ अन्नाद्यस्य अन्नयोग्यस्याऽह्नोऽवरुध्यै अवरोधनाय भवतः ॥ ८ ॥

अथाऽनयोरुत्तरस्य दशर्चस्य कञ्चिद्गुणं विधत्ते—

**उत्तरो दशर्चो भवति सोदर्क इन्द्रियस्य वीर्य्यस्य रसस्याऽनतिक्षाराय ॥ ९ ॥**

'सना च सोमे'त्युत्तरो द्वितीयो दशर्चः सोदर्कः समानोदर्कः 'अथा नो वस्यसस्कृधी'ति प्रत्यृचं समानोऽवसानो भवति। किमर्थम् ? इन्द्रियस्य वीर्य्यस्य इन्द्रियात्मकस्य सामर्थ्यस्य रसस्य क्षीरादेश्च अनतिक्षाराय अतिक्षारः अतिशयेन क्षरणमपगमनं तद्राहित्याय। एकस्य पादस्य प्रत्यृचमावेष्टनात् तेन संसृष्टमन्यत् पादद्वयं दृढं भवतीत्यर्थः ॥ ९ ॥

अस्यैव पादस्य कुतः पुनरावृत्तिरित्यत आह—

**यत्र वै देवा इन्द्रियं वीर्य्यꣳ रसमपश्यꣳस्तदनुन्यतुदन् ॥ १० ॥**

यत्र वै यस्मिन् खलु मन्त्रभागे देवाः पुरा इन्द्रियात्मकं वीर्य्यं रसञ्चाऽपश्यन् तत्तदनुन्यतुदन् प्रत्यृचमभ्यस्यन्। यद्वा यत्र खलु स्थाने देवाः पुराऽनुष्ठानसमये इन्द्रियं वीर्य्यं अपश्यन् तत्रानुन्यतुदन् आनुपूर्व्येण व्यथयन्। तस्माद्व्यथितो रसस्सुवर्णं कामयते। पिधानस्था-

---

सना ज्योतिः सना स्वार्विश्वा च सोम सौभगा। अथा नो वस्यसस्कृधि ॥ २ ॥
सना दक्षमुत क्रतुमप सोम मृधो जहि। अथा नो वस्यसस्कृधि ॥ ३ ॥
पवीतारः पुनीतन सोममिन्द्राय पातवे। अथा नो वस्यसस्कृधि ॥ ४ ॥
त्वं सूर्ये न आ भज तव क्रत्वा तवोतिभिः। अथा नो वस्यसस्कृधि ॥ ५ ॥
तव क्रत्वा तवोतिभिर्ज्योक्पश्येम सूर्यम्। अथा नो वस्यसस्कृधि ॥ ६ ॥
अभ्यर्ष स्वायुध सोम द्विबर्हसं रयिम्। अथा नो वस्यसस्कृधि ॥ ७ ॥
अभ्यर्षानपच्युतो वाजिन्त्समत्सु सासहिः। अथा नो वस्यसस्कृधि ॥ ८ ॥
त्वां यज्ञैरवीवृधन्पवमान विधर्मणि। अथा नो वस्यसस्कृधि ॥ ९ ॥
रयिं नश्चित्रमश्विनमिन्दो विश्वायुमा भर। अथा नो वस्यसस्कृधि ॥ १० ॥

सा. सं. उ. ४. १. ४

नीयेन च सर्वासामुपर्यावर्त्यमानेन पादेन पिहितत्वात् अनतिक्षारो भवतीत्यर्थः ॥१०॥

अथ चतस्रः स्तोत्रीया विधत्ते—

**चतुर्ऋचो भवति प्रतिष्ठायै ॥ ११ ॥**

चतुर्ऋचः चतस्र ऋचो यस्मिन् समुदाये सोऽयं(१) 'तरत्समन्दी' त्यादिकश्चतुर्ऋचो भवति । स च प्रतिष्ठायै यजमानस्य प्रतिष्ठानाय भवति । चतुष्पदा हि गवादयो लोके प्रतिष्ठिता दृश्यन्ते ॥११॥

अथैतत् स्तौति—

**ध्वस्रे वै पुरुषन्ती तरन्तपुरुमीढाभ्यां वैतदश्विभ्याꣳ सहस्राण्यादित्सतां तावैक्षेतां कथं नाविदमात्तमप्रतिगृहीतꣳ स्यादिति तौ प्रत्येतां ध्वस्रयोः पुरुषन्त्योरा सहस्राणि दद्महे तरत्समन्दीधावतीति ततो वै तत्तयोरात्तमप्रतिगृहीतमभवत् ॥ १२ ॥**

ध्वस्रे शत्रूणां ध्वंसयित्र्यौ पुरुषन्ती एतत्संज्ञे लिङ्गव्यत्ययः । एतत्संज्ञौ राजानौ वैतदश्विभ्यां वितदश्विगोत्राभ्यां तरन्तपुरुमीढाभ्यां ऋषिभ्यां सहस्राणि सहस्रसंख्यानि धनानि आदित्सतां दातुमैच्छताम् । ततस्तावृषी ऐक्षेतां ईक्षणं पर्यालोचनमकुरुताम्—नावावयोरिदं धनमात्तं स्वीकृतं कथं केन प्रकारेण अप्रतिग्रहीतं स्यात् प्रतिग्रहदोषाद्वियुक्तं भवेदिति । ततस्तौ प्रत्येतां अजानीतां 'ध्वस्रयोः पुरुषन्त्योरि'ति मन्त्रमपश्यतामित्यर्थः । ततोऽनन्तरं मन्त्रप्रभावादात्तं स्वीकृतं तयोस्तद्धनं अप्रतिगृहीतं प्रतिग्रहदोषवियुक्तमभवत् ॥ १२ ॥

अथैतद्वेदनं प्रशंसति—

**आत्तमस्याऽप्रतिगृहीतं भवति य एवं वेद ॥१३॥**

स्पष्टोऽर्थः ॥ १३ ॥

---

१. तरत्स मन्दी धावति धारा सुतस्यान्धसः । तरत्स मन्दी धावति ॥ १ ॥
उस्रा वेद वसूनां मर्तस्य देव्यवसः । तरत्स मन्दी धावति ॥ २ ॥
ध्वस्रयोः पुरुषंत्योरा सहस्राणि दद्महे । तरत्स मन्दी धावति ॥ ३ ॥
आ ययोस्त्रिंशतं तना सहस्राणि च दद्महे । तरत्स मन्दी धावति ॥ ४ ॥
सा. सं. उ. ४. १. ५.

अथ प्रकारान्तरेण इमं चतुर्ऋचं स्तौति—

**विनाराशꣳसो भवत्युभयस्याऽन्नाद्यस्याऽवरुद्ध्यै मानुषस्य च दैवस्य च ॥ १४ ॥**

"द्वस्त्रयोः पुरुषन्त्योरिति नरयोः शस्यमानत्वात् अयं चतुर्ऋचो विनाराशंसो नाराशंसविशिष्टो भवति । स च उभयस्य द्विविधस्य मानुषस्य मनुष्यसम्बन्धिनश्च देवस्य देवसम्बन्धिनश्च अन्नाद्यस्याऽवरुद्ध्यै अवरोधनाय भवति ॥ १४ ॥

अथ बहिष्पवमानस्याऽन्त्यं तृचं विधत्ते—

**तृच उत्तमो भवति येनैव प्राणेन प्रयन्ति तमभ्युद्यन्ति ॥ १५ ॥**

गतार्थमेतत् ॥ १५ ॥

एवं स्तोत्रीयासु विहितासु यस्तोमो निष्पद्यते तमेव स्तोममस्य स्तोत्रस्य नियमयति—

**त्रयस्त्रिंश एव स्तोमो भवति प्रतिष्ठायै देवतासु वा एष प्रतिष्ठितः ॥ १६ ॥**

अस्य बहिष्पवमानस्य त्रयस्त्रिंश एव स्तोमो भवति । स च यजमानस्य प्रतिष्ठायै प्रतिष्ठानाय भवति । कुतः ? त्रयस्त्रिंशत्संख्यायुक्तासु देवतासु खल्वेषः त्रयस्त्रिंशः प्रतिष्ठितः । अतः स्वयं प्रतिष्ठितत्वात् प्रतिष्ठाहेतुरित्यर्थः ॥ १६ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोदशाध्यायस्य सप्तमः खण्डः ॥



## अथ अष्टमः खण्डः ॥

अथाऽस्मिन् षष्ठेऽहनि प्रथममाज्यस्तोत्रं दर्शयति—

**(१) "इमᳬ स्तोममर्हते जातवेदस" इत्याग्नेयमाज्यं भवति सोदर्कमिन्द्रियस्य वीर्यस्य रसस्याऽनतिक्षाराय यत्र वै देवा इन्द्रियं वीर्यᳬ रसमपद्यᳬस्तदनुन्यतुदन् ॥ १ ॥**

'इमं स्तोममि'ति तृच आग्नेयमग्निदेवत्यं प्रथममाज्यस्तोत्रं भवति । तच्च सोदर्कं समानोदर्कं 'अग्ने सख्ये मा रिषामा वयन्तवे'त्यनेन पादेन प्रत्यृचं समाप्यमानं भवति । शिष्टं सिद्धम् ॥ १ ॥

अथ द्वितीयमाज्यस्तोत्रं दर्शयति—

**( २ ) "प्रतिवाᳬ सूर उदित" इति सूरवन्मैत्रावरुणम् ॥ २ ॥**

'प्रतिवां सूर' इति तृचः सूरवत् सूरशब्दयुक्तं मैत्रावरुणं मित्रावरुणदेवताकं द्वितीयमाज्यस्तोत्रं भवति ॥ २ ॥

तदेतत् स्तौति—

**अन्तो वै सूरोऽन्त एतत् षष्ठमहरह्नामन्त एव तदन्ते स्तुवते प्रतिष्ठायै ॥ ३ ॥**

---

१. इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया ।
भद्रा हि नः प्रमितिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव ॥ १ ॥
भरा मेध्यं कृणवामा हवींषि ते चितयन्तः पर्वणा पर्वणा वयम् ।
जीवातवे प्रतरां साधया धियोऽग्ने सख्ये मा रिषामा वयं तव ॥ २ ॥
शकेम त्वा समिधं साधया धियस्त्वे देवा हविरदन्त्या हुतम् ।
त्वमादित्याँ आ वह तान्ह्युश्मस्यग्ने सख्ये मा रिषामा वयं तव ॥ ३ ॥
सा. सं. उ. ४. १. ७.

२. प्रति वां सूर उदिते मित्रं गृणीषे वरुणम् । अर्यमणं रिशादसम् ॥ १ ॥
राया हिरण्यया मतिरियमवृकाय शवसे । इयं विप्रा मेधसातये ॥ २ ॥
ते स्याम देव वरुण ते मित्र सूरिभिस्सह । इषं स्वश्च धीमहि ॥ ३ ॥
सा. सं. उ. ४. १. ८.

सूरः सूर्योऽन्तो वै अवसानभूतः । एतत् षष्ठमहश्च अह्नामन्तः । अनेन पृष्ठ्यषडहस्य समापनात् । तत्तथा सति अन्तेन अन्तभूतसूर्यवाचकसुरपदयुक्तेन तृचेनाऽन्त एव स्तुवते स्तुवन्त्युद्गातारः प्रतिष्ठायै प्रतिष्ठानार्थम् । उभयोस्सारूप्यात् प्रतिष्ठाहेतुरित्यर्थः ॥ ३ ॥

अथ तृतीयमाज्यस्तोत्रं दर्शयति—

(१) "भिन्धि विश्वा अपद्विष" इत्यैन्द्रꣳ सोदर्कमिन्द्रियस्य वीर्यस्य रसस्याऽनतिक्षाराय यत्र वै देवा इन्द्रियं वीर्यꣳ रसमपश्यꣳस्तदनुन्यतुदन् ॥ ४ ॥

'भिन्धि विश्वा' इति तृचमैन्द्रं इन्द्रदेवत्यं तृतीयमाज्यस्तोत्रं भवति । तच्च सोदर्कं समानोदर्कं समानावसानं 'वसु स्पार्हं तदाभरे'ति । गतमन्यत् ॥ ६ ॥

अथ चतुर्थमाज्यस्तोत्रं दर्शयति—

(२) "यज्ञस्य हि स्थ ऋत्विज" इत्यैन्द्राग्नꣳ सोदर्कमिन्द्रियस्य वीर्यस्य रसस्याऽनतिक्षाराय यत्र वै देवा इन्द्रियं वीर्यꣳ रसमपश्यꣳ स्तदनुन्यतुदन् स्तोमः ॥५॥

'यज्ञस्य हि स्थ' इति तृचः ऐन्द्राग्नदेवताकं चतुर्थमाज्यस्तोत्रं भवति। तच्च 'इन्द्राग्नी तस्य बोधतमि'ति पादेन सोदर्कं समानोदर्कम् । गतमन्यत् । पूर्वोक्त एव त्रयस्त्रिंशस्स्तोमः एषु चतुर्ष्वाज्यस्तोत्रेषु कार्यः ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोदशाध्यायस्य अष्टमः खण्डः ॥

---

१. भिन्धि विश्वा अप द्विषः परि बाधो जही मृधः । वसु स्पार्हं तदा भर ॥१॥
यस्य ते विश्वमानुषग्भूरेर्दत्तस्य वेदति । वसु स्पार्हं तदा भर ॥ २ ॥
यद्वीडाविन्द्र यत्स्थिरे यत्पर्शाने पराभृतम् । वसुस्पार्हं तदा भर ॥ ३ ॥
सा. सं. उ. ४. १. ९.

२. यज्ञस्य हि स्थ ऋत्विजा सस्नी वाजेषु कर्मसु । इन्द्राग्नी तस्य बोधतम् ॥ १ ॥
तोशासा रथयावाना वृत्रहणापराजिता । इन्द्राग्नी तस्य बोधतम् ॥ २ ॥
इदं वां मदिरं मध्वधुक्षन्नद्रिभिर्नरः । इन्द्राग्नी तस्य बोधतम् ॥ ३ ॥
सा. सं. उ. ४. १. १०.

## अथ नवमः खण्डः ॥

अथाऽस्मिन्नहनि माध्यादिनस्य पवमानस्य प्रथमं तृचं विधत्ते—

**(१) "इन्द्रायेन्दो मरुत्वत" इति मरुत्वत्यो गायत्र्यो भवन्ति ॥ १ ॥**

मरुत्वत्यो मरुच्छब्दयुक्ताः 'इन्द्रायेन्दो मरुत्वत' इत्याद्यास्तिस्रो गायत्रच्छन्दस्काः स्तोत्रीया माध्यन्दिनपवमानस्य भवन्ति ॥ १ ॥

अथाऽऽसां माध्यन्दिने सवने सङ्गतिमाह—

**मरुत्वद्धि माध्यन्दिनꣳ सवनम् ॥ २ ॥**

मरुत्वत् मरुद्भिर्युक्तं हि माध्यन्दिनं सवनं मरुत्वतीयग्रहाणां मरुत्वतीयस्य च शस्त्रस्य तत्र सद्भावात् । अतो मरुत्वत्यस्तत्र सङ्गता इत्यर्थः ॥ २ ॥

अथाऽन्यं तृचं विधत्ते—

**(२) "मृज्यमानः सुहस्त्ये"ति सिमानां रूपम् ॥ ३ ॥**

'मृज्यमानस्सुहस्त्ये'ति तृचस्सिमानां शक्वरीणां रूपम् । तत्र हि 'गोभिरञ्जानो अर्षसी'ति श्रुतम् । गावश्शक्वर्य इति गोशब्दयुक्तस्तृचः शक्वरीणां रूपमित्युच्यते ॥ ३ ॥

ननु शक्वरीसम्बद्धस्तृचो रैवतपृष्ठके षष्ठेऽहनि कथं सङ्गच्छत इति तत्राऽऽह—

**समानं वै सिमानां रूपं रेवतीनाञ्च सिमाभ्यो ह्यधिरेवत्यः प्रजायन्ते ॥ ४ ॥**

सिमानां शक्वरीणां शाक्वरसाम्नश्च रेवतीनां रेवत्यस्य च सा

---

१. इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः । अर्कस्य योनिमासदम् ॥ १ ॥
तं त्वा विप्रा वचोविदः परिष्कृण्वन्ति धर्णसिम् । सं त्वा मृजन्त्यायवः ॥२॥
रसं ते मित्रो अर्यमा पिबन्तु वरुणः कवे । पवमानस्य मरुतः ॥ ३ ॥
सा. सं. उ. ४. १. ११.

२. मृज्यमानस्सुहस्त्या समुद्रे वाचामिन्वसि ।
रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥ १ ॥
पुनानो वारे पवमानो अव्यये वृषो अचिक्रदद्वने ।
देवानां सोम पवमान निष्कृतं गोभिरञ्जानो अर्षसि ॥ २ ॥
सा. सं. उ. ४. १. १२.

स्नो रूपं समानं वै एकविधमेव । तदपि कुत इति चेदुच्यते—हि यस्मात् सिमाभ्यः शक्वरीभ्योऽधि शाक्वरसाम्न उत्पत्तेरनन्तरमेव रेवत्यः प्रजायन्ते सृष्टिसमये रैवतं सामोत्पद्यते । तथा च प्रागाम्नातम्—(१)'स शक्वरीरसृजत, तद्रूपां घोषोऽन्वसृज्यत, स रेवतीरसृजत, तद्रूवां घोषोऽन्वसृज्यते'ति । अत्र सर्वत्र शक्वर्यो रेवत्य इति आधारतृचवाचिना आधेयं सामोच्यते, उभयोरभेदाविवक्षयेति द्रष्टव्यम् । तस्मान्नैरन्तर्येण जातत्वात् शाक्वररैवतयोः समानरूपत्वमेवेति कृत्वा शाक्वरसम्बद्धोऽपि तृचोऽस्मिन् षष्ठेऽहनि सङ्गत इत्यर्थः ॥ ४ ॥

अथ तृचान्तरं विधत्ते—

**(२) "एतमुत्यन्दशक्षिप" इत्यादित्या आदित्या वा इमाः प्रजास्तासामेव मध्यतः प्रतितिष्ठति ॥ ५ ॥**

'एतमुत्यन्दशक्षिप' इत्याद्यास्तिस्र अदित्याः आदित्यसम्बन्धिन्यः स्तोत्रीया भवन्ति । 'समादित्येभिरख्यते'ति तत्राम्नातम् । इमाः दृश्यमानाः सर्वाः प्रजाः देवमनुष्याद्याः आदित्या वै अदितेः पुत्रा एव । तासां प्रजानामेव मध्यतो मध्ये आदित्यवतीभिः स्तोत्रीयाभिः प्रतितिष्ठति यजमानः प्रतिष्ठितो भवति ॥ ५ ॥

ननु प्रकृतौ माध्यन्दिनपवमानस्याऽन्त्यस्तृचस्त्रैष्टुभः(३)'प्र तु द्रवे'ति कथं तत्स्थाने गायत्रस्य तृचस्य सङ्गतिरिति तत्राऽऽह—

**गायत्र्यः सत्यस्त्रिष्टुभो रूपेण तस्मात्त्रिष्टुभां लोके क्रियन्ते ॥ ६ ॥**

'एतमुत्यमि'त्याद्या गायत्र्यस्सत्योऽपि त्रिष्टुप्सम्बन्धेन रूपेण योगात् गौण्यस्त्रिष्टुभो भवन्ति । किं तत् त्रैष्टुभं रूपम् ? 'समिन्द्रेणोते'तीन्द्रशब्दः । इन्द्रो हि त्रिष्टुभा सहोत्पन्नत्वात् त्रैष्टुभो भवति । तस्मात्स्वतो गायत्रीणामपि त्रिष्टुप्सम्बद्धेन्द्रशब्दयोगेन त्रैष्टुभत्वात् त्रिष्टुभां स्थाने क्रियन्ते ॥

---

१. तां० ब्रा० ७. ८. १२.

२. एतमु त्यं दश क्षिपो मृजन्ति सिन्धुमातरम् । समादित्येभिरख्यत ॥ १ ॥
समिन्द्रेणोत वायुना सुत एति पवित्र आ । सं सूर्यस्य रश्मिभिः ॥ २ ॥
स नो भगाय वायवे पूष्णे पवस्व मधुमान् । चारुर्मित्रे वरुणे च ॥ ३ ॥
सा. सं. उ. ४. १. १३.

३. सा. सं. उ. १. १. १०.

अथ 'इन्द्रायेन्दो मरुत्वत' इति प्रथमे तृचे गायत्रं साम विधाय पूर्ववत्स्तावकं ब्राह्मणञ्चाऽतिदिशति—

**गायत्रं भवति यदेव गायत्रस्य ब्राह्मणम् ॥ ७ ॥**

सिद्धमेतत् ॥ ७ ॥

अथाऽस्मिन्नेव तृच आवृत्ते सामान्तरं विधत्ते—

**इषोवृधीयं भवति ॥ ८ ॥**

इषोवृधीयं नाम सामाऽऽवृत्तेऽस्मिन्नेव तृचे गेयं भवति । 'इषो वृध' इत्यस्य (१)साम्नोऽवसाने दर्शनात् इषोवृधीयत्वमस्येति द्रष्टव्यम् ॥८॥

तदेतत् स्तौति—

**पशवो वा इषोवृधीयं पशूनामवरुध्या इषे वै पञ्चममहर्वृधे षष्ठमवर्द्धन्त ह्येतर्हि यजमानमेवैतेन वर्द्धयन्ति ॥ ९ ॥**

इषोवृधीयाख्यं साम पशवो वै पशव एव । इषा अन्नेन वर्द्धयितृत्वात् । पशवश्च क्षीरादिना वर्द्धयन्तीति तात्पर्यम् । तस्मात् पशूनां अवरुध्या वर्धनायैवैतत् क्रियते । अपि च इषे वै अन्नार्थमेव पञ्चमं शाक्वरमहरनुष्ठितम्, वृधे वर्द्धनाय षष्ठमहरनुष्ठीयते । एतर्हि एतस्मिन् काले षष्ठस्याऽह्नोऽनुष्ठानकाले हि यस्माद्देवा अवर्धन्त समृद्धा अभवन् तस्माद्वर्द्धनाय षष्ठस्याऽह्नोऽनुष्ठानम् । अतस्तत्सूचकेनेषोवृधीयेनैतेन साम्ना यजमानमेव वर्द्धयति ॥ ९ ॥

अथाऽस्मिन्नेव तृचे पुनरावृत्ते सामान्तरं विधत्ते—

**कौञ्चं भवति ॥ १० ॥**

कुञ्चो नामाऽऽङ्गिरस ऋषिः । तेन दृष्टं साम कौञ्चम् । तत् 'इन्द्रायेन्दो मरुत्वत' इत्यस्मिन्नेव तृचे गातव्यम् ॥ १० ॥

तदेतत् स्तौति—

**कुञ्चेष्यमहरविन्ददेष्यामिव वै षष्ठमहरेवैतेन विन्दन्ति ॥ ११ ॥**

कुञ्चाख्य ऋषिः एष्यं एषणीयमहः अनेन साम्ना अविन्दत् अलभत

---

१. साम्नोऽन्त इति , ख. पु.

इदं षष्ठमहश्च एष्यमिव वै एषणीयमिव खलु । तस्मादेतेन क्रौञ्चेनेदं षष्ठमहरेव विन्दन्ति लभन्ते ॥ ११ ॥

अथाऽस्मिन्नेव तृचे सामान्तरं विधत्ते—

**वाजदावर्यो भवन्ति ॥ १२ ॥**

(१) 'रेवतीर्न' इत्यस्यां योनौ वेदसामाख्ये ग्रन्थे गीयमानं साम वाजदावर्यः । रेवत्यश्शाक्वर्य इतिवद्बहुवचनम् । वाजदावर्याख्यं साम 'इन्द्रायेन्दो मरुत्वत' इत्यस्मिन्नेव तृचे गातव्यं भवति ॥ १२ ॥

अथैतत् स्तौति—

**अन्नं वै वाजोऽन्नाद्यस्याऽवरुध्यै यदा हि वा अन्नमथ गौरथाऽश्वोऽथ पुरुषो वाजी ॥ १३ ॥**

वाजस्य दात्री वाजदावरीति संज्ञाया उत्पत्तिः । वाजश्चाऽन्नं वै अन्नमेव । तस्माद्वाजदावर्याख्यं साम अन्नाद्यस्य प्राप्त्यै भवति । अपि च यदा खलु यजमानस्य बहुलमन्नं भवति, अथाऽनन्तरं गौः गावश्च भवन्ति । अथाऽनन्तरमश्वाश्च भवन्ति । अथाऽनन्तरं पुरुषो वाजी वाजनवान् वेगवांश्च भवति, अन्नहेतुका एतेऽपि यजमानस्य भवन्तीत्यर्थः ॥ १३ ॥

अथाऽस्मिन्नेव तृचे सामान्तरं विधत्ते—

**रेवत्यो भवन्ति प्रतिष्ठायै ॥ १४ ॥**

'रेवतीर्न' इत्यस्यां योन्यां छन्दस्सामाख्ये ग्रन्थे गीयमानं साम रेवत्यः । 'रेवतीरि'ति योनौ दृष्टं बहुवचनं साम्युपचर्य रेवत्य इति निर्देशः । तद्रैवतं साम 'इन्द्रायेन्दो' इत्यस्मिंस्तृचे गेयम् । तच्च प्रतिष्ठायै यजमानस्य प्रतिष्ठानाय भवति । रेवतीशब्दस्य रयिमद्वाचकत्वात् रयिमतश्च पुरुषस्य प्रतिष्ठादर्शनात् रेवतीनां प्रतिष्ठाहेतुत्वम् ॥ १४ ॥

अथाऽस्य निधनसङ्ख्यामनूद्य स्तौति—

**षण्णिधना षड्रात्रस्य धृत्यै ॥ १५ ॥**

तीनां इहा सधमादा २ हा ३ ऊ वा २३ ई ३४ डा इत्यादीनि षण्णिधनानि यासां रेवतीनां तास्षण्णिधनाः तथाविधा भवेयुः । कि·

---

१. रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम ॥
सा. सं, पू. २. २. १. ९.

मर्थम् ? षड्रात्रस्य अनुष्ठितस्य पृष्ठ्यषडहस्य धृत्यै धारणाय भवति ॥ १५ ॥

ननु रैवतं साम वैरूपवैराजादिवत् पृष्ठस्तोत्र एव गातव्यम्। एतद्धि षष्ठमहः रैवतपृष्ठकं किमिति पवमाने विधीयत इत्याशङ्क्य विपक्षे बाधपुरस्सरं पवमानस्तोत्र एव तद्गातव्यमित्युपपादयति—

**आपो वै रेवत्यस्ता यत् पृष्ठं कुर्युरपशुर्यजमानः स्यात् पशूनस्य निर्दहेयुर्यत्र वा आपो विवर्त्तन्ते तदोषधयो जायन्तेऽथ यत्राऽवतिष्ठन्ते निर्मृतुकास्तत्र भवन्ति तस्मात् पवमाने कुर्वन्ति पराचा हि पवमानेन स्तुवते ॥ १६ ॥**

या इमा रेवत्यस्ता आपो वै अब्रूपा एव। रयिभिर्धनैर्मणिमुक्तादिभिस्तासां युक्तत्वात्ता रेवत्यः। तद्रैवतं साम यदि पृष्ठं पृष्ठस्तोत्रं कुर्युरुद्गातारस्तर्हि यजमानः अपशुः पशुरहितः स्यात्। यदि तान् प्रयुञ्जेरन् अपामभावात् अस्य यजमानस्य पशून्निर्दहेयुः नाशयेयुः। नन्वेवं रेवतीनां प्रयोगे दोषदर्शनात् कथं तत्राऽनुष्ठानमिति तद्दर्शयति—यत्र वा आप इति। यत्र खलु देशे आपो विवर्त्तन्त इव विरलमेव वर्त्तमाना भवन्ति, तत् तत्रौषधयो जायन्ते। अथ यत्र तु देशेऽवतिष्ठन्ते नित्यं वर्त्तन्ते तत्रौषधयो निर्मृतुका निर्गमनशीला भवन्ति। तत्र नोत्पद्यन्त इत्यर्थः। एवं सति अप्संस्तुता रेवत्यः पृष्ठस्तोत्रे यदि क्रियेरन्, तदा त्रयस्त्रिंशस्तोमसम्पत्तये अवश्यमभ्यस्येरन्। तथा चाऽपां भूयिष्ठत्वादोषध्यनुत्पत्तौ यजमानस्याऽपशुत्वं स्यात्। तस्मात्पवमाने माध्यन्दिने रेवतीः कुर्वन्ति। तत्र चोक्तो दोषो न भवतीत्याह-पराचा हीति। हि यस्मात् पराचा अनावृत्तेन पवमानेन पवमानस्तोत्रेण स्तुवते स्तुवन्त्युद्गातारः, तस्मात् रेवतीनामभ्यासाभावात् अप्संस्तुतानां तासां सद्भावाद्बाहुल्याभावाच्चोक्तदोषद्वयाभावः ॥ १६ ॥

अथ विहितं सामचतुष्कं संहत्य स्तौति—

**मेथी वा इषोवृधीयꣳ रज्जुः क्रौञ्चं वत्सो वाजदावर्यो रेवत्यो मातरो यदेतान्येवꣳ सामानि क्रियन्त एवमेव प्रत्तां दुग्धे ॥ १७ ॥**

इषोवृधीयाख्यं साम मेथी वै गवां बन्धनाय निखातस्थाणुर्मेथी त·

त्स्थानीयम् । क्रोञ्चं क्रौञ्चाख्यं साम रज्जुः गौर्बध्यते यया रज्ज्वा तत्स्थानीयम् । वत्सो वत्सस्थानीयो वाजदावर्यः वाजदावर्याख्यं साम । रेवत्यो रैवतं साम मातरः मातृस्थानीयम्। एतानि सामान्येवं ईदग्रूपाणि भवन्तीति । यत्तेन एवमेव प्रत्तां प्रकर्षेण दत्तां गां दुग्धे यजमानः कामान् दोग्धि ॥ १७ ॥

अथ 'मृज्यमानस्सुहस्त्ये'ति तृचे द्वे सामनी पर्यायेण गातव्ये इति विधत्ते—

**औक्ष्णोरन्ध्रे भवतः ॥ १८ ॥**

उक्ष्णोरन्ध्रेण दृष्टे सामनी औक्ष्णोरन्ध्रे । एते 'मृज्यमानस्सुहस्त्ये'ति तृचमावृत्य तस्मिन् पर्यायेण गेय इत्यर्थः ॥ १८ ॥

अथैतदृषिसम्बन्धप्रदर्शनपुरस्सरं स्वर्गसाधनत्वेन स्तौति—

**उक्ष्णोरन्ध्रो वा एताभ्यां काव्योऽञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्याऽनुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः ॥ १९ ॥**

काव्यः कविर्भृगुस्तद्गोत्रज उक्ष्णोरन्ध्रो नाम ऋषिः । एताभ्यां सामभ्यां साधनेन अञ्जसा अनायासेन स्वर्गं लोकमपश्यत् । अत एव ते सामनी स्वर्गस्य लोकस्याऽनुख्यात्यै अनुख्यानाय दर्शनाय भवतः । किञ्च आभ्यां तुष्टुवानः स्तुतवान् स्वर्गाल्लोकान्न च्युतो भवति चिरं तत्रैवाऽवतिष्ठते ॥ १९ ॥

अथाऽस्मिन्नेव तृचे सामान्तरं विधत्ते—

**वाजजिद्भवति सर्वस्याऽऽप्त्यै सर्वस्य जित्यै सर्वं वा एते वाजं जयन्ति ये षष्ठमहरागच्छन्ति ॥ २० ॥**

वाजमन्नं जयत्यनेनेति वाजजित् तत्साम 'मृज्यमान'इति तृचे गेयम् । तच्च सर्वस्य निरवशेषस्य वाजस्याऽनवाप्तस्याऽऽप्त्यै प्रापणाय भवति । तथा सर्वस्य जेतव्यस्य च जित्यै जयाय च भवति । ये यजमाना दशरात्रस्य षष्ठमहरागच्छन्ति प्राप्नुवन्ति एते सर्वमेव वाजं जयन्ति ॥ २० ॥

एतदेव विवृणोति—

**अन्नं वै वाजोऽन्नाद्यस्याऽवरुध्यै ॥ २१ ॥**

स्पष्टोऽर्थः ॥ २१ ॥

अथाऽस्मिन्नेव तृचे सामान्तरं विधत्ते—

**वरुणसाम भवति ॥ २२ ॥**

वरुणस्य साम वरुणसाम । एतदाख्यं साम 'मृज्यमानस्सुहस्त्ये' त्येतस्मिन्नेव तृचे गातव्यम् ॥ २२ ॥

अथैतत्प्रशंसति—

**एतेन वै वरुणो राज्यमाधिपत्यमगच्छद्यशोऽभवद्राज्यमाधिपत्यं गच्छति यशो भवति वरुणसाम्ना तुष्टुवानः ॥ २३ ॥**

एतेन साम्ना साधनेन पुरा वरुणो देवः राज्यं राजत्वं आधिपत्यं अधिपतित्वं स्वामित्वञ्चाऽगच्छत् प्राप्नोत् । यशो यशस्वी तेजस्वी चाऽभवत् । तस्मादद्यतनोऽपि वरुणसाम्ना तुष्टुवानः स्तुतवान् राज्यमाधिपत्यं गच्छति, यशो यशस्वी च भवति ॥ २३ ॥

अथ सामान्तरं विधत्ते—

**आङ्गिरसां गोष्ठो भवति ॥ २४ ॥**

आङ्गिरसां गोष्ठाख्यं साम 'मृज्यमानस्सुहस्त्ये'त्यावृत्तेऽस्मिन्नेव तृचे गेयम् ॥ २४ ॥

अथैतत्प्रशंसति—

**पशवो वै रेवत्यो गोष्ठमेव तत्पशुभ्यः पर्य्यस्यन्ति तमेवैनान् प्रवर्त्तयन्त्यविस्रंसाय ॥ २५ ॥**

याः पूर्वप्रयुक्ता रेवत्यः ताः पशवो वै पशुरूपा एव । अतस्तासां गोष्ठाख्यं स्थानमपेक्षितम् । तथा चाङ्गिरसां गोष्ठो भवतीति यत् तत्तेन पशुभ्यः पशूनामर्थं गोष्ठं गावो यत्र तिष्ठन्ति तादृशं स्थानमेव पर्य्यस्यन्ति परितस्समीपे क्षिपन्ति स्थापयन्ति । तं गोष्ठमेव एतान् पशून् प्रवर्त्तयन्ति प्रापयन्ति अविस्रंसाय अविनाशाय ॥ २५ ॥

अथ 'एतमुत्यं दश क्षिप' इति तृचे गातव्यं साम दर्शयति—

**इहवद्वामदेव्यं भवति ॥ २६ ॥**

इहवत इहशब्दयुक्तं वामदेव्यं वामदेवेन ऋषिणा दृष्टमेतदाख्यं

साम 'एतमुत्यं दश क्षिप' इत्यन्तिमे तृचे गेयम् ॥ २६ ॥

अथैतदन्नप्राप्तिसाधनत्वेन स्तौति—

**एतेन वै वामदेवोऽन्नस्य पुरोधामगच्छदन्नं वै ब्रह्मणः पुरोधा अन्नस्याऽवरुध्यै ॥ २७ ॥**

एतेन वै पुरा साम्ना वामदेवाख्य ऋषिः अन्नस्य पुरोधां पुरोधानमगच्छत् प्राप्नोत्। ब्रह्मणः ब्राह्मणजातेः अन्नं वै अन्नमेव खलु पुरोधा पुरोधानीयम्। यस्मादेवं तस्मादृषिः अन्नस्यैव पुरोधानं प्राप्तवान्। तत्सामान्यादद्यत्वेऽपि तत्साम अन्नाद्यस्य अदनीयस्याऽन्नस्य प्राप्त्यै भवति ॥ २७ ॥

अथैतच्छन्दोद्वारा स्तौति—

**गायत्रीषु स्तुवन्ति प्रतिष्ठायै ब्रह्मवर्चसाय येनैव प्राणेन प्रयन्ति तमभ्युद्यन्ति ॥ २८ ॥**

सिद्धमेतत् ॥ २८ ॥

ननु त्रैष्टुभं माध्यन्दिनं सवनं सर्वप्रकृतौ ज्योतिष्टोमे कथं तत्र गायत्र्यस्सङ्गच्छन्त इति तत्राऽऽह—

**मरुत्वत्यो गायत्र्यो भवन्ति तदु त्रैष्टुभाद्रूपान्न यन्ति स्तोमः ॥ २९ ॥**

'इन्द्रायेन्दो मरुत्वत' इत्याद्या गायत्र्यः यस्मात्तस्मान्मरुत्वत्यः मरुच्छब्दयुक्ता भवन्ति। तद्योगश्च प्रकृतौ माध्यन्दिने सवने दर्शनात् त्रैष्टुभं रूपम्। तदु तस्मादेव मरुच्छब्दयोगात् एता गायत्र्यः त्रैष्टुभात् त्रिष्टुभस्सम्बन्धिनो रूपान्न यन्ति नाऽपगच्छन्ति। एवं गायत्र्यादिषु इहवद्वामदेव्यान्तेषु एकादशसामसु तृचेषु क्रियमाणेषु निष्पद्यमानस्त्रयस्त्रिंशस्तोमोऽस्य पवमानस्तोत्रस्य कार्य्य इत्यर्थः ॥ २९ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोदशाध्यायस्य नवमः खण्डः ॥

## अथ दशमः खण्डः ॥

अथ पृष्ठस्तोत्रेषु स्तोत्रीयाणामृचां छन्दोविशेषं विधित्सुराह—

**यातयामान्यन्यानि छन्दांᳬस्ययातयामा गायत्री तस्माद्गायत्रीषु स्तुवन्ति ॥ १ ॥**

अन्यानि त्रिष्टुबादीनि छन्दांसि यातयामानि द्वितीयादिष्वहस्सु विनियुक्तत्वात् गतसाराणि। यद्यपि गायत्री प्रथमेऽहनि विनियुक्ता, तथाऽप्ययातयामा यातयामत्वदोषरहिता प्रजापतिमुखादग्निना सहोत्पन्नत्वेन तस्या उत्कर्षत्वात्। यस्मादेवं तस्मात् षष्ठेऽहन्यस्मिन् गायत्रीषु पृष्ठ्यैस्सामभिः स्तुवन्ति 'रेवतीर्नः सधमाद' इत्याद्यासु गायत्रीषु पृष्ठस्तोत्राणि कार्य्याणीत्यर्थः ॥ १ ॥

अथ ब्रह्मपृष्ठस्य स्तोत्रीया ऋचो विदधानः किञ्चिद्विशेषं विधत्ते—

**(१)"सुरूप कृत्नुमूतय" इत्यभ्यारम्भेण षट्पदाः षष्ठस्याऽह्नो रूपं तेन षष्ठमहरारभन्ते सन्तत्यै ॥ २ ॥**

'सुरूप कृत्नुमूतय' इत्याद्यास्तिस्रो गायत्र्यः ब्रह्मसाम्नस्स्तोत्रीयाः। ताश्चाऽभ्यारम्भेण प्रत्यृचं षट्पदाः। अयमर्थः—गानसमये आसां प्रथमपादस्त्रिरभ्यस्यते। तृतीयपादस्यान्त्यश्चतुरक्षरस्त्रिरभ्यस्यते। एवमभित आद्यन्तयोरारम्भे पुनःपुनरादाने सति प्रत्येकमेताः षट्पदा भवन्ति। प्रथमपादस्य त्रिरावृत्तत्वात् त्रयः पादाः, द्वितीयश्चैकः, उत्तमश्चैकः, पुनस्तदन्तस्य चतुरक्षरस्य द्वयोरभ्यासयोरेकः पाद इति पादषट्कसम्पत्तिः। अतः षट्संख्यायोगात् एताः षष्ठस्याऽह्नो रूपम्। तेन कारणेन षट्पदाभिः षष्ठमहरारभन्ते स्वीकुर्वन्ति। किमर्थम्? सन्तत्यै पूर्वोत्तराभ्यामहर्भ्यां सन्तानार्थम् ॥ २ ॥

---

१. सुरूप कृत्नुमूतये सुदुघामिव गोदुहे। जुहूमसि द्यवि द्यवि ॥ १ ॥
उप नस्सवनागहि सोमस्य सोमपाः पिब। गोदा इद्रेवतो मदः ॥ २ ॥
अथा ते अन्तमानां विद्याम सुमतीनाम्। मा नो अतिख्य आ गहि ॥ ३ ॥
सा. सं. उ० ४. १. १५.

अथाऽच्छावाकपृष्ठस्तोत्रीया ऋचो दर्शयति—

**(२)"उभे यदिन्द्र रोदसी" इति षट्पदाः षष्ठस्याऽह्नो रूपं तेन षष्ठमहरारभन्ते सन्तत्यै ॥ ३ ॥**

'उभे यदिन्द्र रोदसी' इत्याद्याः षट्पदा यासां तथाविधा ऋच अच्छावाकसाम्नः स्तोत्रीया भवन्ति । शिष्टं पूर्ववद्व्याख्येयम् ॥ ३ ॥

अथाऽऽद्यं पृष्ठस्तोत्रीयं साम विधत्ते—

**रेवतीषु वारवन्तीयं पृष्ठं भवति ॥ ४ ॥**

रेवतीषु रैवतसामर्क्षु रेवच्छब्दयुक्तासु 'रेवतीर्नस्सधमाद' इत्याद्यासु वारवन्तीयं वारवन्तीयाख्यं साम पृष्ठं भवति पृष्ठस्तोत्रत्वेन कार्यमित्यर्थः । पशवो वै रेवत्य इति हि प्रागाम्नातम् ॥ ४ ॥

पशवश्चाऽब्विकारा इत्यभिप्रायेणाऽऽह—

**अपां वा एष रसो यद्रेवत्यो रेवतीनाꣳ रसो यद्वारवन्तीयꣳ सरसा एव तद्रेवतीः प्रयुङ्क्ते यद्वारवन्तीयेन पृष्ठेन स्तुवते ॥ ५ ॥**

रेवत्यः रेवच्छब्दयुक्ताः स्तोत्रीया इति यावत् । एष अपामेव रसः सारम् । तथा वारवन्तीयाख्यं सामेति यत्, एष रेवतीनां रसः । एवं सति तासु रेवतीषु वारवन्तीयाख्यसामकरणात् ता रेवतीः सरसाः रससहिता एव प्रयुङ्क्ते करोति । यद्यस्माद्वारवन्तीयेन साम्ना निर्वर्त्येन पृष्ठेन पृष्ठस्तोत्रेण स्तुवते स्तुवन्त्युद्गातारः तत्तस्मादित्यर्थः ॥ ५ ॥

अथैतद्धनप्राप्तिहेतुत्वेन स्तौति—

**रेवद्वा एतद्रैवत्यं यद्वारवन्तीयमस्य रेवान् रेवत्या जायते ॥ ६ ॥**

---

२. उभे यदिन्द्र रोदसी आप प्राथोषा इव ।
महान्तं त्वा महीनां सम्राजं चर्षणीनाम् ॥ १ ॥
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ।
दीर्घं ह्यङ्कुशं यथा शक्तिं बिभर्षि मन्तुमः ॥ २ ॥
पूर्वेण मघवन्पदा वयामजो यथा यमः ।
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥ ३ ॥
सा. सं. उ. ४. १. १६.

रेवत् रयिमत् (१) 'रयेर्मतौ बहुलमि'ति सम्प्रसारणे पूर्वरूपत्वम्। रयिमत् धनयुक्तमेवैतद्दैवत्यं रेवतीनां सम्बन्धि साम, यद्वारवन्तीयाख्यं साम एतद्रेवतीषु कुर्वतो यजमानस्य रेवान् रयिमान् धनवान् रेवत्यः पशवस्तेषां स्वामी एवङ्गुणविशिष्टः पुत्रः आजायते आभिमुख्येनोत्पद्यते ॥ ६ ॥

अथैतद्वेदनमपि धनप्राप्तिहेतुरित्याह—

**रेवान् भवति य एवं वेद ॥ ७ ॥**

गतमेतत् ॥ ७ ॥

अथैतस्य वारवन्तीयस्य गानसमये किञ्चिद्विधित्सुस्तदर्थमाख्यायिकामाह—

**केशिने वा एतद्दाल्भ्याय सामाऽऽविरभवत्तदेनमब्रवीदगातारो मा गायन्ति मा मयोद्गासिषुरिति कथं त आगा भगव इत्यब्रवीदागेयमेवाऽस्म्यागायन्निव गायेत्प्रतिष्ठायै तदलम्मं पारिजानतं पश्चादक्षᳪ शयानमेतामागां गायन्तमजानात्तमब्रवीत् पुरस्त्वादधा इति तमब्रुवन् को न्वयं कस्मा अलमित्यलन्नु वै मह्यमिति तदलम्मस्याऽलम्मत्वम् ॥ ८ ॥**

दाल्भ्याय दल्भपुत्राय केशिने एतत्संज्ञाय ऋषये पुरा खल्वेतत् वारवन्तीयं साम आविरभवत् बुद्धौ प्रकाशमानमासीत्। तच्चाऽऽविर्भूतं साम एनं केशिनमृषिमब्रवीत् अवोचत्। कथमिति? तदुच्यते हे ऋषे मा मां अगातारो गातुमकुशलाः गायन्ति प्रयुञ्जते। गानशक्तिरहिताः पुरुषाः मया साम्ना साधनेन मोद्गासिषुः (२)उद्गानं न कुर्युरिति। एवं साम्नोक्ते सति ऋषिरब्रवीदुक्तवान्—हे भगवन् ऐश्वर्यादियुक्त मन्त्रात्मन् ते त्वदीया आगाः आगानं कथं केन प्रकारेण कर्त्तव्यमिति। पुनस्सामाऽब्रवीत्—अहमागेयं आङीषदर्थे। ईषत्प्रयत्नेन गातव्यमेवाऽस्मि भवामि। वाक्यावसानद्योतक इतिशब्दोऽत्राप्यनुषञ्जनीयः। यस्मादेवं साम्नोक्तं तस्मात् आगायन् आगानं कुर्वन्निव। यथा लोकेऽल्पेनैव प्रयत्नेन निष्पन्नेन स्निग्धेन स्वरेण लौकिका गानं

१. व्या. वा. ७९०. २. उद्गानं मा कार्षुरिति क. ख. पु.

कुर्वन्ति एवमेव गायेदुद्गाता। एवं गाने सति तत्साम प्रतिष्ठायै यजमानस्य प्रतिष्ठानाय सम्पद्यते। कुत एतदित्यत आह--तदलम्मं पारिजानतमिति। परिजानतः पुत्रं अलम्मं एतत्संज्ञं ऋषिम्। पश्चादक्षं रथाक्षस्य पश्चात् प्रत्यग्भागे शयानं निषण्णं एतामागां एतत्पूर्वोक्तमागानं गायन्तं उच्चारयन्तं तत्सामाऽजानात् अज्ञासीत्। ज्ञात्वा च तमलम्मं गायन्तमब्रवीत्—पुरस्ताद्रथाक्षस्य पुरोभागे अधः आत्मानं धारयेति। एवं साम्नोक्ते तमृषिं पार्श्वस्था ऋषयोऽब्रुवन् को नु को नामाऽयं पुरुषः, कस्मै वा प्रयोजनाय अलं समर्थ इति। एवं पार्श्वस्थैरधिक्षिप्ते सामैवाऽब्रवीत्--अलन्नु समर्थ एव खल्वेष मह्यामिति मां सम्यग्गातुं कुशल इत्यर्थः। यस्मादेवं साम्नोक्तमलं मह्यामिति तत्तस्मात् अलम्मस्य ऋषेः अलम्मत्वं अलम्म इति नाम सम्पन्नम्। यस्मादयमृषिरस्य साम्न आगानेन ज्येष्ठेन पुरतो धारितोऽभूत तस्मादेतदीयमागानं प्रतिष्ठाहेतुरित्यर्थः॥ ८॥

अथ स्तोभविशेषमनूद्य प्रतिष्ठाहेतुतामाह—

**इहेहेति गायेत्प्रतिष्ठायै॥ ९॥**

इहा इहा इति स्तोभं पुनः पुनः प्रक्षिप्य गायेत्। इहशब्देन इहलोकस्य प्रत्यभिज्ञानात् अस्मिन् लोके प्रतिष्ठायै प्रतिष्ठानाय यजमानस्यैतद्गानं भवति॥ ९॥

अथ मैत्रावरुणपृष्ठस्तोत्रं प्राकृतमेवेत्यभिप्रेत्य तदनन्तरस्य ब्रह्मपृष्ठस्य विहिते 'सुरूपकृत्नुमूतय' इति तृचे गातव्यं साम दर्शयति—

**ऋषभो रैवतो भवति॥ १०॥**

रैवत इति रेवतीनां सम्बन्धी ऋषभः एतत्पदद्वयाभिधेयं साम 'सुरूपकृत्नुमूतय' इत्यभ्यारम्भेण षट्पदासु स्तोत्रीयासु गातव्यम्॥१०॥

अथैतत्प्रजातिहेतुत्वेन स्तौति—

**पशवो वै रैवत्यः पशुष्वेव तन्मिथुनमप्यर्जति प्रजात्यै न ह वा अनृषभाः पशवः प्रजायन्ते॥ ११॥**

रैवत्यो रैवतं सामेति यत्तत् पशवो वै पशुरूपा एव। अवशिष्टं(१) 'ऋषभः शाक्वरो भवती'त्यस्य वाक्यशेषवद्व्याख्येयम्॥ ११॥

---

१. तां. ब्रा. १३. ५. १७.

अथाऽच्छावाकपृष्ठस्तोत्रनिर्वर्तकं साम दर्शयति—

**श्येनो भवति ॥ १२ ॥**

श्येनवत् क्षिप्रकारित्वात् सामाऽपि श्येनः। एतत्संज्ञकं साम 'उभे यदिन्द्रे'ति तृचे गातव्यम् ॥ १२ ॥

अथैतस्य दृष्टान्तपुरस्सरं क्षिप्रकारितामाह—

**श्येनो ह वै पूर्वप्रेतानि वयाꣳस्याप्नोति पूर्वप्रेतानीव वै पूर्वाण्यहानि तेषामाप्त्यै श्येनः क्रियते ॥ १३ ॥**

श्येनाख्यः खलु पक्षी पूर्वप्रेतानि पूर्वमेवोत्पतितानि वयांसि पक्षिजातानि स्वयं पश्चादुत्पतनविशेषं प्राप्नोति। लुप्तोपममेतत्। यथैवं लौकिकः श्येनः एवमेव तेषामह्नां प्राप्त्यै क्षिप्रप्राप्तये श्येनः श्येनाख्यं साम क्रियते। कानि पुनस्तानि प्राप्याणि पूर्वाणि? अस्मात् षष्ठादह्नः पूर्वानुष्ठितान्यहानि पञ्चसंख्यानि पूर्वप्रेतानीव वै पूर्वोत्पतितपक्षिजातिसदृशानि खलु। तेषामह्नामित्यर्थः ॥ १३ ॥

एवं पूर्वानुष्ठितानां पञ्चानामह्नां प्राप्त्यर्थमेतदिति स्तुत्वाऽनुष्ठीयमानस्य षष्ठस्याऽह्नोऽपि पारप्राप्तिरनेनैव भवतीत्याह—

**श्येनो वा एतदहः सम्पारयितुमर्हति स हि वयसामाशिष्ठस्तस्याऽनपहननाय सम्पारणायैतत् क्रियतेऽन्तो हि षष्ठश्चाहः सप्तमश्च ॥ १४ ॥**

श्येनो वै श्येन एव एतत् षष्ठमहः सम्पारयितुं पारमवसानं पारयितुमर्हति शक्नोति। स खलु वयसां पक्षिणां मध्ये आशिष्ठः व्यापृततमः, तस्य षष्ठस्याऽह्नः अनपहननाय अविनाशाय सम्पारणाय सम्यक् पारप्रापणाय च एतत्साम क्रियते। षष्ठश्च सप्तमश्च यदिदमहर्द्वयं अन्तो हि अवसानभूतं हि षष्ठेनाऽह्ना षडहस्य समाप्तत्वात् उभयोरह्नोरन्तत्वम्। तस्मात् षष्ठस्याऽह्नः पारप्राप्तिरपेक्षितेति भावः॥ १४ ॥

अथैतेषु पृष्ठस्तोत्रेषु ब्रह्मवादिनां चोद्यमुद्भावयति—

**ब्रह्मवादिनो वदन्ति यद् बृहदायतनानि पृष्ठान्यथैते द्वे गायत्र्यौ द्वे जगत्यौ क्व तर्हि बृहत्यो भवन्तीति ॥ १५ ॥**

ब्रह्म वेदः। तद्वादिनः वेदार्थाभिज्ञा ऋषयः पुरा वदन्ति एषु पृष्ठ-स्तोत्रेषु चोदयन्ति। किमिति? यत् यस्मात् पृष्ठानि पृष्ठस्तोत्राणि बृहदा-यतनानि बृहतीछन्द आयतनं स्थानं येषां तानि तथोक्तानि। सर्वप्रकृतौ हि ज्योतिष्टोमे बृहतीष्वेव स्तोत्रीयासु पृष्ठस्तोत्राणि क्रियन्ते, तस्मात्तत् बृहतौ षष्ठेऽहनि तथैव भवितव्यम्। अत्र च द्वे गायत्र्यौ, द्वे जगत्यौ। अत्र हि प्रथमयोः पृष्ठस्तोत्रयोः (१)'रेवतीर्नः'(२) 'कयानश्चित्र' इति द्वे गाय-त्र्यौ ऋचौ। ततस्तृतीये पृष्ठस्तोत्रे (३)'सुरूपकृत्नुमूतय' इत्याद्या अभ्या-रम्भेण षट्पदाः तिस्रः स्तोत्रीयाः। चतुर्थस्य पृष्ठस्तोत्रस्य च त एव षट्-पदाः (४)'उभे यदिन्द्रे' त्याद्यास्तिस्रः। अत एतयोः पृष्ठस्तोत्रयोर्याः स्तोत्रीयास्ता अष्टाक्षरैः षड्भिः पादैरुपेतत्वात् अक्षरसंख्यया अष्टाच-त्वारिंशदक्षरा जगत्यो भवन्ति। तस्मादादित आरभ्य द्वयोः पृष्ठस्तोत्रयोः प्रथमे द्वे गायत्र्यौ, उत्तरयोः प्रथमे द्वे जगत्यौ। क तर्हि कस्मिन् खलु पृष्ठस्तोत्रे बृहत्यः स्तोत्रीया भवन्ति ॥ १५ ॥

अस्य ब्रह्मवादिभिः कृतस्य चोद्यस्योत्तरं दर्शयति—

**ये द्वे जगत्योः पदे ते गायत्र्या उपसम्पद्येते तत् सर्वा बृहत्यो भवन्त्यायतने पृष्ठानि यातयत्यायतनवान् भवति ॥ १६ ॥**

उपरितनपृष्ठद्वयवर्त्तिन्योर्ज्जगत्योर्ये द्वे पदे यौ द्वौ पादौ बृहत्या अतिरिच्येते। अष्टाचत्वारिंशदक्षरा हि जगती। तत्राऽऽदितष्षट्त्रिंश-दक्षरैरेका बृहती सम्पद्यते। तत एको जागतः पादोऽवशिष्यते। तथा च द्वयोर्जगत्योरवशिष्टे ते पदे, तौ जागतौ पादौ गायत्र्यौ, आद्ययोः पृ-ष्ठस्तोत्रयोः प्रथमे गायत्र्यौ ऋचौ उपसम्पद्येते प्राप्नुतः। एका गायत्री एकेन जागतेन पादेन संयुक्ता बृहती भवति अपराऽप्यपरेण। इत्थं च-तुर्षु पृष्ठेषु आद्यानामृचां बृहतीत्वसम्पादनमुक्तम्। एवमुत्तराणामपि बृहतीत्वसम्पत्तिर्द्रष्टव्या। तदेतदाह—'तत्सर्वा बृहत्यो भवन्ती'ति। त-त्तथा च बृहत्या अवशिष्टे जागतौ पादौ गायत्रीणां योजनात् सर्वा अपि पृष्ठचतुष्टयगता स्तोत्रीया बृहत्यो भवन्ति। तथा च आयतने स्वकीय एव प्राकृते स्थाने पृष्ठानि पृष्ठस्तोत्राणि यातयति विस्तारयति आयत-नवान् स्थानवान् यजमानो भवति ॥ १६ ॥

---

१. सा. सं. उ. ४. १. १४.    २. सा. सं. उ. १. १. १२.
३. सा. सं. उ. ४. १. १५.    ४. सा सं. उ. ४. १. १६.

यद्येवं सम्पन्नास्वेव बृहतीषु गानं स्यादित्यत आह—

**षट्पदासु स्तुवन्ति षड्रात्रस्य धृत्यै ॥ १७ ॥**

षट्पदास्वेवर्क्षु स्तुवन्ति, न सम्पादितासु बृहतीषु । किमर्थम् ? षड्रात्रस्य षडहस्य धृत्यै धारणाय ॥ १७ ॥

अथ प्रसङ्गादस्मिन्नहनि याज्यायाः पादसंख्यां विधाय स्तौति—

**सप्तपद्या यजति सप्तमस्याऽह्नः सन्तत्यै स्तोमः ॥ १८ ॥**

सप्तपद्या सप्तभिः पदैरुपेतया ऋचा षष्ठेऽहनि होत्रादयो यजन्ति । ताश्च सप्तपदाः आश्वलायनेन सूत्रकृता (१)'षष्ठस्य प्रातः सवन' इति खण्डे 'वृषन्निन्द्र वृषपाणास इन्दवः सुषुमायातमद्रिभिरि'त्यादिना दर्शिताः । अत्र सप्तपद्येत्येकवचनं जात्यभिप्रायम् । सप्तपद्या यजनं सप्तमस्याऽऽगामिनोऽह्नः सन्तत्यै सन्तानाय अनेन षष्ठेनाऽह्ना संश्लेषाय भवति । सप्तसंख्यया तस्य बुद्धौ विपरिवर्त्तमानत्वात् । पृष्ठु च पृष्ठस्तोत्रेषु पूर्वोक्त एव त्रयस्त्रिंशस्तोमः कार्यः ॥ १८ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये
वेदार्थप्रकाशे दशमाध्यायस्य दशमः खण्डः ॥

---

## अथ एकादशः खण्डः ॥

अथाऽऽर्भवपवमानस्याऽऽद्यास्तिस्रः स्तोत्रीया दर्शयति—

**(२)"परिस्वानो गिरिष्ठा" इति परिवत्यो गायत्र्यो भवन्ति सर्वस्य पर्याप्त्यै ॥ १ ॥**

परिशब्दयोगादेताः सर्वस्य कृत्स्नस्य पर्याप्त्यै सम्पूर्णतायै भवन्ति । परीत्यनेनोपसर्गेण पर्याप्तिः सूचितत्वात् । शिष्टं स्पष्टम् ॥ १ ॥

---

१- आश्व श्रौ.

२. परिस्वानो गिरिष्ठाः पवित्रे सोमो अक्षरत् । मदेषु सर्वधा असि ॥ १ ॥
त्वं विप्रस्त्वं कविर्मधु प्रजातमन्धसः । मदेषु सर्वधा असि ॥ २ ॥
त्वे विश्वे सजोषसो देवासः पीतिमाशत । मदेषु सर्वधा असि ॥ ३ ॥
सा. सं. उ. ४. १. १७.

(१)अथाऽन्यं तृचं दर्शयति—

**(२)"समुन्वेयो वसूनामि"ति पशवो वै वसु पशूनामवरुद्ध्यै ॥ २ ॥**

वसुशब्देन धनसामान्यवाचिना धनविशेषस्योपस्थानात् पशव एव वसुशब्दाभिधेयाः । तथा चाऽयं तृचः पशुप्राप्त्यै भवति ॥ २ ॥

अथाऽन्यं तृचं विधत्ते—

**(३)"तं वस्सखायो मदाये"ति वालखिल्याः ॥ ३ ॥**

वालखिल्यानामृषीणां सम्बन्धिन्यो वालखिल्याः 'तं वस्सखाय' इत्याद्याः स्तोत्रीया भवन्ति ॥ ३ ॥

अथ सप्तमेऽहनि विधास्यमानं (४)'सखाय आनिषीदते'ति तृचमिमञ्च स्तुत्यर्थं संयुज्याऽनुवदति—

**वालखिल्यावेतौ तृचौ षष्ठे चाऽहनि सप्तमे च ॥ ४ ॥**

---

१. अथ तृचान्तरं विधत्ते इति. क. पु.

२. स सुन्वे यो वसूनां यो रायामानेता य इडानाम् । सोमो यस्सुक्षितीनाम् ॥१॥
यस्य त इन्द्रः पिबाद्यस्य मरुतो यस्य वार्यमणा भगः ।
आ येन मित्रावरुणा करामह ऐन्द्रमवसे महे ॥ २ ॥
सा. सं. उ. ४. १. १८.

३. तं वस्सखायो मदाय पुनानमभिगायत ।
शिशुं न हव्यैः स्वदयन्त गूर्तिभिः ॥ १ ॥
संवत्स इव मातृभिरिन्दुर्हिन्वानो अज्यते ।
देवावीर्मदो मतिभिः परिष्कृतः ॥ २ ॥
अयं दक्षाय साधनोऽयं शर्धाय वीतये ।
अयं देवेभ्यो मधुमत्तरस्सुतः ॥ ३ ॥ सा. सं. उ. ४. १. १९.

४. सखाय आ निषीदत पुनानाय प्र गायत ।
शिशुं न यज्ञैः परि भूषत श्रिये ॥ १ ॥
समी वत्सं न मातृभिः सृजता गयसाधनम् ।
देवाव्यां मदमभि द्विशवसम् ॥ २ ॥
पुनाता दक्षसाधनं यथा शर्धाय वीतये ।
यथा मित्राय वरुणाय शन्तमम् ॥ ३ ॥ सा. सं. उ. ४. २. ९.

षष्ठसप्तमयोरह्नोः 'तं वः' 'सखाय आनिषीदते'ति यावेतौ तृचौ वालखिल्यौ बालखिल्यसम्बन्धिनौ ॥ ४ ॥

किमतस्तदाह—

**यदेतौ वालखिल्यौ तृचौ भवतोऽह्नोरेव व्यतिषङ्गायाऽव्यतिस्रंसाय सन्तत्यै ॥ ५ ॥**

एतौ वालखिल्यौ तृचौ क्रमेण षष्ठसप्तमयोरह्नोर्भवतः प्रयुज्येते इति यत् तदह्नोः षष्ठसप्तमयोर्व्यतिषङ्गाय व्यतिषञ्जनं संसर्जनं तदर्थं भवति । एतदेव विशदयति अव्यवस्रंसायेति—व्यवस्रंसो विशिष्य स्रंसनं विच्छेदनं तदभावाय । फलितमर्थमाह सन्तत्या इति ॥ ५ ॥

अथाऽपरं तृचं दर्शयति—

**(१)"सोमाः पवन्त इन्दव" इत्यनुष्टुभो निभसदो भवन्ति प्रतिष्ठायै ॥ ६ ॥**

'सोमाः पवन्त' इत्याद्यास्तिस्रोऽनुष्टुभः स्तोत्रीयाः तासामनुष्टुभां पादचतुष्टयोपेतत्वात् प्रतिष्ठायै यजमानस्य प्रतिष्ठानाय भवन्ति॥६॥

अथाऽन्यं तृचं दर्शयति—

**(२)"अयापवापवस्वैना वसूनी"ति त्रिष्टुभस्सत्यो जगत्यो रूपेण तस्माज्जगतीनां लोके क्रियन्ते ॥ ७ ॥**

---

१. सोमाः पवन्त इन्दवोऽस्मभ्यं गातुवित्तमाः ।
मित्राः स्वाना अरेपसः स्वाध्यः स्वर्विदः ॥ १ ॥
ते पूतासो विपश्चितः सोमासो दध्याशिरः ।
सूरासो न दर्शतासो जिगत्नवो ध्रुवो घृते ॥ २ ॥
सुष्वाणासो व्यद्रिभिश्चिताना गोरधि त्वचि ।
इषमस्मभ्यमभितः समस्वरन्वसुविदः ॥३॥ सा. सं. उ. ४. १. २०.

२. अया पवा पवस्वैना वसूनि मांश्चत्व इन्दो सरसि प्रधन्व ।
ब्रध्नश्चिद्यस्य वातो न जूतिं पुरुमेधाश्चित्तकवे नरं धात् ॥ १ ॥
उत न एना पवया पवस्वाधि श्रुते श्रवाय्यस्य तीर्थे ।
षष्टिं सहस्रा नैगुतो वसूनि वृक्षं न पक्वं धूनवद्रणाय ॥ २ ॥
महीमे अस्य वृष नाम शूषे मांश्चत्वे वा पृशने वा वधत्रे ।
अस्वापयन्निगुतः स्नेहयच्चापामित्राँ अपाचितो अचेतः ॥ ३ ॥
सा. सं. उ. ४. १. २१.

'अयापवापवस्वे'त्याद्यास्तिस्रः स्तोत्रीयाः। तास्त्रिष्टुभस्त्रिष्टुप् छन्दस्काः सत्योऽपि जागतेन रूपेण योगाज्जगत्यो भवन्ति। किं तद्रूपमिति? उच्यते--वसूनीत्यनेन पदेन धनमुच्यते। तच्च वैश्यसम्बद्धम्। वैश्यजातिश्च जगत्यां सहोत्पन्नेति पारम्पर्येण वसूनीत्येतज्जागतं रूपम्। यस्मादेवं जगत्यस्तस्माज्जगतीनां स्थाने क्रियन्ते। प्रकृतौ हि आर्भवस्याऽन्त्यस्तृचः (१) 'अभिप्रियाणी'ति जागतः। तस्मादार्भवान्त्यस्य जगतीस्थानत्वम्॥ ७॥

अथ प्रथमे तृचे पूर्ववद्गायत्रं साम विधाय तदितिकर्त्तव्यताप्रतिपादकं(२) 'इमे वै लोका गायत्र'मित्यादिकं प्रागाम्नातं ब्राह्मणञ्चाऽतिदिशति—

**गायत्रं भवति यदेव गायत्रस्य ब्राह्मणम्॥ ८॥**

'परिस्वानो गिरिष्ठा' इति विहिते तृचे गायत्रं साम प्रथमतो गातव्यं भवति। लिङ्गमन्यत्॥ ८॥

अथैतमेव तृचं त्रिरावृत्य तत्र त्रीणि सामानि गातव्यानीति विधत्ते—

**वैदन्वतानि भवन्ति॥ ९॥**

चत्वारि हि वैदन्वतानि सामानि 'परिस्वान' इत्यस्यां योन्यां गीयन्ते। तत्र तृतीयवर्जितानि त्रीण्यस्मिन्नेव तृचे गेयानि॥ ९॥

अथैतेषां विदन्वत्सम्बन्धं दर्शयन् विशिष्टफलसाधनतामाह--

**विदन्वान्वै भार्गव इन्द्रस्य प्रत्यहꣳस्तꣳशुगाच्छेत् स तपोऽतप्यत स एतानि वैदन्वतान्यपश्यत्तैः शुचमपाहताऽपशुचꣳहते वैदन्वतैस्तुष्टुवानः॥ १०॥**

भार्गवे भृगुगोत्रे विदन्वान्नाम ऋषिः इन्द्रस्य साहाय्यात् प्रत्यहन् प्रतिकूलान् शत्रून् हतवान्। अनन्तरं तमृषिं शुक् शोकः आर्च्छत् प्राप्नोत्। स च शोकार्त्तः ऋषिः तपस्तप्तवान्। स च तपोबलात् एतानि

१. अभि प्रियाणि काव्या विश्वा चक्षाणो अर्षति। हरिस्तुंजान आयुधा॥ १॥
स मर्मृजान आयुभिरिभो राजेव सुव्रतः। श्येनो न वंसु षीदति॥ २॥
स नो विश्वा दिवो वसूतो पृथिव्या अधि। पुनान इन्दवा भर॥ ३॥
सां. सं. उ. ८. ३. १८.

२. तां. ब्रा ७. १. १.

वैदन्वतानि त्रीणि सामानि अपश्यत् दृष्टवान् । दृष्ट्वा च तैस्सामभिः शुचं शोकमपाहत अपागमयत् । यस्मादेवं तस्माद्वैदन्वतैरेव सामभिस्तुष्टुवानः स्तुतवान् शुचं शोकमपाहत अपगमयति विनाशयतीत्यर्थः ॥ १० ॥

अथ 'ससुन्वेयो वसूनामि'ति (पृ. ६२.) विहिते तृचे गेयं साम दर्शयति—

**भरद्वाजस्य लोम भवति ॥ ११ ॥**

भरद्वाजस्य लोमाख्यं साम 'ससुन्वेयो वसूनां' इति तृचे गातव्यमित्यर्थः ॥ ११ ॥

तदेतत्स्तौति—

**पशवो वै लोम पशूनामवरुध्यै ॥ १२ ॥**

लोम्नां नियमेन पशुसम्बन्धदर्शनात् पशुत्वम् । तथा तत्र लोम्नः करणं लोमवतां पशूनां गवादीनामवरुध्यै प्राप्त्यै भवति ॥ १२ ॥

प्रकारान्तरेण स्तौति—

**तदु दीर्घमित्याहुरायुर्वै दीर्घमायुषोऽवरुध्यै ॥ १३ ॥**

तत्पूर्वोक्तं भरद्वाजस्य लोमाख्यं साम वै दीर्घं दीर्घशब्दाख्यमिति च आहुरन्ये ब्रह्मवादिनः कथयन्ति । तथा चाऽऽयुरेव दीर्घं दैर्घ्यविशिष्टम् । तत्सामान्याद्दीर्घाख्यं साम आयुषः शतवर्षलक्षणस्य प्राप्त्यै भवति ॥ १३ ॥

अथाऽन्यास्मिन्विहिते तृचे सामान्तरं विधत्ते—

**कार्णश्रवसं भवति शृण्वन्ति तुष्टुवानम् ॥ १४ ॥**

कर्णश्रवसा दृष्टं कार्णश्रवसम् । एतदाख्यं साम 'तं वः सखाय' इति (पृ. ६२.) तृचे गातव्यम् । अनेन तुष्टुवानं स्तुवन्तं शृण्वन्ति लौकिका बहु मन्यन्ते श्राद्धवान् भवतीत्यर्थः ॥ १४ ॥

अथैतद्दृष्टिसम्बन्धं दर्शयन् पशुसाधनत्वेन स्तौति—

**कर्णश्रवा वा एतदाङ्गिरसः पशुकामः सामाऽपश्यत्तेन सहस्रं पशूनसृजत यदेतत्साम भवति पशूनां पुष्ट्यै ॥ १५ ॥**

स्पष्टोऽर्थः ॥ १५ ॥

अथ 'सोमाः पवन्त इन्दव' इति (पृ. ६३.) तृच अन्यत्साम विधाय

तदीयं ब्राह्मणञ्चाऽतिदिशति—

**गौरीवितं भवति यदेव गौरीवितस्य ब्राह्मणम् ॥ १६ ॥**

सिद्धमेतत् ॥ १६ ॥

अथाऽस्मिन्नेव तृचे सामान्तरं विधत्ते—

**मधुश्च्युन्निधनं भवति ॥ १७ ॥**

मधुश्च्युत इति निधनं यस्य तत्तथोक्तं एतदाख्यं साम 'सोमाः पवन्त' इत्यस्मिंस्तृचे गातव्यम् ॥ १७ ॥

अथैतत् स्तौति—

**परमस्याऽन्नाद्यस्याऽवरुध्यै परमं वा एतदन्नाद्यं यन्मधु ॥ १८ ॥**

यन्मधु माक्षिकं एतत्परममुत्कृष्टं अन्नाद्यं अदनीयमन्नम् । तस्मादेतन्मधुश्च्युन्निधनं परमस्योत्तमस्याऽन्नाद्यस्य प्राप्त्यै भवति । च्युतिक्षरणे । मधुश्च्योतयति च्यावयति क्षारयतीति मधुश्च्युदिति तत्संज्ञानिर्वचनात्तस्य मधुप्राप्तिहेतुता ॥ १८ ॥

(१) 'इदं ह्यन्वोजसे'ति योनौ यत् घृतश्च्युन्निधनाख्यं साम गीयते स्तुत्यर्थं तच्चेदञ्च संयुज्य प्रशंसति—

**प्रजापतेर्वा एतौ स्तनौ यद्घृतश्च्युन्निधनञ्च मधुश्च्युन्निधनञ्च यज्ञो वै प्रजापतिस्तमेताभ्यां दुग्धे यं कामं कामयते तं दुग्धे ॥ १९ ॥**

प्रजापतेः सर्वकारणभूतस्य विधातुरेतौ स्तनौ यद्घृतश्च्युन्निधनाख्यं मधुश्च्युन्निधनाख्यञ्च सामनी । स च प्रजापतिः यज्ञो वै यज्ञ एव । तं यज्ञात्मकं प्रजापतिमेवैताभ्यां स्तनाभ्यां घृतश्च्युन्मधुश्च्युद्रूपाभ्यां दुग्धे । एतदेव विव्रियते—यं काममिति । यजमानो यं यं कामं कामयते आशंसते, तं तं सर्वमेताभ्यां दुग्धे दोग्धि ॥ १९ ॥

अथाऽस्मिन्नेव सामद्वयं विधत्ते—

**क्रौञ्चे भवतः ॥ २० ॥**

कुञ्चाख्येन ऋषिणा दृष्टे सामनी क्रौञ्चे । एते 'सोमाः पवन्त इन्दव' इत्यस्मिन्नेव तृचे द्विरावृत्ते क्रमेण गायेत् ॥ २० ॥

---

१. इदं ह्यन्वोजसा सुतं राधानां पते । पिबा त्वाऽऽस्य गिर्वणः ॥ १ ॥
सा. सं. पू. २. २. ३. १.

अथैते स्तौति—

**क्रुङ्ङे(?)ऽध्यमह्नरविन्दद्देष्यामिव वै षष्ठमहरहरेवैताभ्यां विन्दन्ति ॥ २१ ॥**

'इन्द्रायेन्दो मरुत्वत्' इति (१)खण्डे व्याख्यातमेतत् ॥ २१ ॥

'अया पवा पवस्व' त्यन्तिमे तृचेऽन्यत्साम विधत्ते—

**श्नौष्टं भवति ॥ २२ ॥**

श्नुष्ठाख्येन ऋषिणा सम्बद्धं साम श्नौष्ठम् ॥ २२ ॥

अथैतस्य स्तुतिः—

**श्नुष्टिर्वा एतेनाऽङ्गिरसोऽञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्याऽनुख्यात्यै स्वर्गात् लोकान्न च्यवते तुष्टुवानः ॥ २३ ॥**

एतदपि सिद्धम् ॥ २३ ॥

अथाऽस्य निधनं विधत्ते—

**अग्नेर्वा एतद्वैश्वानरं साम दीदिहीति निधनमुपयन्ति दीदा एव ह्यग्निर्वैश्वानरः ॥ २४ ॥**

वैश्वानरस्य विश्वानरहितस्याऽग्नेः खल्वेतत्साम। तस्माद्दीदिहीत्येतत्पदं निधनमुपयन्त्युपगच्छन्ति त्रय उद्गातारः। दीदा एव दीप्त एव वैश्वानरोऽग्निः ॥ २४ ॥

अथैतत्पवमानस्तोत्रमुपसंहरति—

**निधनान्ताः पवमाना भवन्त्यह्नो धृत्यै स्तोमः ॥ २५ ॥**

पवमानाः पवमानस्तोत्राणि बहिष्पवमानादीनि निधनान्ताः निधनावसाना भवन्ति। किमर्थम्? अह्नो धृत्यै धारणाय स्थैर्यार्थम्। एवं गायत्र्यादिश्नौष्ठान्तेष्वेकादशसु सामसु प्रत्येकं तृचे गीयमानेषु त्रयस्त्रिंशत्स्तोमो निष्पद्यते। स एवाऽऽभवस्य पवमानस्य स्तोम इत्यर्थः ॥ २५ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोदशाध्यायस्य एकादशः खण्डः ॥

---

१. त्रयोदशाध्यायस्य नवमखण्डे एकादशब्राह्मणे व्याख्यातम्।

## अथ द्वादशः खण्डः ॥

अथ प्राकृतमेवाऽग्निष्टोमसामेत्यभिप्रेत्य ततः परेषूक्थस्तोत्रेषु द्विपदाः स्तोत्रीयाः कार्य्या इति विधित्सुस्तदर्थं किञ्चिद्ब्रह्मवादिनां विचारमुपक्षिपति—

**ब्रह्मवादिनो वदन्ति प्रायणतो द्विपदाः कार्य्या उदयनता ३ इति ॥ १ ॥**

ब्रह्मवादिनो वेदार्थचिन्तका वदन्ति मीमांसन्ते—किं षडहस्य प्रायणतः प्रारम्भसमये द्विपदा ऋचः स्तोत्रीयाः कार्याः ? किं वा उदयनतस्समाप्तिवेलायामित्युभयत्र विचार्यमाणानामिति प्लुतिर्द्रष्टव्या॥१॥

एवं विचार्य्य निर्णीतं पक्षमाह—

**उदयनत एव कार्य्याः पुरुषो वै द्विपदाः प्रतिष्ठायै ॥ २ ॥**

उदयनत एव षडहावसान एव उक्थस्तोत्रेषु द्विपदा स्तोत्रीयाः (२) 'अग्ने त्वन्नो अन्तम' इत्याद्याः कार्य्याः । कुत एतत् ? येयं द्विपदा, सा पुरुषो वै द्विपदाः रूपसामान्यात् पुरुषात्मका एव । पुरुषसंस्तुतानां तासां द्विपदानामन्ततः करणं पादद्वयवतो यजमानस्य प्रतिष्ठानाय कल्पते ॥ २ ॥

अथ प्रकारान्तरेण स्तौति—

**वाचा वै सर्वं यज्ञं तन्वते तस्मात्सर्वां वाचं पुरुषो वदति सर्वा ह्यस्मिन् सꣳस्तुता प्रतितिष्ठति ॥ ३ ॥**

वाचा स्तुतशस्त्रात्मिकया खलु सर्वं यज्ञं अग्निष्टोमादि विश्वसृजामयनान्तं सकलयज्ञजातं तन्वते यजमानाः विस्तारयन्ति । यस्माद्यज्ञे सर्वा वाक् साधनभूता तस्मात्सर्वां लौकिकीं वैदिकीञ्च वाचं पुरुषो वदति प्रयुङ्क्ते । हि यस्मादस्मिन् पुरुषे सर्वा वाक् संस्तुता सह स्तुता प्रतितिष्ठति प्रतिष्ठिता भवति । तस्मात् सर्वां पुरुषो वदति ता-

---

१. अग्ने त्वं नो अन्तम उत त्राता शिवो भुवो वरूथ्यः ॥ १ ॥
वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमो रयिं दाः ॥ २ ॥
तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥ ३ ॥
सा. सं. उ. ४. १. २२.

दशः पुरुषो द्विपदाभिः पडह्यावसानगताभिः प्रतिष्ठितो भवतीति द्वि-
पदास्तुतिर्द्रष्टव्या ॥ ३ ॥

अथ मैत्रावरुणोक्थस्य साम दर्शयति—

गूर्दो भवति ॥ ४ ॥

'अग्ने त्वन्नो अन्तमः' इत्यस्मिन् द्विपदातृचे गूर्दाख्यं साम गातव्यं भवति ॥ ४ ॥

अथाऽस्य साम्न आख्यायिकाप्रदर्शनपुरस्सरं सर्वकामसाधनतामाह—

**गोपायनानां वै सत्रमासीनानां किरातकुल्यावसु-रमाये अन्तःपरिध्यसून् प्राकिरतां ते "अग्ने त्वन्नो अन्त-म" इत्यग्निमुपासीदं स्तेनासूनस्पृण्वं स्तद्वाव ते त-र्ह्यकामयन्त कामसनि साम गूर्दः काममेवैतेनावरुन्धे॥५॥**

गोपायनानां गोपगोत्राणां सत्रमासीनानां सत्रायनं कुर्वतामृषीणां असून् प्राणान् किरातकुल्यौ किराता म्लेच्छाः तत्तुल्यरूपे असुरमाये असुरसम्बन्धिन्यौ माये अन्तःपरिधि आहवनीयस्य परिधीनां मध्य-देशे प्राकिरतां प्रकर्षेण व्याक्षिपताम् । कृ विक्षेप इति धातुः । ततस्ते गोपायनाः 'अग्ने त्वन्नो अन्तम' इति तृचेनाऽग्निमुपासीदन्नुपागच्छन् अस्तुवन्नित्यर्थः । तेनोपसदनेन अग्नेः प्रसादात् पुनरात्मीयान् असून् स्पृण्वन् बलयन् मायाभ्यां परिक्षिप्तान् पुनरादाय प्रबलान् कुर्वन्नि-त्यर्थः । ते गोपायनाः तर्हि तस्मिन् समये तदेव ह्यकामयन्त । तस्मा-द्गूर्दः कामसनि कामप्रदम् । गतमन्यत् ॥ ५ ॥

अथ ब्रह्मण उक्थस्तोत्रस्य साम दर्शयति—

गोतमस्य भद्रं भवति ॥ ६ ॥

गोतमस्य भद्राख्यं साम(१) 'इमा नु कं भुवना सीषधे म'त्यस्मिन् द्विपदे तृचे गातव्यम् ॥ ६ ॥

---

१. इमा नु कं भुवना सीषधेमेन्द्रश्च विश्वे च देवाः ॥ १ ॥
यज्ञं च नस्तन्वं च प्रजां चाऽऽदित्यैरिन्द्रः सह सीषधातु ॥ २ ॥
आदित्यैरिन्द्रः सगणो मरुद्भिरस्मभ्यं भेषजा करत् ॥ ३ ॥
सा. सं. उ. ४. १. २३.

भद्रशब्दवाच्यत्वादाशीःप्रापकमेतत्सामेति स्तौति—

**आशिषमेवाऽस्मा एतेनाऽऽशास्ते साम हि सत्याशीः ॥ ७ ॥**

अस्मै यजमानाय । सिद्धं शिष्टम् ॥ ७ ॥

अथैतन्महत्त्वप्रापकमिति स्तौति—

**एतेन वै गोतमो जेमानं महिमानमगच्छत् तस्माद्ये च पराञ्चो गोतमाद्ये चाऽर्वाञ्चस्त उभये गोतमा ऋषयो ब्रुवते ॥ ८ ॥**

एतेन खलु भद्रेण साम्ना पुरा गोतमः ऋषिः जेमानमतिशयेन जेतृत्वं महिमानं महत्त्वञ्चाऽगच्छत् । तस्मादेव कारणात् गोतमादेव ऋषेः ये पराञ्चः पूर्वकालीना ज्येष्ठाः, ये च अर्वाञ्चः अर्वाचीनाः पश्चाज्जाताः कनिष्ठाः उभये उभयविधास्ते गोतमा ऋषयः गोतमाख्या ऋषय इति ब्रुवते उच्यन्ते गोतमशब्देनैव व्यवह्रियन्त इत्यर्थः । तस्मादनेन साम्ना स्तुवन् जेमानं महिमानं गच्छतीति शेषः ॥ ८ ॥

अथाऽच्छावाकोक्थस्य साम दर्शयति—

**उद्वंशपुत्रा भवति ॥ ९ ॥**

उद्वंशपुत्राख्यं साम(१)'प्रव इन्द्राय वृत्रहन्तमायेति' तृचे गातव्यम्॥९॥

(२)'गायन्ति त्वा गायत्रिण' इत्यस्यां योन्यां गीयमानं सामोद्वंशीयम् । तद्धर्मप्राप्त्यर्थं तादूप्यं उद्वंशपुत्रस्याऽतिदिशति—

**यद्वा उद्वꣳशीयं तदुद्वꣳशपुत्रः ॥ १० ॥**

योनिदृष्टेनोद्वंशशब्देन सम्बन्धादुद्वंशीयम् । यदेवोद्वंशीयाख्यं साम तदेवोद्वंशपुत्रः तद्धर्मभाग्भवतीत्यर्थः ॥ १० ॥

कोऽसौ तद्धर्म्म इत्यत आह—

**अर्द्धेडामतिस्वरति ॥ ११ ॥**

उबित्यर्द्धेडा अतिस्वारश्च उद्वंशीये दृश्यते । तावत्राऽपि भवतः तथैव ह्यधीमहि । उशाषा २ तो ३ ५ हाइ इति । उबित्यर्द्धेडापि त-

---

१. सा. सं. पू. ५. २. १. १०.　　　२. सा. सं. पू. ४. २. १. १.

ळस्थाने 'इडास्थानादेश' इति परिभाषासूत्रेण इट् इति प्रयोगकाले प्रयो-क्तव्यम् । अर्द्धेडोपाध्ययनन्तु ब्रह्मयज्ञाद्यर्थम् । अयमर्थः—अर्द्धेडां कृत्वा तत ऊर्द्धं अतिस्वरति अतिस्वारमतिमन्द्रं करोति ॥ ११ ॥

तदेतत्स्तौति—

**तस्मादूधर्द्धारा अति क्षरन्तीडायामन्ततः पशुषु प्रतितिष्ठति ॥ १२ ॥**

यस्मादर्धेडामतीत्य स्वरति, तस्माद्गवां ऊधःप्रदेशमतीत्य पयसो धाराः क्षरन्ति स्रवन्ति । अन्ततः षडहावसाने इडायां प्रतितिष्ठन् पशुष्वेव प्रतितिष्ठति तदात्मकत्वादिडायाः ॥ १२ ॥

यदेतदातिस्वरणं तत् सप्तमस्याऽह्नः सन्तानहेतुरिति स्तौति—

**क्लृप्त उपरिष्टादृक् साम च विमुच्येते अभ्युस्वरेण सप्तममहः स्वराति सन्तत्यै ॥ १३ ॥**

क्लृप्ते कल्पिते ऋक्सामाभ्यां त्रिवृदादिस्तोमैश्च सम्पूर्णेऽनुष्ठिते षडहे सति उपरिष्टात्तत ऊर्द्धं ऋक् साम च विमुच्येते । यथा ग्रामप्राप्तेरूर्ध्वं शकटवाहिनौ बलीवर्द्दौ विमुच्येते तथा ऋक्सामयोः श्रमापनोदार्थं विमोकः कार्य्यः । तथा च षडहस्य समाप्तत्वात् सप्तमस्याऽह्नोऽनारम्भात् दशरात्रो विच्छिन्नः स्यात् स्वरेणाऽन्ततः क्रियमाणेनाऽतिस्वारेण द्राघीयसा सप्तममहरभि स्वरति अभिलक्ष्य स्वारं करोति सन्तत्यै उक्तविच्छेदपरिहारेण षष्ठसप्तमयोरह्नोः सन्तानार्थम् ॥ १३ ॥

षडहसमाप्तेरूर्द्धं लौकिकं वैदिकञ्च बहुभाषणं न किञ्चित्कार्य्यमिति विधत्ते—

**ऊढुषीव वा एतर्हि वाग्यदा षडहः सन्तिष्ठते न बहु वदेन्नाऽन्यं पृच्छेन्नाऽन्यस्मै प्रब्रूयात् ॥ १४ ॥**

एतर्हि एतस्मिन् काले वाग्देवता ऊढुषीव वै ऊढवतीव खलु । यथा अति दूरं भारवहनं कृत्वा पुरुषः श्रान्तो भवति, एवमेव षडहे बह्वीः ऋचो बहूनि सामानि च प्रयुञ्जानानां वागपि श्रान्ता भवति । यदाऽसौ षडहः षण्णामह्नां समाहारः षडहः सन्तिष्ठते यस्मिन् काले समाप्यते, तस्मान्न वदेत् वाग्देवतायाः श्रमापनोदसिध्यर्थं बहुभाषणं न कुर्य्यात् । अन्यञ्च पुरुषं न पृच्छेत् । अन्यस्मै पुरुषान्तराय च न ब्रूयात्

प्रवचनं न कुर्य्यात् ॥ १४ ॥

अथैतस्मिन् समये ऋत्विजां मधुभोजनं विधत्ते—

**मधु वाऽऽशयेद्घृतं वा यथोडुषो वहं प्रत्यनक्ति तथा तत् ॥ १५ ॥**

षडहसमाप्तेरनन्तरं ऋत्विजो मधु वा आशयेत् घृतं वा, अन्ययोरन्यतरेणाऽपि सिक्तमन्नमृत्विजो भोजयेदित्यर्थः । तथा च सूत्रम्—(१)'षष्ठेऽहनि संस्थिते न बहुवादिनः स्युर्न चाऽधीयीरन्नोत्तरस्याऽह्न उपाकरणात्, सर्पिर्मधुभ्यामृत्विजो भोजयेदहीनेष्वन्यतरेण वे'ति । यथा ऊडुषो ऊढवतो बलीवर्द्दादेः वहं वहनप्रदेशं स्कन्धभागं प्रत्यनक्ति तैलादिभिः स्नेहयति, तथा तत् मध्वशनं घृताशनं वा ऋत्विजां भवति । यथा वहस्य प्रत्यञ्जनेन बलीवर्द्दादिः पुनर्वहनसमर्थो भवति, एवं श्रान्तवाचो ऋत्विजो मधुघृतप्राशनेन स्फुरद्वाचः क्रियन्त इत्यर्थः ॥ १५ ॥

अथैतेषु त्रिवृक्थस्तोत्रेषु स्तोमं विधत्ते—

**त्रयस्त्रिंꣳश एव स्तोमो भवति प्रतिष्ठायै देवतासु वा एष प्रतिष्ठितः १६ ॥**

सिद्धमेतत् ॥ १६ ॥

(२)वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे त्रयोदशाध्यायस्य द्वादशः खण्डः ॥

त्रयोदशाध्यायः समाप्तिमगमत् ॥

---

१. लाट्या. श्रौ. ३. ६. ७.   २. इदं 'कं' पुस्तके नोपलभ्यते ।

# चतुर्दशोऽध्यायः ॥

## अथ प्रथमः खण्डः ॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

(१) एवं दाशरात्रिकस्य षष्ठस्याऽह्नस्स्तोमक्लृप्तिरुक्ता । अथ सप्तमस्याऽह्नस्स्तोमं छन्दोद्वारा प्रशंसति—

**आप्यन्ते वा एतत् स्तोमाश्छन्दाᳪसि यत् षडह आप्यते ॥ १ ॥**

(२)यद्यदा षडहः षण्णामह्नां समाहारः । (३)'राजाहस्सखिभ्यष्टच्' समासान्तः (४)'न संख्यादेस्समाहार' इत्यह्नादेशप्रतिषेधः । यस्मिन् पृष्ठ्यः षडहः समाप्यते एतत् एतस्मिन् काले त्रिवृत्पञ्चदशाद्याः स्तोमा गायत्र्यादीनि च छन्दांसि आप्यन्ते वै परिसमाप्यन्ते खलु । त्रिवृदादिस्तोमानां गायत्र्यादिछन्दसाञ्च क्रमेण षट्स्वहस्सु विनियुक्तत्वात् ॥१॥

(५)नन्वेवं केन च स्तोमेन केन च छन्दसा छन्दोमाः कल्पयितव्या इत्यत आह—

**आप्ते षडहे छन्दाᳪसि स्तोमान् कृत्वा प्रयन्ति ॥ २ ॥**

---

( १ ) इत्थं द्वितीयपञ्चिकायास्त्रिभिरध्यायैर्दशरात्रादिभूतस्य पृष्ठ्यषडहस्य स्तोमक्लृप्तिरुक्ता । अथ छन्दोमानां प्रथमद्वितीययोः स्तोमक्लृप्तिश्चतुर्थेऽध्याये विधीयते । तत्र प्रथमस्य छन्दोमस्य बहिष्पवमानस्तोत्रे स्तोमक्लृप्तिं विधातुमाहे'ति मुद्रितपुस्तके पाठ उपलभ्यते । परन्तु स कथमपि नाऽन्वेतीति मत्वा 'ख' पुस्तकपाठ एवाऽत्र निवेशितः।

२. यत् यस्मात् षडहः पृष्ठ्यषडहः रथन्तरादिरैवतान्तानां साम्नां धर्मा यस्मिन् षडहे स पृष्ठ्यष्षडहः । आप्यते समाप्यते । एतद्वा समापनमेव षडहसमापनमेव । स्तोमाः चतुर्विंशादयः । छन्दांसि गायत्र्यादीनि आप्यन्ते प्राप्यन्ते इति ख. पु.

३. पा. सू. ५. ४. ९१.        ४. पा. सू. ६. ४. ८९.

५. एतमेवाऽर्थं प्रकारान्तरेणाऽऽहेति ख. पु.

(१)षडहे आप्ते परिसमाप्ते सति स्तोमच्छन्दसोरपि परिसमाप्तत्वात् पुनरन्यानि छन्दांसि चतुर्विंशादीन् स्तोमांश्च कृत्वा निर्माय प्रयन्ति छन्दोमान् प्रारभन्ते ॥ २ ॥

(२)अथ तत्र प्रथमे छन्दोमे बहिष्पवमानस्य स्तोत्रीयाख्यं प्रथमं तृचं विधत्ते—

**(३) "प्र काव्यमुशनेव ब्रुवाण" इति गायत्र्या रूपेण प्रयन्ति ॥ ३ ॥**

(४)'प्र काव्यमुशन' इति तृचो बहिष्पवमानस्य स्तोत्रीयाख्यस्तृचः, 'एति प्रेत्याशुमदि'त्यनुक्रान्तत्वात् प्रशब्दो गायत्र्या रूपम्। सा हि छन्दसां प्रथमा प्रशब्दः प्राथम्यवाचीति युक्तं तस्य गायत्रीरूपत्वम्। तथा गायत्र्याः सम्बन्धिना रूपेण 'प्रकाव्यमि'ति प्रशब्देन प्रयन्ति सप्तममहः प्रारभन्ते ॥ ३ ॥

(५)ननु छन्दोन्तरस्य रूपं परित्यज्य गायत्रीरूपस्वीकारे किं कारणमित्यत आह—

**इयं वै गायत्र्यस्यामेव प्रतिष्ठाय प्रयन्ति ॥ ४ ॥**

---

१. षडहे समाप्ते सति गायत्र्यादीनि छन्दांसि चतुर्विंशादीन् स्तोमान् कृत्वा प्रयन्ति प्रारभन्ते स्तोमरूपेण परिणमन्तीत्यर्थः। षडहे तु त्रिवृदादित्रयस्त्रिंशान्तानां स्तोमानां छन्दस्सम्पत्तेरभावात् छन्दोभैरेव सङ्ख्यासाम्यादाप्यत इति ख. पु.

२. अथ बहिष्पवमानस्य प्रथमं स्तोत्रीयाख्यं तृचं दर्शयतीति ख. पु.

३. प्र काव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति।
महिव्रतः शुचिबन्धुः पावकः पदा वराहो अभ्येति रेभन् ॥ १ ॥
प्रहंसासस्तृपला वग्नुमच्छामादस्तं वृषगणा अयासुः।
अङ्गोषिणं पवमानं सखायो दुर्मर्षं वाणं प्रवदन्ति साकम् ॥ २ ॥
स योजत उरुगायस्य जूतिं वृथा क्रीडन्तं मिमते न गावः।
परीणसं कृणुते तिग्मशृङ्गो दिवा हरिर्ददृशे नक्तमृज्रः ॥ ३ ॥
सा. सं. उ. ४. २. १.

४. 'प्र काव्यमुशन' इति तृचस्त्रैष्टुभो यद्यपि, तथाऽपि गायत्र्या रूपेण प्रयन्ति प्रारभन्ते। 'प्रकाव्य' इति प्रशब्दस्य गायत्र्या रूपस्य सत्वात्। 'एति प्रेती'ति लिङ्गादिति ख. पु.

५. गायत्रीं पुनः पृथिवीत्वेन स्तौतीति ख. पु.

(१)इयं सर्वप्राणिनां पुरोवर्त्तिनां पृथिव्येव गायत्रीस्वरूपा उभयोः प्राथम्यसादृश्यात्तच्छन्दात्च। एवं गायत्रं रूपं प्रयुञ्जानाः अस्यामेव पृथिव्यां प्रतिष्ठाय प्रथमतः प्रतिष्ठिता भूत्वा प्रयान्ति अहः प्रारभन्ते ॥ ४ ॥

(२)नन्वेवं मुख्यैव गायत्री कस्मान्न प्रयुज्यत इत्यत आह—

**त्रिष्टुप् प्रतिपद्भवति ॥ ५ ॥**

(३)त्रिष्टुप् छन्दस्कैवाऽस्य सप्तमस्याऽह्नः प्रतिपद्भवति सर्वप्राणिनां पुरोवर्त्तिनां पृथिव्येव गायत्रीस्वरूपा प्रतिपद्यते प्रारभ्यत इत्यपि प्रतिपत्। सा च पूर्वोक्ता 'प्र काव्यमुशनेव ब्रुवाण'इत्येषा। यद्यपि प्रतिपदिति एकवचनेन एका स्तोत्रीया विधित्सितेति प्रतीयते तथापि(४) 'तृचसूक्तानामादिग्रहणे विधिरनादेश' इति परिभाषया तदादिकस्तृच एवाऽत्र ग्राह्यः। ननु "गायत्रं प्रातस्सवनं त्रैष्टुभं माध्यन्दिनं सवनं जागतं तृतीयसवन"मिति प्रकृतौ ज्योतिष्टोमे दृश्यते, तत्कथं प्रातस्सवने त्रिष्टुब्विधानम्? नैष दोषःद्वादशाहो हि द्विविधः—समूढो व्यूढश्चेति। तत्र समूढे यथा प्रकृतौ तथैव सवनानि भवन्ति। व्यूढे तु छन्दसां व्यूहनस्योक्तत्वात् तृतीयस्य त्रिरात्रस्य प्रातस्सवनानि सर्वाणि त्रैष्टुभानि जागतानि माध्यन्दिनसवनानि गायत्राणि तृतीयसवनानीति व्युच्छेदनत्वात त्रिष्टुभः प्रातस्सवने सङ्गतिरधिगन्तव्या ॥ ५ ॥

तदेतत्प्रशंसति—

**ओजो वीर्यं त्रिष्टुबोजस्येव वीर्ये पराक्रम्य प्रयन्ति ॥६॥**

ओजो बलं तदात्मकं वीर्यञ्च त्रिष्टुप् प्रजापतेरङ्गाद्बलवतो बाहुलक्षणाच्च वीर्य्यवतेन्द्रेण सहोत्पत्तेः। तथाऽप्योजोरूप एव वीर्ये स्थित्वा पराक्रम्य जेतव्यम्। जित्वा प्रयन्ति प्रगच्छन्ति ॥ ६ ॥

(५)अथ प्रकारान्तरेणेमं तृचं स्तौति—

**स्तोत्रीयस्तृचो भवति प्राणापानानामवरुद्ध्यै ॥ ७ ॥**

---

१. इयं पृथिव्येव गायत्री अतोऽस्यां पृथिव्यामेव प्रतिष्ठाय स्थानं प्राप्य प्रारभन्त इति ख. पु. २. पुनस्त्रिष्टुप्त्वेन प्रशंसतीति ख. पु.

३. प्रतिपद्यते प्रारभ्यतेऽनयेति प्रतिपत् प्रथमा ऋक्। सा च त्रिष्टुप्। ओजो वीर्यं बलाधिक्यं च त्रिष्टुप्। अतस्त्रिष्टुप्प्रतिपदा ओजस्येव वीर्ये बलाधिक एव पराक्रम्य प्रयन्ति प्रारभन्त इति ख. पु.

४. लाट्या. श्रौ. ६. ३. १. ५. स्तोत्रीयं तृचं प्रशंसतीति ख. पु.

(१)'प्र काव्यमुशनेव ब्रुवाण' इत्ययं त्रैष्टुभस्तृचः स्तोत्रीयाख्यः प्रथमस्तृचो भवति। बहिष्पवमाने प्रथमस्य तृचस्य स्तोत्रीय इति संज्ञा। गतमन्यत् ॥ ७ ॥

(२)ननु त्रिष्टुप्छन्दसो द्वितीयेऽहनि प्रयोगेन गतसारत्वात् कथं छन्दोमेषु विनियोग इति, तत्राह—

**हरिवत्यो भवन्ति छन्दोमानामयातयामतायै ॥८॥**

(३)हरिवत्यो हरिशब्दयुक्ताः स्तोत्रीया भवन्ति छन्दोमानां गायत्रीत्रिष्टुब्जगतीभिश्छन्दोभिर्मीयमानानां चतुर्विंशादीनां स्तोमानामयातयामतायै अगतसारत्वाय(४) 'परीणं संकृणते तिग्मशृङ्गो दिवा हरिर्ददृशे नक्तमृज्र'इत्यस्मिन् तृचे श्रवणात्(५)प्राणभृन्न्यायेनाऽऽसां हरिशब्दवत्त्वम् ॥ ८ ॥

(६) अथ स्तुत्यर्थं विहितेनाऽनेन तृचेन सहिताः अन्या एकविंशतिस्तोत्रीया विधत्ते—

**(७)द्वादशर्चौ भवतः ॥ ९ ॥**

---

१. स्तोत्रीयः प्रथमस्तृचो भवति। सः प्राणापानानामवरोधनाय भवतीति ख. पु.

२. तमेवपुनर्हरिवत्त्वेन प्रशंसतीति ख. पु.

३. हरिवत्यः हरिशब्दयुक्तत्वाद्धरिवत्यः। एताः छन्दोमानां चतुर्विंशादीनामयातयामतायै वीर्यवत्त्वाय भवतीति ख. पु.

४. सा. सं. उ. ४. २. १. ३.

५. अयं न्यायार्थः—तैत्तिरीयसंहितायां 'अयं पुरो भुवः' इत्यनुक्रम्य पञ्चाशन्मन्त्रा आम्नाताः। तेषु 'तस्य प्राणो भौवायनः' 'वसन्तः प्राणायनः' 'प्राणं गृह्णामि प्रजाभ्यः' इति प्राणशब्दघटिता मन्त्रास्त्रयः, अन्ये सप्तचत्वारिंशन्मन्त्रा अप्राणभृतः। एतैश्च पञ्चाशन्मन्त्रैरुपधेयानामिष्टकानां 'प्राणभृत उपदधाती' त्यनेनोपधानं विधीयते। 'प्राणभृत' इत्यस्य प्राणं प्राणशब्दं बिभ्रतीति व्युत्पत्त्या मन्त्राः तदुपधेयेष्टकाश्चाऽर्थ इति स्थितिः। अत्र यथा प्राणशब्दघटितानां मन्त्राणामल्पत्वेऽपि प्राणभृच्छब्दः प्राणभृदप्राणभृत्समुदाये गौणीवृत्त्या वर्तते तथा प्रकृतेऽपीति।

६. अथ बहिष्पवमानान्तर्गतद्वादशर्चद्वयं संवत्सरात्मकत्वेन स्तुवन् समतां विधत्त इति ख. पु.

७. ब्राह्मणद्वयमिदमेकत्र पठित्वा व्याख्यातमुपलभ्यते खपुस्तके।

(१)द्वादशानामृचां समाहारो द्वादशर्चः । (२)'ऋक्पूरब्धूः पथामानक्षे' इति अकारस्समासान्तः । (३)'प्रस्वानासो रथा इवे'ति नवर्चः । (४)'असृग्रमिन्दवः पथे'ति नवर्चः । (५)'आते दक्षमि'ति तृचः

---

१. 'प्र काव्यमुशनेव ब्रुवाण' इत्येको द्वादशर्चः, 'असृग्रमिन्दव' इत्यपरः । एतौ द्वादशर्चौ भवतः । संवत्सरश्च द्वादशमासात्मकः । एवं द्वादशर्चद्वयप्रयोगेन संवत्सरमेव पूर्वस्मै पृष्ठ्यषडहाय प्रत्युद्यच्छति प्रत्युद्गृह्णाति । किमर्थम्? सर्वविधतायै समभारवहनाय । शिक्यगतभारद्वयोपेतं स्कन्धेन वोढव्यं काष्ठं वीविधं समानं वीवधं यस्य तस्य भावस्तस्यै सर्वविधतायै इति. ख. पु.

२. पा. सू. ५. ४. ७४.

३. प्रस्वानासो रथा इवार्वन्तो न श्रवस्यवः । सोमासो राये अक्रमुः ॥ १ ॥
हिन्वानासो रथा इव दधन्विरे गभस्त्योः । भरासः कारिणामिव ॥ २ ॥
राजानो न प्रशस्तिभिः सोमासो गोभिरञ्जते । यज्ञो न सप्त धातृभिः ॥३॥
परि स्वानास इन्दवो मदाय बर्हणा गिरा । मधो अर्षन्ति धारया ॥ ४ ॥
आपानासो विवस्वतो जिन्वन्त उषसो भगम् । सूरा अण्वं वितन्वते ॥५॥
अप द्वारा मतीनां प्रत्ना शृण्वन्ति कारवः । वृष्णो हरस आयवः ॥ ६ ॥
समीचीनास आशत होतारः सप्तजानयः । पदमेकस्य पिप्रतः ॥ ७ ॥
नाभा नाभिं न आददे चक्षुषा सूर्यं दृशे । कवेरपत्यमा दुहे ॥ ८ ॥
अभिप्रियं दिवस्पदमध्वर्युभिर्गुहा हितम् । सूरः पश्यति चक्षुषा ॥ ९ ॥
सा. सं. ४. २. १.

४. असृग्रमिन्दवः पथा धर्मन्नृतस्य सुश्रियः । विदाना अस्य योजना ॥ १ ॥
प्रधारा मधो अग्रियो महीरपो विगाहते । हविर्हविष्षु वन्द्यः ॥२॥
प्रयुजा वाचो अग्रियो वृषो अचिक्रदद्वने । समाभिसत्यो अध्वरः ॥ ३ ॥
परि यत्काव्या कविर्नृम्णा पुनानो अर्षति । स्वर्वाजी सिषासति ॥ ४ ॥
पवमानो अभि स्पृधो विशो राजेव सीदति । यदीमृण्वन्ति वेधसः ॥ ५ ॥
अव्या वारे परि प्रियो हरिर्वनेषु सीदति । रेभो वनुष्यते मती ॥ ६ ॥
स वायुमिन्द्रमश्विना साकं मदेन गच्छति । रणा यो अस्य धर्मणा ॥ ७ ॥
आमित्रे वरुणे भगे मधोः पवन्त ऊर्मयः । विदाना अस्य शक्मभिः ॥ ८ ॥
अस्मभ्यं रोदसी रयिं मध्वो वाजस्य सातये । श्रवो वसूनि सञ्जितम् ॥ ९ ॥
सा. सं. उ. ४. २.२.

५. आते दक्षं मयोभुवं वह्निमद्या वृणीमहे । पान्तमा पुरुस्पृहम् ॥ १ ॥
आ मन्द्रमा वरेण्यमा विप्रमा मनीषिणम् । पान्तमा पुरुस्पृहम् ॥ २ ॥
आ रयिमा सुचेतुनमा सुक्रतो तनूष्वा । पान्तमा पुरस्पृहम् ॥ ३ ॥
सा. सं. उ ४. २. ३.

एवमेकविंशतिसंख्या ऋचः पूर्वं विहिताभिस्तिसृभिः सह द्वादशर्चौ बहिष्पवमानस्य भवतः ॥ ९ ॥

अथैतत् स्तौति—

**द्वादश मासाः संवत्सरः संवत्सरमेव तत्पूर्वस्मै षडहाय प्रत्युद्यच्छति सवीवधतायै ॥ १० ॥**

द्वादशमासात्मकः संवत्सरः। पृष्ठ्यषडहश्च संवत्सरः (१)'षड्वा ऋतवः षट्पृष्ठानी'ति श्रुतेः। तत्तथा सति द्वादशमासात्मकं संवत्सरमेव पूर्वस्मै षडहाय प्रत्युद्यच्छति प्रतिनिधित्वेनोद्गमयति। किमर्थम्? सवीवधतायै वीवधो भारः समानो वीवधः तस्य भावः सवीवधता तदर्थम् ॥ १० ॥

(२)एवं द्वादशर्चद्वयगतद्वादशसंख्योपजीवनेन स्तौति—

**चतुर्विंशतिर्भवन्ति चतुर्विंशतिरर्धमासाः संवत्सरः संवत्सरमेव तत्पूर्वस्मै षडहाय प्रत्युद्यच्छति सवीवधतायै ॥ ११ ॥**

(३) एवं द्वादशर्चयोः सतोश्चतुर्विंशतिः चतुर्विंशतिसंख्याकाः स्तोत्रीया ऋचो भवन्ति। चतुर्विंशकार्द्धमासात्मकः संवत्सरः तत्तथा सति स्तोत्रीयाचतुर्विंशकेन चतुर्विंशत्यर्द्धमासात्मकं संत्वसरमेव पूर्वस्मै प्रागनुष्ठिताय षड़हाय प्रतिरूपत्वेनोद्यच्छत्युद्गमयति। आतोलनवेलायामुभयोर्गौरवसाम्यार्थः ॥ ११ ॥

(४)अथाऽस्मिन्नहनि चतुर्विंशं स्तोमं विधातुमुक्तिप्रत्युक्तिभ्यां कञ्चिद्दृष्टान्तमाह—

**(५)दृत ऐन्द्रोत इति होवाचाऽभिप्रतारी काक्षसेनि-**

---

१. तै. सं. ७. ४. ७. २.

२. सर्वास्स्तोत्रीया मिलित्वाऽर्धमासत्वेन संख्यासाम्यात्प्रशंसतीति ख. पु.

३. स्तोत्रीयाणां चतुर्विंशतिर्भवति। चतुर्विंशतिरर्धमासाश्च संवत्सरः। अन्यद्गतार्थम् इति. ख. पु.

४. अथोक्तिप्रत्युक्त्या सदृष्टान्तं त्रिवृत्पञ्चदशौ पक्षत्वेन कृत्वा प्रशंसति पुनश्चतुर्विंशतिमेवेति. ख. पु.

५. ब्राह्मणद्वयमिदमेकत्र पठित्वा व्याख्यातं खपुस्तके

र्यं महावृक्षस्याऽग्रं गच्छन्ति क्व ते ततो भवन्ति प्र राजन् पक्षिणः पतन्त्यथाऽपक्षाः पद्यन्ते ॥ १२ ॥

(१)ऐन्द्रोतः इन्द्रेण ऊतो रक्षितः इन्द्रोतः तद्गोत्रजः ऐन्द्रोतः । स च दृताख्यः । पदद्वयमप्येतत् सम्बुध्यन्तम् । संज्ञापूर्वको विधिरनित्य इति (२)'एङ् ह्रस्वात सम्बुद्धे'रिति सम्बुद्धिलोपविधेरनित्यत्वात् सुलोपाभावः । हे ऐन्द्रोत दृताख्य ऋषे इति सम्बोध्य काक्षसेनिः कक्षसेनस्य पुत्रः अभिप्रतारी नाम राजर्षिः इत्युवाच एवं खलु प्रोक्तवान् । कथमिति ? तदुच्यते—ये प्राणिनः महावृक्षस्य महतः शाखास्कन्धादिभिरुन्नतस्य वृक्षस्य अग्रमूर्ध्वं गच्छन्ति प्राप्नुवन्ति ते ततोऽग्रादूर्ध्वं क्व कुत्र स्थाने भवन्तीति ? एवमुक्तो दृतं प्रत्यवोचत्-हे राजन् पृथिवीपते त्वदुक्तात् महावृक्षाग्रात् पक्षिणः पक्षं मुक्त्वा पतत्प्रपतन्ति पक्षाभ्यामुत्पतन्ति अपक्षाः पक्षरहिताश्चेदवपद्यन्त इति शब्दोऽत्रासञ्जनीयः अधः पतन्तीति । अयमर्थः-षष्ठेऽहनि प्रयुक्तस्त्रयस्त्रिंशः स्तोमः महावृक्षाग्रस्थानीयः त्रिवृदादिस्तोमानां संख्याधिक्यविश्रान्तभूमित्वात् तं प्रयुक्तवन्तो यजमानाः पक्षिणः ॥ १२ ॥

के पक्षरहिताः ? कौ च तेषां पक्षौ ? इति तत्सर्वमाह—

ये वै विद्वाꣳसस्ते पक्षिणो येऽविद्वाꣳसस्तेऽपक्षास्त्रिवृत्पञ्चदशावेव स्तोमौ पक्षौ कृत्वा स्वर्गं लोकं प्रयन्ति ॥

ये खलु विद्वांसो वेदार्थाभिज्ञाः ते पक्षिणः पक्षवन्तः । ये अविद्वांसोऽनभिज्ञाः ते अपक्षाः पक्षरहिताः। तस्माद्विद्वांसस्त्रिवृत्पञ्चदशौ स्तोमावेव पक्षौ कृत्वा स्वर्गं लोकं प्रयन्ति इति त्रिवृत्पञ्चदशाभ्यां संहताभ्यां स्तोमाभ्यां एतत्सप्तममहः परिसमाप्य तत्साध्यं फलं प्राप्नुवन्तीत्यर्थः ॥ १३ ॥

---

१. दृतनामकः इन्द्रोतस्य पुत्रः ऐन्द्रोतः कश्चन ऋषिः । कक्षसेनस्य पुत्रः काक्षसेनिः राजर्षिः । स इति ह वक्ष्यमाणप्रकारेण किल उवाच । हे ऐन्द्रोत, दृतनामन्नैन्द्रोत इति सम्बुध्याऽऽह—ये वृक्षस्याऽग्रं गच्छन्ति, ते ततोऽनन्तरं क्व भवन्तीति पृष्टः प्रत्याह दृतनामा—हे राजन् पक्षिणः पक्षवन्तः प्रपतन्ति स्थानं प्रगच्छन्ति । अपक्षाः पक्षरहिताः अवपद्यन्ते अवपतन्ति । य एव विद्वांसः ज्ञानवन्तः त एव पक्षिणः, ये अविद्वांसः अज्ञानिन अपक्षाः न स्थानं गन्तारः । ते विद्वांसस्त्रिवृत्पञ्चदशौ स्तोमावेव पक्षौ कृत्वा ताभ्यां स्वर्गं लोकं प्रयन्ति प्रगच्छन्ति इति. ख. पु.

२. पा. सू. ६. १. ६९.

(१)एवं पारोक्ष्येण चतुर्विंशं स्तोमं विधायाऽथ प्रत्यक्षं विधत्ते—

**चतुर्विंꣳश एव स्तोमो भवति तेजसे ब्रह्मवर्चसाय ॥**

(२)त्रिवृत्पञ्चदशौ स्तोमौ विदुषां पक्षभूतौ मिलित्वा चतुर्विंशतिः स्तोत्रीया भवन्ति। तस्मात्सप्तमेऽहनि चतुर्विंशः स्तोमो भवति। स चतुर्विंशत्यर्द्धमासात्मकसंवत्सरसंस्तुतत्वात्प्रतिष्ठादिहेतुर्भवति। संवत्सरो हि प्रतिष्ठाहेतुः ॥ १४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे चतुर्द्दशाध्यायस्य प्रथमः खण्डः ॥

---

## अथ द्वितीयः खण्डः ॥

(३)अथाऽस्मिन् सप्तमेऽहनि प्रथममाज्यस्तोत्रं दर्शयति—

**(४)"मूर्द्धानं दिवो अरतिं पृथिव्या" इत्याग्नेयमाज्यं भवति ॥ १ ॥**

(५)अस्मिंस्तृचे गीयमानमग्निदेवत्यं प्रथममाज्यस्तोत्रं भवतीत्यर्थः।

(६)अथाऽस्य तृचस्याऽस्मिन्नहनि सङ्गतिमाह—

**मूर्द्धा वा एष दिवो यस्तृतीयस्त्रिरात्रः ॥ २ ॥**

---

१. चतुर्विंशं प्रशंसतीति. ख. पु.　　　२. गतार्थ इति. ख. पु.

३. अथाऽऽज्यस्तोत्रीयं तृचं दर्शयतीति. ख. पु.

४. मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निम् ।
कविं सम्राजमतिथिं जनानामासन्नः पात्रं जनयन्त देवाः ॥ १ ॥
त्वां विश्वे अमृत जायमानं शिशुं न देवा अभि सन्नवन्ते ।
तव क्रतुभिरमृतत्वमायन्वैश्वानर यत्पित्रोरदीदेः ॥ २ ॥
नाभिं यज्ञानां सदनं रयीणां महामाहावमभि सं नवन्त ।
वैश्वानरं रथ्यमध्वराणां यज्ञस्य केतुं जनयन्त देवाः ॥ ३ ॥

सा. सं. उ. ४. २. ३.

५. 'मूर्धानं दिव' इति तृचमाग्नेयमग्निदेवत्यमाज्यम्। तत्प्रथममाज्यस्तोत्रं भवतीति. ख. पु.

६. तस्य द्युलोकसङ्गतिमाहेति. ख. पु.

(१)द्वौ त्रिरात्रौ गतौ। तदपेक्षया यत् योऽयं तृतीयस्त्रिरात्रः एष हि द्युस्थानीयस्य दिवो दशरात्रस्य मूर्द्धा शिरः। तस्मात् 'मूर्द्धानं दिव' इति तृचस्तृतीये त्रिरात्रे सङ्गत इत्यर्थः॥ ३॥

(२)अथ पादान्तरमनूद्य स्तौति—

"वैश्वानर ऋत आजातमग्नि"मिति वैश्वानर इति वा अग्नेः प्रियं धाम प्रियेणैवैनं तद्धाम्ना परोक्षमुपशिक्षति॥ ३॥

(३)'वैश्वानर ऋत आजातमग्नि'मिति पादोऽस्मिंस्तृचे दृश्यते। वैश्वानर इति विश्वनराहितं सर्वजनानामनुग्राहकं परं धाम शरीरं तेजोमयमुच्यते। तत्तेन वैश्वानरपदप्रतिपाद्येन प्रियेणैव धाम्ना तेजसा एतमग्निं परोक्षं परोक्षेण उपशिक्षति प्रीणयति। शिक्षतिर्जननकर्मा। तेन च तज्जन्यं प्रीणनं लक्ष्यते॥ ३॥

(४)अथ द्वितीयमाज्यस्तोत्रं विधत्ते—

(५)"प्र वो मित्राय गायते"ति द्यावापृथिवीयं मैत्रावरुणं द्यावापृथिवी वै मित्रावरुणयोः प्रियं धाम प्रियेणैवैनौ तद्धाम्ना परोक्षमुपशिक्षति॥ ४॥

(६)'प्र वो मित्राये'ति द्यावापृथिवीयं द्यावापृथिवीसम्बद्धं मैत्रावरुणं

---

१. एषः त्रिरात्रः छन्दोमात्रिरात्रः। यद्यस्माद्दिवः स्वर्गस्य मूर्धा वै शिरः खलु। तृतीयश्च द्वादशाहगतानामह्नां त्रित्वसंख्यया विभागे छन्दोमत्रिरात्राणां तृतीयत्वम्, भूराद्यपेक्षया स्वर्गस्याऽपि। अत उभयोस्साम्यमिति ख. पु.

२. तत्राऽऽज्यस्तोत्रस्य द्वितीयं पादमग्न्याधिकरणत्वेन प्रशंसतीति ख. पु.

३. वैश्वानर इत्येव अग्नेः अग्नेनेतुः प्रियं धाम इष्टं गृहम्। अस्य प्रयोगेण प्रियेणैव धाम्ना ऋतुमार्गेण परोक्षं प्रत्यक्षमभिमुपशिक्षति समीपं प्रापयतीति. ख. पु.

४. द्वितीयमाज्यं मित्रावरुणयोरधिकरणत्वेन प्रशंसतीति, ख. पु.

५. प्र वो मित्राय गायत वरुणाय विपा गिरा। महि क्षत्रावृतं बृहत॥ १॥
सम्राजा या घृतयोनी मित्रश्चोभा वरुणश्च। देवा देवेषु प्रशस्ता॥ २॥
ता नश्शक्तं पार्थिवस्य महो रायो दिव्यस्य। महि वां क्षत्रं देवेषु॥ ३॥
सा. सं. उ. ४. २. ४.

६. 'प्र वो मित्राय गायत' इति पादप्रयोग एव द्यावापृथिवी। यद्यस्मान्मैत्रावरुणं मि-

मित्रावरुणदेवताकं त्रिवियमाज्यस्तोत्रं भवति । 'ता नः शक्तं पार्थिवस्य महो रायो दिव्यस्ये'ति द्यावापृथिवीसम्बन्धादस्य तृचस्य द्यावापृथिवीयत्वम् ॥ ४ ॥

(१)अथ तृतीयमाज्यमिन्द्रदेवताकं स्तौति—

**(२)"इन्द्राऽऽयाहि चित्रभानवि"त्यार्भवमैन्द्रमृभवो वा इन्द्रस्य प्रियं धाम प्रियेणैवैनं तद्धाम्ना परोक्षमुपशिक्षति ॥ ५ ॥**

(३)ऋभु क्षित् राज इति त्रयः सुधन्वनः पुत्राः ऋभुशब्दवाच्याः । त एवेन्द्रस्य प्रियं धाम स्थानं शरीरं तेजो वा । ते हीन्द्रस्य हरः निर्माय प्राहुः(४) 'इन्द्रो हरी युयुजे अश्विना रथ"मिति हि मन्त्रवर्णः । यद्वा इन्द्रः सूर्यः ऋभवो रश्मयः तेषां सूर्यप्रियधामत्वं स्पष्टम् । शिष्टं पूर्ववद्योज्यम् ॥ ५ ॥

(५)अथ चतुर्थमाज्यस्तोत्रं विधत्ते—

**(६)"तमीडिष्व यो अर्चिषे"त्यनिरुक्तमैन्द्राग्नं देव-**

---

त्रावरुणदेवताकपादं द्यावापृथिव्येव मित्रावरुणयोः प्रियं धाम । प्रियेणैव धाम्ना एनौ मित्रावरुणौ परोक्षमपि समीपं प्रापयतीति. ख. पु.

१. अथाऽऽज्यस्य तृतीयं तृचं दर्शयतीति ख. पु.

२. इन्द्राऽऽयाहि चित्रभानो सुता इमे त्वायवः । अण्वीभिस्तना पूतासः ॥ १ ॥
इन्द्राऽऽयाहि धियेषितो विप्रजूतः सुतावतः । उप ब्रह्माणि वाघतः ॥२॥
इन्द्राऽऽयाहि तूतुजान उप ब्रह्माणि हरिवः । सुते दधिष्व नश्चनः ॥ ३ ॥
सा. सं. उ. ४. २. ९.

३. 'इन्द्रायाहीं'ति स्तोत्रं आर्भवं ऋभुप्रयुक्तम् । ऐन्द्रं इन्द्रदेवताकम् । ऋभव एवेन्द्रस्य प्रियं धाम इष्टं गृहम् । शिष्टं गतमिति. ख. पु.

४. ऋ. सं. १. २. ५.

५. आज्यस्य चतुर्थं तृचं प्रदर्शयतीति. ख. पु.

६. तमीडिष्व यो अर्चिषा वना विश्वा परिष्वजत् । कृष्णा कृणोति जिह्वया ॥ १ ॥
य इद्ध आविवासति सुम्नमिन्द्रस्य मर्त्यः । द्युम्नाय सुतरा अपः ॥ २ ॥
ता नो वाजवतीरिष आशून्पिपृतमर्वतः । ऐन्द्रमग्निं च वोढवे ॥ ३ ॥
सा. सं. उ. ४. १. ६.

**तानामनभिधर्षायोत्तमार्द्धेऽनिराह देवतानामप्रणाशाय स्तोमः ॥ ६ ॥**

(१)'तमीडिष्वे'ति तृचः अनिरुक्तं निरुक्तं निष्कृत्य शुक्लग्राहिकयोक्तं देवतापदं यस्मिन्नाऽस्ति तादृशम् । ऐन्द्राग्नमिन्द्राग्निदेवताकं चतुर्थमाज्यस्तोत्रं भवति । किमर्थमस्याऽनिरुक्तत्वमिति ? देवतानामनभिधर्षार्थं तत्तन्नाम्नाऽव्यवह्रियमाणा देवता अभिधृष्टा अभिपीडिताः स्युः । यथा विद्यादिभिः श्रेष्ठाः पुरुषाः औपचारिकं नाम परित्यज्य स्वस्वेन नाम्ना व्यवह्रियमाणाः कुप्यन्ति तद्वद्देवताश्रेष्ठाः । तस्मात् अभिधर्षो माभूदित्येवमर्थं अस्य स्तोत्रस्याऽनिरुक्तत्वम् । यद्येवं देवताया अप्रतिपादितत्वात् 'अनिरुक्तः प्रजापति'रिति श्रुतेः प्राजापत्यमेवैतत् स्तोत्रं स्यात् नैन्द्राग्नमित्यत आह-उत्तमार्द्धे निराहेति । 'ऐन्द्रमग्निञ्च वोढव' इति उत्तमे अनेनाऽर्द्धर्चेन निराह देवतां निष्कृत्य ब्रवीति देवतानामप्रणाशाय प्रणाशाभावाय देवताविशेषसद्भावद्योतनार्थः । एतेष्वपि चतुर्ष्वाज्यस्तोत्रेषु पूर्वोक्तश्चतुर्विंश एव स्तोमः कार्यः । एतेषु प्रातस्सवननिष्ठेषु पञ्चसु स्तोत्रेषु स्तोत्रीयामात्रस्याऽन्यत्र विधानात् साम प्राकृतमेवेति द्रष्टव्यम् ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे चतुर्दशाध्यायस्य द्वितीयः खण्डः ॥



---

१. 'तमिडिष्वे'ति तृचमनिरुक्तं गानं न ऋच्यध्यूढम् । ऐन्द्राग्नं इन्द्राग्निदेवतकम् । देवतानामिन्द्रादीनां अनभिधर्षाय अनभिभवाय । उत्तमार्धे अनिराह अनिरुक्तमाह । किमर्थम् ? देवतानामप्रणाशाय राक्षसैर्नाशराहित्याय । स्तोमश्च पूर्ववच्चतुर्विंश एव कार्य इत्यर्थ इति. ख. पु.

## अथ तृतीयः खण्डः ॥

(१)अथाऽस्मिन् सप्तमेऽहनि माध्यन्दिनपवमानस्य प्रथम तृचं दर्शयति—

**(२)"वृषा पवस्व धारये"ति गायत्री भवत्यह्नो धृत्यै ॥१॥**

(३)'वृषा पवस्वे'ति गायत्री माध्यन्दिनपवमानस्य प्रतिपद्भवति प्रथमस्तृचा गायत्री भवतीत्यर्थः। सोऽयं सप्तमस्याऽह्नो धृत्यै धारणाय भवति धारयतिर्धारणवाची धृञ् धातुशब्दनिष्पन्नत्वात् ॥ १ ॥

(४)अथाऽस्मिन्नहनि तृचस्य सङ्गतिमाह—

**वृषण्वत्यस्त्रिष्टुभो रूपेण त्रैष्टुभं ह्येतदहः ॥२॥**

(५)वृषण्वत्यो वृषशब्दयुक्ता 'वृषा पवस्वे'त्याद्यास्तिस्रो गायत्र्यो रूपेण वृषशब्दरूपेण त्रैष्टुभेण रूपेण योगात्त्रिष्टुभो भवन्ति। एतत् सप्तममहरिति त्रैष्टुभं हि त्रिषु प्रायणत्वात्। तस्मादस्मिन्नहनि वृषण्वत्या गायत्रलक्षणया त्रिष्टुप्त्वात् सङ्गता इत्यर्थः ॥ २ ॥

(६)अथाऽन्यं तृचं दर्शयति—

**(७)"पुनानः सोम धारये"ति धृत्यै ॥ ३ ॥**

---

१. अथ माध्यन्दिनपवमानस्याऽऽद्यं तृचं स्तौतीति. ख. पु

२. वृषा पवस्व धारया मरुत्वते च मत्सरः। विश्वा दधान ओजसा ॥ १ ॥
तं त्वा धर्तारमोण्योः पवमान स्वर्दृशम्। हिन्वे वाजेषु वाजिनम् ॥ २ ॥
अया चित्तो विपानया हरिः पवस्व धारया। युजं वाजेषु चोदय ॥ ३ ॥
सा. सं. उ. २. १. १०.

३. 'वृषा पवस्वे'ति गायत्री माध्यन्दिनपवमानस्य तृचो भवतीत्यर्थः। स च सप्तमस्याऽह्नो धृत्यै स्थैर्याय भवतीति. ख. पु.

४. अयं त्रिरात्रस्त्रिष्टुभाचरण इति तद्रूपेण प्रशंसतीति ख. पु.

५. अस्य वृषशब्दयोगात् वृषण्वत्त्वम्। तच्च त्रिष्टुभो रूपम्। सप्तममहश्च त्रैष्टुभम्। हि प्रसिद्धौ इति. ख. पु.

६. अथाऽपरं तृचं विदधातीति. ख. पु.

७. पुनानस्सोम धारयाऽऽपो वसानो अर्षसि।
आरत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः ॥ १ ॥

(१)पूर्ववदस्याऽपि तृचस्य धृतिहेतुता योज्या ॥ ३ ॥

(२)तृचान्तरं विधत्ते—

**(३)"प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतमि"ति प्रवत्यो भवन्ति प्रणिनीषेण्यमिव ह्येतदहः ॥ ४ ॥**

(४)'प्रो अयासी'दित्याद्याः प्रवत्यः प्रशब्दयुक्तास्तिस्रः स्तोत्रीया भवन्ति। यस्सप्तममहः प्रणिनीषेण्यं प्रणेतव्यत्वेनेष्टमिव हि। षडहस्य समाप्तत्वात् सप्तममहः पुनः प्रारिप्सितमित्यर्थः। तस्मात्प्रणयनार्थसूचकेन प्रशब्देन योगात् सप्तमे प्रणेतुमिष्टेऽह्नि विनियोज्या इत्यर्थः ॥ ४ ॥

(५)ननु माध्यन्दिनपवमानस्याऽन्त्यस्तृचस्त्रिष्टुभः प्रकृतौ। तत्स्थाने कथमयं जागतस्तृचः सङ्गच्छत इत्यत आह—

**जगत्यः सत्यस्त्रिष्टुभो रूपेण तस्मात्त्रिष्टुभां लोके क्रियन्ते ॥ ५ ॥**

(६)'प्रो अयासीदि'त्याद्या एताः समा जगत्यः सत्योऽपि त्रैष्टुभेन रूपेण योगात् त्रैष्टुभः। तच्च रूपमिन्द्रशब्दः, त्रिष्टुभा सहेन्द्रोत्पत्तेः। गतमन्यत् ॥ ५ ॥

---

दुहान ऊधर्दिव्यं मधु प्रियं प्रत्नं सधस्थमासदत्।
आपृच्छ्यं धरुणं वाज्यर्षसि नृभिर्धौतो विचक्षणः ॥ ३ ॥

सा. सं. उ. १. १. ९

१. स्पष्टमिति. ख. पु.

२. अथाऽन्यं तृचं विधत्त इति. ख. पु.

३. प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतं सखा सख्युर्न प्रमिनाति सङ्गिरम्।
मर्य इव युवतिभिः समर्षति सोमः कलशे शतयामना पथा ॥ १ ॥
प्रवो धियो मन्द्रयुवो विपन्युवः पनस्युवः संवरणेष्वक्रमुः।
हरिं क्रीडन्तमभ्यनूषत स्तुभोऽभि धेनवः पयसेदशिश्रयुः ॥ २ ॥
आ नस्सोम संयतं पिप्युषीमिषमिन्दो पवस्व पवमान ऊर्मिणा।
या नो दोहते त्रिरहन्नसश्चुषी क्षुमद्वाजवन्मधुमत्सुवीर्यम् ॥ ३ ॥

सा. सं. उ. ४. २. ७.

४. 'प्रो अयासीदि'त्याद्याः प्रवत्यः प्रशब्दवत्यः प्रायणीयमहश्च प्रवत्। प्रणिनीषेण्यं विहितप्रणेतव्यत्वेनेष्टं खलु इति. ख. पु.

५. जगतीं त्रिष्टुब्रूपेण प्रशंसतीति. ख. पु.

६. 'प्रो अयासीदि'ति तृचो यद्यपि जगत्यः, तास्सत्योऽपि त्रिष्टुभोरूपेण वर्तमानका

(१)अथ 'वृषा पवस्वे'ति विहिते प्रथमे तृचे गायत्रं साम विधाय पूर्ववत्तद्ब्राह्मणञ्चाऽतिदिशति—

**गायत्रं भवति यदेव गायत्रस्य ब्राह्मणम् ॥ ६ ॥**

(२)सिद्धमेतत् ॥ ६ ॥

अथाऽस्मिन्नेव तृच आवृत्ते सामान्तरं विधत्ते—

**सन्तनि भवति सप्तमस्याऽह्नः सन्तत्यै ॥ ७ ॥**

(३)वेदसामाख्ये ग्रन्थे सर्वाण्यपि सामानि एकैकस्यां गीयन्ते । इदन्तु साम तृचे व्यासज्य गीयते । अथ तिसृषु स्तोत्रीयास्वस्य सन्तानदर्शनात् सन्तनीति संज्ञा । एतत् 'वृषा पवस्वे'त्यस्मिन्नेव तृचे गातव्यम् । ततोऽस्य सप्तमस्याऽह्नः षष्ठेनाऽह्ना सह सन्तत्यै सन्तानाय संश्लेषाय भवति ॥ ७ ॥

(४)अथ विच्छित्तिपूर्वकत्वात् सान्तत्यस्य षष्ठसप्तमयोरह्नोस्तदुभयं सदृष्टान्तं दर्शयति—

**यथा वै व्योकसौ विप्रद्रवत एवमेते षष्ठश्चाऽह्नः सप्तमश्च विप्रद्रवतस्तौ यथा समानीय संयुज्यादेवमेवैते एतेन साम्ना संयुनक्ति ॥ ८ ॥**

(५)यथा खलु व्योकसौ विभिन्ननिलयौ पक्षिणौ विप्रद्रवतः विश्लिष्टं पततः एवमेते षष्ठमहः सप्तममहश्च विप्रद्रवतो विमुक्तौ भवतः । षष्ठेन षडहस्य समाप्तत्वात् तौ व्योकसौ पक्षिणौ समानीय एकत्र आनीय । संयुज्यात् संयुक्तौ कुर्य्यात् । एवमेवैते षष्ठसप्तमे अहनी एतेन सन्तनिसाम्ना संयुनक्ति सन्तनोति ॥ ८ ॥

---

लवाचिना 'प्रमिनाती'ति लेट्प्रयोगेण उपस्थिता भवन्ति । तस्मात्त्रिष्टुभो लोके स्थाने क्रियन्ते त्रिष्टुब्रूपेण परिणमन्तीत्यर्थ इति. ख. पु.

१. गायत्रं प्रशंसतीति. ख. पु.

२. गतार्थ इति. ख. पु.

३. 'वृषा पवस्वे'ति तृचे सन्तनि साम सप्तमस्याऽह्नस्सन्तत्य सन्तनाय भवतीत्यर्थ इति. ख. पु.

४. प्रकारान्तरेण प्रशंसतीति. ख. पु.

५. लोके यथा व्योकसौ विगतस्थानौ पुरुषौ स्थित्यभावादितस्ततो विप्रद्रवतः गच्छतः

(१)अथाऽस्मिन्नेव तृचे सामान्तरं विधत्ते—

**सौपर्णं भवति स्वर्गस्य लोकस्य समष्ट्यै ॥ ९ ॥**

(२)सौपर्णाख्यं साम 'वृषा पवस्वे'त्यस्मिन्नेव तृचे कार्यम् । सुपर्णो हि पक्षी उत्पतनेन स्वर्गं प्रापयितुं शक्तस्तत्सम्बद्धं सौपर्णं साम स्वर्ग-लोकस्य प्राप्त्यै समर्थम् ॥ ९ ॥

(३)अथ प्रकारान्तरेण प्रशंसति—

**यज्ञो वै देवेभ्योऽपाक्रामत्स सुपर्णरूपं कृत्वाऽचरत्तं देवा एतैः सामभिरारभन्त यज्ञ इव वा एष यच्छन्दो-मा यज्ञस्यैवैष आरम्भः ॥ १० ॥**

(४)यज्ञः खलु पुरा देवेभ्यः सकाशात् केनचिदपराधेनाऽपाक्रामद-पागच्छत् । अपक्रम्य च सः यज्ञः सुपर्णरूपं सुष्ठुतनुः श्येनस्तद्रूपात्मानं कृत्वा अचरत् अन्तरिक्षे अपावर्त्तत । तं सुपर्णरूपयज्ञं देवाः एतैः सौपर्ण सामभिरारभन्त अगृह्णन् । तस्मादेतत् साम यज्ञारम्भसाधनं यत् एते त्रयश्छन्दोमाः एष यज्ञः इव वै यज्ञविलक्षण एव । अतो यज्ञस्यैव एष आ-रम्भो ग्रहणं भवति यत् सौपर्णं भवतीति । एवं वा यज्ञभूतेषु छन्दोमेषु यज्ञग्रहणसाधनस्य सौपर्णस्य करणात् तेषां यज्ञत्वं सिध्यतीत्यर्थः ॥१०॥

(५)अथाऽस्मिन्नेव तृच आवृत्ते सामान्तरं विधत्ते—

**रोहितकूलीयं भवत्याजिजित्यायै ॥ ११ ॥**

---

एवमेवैते षष्ठं सप्तमश्चाऽहनी विगतस्थानौ सन्तौ विप्रद्रवतः । अतो यथा लोके विप्रद्रुतौ पुरुषौ समानीय अन्यस्स्वगृहेण संयुज्यात्, एवमेवैते षष्ठसप्तमेऽहनी एतेन सन्तनिना सा-म्ना संयुनक्ति संयोजयतीति. ख. पु.

१. स्तोता सौपर्णं प्रशंसतीति. ख. पु.

२. 'वृषा पवस्वे'त्यस्यामृचि सौपर्णप्रयोगः स्वर्गस्य लोकस्य समष्ट्यै भवतीति ख. पु.

३. सौपर्णमेव पुनः प्रकारान्तरेण प्रशंसतीति. ख. पु.

४. यज्ञ एव देवेभ्यः इन्द्रादिभ्यः अपाक्रामत् । अपगत्य च सुपर्णरूपं पक्षिरूपं कृत्वा अचरत् चचार । तं यज्ञं देवाः एतैस्सौपर्णादिभिस्सामभिरारभन्त आरब्धवन्तः आलभ-न्त इत्यर्थः । एषः छन्दोमाश्चतुर्विंशादयः । तदभावे अयज्ञ इव वै अयज्ञ एव खलु । य-यस्मात् छन्दोमा यज्ञस्य आरम्भः, अत उक्तदोषः परिहृत इति. ख. पु.

५. रोहितकुलीयं साम प्रशंसतीति. ख. पु.

(१)रोहितकूलीयाख्यं सामाऽपि 'वृषा पवस्व'त्यस्मिन्नेव तृचे गातव्यम्। तच्च आजिजित्यायै आजिः सङ्केतितप्राप्तव्यावधिः तस्य जयाय भवति ॥ ११ ॥

(२)कुत एतदित्यत आह—

एतेन वै विश्वामित्रो रोहिताभ्याꣳरोहितकूल आजिमजयत् ॥ १२ ॥

(३)एतेन खलु साम्ना साधनेन पुरा विश्वामित्र ऋषिः रोहिताभ्यामश्वाभ्यां रोहितकूले एतत्संज्ञे स्थाने आजिमजयत् जितवान्। तस्मादेतदाजिजयसाधनमित्यर्थः ॥ १२ ॥

एतदेव विव्रियते—

विश्वामित्रो भरतानां मनश्चत्याऽयात्सोऽदन्तिभिर्नाम जनतयाꣳशं प्रास्यते मां मां यूयं अस्तिकाङ्ग्याथेमानि मह्यं यूयं पूरयाथ यदीमाविदꣳरोहितावश्माचितं कूलमुद्वहात इति स एते सामनी अपश्यत्ताभ्यां

१. 'वृषा पवस्व'त्यस्यामेवार्चि रोहितकुलीयं साम भवति। तदाजिजित्यायै गन्तव्यभूमेर्मर्यादा आजिः। तज्जित्यै जयाय भवति। यद्वा आजिर्युद्धभूमिः। तस्याः जयाय वा भवतीति. ख. पु.

२. रोहितकुलीयं साम प्रकारान्तरेणाऽनूद्य प्रशंसतीति. ख. पु.

३, विश्वामित्रनामकः राजा एतेन रोहितकुलीयेन साम्ना रोहिताभ्यां रोहितनामभ्यां राजर्षिभ्यां सह रोहितकूले रोहितकूलनामकनदीतटे आजिं गन्तव्यभूमिमर्यादां अजनयत् जनायितवान्। एवमाजिकल्पनानन्तरं विश्वामित्रः भरतानां भरतनामकराज्ञां यद्वा भरतानां मनुष्याणां वा। मनश्चित्तं सत्या समानच्छन्दसा उष्णिहा अयात् तान् प्रति जयाय मनो दध्रे इत्यर्थः। तदनन्तरं स विश्वामित्रः जनतायां जनसमूहे बले अदन्तिभिः कुञ्जररहितैर्बालैरिति शेषः। नामेति प्रसिद्धौ। बलैस्सह आजिं गत्वा भरतानाह। किमिति ? मां मां मामेवोद्दिश्य शं सुखं प्रास्यते निरस्यते भवद्भिरिति शेषः। यूयं भरताः अस्तिकान् आस्तिकानि लिङ्गव्यत्ययश्छान्दसः। इमानि सैन्यानि जयाथ जयथ छान्दसो दीर्घः। यूयं भरताः मह्यं मदर्थं युद्धरूपं पूरयाथ पूरयथ। यद्यस्मात् इमौ रोहितौ रोहितनामकौ राजानौ इदं परिदृश्यमानं अश्माचितं अश्मभिराचितं कूलमुद्वहत रोहितनामनदीतटमुद्भिन्त इत्युक्त्वा स विश्वामित्रः एते रोहितकुलीये सामनी प्रकृत्यपेक्षया द्विवचनम्। अपश्यत् दृष्टवान्। ताभ्यां रोहितकुलीयसामभ्यां युक्त्वा सेनां संयोज्य प्रासेधत्। अनन्तरं स विश्वामित्र उदजयत् उर्जितवान् इति. ख. पु.

युक्त्वा प्रासेधत्स उदजयत् ॥ १३ ॥

विश्वामित्रः पुरा भरतानां भरतवंशजातानां सनस्यया मनसा युक्तया प्रजया आयात् भरतानां देशं शकटारूढोऽगच्छदित्यर्थः । अत्र च भरतदेशे सौदन्तिभिः सुदन्तवंशजैः एतत्संज्ञैः जनतया जनसमूहेन अंशं विभजनाय धनं प्रास्यत प्राक्षिप्यत आजिं लब्धाय तेन प्राप्तव्यमेतदिति स्थापितमभूत्—योऽस्माकं मध्ये ज्येष्ठोऽस्ति तस्येदमस्त्विति । तत्र विश्वामित्रो दैवसङ्गत एवमब्रवीत्—हे सौदन्तयः यदि यूयं ज्येष्ठाः तर्हि अस्मिन् संख्यां वस्तिकां वस्तिसंज्ञां वसुसम्बन्धं धनसमूहं प्रति मां यूयं जयाथ देहि । यदि तु मदीयाविमौ रोहिताविश्वौ अश्माचितं अश्मभिः पाषाणैरासमन्ताच्चितं सन्तमग्रामिदं नद्याः कूलं उद्वहात उर्ध्वशकटं उत्तारयितारौ, तर्हि मह्यं तदर्थमेव इमानि धनानि पूरयाथ पूरयतेति । एवं कृतप्रतिज्ञः स विश्वामित्रः एते रोहितकूलीये सामनी अपश्यत् । ताभ्यां सामभ्यां अश्वौ शकटे युक्त्वा प्रासेधत् प्रकर्षेण कूलोद्वहनं साधितवान् । ततः स उदजयत् उत्कृष्टजयं प्राप्नोत् । तस्मादेतद्रोहितकूलसम्बन्धात् रोहितकूलीयमित्याख्यायते ॥ १३ ॥

(१)अस्त्वेवमस्याजिजयहेतुता । द्वादशाहे कथं लङ्घ्यत इत्यत आह—

**आजिर्वा एष प्रततो यद् द्वादशाहस्तस्यैते उज्जित्यै ॥ १४ ॥**

(२)प्रततः प्रकर्षेण विस्तारितः द्वादशाह इति यत् एष आजिर्वै आजिरेव । अतस्तस्य द्वादशाहस्याऽऽजेरुज्जित्यै उज्जयाय भवति ॥ १४ ॥

(३)अथ द्वितीयतृचे सामान्तरं विधत्ते—

**कण्वरथन्तरं भवति तेजो वा एतद्रथन्तरस्य यत्कण्वरथन्तरम् ॥ १५ ॥**

(४)'पुनानस्सोम धारये'ति विहितेऽस्मिन् तृचे कण्वरथन्तराख्यं

१. द्वादशाहमाजित्वेन प्रशंसतीति. ख. पु.

२. प्रतत एव द्वादशाहः आजिर्वै गन्तव्यभूमेर्मर्यादैव खलु । तस्य द्वादशाहस्य तद्रोहितकुलीयं उज्जित्यै उज्जयाय भवतीति. ख. पु.

३. रथन्तरस्य तेजोरूपत्वेन कण्वरथन्तरं प्रशंसतीति ख. पु.

४. कण्वरथन्तरं सामेति यत् तत् रथन्तरस्य तेज एवेति. ख. पु.

साम गातव्यम् । यत् कण्वरथन्तराख्यं साम एतद्रथन्तरस्य 'अभि त्वा शूर'इत्यस्यां गीयमानस्य तेजो वै तेज एव ॥ १५ ॥

(१)अथैतत्स्तौति—

**सरसमेव तद्रथन्तरं प्रयुङ्क्ते यत्कण्वरथन्तरेण सप्तमेऽहनि स्तुवते ॥ १६ ॥**

(२)सारभूतमेतद्यावद्द्वादशाहस्य सप्तमेऽहनि उद्गातारः कण्वरथन्तरेण स्तुवत इति यत्तेन सरसं रससहितं सारवदेव रथन्तरं प्रयुङ्क्ते ॥ १६ ॥

(३)अथैतत्प्रकारान्तरेण स्तौति—

**जामि द्वादशाहस्याऽस्तीति ह स्माऽऽहोग्रदेवो राजनिर्बार्हतꣳ षष्ठमहर्बार्हतꣳ सप्तमं यत्कण्वरथन्तरं भवति तेनाऽजामि ॥ १७ ॥**

(४)राजनिः रजनस्य पुत्रः उग्रदेवाख्य ऋषिः षष्ठसप्तमयोरुभयोरपि नैरन्तर्येण बार्हतत्वात् जामित्वदोषोऽस्तीति आह पुरोक्तवान् । षष्ठमहर्बार्हतं बृहतः सम्बन्धि एव साम्नो बृहतः सकाशाज्जामित्वात् सप्तममहश्च बार्हतं बृहतस्सम्बन्धि । तथा च जामितादोषः । तत्राऽयं परिहारः—सप्तमेऽहनि कण्वरथन्तरं भवतीति यत्तेन कण्वरथन्तरेण अजामि जामितादोषो न भवति रथन्तरस्य कृतत्वात् ॥ १७ ॥

(५)अथाऽस्मिंस्तृचे सामान्तरं विधत्ते—

**(६)गौङ्गवं भवति ॥ १८ ॥**

गौङ्गवाख्यं साम 'पुनानः सोम' इत्यस्मिन्नेव आवृत्ते तृचे गेयम् ॥ १८ ॥

अथैतदस्मिन्नहनि प्राप्तिहेतुत्वेन स्तौति—

---

१. कण्वरथन्तरं रसवदिति प्रशंसतीति. ख. पु.

२. कण्वरथन्तरेण सप्तमेऽहनि स्तुवत इति यत् एतदेव सरसरथन्तरप्रयोग इति. ख. पु.

३. द्वादशाहस्य जामिदोषमनूद्य परिहरतीति. ख. पु.

४. रजनस्याऽपत्यं राजनिरुग्रदेव आह—द्वादशाहस्य षष्ठमहर्बार्हतं सप्तममहश्च बार्हतम् । अतो जामिदोषोऽस्तीति । यद्यस्मात् सप्तमेऽहनि कण्वरथन्तरं भवति तेनाऽजामि जामिदोषः परिहृत इति. ख. पु.

५. गौङ्गवमन्नाद्यसाधनत्वेन स्तौतीति ख. पु.

६. ब्राह्मणभागद्वयमिदमेकीकृत्य पठित्वा व्याख्यातं खपुस्तके,

**अग्निरकामयताऽन्नादः स्यामिति स तपोऽतप्यत स एतद्गौङ्गवमपश्यत्तेनाऽन्नादोऽभवद्यदन्नं वित्वा गर्दयद्गङ्गूयत्तद्गौङ्गवस्य गौङ्गवत्वमन्नाद्यस्याऽवरुध्यै गौङ्गवं क्रियते ॥ १९ ॥**

(१)अन्नादो अन्नस्याऽत्ता भवेयमित्याग्निरकामयत कामितवान्। कामयित्वा च स तपस्तप्तवान्। स तपोमाहात्म्येन एतद्गौङ्गवाख्यं सामाऽपश्यत्। तेन च साम्ना अन्नस्याऽत्ताऽभवत्। तदन्नं वित्वा लब्ध्वा यद्गर्द्दत शब्दमकरोत्। गर्द शब्दे इति धातुः। एतदेव व्याचष्टे यदगङ्गूयदिति। गुङ् अव्यक्ते शब्दे अगङ्गूयत् अव्यक्तं शब्दमकरोत्। तत्तस्माद्गौङ्गवस्य साम्नो गौङ्गवत्वं गौङ्गवमिति नाम सम्पन्नम्। तस्मादद्यतनेऽपि अन्नाद्यस्याऽवरोधाय सप्तमेऽहनि गौङ्गवं क्रियते प्रयुज्यते ॥१९॥

(२)अथ प्रकारान्तरेण तत् स्तौति—

**यत्साम देवता प्रशꣳसति तेन यजमानाः सत्याशिषः सत्याशिषोऽसामेति वै सत्रमासते सत्याशिष एव भवन्ति ॥ २० ॥**

(३)साम्नां मध्ये यत् साम देवता प्रशंसति प्रशंसां करोति तेन साम्ना यजमानाः सत्याशिषः सत्यफला भवन्ति। गौङ्गवाख्यं साम देवतायाः अग्नेः अन्नादत्वलक्षणं प्राशस्त्यं करोति। यजमानाः सत्याशिषः सत्यफलाः असामेत्याभिप्रायेण खलु सत्रमासते सत्रासनं कुर्वते। ते देवाः प्रशंसकेनैतेन साम्ना सत्याशिष एव भवन्ति ॥ २० ॥

---

१. 'पुनानस्सोमे'ति तृचे गौङ्गवं साम भवति। अग्निरन्नाद्यस्स्यां लब्धान्नवान्भवेयमित्यकामयत। तदनन्तरं स तपोऽतप्यत। सोऽग्निरतत् गौङ्गवमपश्यत् गौङ्गवं साम दृष्टवान्। तेन साम्ना अन्नादोऽभवत् लब्धान्नोऽभवत्। यद्यस्मात्कारणादग्निः अन्नं वित्वा अगर्दत् अन्नलाभादव्यक्तशब्दमकरोत् अगङ्गूयत अगायच्च, तस्मात्कारणात् गौङ्गवस्य गौङ्गवत्वं गौङ्गवमिति नाम सम्पन्नमित्यर्थः। अत इदानीमपि गौङ्गवेन स्तुवन्नन्नाद्यस्याऽवरुध्यै अवरोधनाय भवतीति. ख. पु.

२. सामदेवताप्रशंसनद्वारा यजमानेष्टप्राप्तिरित्याहेति. ख. पु.

३. यत् यस्मात् यजमानाः सामदेवता अग्निशंय्वादीन् प्रशंसति, तेन प्रशंसनेन सत्याशिषः सत्यरूपाशीर्वचनयुक्ता असाम भवाम इत्येवं सत्रमासते। द्विरुक्तिरादरार्था। अतस्सत्याशिष एव भवन्तीति. ख. पु.

(१)अथ सामान्तरं विधत्ते—

आयास्यं भवति तिरश्चीनानिधनं प्रतिष्ठायै ॥ २१ ॥

(२)आयास्यं अयास्येन दृष्टं साम 'पुनानः सोमे'त्यादिमन्त्रेव तृच आवृत्ते गातव्यम् । तच्च तिरश्चीननिधनं तैरश्चीनं तिर्यग्वर्त्तमानं निधनं यस्य तादृशं भवति यजमानस्य प्रतिष्ठानार्थम् ॥ २१ ॥

(३)अथैतद्विभ्रष्टशब्ददोषनिर्बर्हणहेतुतया स्तौति—

अयास्यो वा आङ्गिरस आदित्यानां दीक्षितानामन्नमाश्नात् स व्यभ्रꣳशत स एतान्यायास्यान्यपश्यत्तै-रात्मानꣳ समश्रीणाद्विभ्रष्टमिव वै सप्तममहर्यदेत-त्साम भवत्यहरेव तेन सꣳश्रीणाति ॥ २२ ॥

(४)आङ्गिरसः अङ्गिरोगोत्र अयास्य ऋषिः पुरा दीक्षितानां प्रारब्धयज्ञानां आदित्यानां अन्नमाश्नात् । तैस्सामभिरात्मानं वीर्य्यैः समश्रीणात् समगमयत् । एतत् सप्तममहश्च विभ्रष्टमिव वै भ्रष्टवीर्यमिव खलु । पृष्ठ्यषडहस्य समाप्तत्वात आगामिनोऽहरन्तरस्य चाऽनिष्पत्तेरेकाकित्वात् एतदायास्यं साम सप्तमेऽहनि भवतीति यत् तेन साम्ना तदहरेव संश्रीणाति वीर्य्येण संयोजयति ॥ २२ ॥

अथाऽन्तिमे तृचे सामान्तरं विधत्ते—

प्रवद्भार्गवं भवति ॥ २३ ॥

---

१. साप्तमिकमायास्यं प्रशंसतीति ख. पु.

२. 'पुनानस्सोमे'ति तृचे तिरश्चीननिधनमायास्यं भवति । तदायास्यं यजमानानां प्रतिष्ठायै भवतीति. ख. पु.

३. तदेव तिरश्चीननिधनं प्रकारान्तरेण प्रशंसतीति. ख. पु.

४. आयास्यनामा आङ्गिरसः यज्ञे दीक्षितानां आदित्यानां अदितिकुमाराणां देवानामन्नमाश्नात् भुक्तवान् । तेन दीक्षितान्नभोजनेन व्यभ्रंशत विधिनानियमात् भ्रष्टोऽभूत् । एतानि तिरश्चीननिधनान्यायास्यान्यपश्यत् । तैस्तिरश्चीनायास्यैरात्मानं स्वात्मानं समश्रीणात् अपावयत् ।

तिरश्चीननिधनायास्येन सप्तममहर्विशुध्यतीत्याह—

विभ्रष्टमिव वै सप्तममहर्यदेतत्साम भवत्यहरेवैतेन संश्रीणाति ॥

सप्तममहः षष्ठाहस्साम्यात् विभ्रष्टमेव विविधमधः पतितमेव । यद्यस्मादेतत्साम तिरश्चीननिधनं भवति । प्रयुक्तेनैतेन साम्ना अहरेव संश्रीणाति पावयतीति ख. पु.

प्रवत् प्रशब्दयुक्तं भार्गवं भृगुदृष्टं तदाख्यं सामाऽऽस्तावात् आगामि-
नोऽहरन्तरस्य(१)'प्रो अयासीदि'ति विहितेऽस्मिंस्तृचे गातव्यम् ॥२३॥
अथैतत्स्तौति—

**प्रवता वै देवाः स्वर्गं लोकं प्रायन्नुद्वतोदायन् ॥२४॥**

प्रवता प्रशब्दवता साम्ना खलु पुरा देवाः स्वर्गं लोकं प्रायन्
(२)प्रागच्छन् गन्तुं प्रक्रान्ताः । उद्वता उच्छब्दवता साम्ना उदायन् ऊ-
र्ध्वमगच्छन् । तस्मादेतत्साम स्वर्गप्राप्तिसाधनमित्यर्थः ॥ २४ ॥
(३) अथैतत्पवमानस्तोत्रमुपसंहरति—

**निधनान्ताः पवमाना भवन्त्यह्नो धृत्यै स्तोमः ॥२५॥**

(४) सर्वत्र हि पवमानाः पवमानस्तोत्राणि निधनान्तानि भवन्ति
निधनमन्ते येषां ते निधनान्ताः । अत्र च मा २ नोपथा ३ ऊवा २३४५
इति प्रवद्भार्गवस्याऽवसाने निधनमधीयते । तच्चाऽह्नो धृत्यै धारणाय
भवति । एवं गायत्र्यादिप्रवद्भार्गवान्तेष्वष्टसु सामसु तृचेषु गीयमानेषु
निष्पद्यमानश्चतुर्विंशस्तोमोऽस्य पवमानस्तोत्रस्य कार्य इत्यर्थः ॥२५॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-
प्रकाशे चतुर्दशाध्यायस्य तृतीयः खण्डः ॥

## अथ चतुर्थः खण्डः ॥

(५)अथ पृष्ठस्तोत्रेषु प्रथमद्वितीये प्रकृते एवेति मन्वानस्तृतीयस्य
पृष्ठस्तोत्रस्य तृतीयं तृचं दर्शयति—

**(६)"वयं घत्वा सुतावन्त" इति बृहत्यो वर्षीयश्छ-**

---

१. सा. सं. उ. ३. २. ७. २. स्वर्गं लोकं गताः इति. ख. पु.

३. पवमानानां निधनवत्त्वं प्रशंसतीति ख. पु.

४. पवमाना निधनान्ताः सप्तमस्याऽह्नो धृत्यै स्थैर्याय भवन्ति । स्तोमश्च पूर्ववच्चतुर्विंश इत्यर्थ इति ख. पु.

५. अथ सप्तमस्याऽह्नः पृष्ठस्तोत्रेषु 'वयं घत्वे'ति तृचे ब्रह्मसाम दर्शयतीति ख. पु.

६. वयं घत्वा सुतावन्त आपो न वृक्तबर्हिषः ।

**न्द आक्रमतेऽनपभ्रंशाय ॥ १ ॥**

(१) 'वयं घत्वे'त्याद्यास्तिस्र ऋचः सतोबृहत्यो ब्रह्मसाम्नः स्तोत्रीया भवन्ति। आसाञ्च सतोबृहतीत्वं पूर्वमुक्तम्। प्रकृतौ हि बार्हतः प्रगाथो ब्रह्मसाम्न आधारः। बृहती च षट्त्रिंशदक्षरा। सतोबृहत्याख्यं छन्दः वर्षीयो वृद्धतरं चत्वारिंशदक्षरत्वात् अनुष्टुप्छन्द आक्रमते प्रारभते अनपभ्रंशाय अपभ्रंशाभावाय अधःपतनाभावाय ॥ १ ॥

(२)अथ चतुर्थस्य पृष्ठस्तोत्रस्य स्तोत्रीयं तृचं दर्शयति—

**(३)''नकिष्टङ्कर्म्मणा नशादि''ति बृहत्यः सत्योऽभ्यारम्भेण जगत्यः ॥ २ ॥**

(४)'नकिष्टं कर्म्मणे'त्याद्यास्तिस्रोऽच्छावाकसाम्नः स्तोत्रीया भवेयुः ताश्च स्वभावतो बृहत्यः सत्यो भवन्त्यभ्यारम्भेण गानसमये सकृद्गीयमानस्य मन्त्रभागस्य पुनरपि गानार्थमुपादानमभ्यारम्भः। तेन जगत्यो भवन्ति। अस्मिंस्तृचे वैखानससाम्नि गीयमाने 'सदावृधम्, ऋभ्व-

---

पवित्रस्य प्रस्रवणेषु वृत्रहन्परि स्तोतार आसते ॥ १ ॥
स्वरन्ति त्वा सुते नरो वसो निरेक उक्थिनः।
कदा सुतं तृषाण ओक आ गमदिन्द्र स्वब्दीव वंसगः ॥ २ ॥
कण्वेभिर्धृष्णवा धृषद्वाजं दर्षि सहस्रिणम्।
पिशङ्गरूपं मघवन्विचर्षणे मक्षू गोमन्तमीमहे ॥ ३ ॥
सा. सं. उ. २. २. १२

१. 'वयं घत्वे' यास्तिस्र ऋचस्सतो बृहत्यः सतोबृहतीति नामसम्पन्नाः, बार्हतं तृचं प्रगाथ इति च नाम सम्पन्नम्। तत्र ब्रह्मसाम कार्यम्। तास्सतो बृहत्यो वर्षीयः वृद्धतरं छन्दः सप्तममहराक्रमते। किमर्थमिति चेत् अनपभ्रंशाय अक्षोऽधः पतनराहित्यायेति. ख. पु.

२. अच्छावाकपृष्ठस्तोत्रतृचं दर्शयतीति. ख. पु.

३. नकिष्टं कर्मणा नशद्यश्चकार सदावृधम्।
इन्द्रं न यज्ञैर्विश्वगूर्तमृभ्वसमधृष्टं धृष्णुमोजसा ॥ १ ॥
अषाढमुग्रं पृतनासु सासहिं यस्मिन्महीरुरुज्रयः।
सं धेनवो जायमाने अनोनवुर्द्यावः क्षमीरनोनवुः ॥ २ ॥
सा. सं. उ. ४. २. ८.

४. 'नकिष्ट कर्मणानशदि'ति बृहतीप्रगाथे अच्छावाकस्तोत्रं कार्यम्। ताश्च बृहत्यस्सत्यः अभ्यारम्भेण द्वितीयपादप्रभृति चतुरक्षराभ्यासेन जगत्यो भवन्तीति. ख. पु.

सम, धृष्णुमोजसे'ति चतुरक्षराख्रयोऽर्द्धपादाः पुनरारभ्यन्ते । ए-तानि द्वादशाक्षराणि सम्पद्यन्ते । बृहती षट्त्रिंशदक्षरेति मिलित्वा अष्टाचत्वारिंशदक्षरा प्रथमा जगती भवति । एवमुत्तरे अपि ॥ २ ॥

एवमभ्यारम्भेण जगतीसम्पादने को लाभ इत्यत आह—

**अपभ्रंश इव वा एष यज्ज्यायसः स्तोमात्कनीयांसं स्तोममुपयन्ति यदेता अभ्यारम्भेण जगत्यो भवन्त्यह्न एव प्रत्युत्तम्भाय ॥ ३ ॥**

ज्यायसो वृद्धतरात् त्रयस्त्रिंशात् स्तोमात् कनीयांसं अल्पीयांसं न्यूनसंख्यं चतुर्विंशं स्तोममुपयन्ति । यत् एष अपभ्रंश इव वै अधःपतनमिव खलु । तस्मात् सप्तमेऽहनि या देवताः पूर्वोक्ताः 'नकिष्टं कर्मणा नशदि'त्याद्यास्ता अभ्यारम्भेण जगत्यो भवन्ति । तदस्य सप्तमस्याऽह्न एव (१)प्रत्युत्तम्भाय प्रत्युत्तम्भनाय अधःपतनतो धृत्यै धारणाय भवति । अधिकाक्षरच्छन्दसः कारणात् स्तोमप्रयुक्तन्यूनता परिहृता भवतीत्यर्थः ॥ ३ ॥

(२)अथाऽस्मिन्नहनि ब्रह्मणः पृष्ठस्तोत्रनिर्वर्त्तकं साम दर्शयति—

**अभिनिधनं काण्वं भवति ॥ ४ ॥**

(३)अभीति निधनं यस्य तादृशं कण्वदृष्टं साम 'वयं घत्वे'ति तृचे गातव्यम् ॥ ४ ॥

तदेतद्भ्रातृव्यहननहेतुरिति स्तौति—

**अभिनिधनेन वा इन्द्रो वृत्राय वज्रं प्राहरत्तमस्तृणुत स्तृणुते भ्रातृव्यमभिनिधनेन तुष्टुवानः ॥ ५ ॥**

---

१. प्रत्युत्तम्भाय दृढीकरणाय भवन्तीत्यर्थ इति. ख. पु.

२. अभिनिधनं काण्वमाख्यायिकामुखेन स्तौतीति. ख. पु.

३. इन्द्रः परमैश्वर्यवान् देवराजः वृत्राय वृत्रनामकासुराय अभिनिधनं अभीति निधनवत् काण्वं कण्वेन दृष्टं साम, तेनाऽभिनिधनेनैव साम्ना वज्रं प्रावर्तयत् स्वायुधं प्राहिणोत् । तं वृत्रं अस्तृणुत हिंसितवान् । अतोऽभिनिधनमिदानीमपि भ्रातृव्यहिंसनमित्याह—

स्तृणुते भ्रातृव्यमभिनिधनेन तुष्टुवानः ॥

अभिनिधनेन स्तुवन्नुद्गाता भ्रातृव्यं शत्रुं स्तृणुते हिनस्तीति. ख. पु.

अभिनिधनेनाऽनेन साम्ना पुरा इन्द्रो वृत्रं हन्तुं वज्रं प्राहरत् प्र- क्षिप्तवान्। प्रहृत्य च तं वृत्रमस्तृणुत अवधीत्। स्तृञ हिंसायामिति धातुः। शिष्टं स्पष्टम् ॥ ५ ॥

(१)अथाऽच्छावाकपृष्ठस्तोत्रनिर्वर्त्तकं साम दर्शयति—

वैखानसं भवति ॥ ६ ॥

(२)वैखानसाख्यं साम 'नकिष्टं कर्मणानशद्'इति तृचे गातव्यम् ॥६॥

अथैतत्सर्वकामप्राप्तिसाधनमिति विवक्षुराख्यायिकामाह—

वैखानसा वा ऋषय इन्द्रस्य प्रिया आसꣳस्तान्र- हस्युर्देवमलिम्लुड् मुनिमरणेऽमारयत्तं देवा अब्रुवन् क्व- तर्षयोऽभूवन्निति तान् प्रैषमैच्छत्तान्नाविन्दत्स इमान् लोकानेकधारेणाऽपुनात्तान्मुनिमरणेऽविन्दत्तानेतेन सा- म्ना समैरयत्तद्वाव स तर्ह्यकामयत कामसनि साम वैखा- नसं काममेवैतेनाऽवरुन्धे स्तोमः ॥ ७ ॥

वैखानसा विखनसः पुत्राः ऋषयः इन्द्रस्य प्रिया आसन् इष्टतमा अभवन्। तानृषीन् रहस्युर्नाम देवमलिम्लुङ् देवान् मालिन्यं मोचयति

---

१. वैखानसमध्याख्यायिकया प्रशंसतीति. ख. पु.

२. वैखानसं वैखानससम्बन्धि साम भवतीत्यर्थः। वैखानसा इति ऋषय एवेन्द्रस्य प्रिया इष्टा आसन्। तान् वैखानसान् देवमलिम्लुङ् देवमोषकस्तस्कर इत्यर्थः। रहस्युः हन्तुमिच्छुः मुनिमरणे विषये अमारयत् मारितवान्। तत इन्द्रं देवा अब्रुवन्–क्व ते ऋषयो वैखानसा अभूवन् कुत्र गता इति। एवं पृष्ट इन्द्रस्तान् देवान् प्रैषमच्छत् तानन्वेष्टुं प्रेषितवान्। एवं देवप्रेषणया इन्द्रः तान् वैखानसान्नाऽविन्दत् न लब्धवान्। अनन्तरमिन्द्रः इमान् भूरादिलोकान् एकधारेण एकप्रयत्नेन अपुनात् पवितवान्। तान् ऋषीन् मुनिमरणे विषये अविन्दत् लब्धवान्। लब्ध्वा तानृषीन् एतेन वैखानसाख्येन साम्ना समैरयद् सङ्गतावयवानकरोत्। तद्वाव तदेव वैखानसं साम। स इन्द्रस्तर्हि तस्मिन् काले वैखानसर्षिलाभकाले अकामयत स्वेष्टसाधनत्वेन कामितवान्। अत इदं वैखानसं साम कामसनि कामस्याऽभीष्टस्य दायकम्। षिणुदान इति धातुः। अत इदानीन्तनो- ऽप्येतेन साम्ना स्तुवन् काममभीष्टमवरुन्ध एव लभत एव। स्तोमश्च पूर्ववच्चतुर्विंशः। तस्य अष्टभ्यो हिंकरोति, स तिसृभिस्स चतसृभिस्स एकया, अष्टभ्यो हिंकरोति स एकया स तिसृभिः स चतसृभिः, अष्टभ्यो हिंकरोति स चतसृभिस्स एकया स तिसृ- भिरिति विष्टुतिः इति ख. पु.

प्रापयतीति देवमलिम्लुचः एवंविधोऽसुरः मुनिमरणे मुनयो म्रियन्तेऽस्मिन्निति मुनिमरणं स्थानविशेषः । अधिकरणे ल्युट् । तस्मिन् स्थाने अमारयत् अवधीत् । एवं मृतेषु वैखानसेषु तमिन्द्रं देवा अब्रुवन्-ते क प्रिया ऋषयः क कुत्राऽभूवन्निति ? स इन्द्रस्तानृषीन् प्रैषमैच्छत् अन्विष्टवानित्यर्थः । स च गवेषयमाणस्तान् क्वचिदपि नाऽविन्दन्नाऽलभत । स इमान् पृथिव्यादीन् सर्वानेकधारेण एकोद्योगेनाऽपुनाद्शोधयत् । एवं सर्वान् लोकान् शोधयित्वा तानृषीन् मुनिमरणे स्थानेऽविन्दत मृतानलभत अपश्यदित्यर्थः । स इन्द्र एतेन साम्ना तान् समैरयत् पुनः प्राणैस्तान् समयोजयत् । यस्मादेवं वैखानसानां सम्बन्धः तस्माद्वैखानसमिति साम्नस्संज्ञा जाता । तत् खलु समीरणं तस्मिन् काले सोऽकामयत । यस्मादेवं कामितार्थमसाधयत् तस्माद्वैखानसं साम कामसनि कामप्रदम् । तस्मात्सर्वमेव काम्यमानं फलं तेन साम्ना लभते । एतेष्वपि चतुर्षु पृष्ठस्तोत्रेषु पूर्वोक्त एव चतुर्विंशस्तोमः कार्य्यः ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे चतुर्दशाध्यायस्य चतुर्थः खण्डः ॥

---

## अथ पञ्चमः खण्डः ॥

(१)अथाऽऽर्भवपवमानस्य प्रथमं प्रातिपत्तृचं दर्शयति—

(२)"यस्ते मदो वरेण्य" इति गायत्री भवति मदवद्वै रसवत् तृतीयसवनं मदमेव तद्रसं दधाति ॥ १ ॥

(३)'यस्ते मदो वरेण्य' इति गायत्री आर्भवपवमानस्य प्रतिपत्तृ-

---

१. अथ सप्तमस्याऽह्न आर्भवपवमानस्याऽऽद्यं तृचं विदधातीति ख. पु.

२. यस्ते मदो वरेण्यस्तेना पवस्वान्धसा । देवावीरघशंसहा ॥ १ ॥
जघ्निर्वृत्रममित्रियं सस्निर्वाजं दिवे दिवे । गोषातिरश्वसा असि ॥ २ ॥
संमिश्लो अरुषो भुवस्सूपस्थाभिर्न धेनुभिः । सीदं छ्येनो न योनिमा ॥ ३ ॥
सा. सं. उ. २. १. १५.

३. 'यस्ते मदो वरेण्य' इत्यस्यामृचि गायत्रस्तृचो भवतीत्यर्थः । अस्य तृचस्य मदशब्दयुक्तत्वेन तृतीयसवनयोग्यमित्याह मदवद्वै इति । तृतीयसवनं मदवद्वै मदशब्दयुक्तमेव सद्रसवत् रसयुक्तं भवति । तत्र रसवत्त्वं नाम आशिरानयनेन मदकररसजननात् । अशिर्नाम मथितं पयः इति ख. पु.

यति गायन्तः प्रथमस्तृचो भवतीत्यर्थः । शिष्टं पूर्ववद्व्याख्येयम् ॥ १ ॥

(१)अथ तृचान्तरं विधत्ते—

**(२)"एषस्य धारया सुत" इति ककुभः सत्योऽभ्या-रम्भेण त्रिष्टुभः ॥ २ ॥**

(३)'एषस्य धारये'ति तिस्रः स्तोत्रीयाः कार्याः। ताः ककुभः अभ्यस्ताक्षरौ अष्टाक्षरौ द्वौ पादौ। मध्ये द्वादशाक्षराः। ताः ककुभः। ईदृश्यस्सत्यः गीतिसमयेऽभ्यारम्भेण त्रिष्टुभो भवन्ति। प्रथमपादस्य द्वितीयपादे 'अव्या वारेभिः पवते मदिन्तमः' इत्यादेः अष्टाक्षरस्य पुनरारभ्यमाणत्वात्। एवमभ्यस्यमानौ द्वावष्टाक्षरौ, मिलित्वा षोड-शाक्षराणि सम्पद्यन्ते। अध्ययनतस्तु अष्टाविंशत्यक्षरेति मिलित्वा चतुश्चत्वारिंशदक्षरा एकैका त्रिष्टुप् भवति ॥ २ ॥

(४)एतात्रिष्टुप्सम्पादनं पूर्ववदह्न उत्तम्भनार्थमित्याह—

**अपभ्रंश इव वा एष यत् ज्यायसः स्तोमात्कनी-यांसꣳ स्तोममुपयन्ति यदेता अभ्यारम्भेण त्रिष्टुभो भवन्त्यह्न एव प्रत्युत्तम्भाय ॥ ३ ॥**

(५)व्याख्यातमेतत् पूर्वस्मिन् खण्डे ॥ ३ ॥

अथ तृचान्तरं विधत्ते—

**(६)"सखाय आनिषीदते"ति वालखिल्या वालखि-ल्यावेतौ तृचौ षष्ठे चाऽहनि सप्तमे च यदेतौ वालखि-**

---

१. अथाऽन्यं तृचं दर्शयतीति ख. पु. २. २९ पृष्ठे टिप्पण्यां द्रष्टव्यम्

३. 'एषस्य धारये'त्याद्यास्तिस्रः ककुभः ककुप्छन्दस्काः। तास्सत्योऽपि अभ्यार म्भेण पुनः पुनरभ्यासेन योगात्त्रिष्टुभो भवन्ति गानेन त्रिष्टुभो भवन्तीत्यर्थं इति. ख. पु.

४. एवमावृत्तिरूपाभ्यारम्भमेवाऽह्नो धारणत्वेन स्तौतीति ख. पु.

५. अपभ्रंश इव वै अपभ्रंश एव अधः पतनमेव खलु एषः परिदृश्यमानः। यद्य-स्माज्ज्यायसः वृद्धतमात्स्तोमात् त्रिष्टुभः कनीयांसं स्तोमं अक्षरसङ्ख्यया न्यूनं स्तोमं ककुभमुपयन्ति प्राप्ता इत्येतत् एष अपभ्रंश इति विधेयविशेषणमिति दोषमुद्भाव्य परिह-रति—यदेताः ककुभः अभ्यारम्भेण पुनःपुनरभ्यासेन त्रिष्टुभो भवन्तीत्येतत् अह्नः प्रत्युत्तम्भायैव उत्तम्भनार्थमेव भवन्तीति. ख. पु.

६. ६२ पृष्ठे द्रष्टव्यम्

**ल्यौ तृचौ भवतोऽह्नोरेव व्यतिषङ्गायाऽव्यवस्रंसाय सन्तत्यै ॥ ४ ॥**

(१)'सखाय आनिषीदते'त्याद्यास्तिस्रो वालखिल्याः वालखिल्य-सम्बन्धिन्यः ऋचो भवन्ति । शिष्टं(२) 'परिस्वानो गरिष्ठा' इति परि-वत्यो गायत्र्यो भवन्ती'ति खण्डे व्याख्यातम् ॥ ४ ॥

अथाऽन्यं तृचं विधत्ते—

**(३)"पुरोजिती वो अन्धस" इति विराडन्नं विरा-डन्नाद्यस्याऽवरुध्यै ॥ ५ ॥**

(४)'पुरोजिती वो अन्धस' इत्याद्यास्तिस्रः स्तोत्रीया भवन्ति । तासु प्रथमाऽनुष्टुबुत्तरे गायत्र्यौ । संहत्य गणनायां दशपादा भवन्ति । सा एका विराट् 'दशाक्षरा विराडि'ति श्रुतेः । तासामक्षरपरिगणना-यामशीत्यक्षराणि सम्पद्यन्ते । सा अन्या विराट् । आम्नातं हि 'पुरा पद्यया विराडक्षर्य्याण्यस्मात् लोकात्पद्यया विराजाऽन्नाद्यमवरुन्ध'

---

१. 'सखाय आनिषीदते'ति वालखिल्याः वालखिल्यानामृषीणां सम्बन्धिन्यः वाल-खिल्यास्तिस्रस्स्तोत्रीया भवन्तीत्यर्थः । बालखिल्यविती तृचौ—पूर्वस्मिन् षष्ठेऽहनि 'तं वस्सखाय' इति तृचः, अस्मिन्नहनि 'सखाय आनिषीदते'ति तृचश्च बालखिल्यौ । एतौ तृचौ क्रमेण षष्ठसप्तमयोरह्नोः भवतः प्रयुज्येते इति यत् तदह्नष्षष्ठसप्तमयोर्व्यतिषङ्गाय संसर्जनाय भवति । एतदेव विशदयति—अव्यवस्रंसायेति । व्यवस्रंसो विच्छेदनम् । तद-भावाय । फलितमर्थमाह सन्तत्या इति । स्पष्टम् इति ख. पु.

२. तां. ब्रा. १३. ११. १.

३. पुरोजिती वो अन्धसस्सुताय मादयित्नवे ।
अप श्वानं श्नथिष्टन सखायो दीर्घजिह्वयम् ॥ १ ॥
यो धारया पावकया परिप्रस्यन्दते सुतः । इन्दुरश्वो न कृत्व्यः ॥ २ ॥
तं दुरोषमभी नरः सोमं विश्वाच्या धिया । यज्ञाय सन्त्वद्रयः ॥ ३ ॥
सा सं. उ. १. १. १८.

४. 'पुरोजिती व' इत्याद्या स्तोत्रीयाऽनुष्टुप् । उत्तरे स्तोत्रीयौ गायत्र्यौ । संहत्य तृचेऽपि पाददशकस्य सत्वात् एषा विराट् । अनुष्टुभः पूर्वस्यास्स्तोत्रीयाया एकाक्षरविक-र्षेण त्रयस्त्रिंशदक्षरत्वादक्षया च विराट् । उत्तरयोस्तोत्रीययोस्त्रिपादत्वात् त्रिपदा विराट् संसिद्धिः । एताद्विराजस्तवनं अन्नाद्यस्याऽवरुध्यै इति. ख. पु.

इति। एतदेवाऽभिप्रेत्य 'पुरोजिती वो अन्धस' इति सिद्धवद्व्यवहारः। गतमन्यत् ॥ ५ ॥

अथ तृचान्तरं दर्शयति—

(१)"प्रवाज्यक्षारि"त्यक्षरपङ्क्तिः स्तोमानां प्रभूतिः ॥६॥

(२)'प्रवाज्यक्षारि'त्यादिकोऽक्षरपङ्क्तिच्छन्दस्कस्तृचो भवति। अष्टाक्षरैर्हि पञ्चभिः पादैः पङ्क्तिः, इयन्तु अक्षरसंख्यया चत्वारिंशदक्षरा पङ्क्तिः सा च स्तोमानां त्रिवृदादीनां प्रभूतिः प्रभवः उत्पत्तिस्थानमित्यर्थः। त्रिवृदाद्यष्टाचत्वारिंशान्तेषु स्तोमेषु नवाद्यष्टाचत्वारिंशदन्ता या सङ्ख्या सा सर्वाऽक्षरपङ्क्तावन्तर्भूतेति प्रभूतित्वम् ॥ ६ ॥

गायत्र्यादीनां छन्दसां षडहे विनियुक्तत्वात् तैस्साध्यानां छन्दोमानां यद्गतसारत्वमाशङ्क्यते तदप्यनेनाऽक्षरपङ्क्तिच्छन्दसा समाधीयत इत्यत आह—

अथो एतर्ह्येवैतर्हि छन्दोऽयातयाम यदक्षरपङ्क्तिस्तेन छन्दोमा अयातयामानः क्रियन्ते ॥ ७ ॥

अथो अपि एतर्ह्येतस्मिन् सप्तमस्याऽह्नः प्रयोगकाले एतदेव खलु छन्दः अयातयाम अगतसारं यदक्षरपङ्क्त्याख्यं छन्दः पूर्वेष्वहस्सु अविनियुक्तत्वात्। तेनाऽयातयामाक्षरपङ्क्तिच्छन्दसा छन्दोमाः अयातयामानः यातयामत्वदोषरहिताः सारयुक्ताः क्रियन्ते ॥ ७ ॥

(३)एतदेव प्रश्नप्रत्युक्तिभ्यां विवृणोति—

ब्रह्मवादिनो वदन्ति यत् षडहे स्तोमाश्छन्दांसि-

---

१. प्र वाज्यक्षाः सहस्रधारास्तिरः पवित्रं विवारमव्यम् ॥ १ ॥
स वाज्यक्षाः सहस्ररेता अद्भिर्मृजानो गोभिः श्रीणानः ॥ २ ॥
प्र सोम याहीन्द्रस्य कुक्षा नृभिर्येमाणो अद्रिभिस्सुतः ॥ ३ ॥

सा. सं. उ. ४. २. १०.

२. अक्षरपङ्क्तिः अक्षरपङ्क्तिनामिका स्तोमानां त्रिवृदादीनां मध्ये प्रभूतिः प्रकृष्टा। अथो अपि च एतर्ह्येव अक्षरपङ्क्तिरेव छन्दः अयातयाम। एतर्हि इदानीं न गतसारवत्। यद्यस्मात्कारणात् अयातयामा अक्षरपङ्क्तिः क्रियते, तेन अक्षरपङ्क्तिप्रयोगेण छन्दोमाः चतुर्विंशादयः अयातयामानः रसवन्तः क्रियन्त इति. ख. पु.

३. एतेषामक्षरपङ्क्तीनामेवाऽऽधिक्यं ब्रुवन् तदर्थं कश्चिद्ब्रह्मवादिनां विचारं क्षिपतीति, ख. पु.

**स्याप्यन्ते किं छन्दसश्छन्दोमा इत्येतश्छन्दसो यदेता अक्षरपङ्क्तय इति ब्रूयात्॥ ८॥**

(१)ब्रह्मवादिनो वेदार्थमीमांसका आहुः षडहे समाप्यमाने त्रिवृदादयः स्तोमाः गायत्र्यादीनि छन्दांसि समाप्यन्ते। यद्येवं तावत् छन्दोमाश्छन्दोमाख्यानि त्रीण्यहानि किं छन्दसः केन छन्दसा निष्पाद्या इति। एवं ब्रह्मवादिभिः पृष्टे तस्योत्तरं ब्रूयात्–यदेता अक्षरपङ्क्तयः अक्षरपङ्क्तिश्छन्दस्काः 'प्र वाज्यक्षा'रित्याद्याः एतच्छन्दस एतदक्षरपङ्क्तिछन्दो येषां तथाविधाश्छन्दोमा इति अक्षरपङ्क्तिरेव पूर्वेष्वहस्सु विनियुक्तत्वात् छन्दोमानां सारत्वापादकमसाधारणं छन्द इत्यर्थः॥ ८॥

अथ तृचाऽन्तरं विधत्ते—

**(२)"ये सोमासः परावती"ति परावतामिव वा एतर्हि यज्ञो गतस्तमेवैतेनाऽन्विच्छन्ति॥ ९॥**

(३)'ये सोमासः परावती'ति स्तौति परावतामिव वै। एतर्हि यज्ञो गतः प्रायणीयातिरात्रमारभ्य एतदन्तानां सप्तानामह्नां गतत्वात्। यथाऽध्वगस्य पुरुषस्याऽतीतदिवसे मध्ये मार्गेऽवस्थिता महीरुहाद्या दूरस्था भवन्ति एवमेव सप्तममहरनुतिष्ठतो यजमानस्याऽतीतानि पूर्वाण्यहानि विप्रकृष्टानि भवन्तीत्यर्थः। तमेव दूरगतं यज्ञं एतेन दूरवाचिपरावच्छब्दयुक्तेन तृचेनाऽन्विच्छन्ति गवेषयन्ति॥ ९॥

---

१. ब्रह्मवादिनो वेदार्थचिन्तका वदन्ति चोदयन्ति—यद्यस्मात् षडहे समाप्ते सति स्तोमाः त्रिवृदादयः, छन्दांसि गायत्र्यादीनि आप्यन्ते क्रमेणाऽहस्सु षट्सु प्रयुक्तत्वात् समाप्यन्ते, तस्माच्छन्दोमाः किं छन्दसः केन छन्दसा निर्वर्त्याः? विनियुक्तानां गायत्र्यादीनामन्यतमेन निर्वर्त्ये गतरसत्वस्यादिति। तस्योत्तरम्—यद्यस्मादेताः परिदृश्यमानाः अक्षरपङ्क्तय इति ब्रूयात् इति ख. पु.

२. ये सोमासः परावति ये अर्वावति सुन्विरे। ये वादः शर्यणावति॥ १॥
य आर्जीकेषु कृत्वसु ये मध्ये पस्त्यानाम्। ये वा जनेषु पञ्चसु॥ २॥
ते नो वृष्टिं दिवस्परि पवन्तामा सुवीर्यम्। स्वाना देवास इन्दवः॥ ३॥
सा. सं. उ. ४. २. ११.

३. 'ये सोमासः परावती'त्यस्यामृचि तिस्रस्तोत्रीयाः। एतर्हि इदानीं यज्ञः परावतं अतिदूरं गत इव वै गत एव खलु। गतस्तं यज्ञं एतेनैव 'ये सोमास' इति तृचोत्पन्नेन जराबोधीयेन साम्ना अन्विच्छन्ति अनुप्राप्ताः स्तोतार इत्यर्थ इति ख. पु.

(१)ननु प्रकृतावाभिवस्याऽस्यस्तृचो जागतः। कथं तत्र 'ये सोमास' इत्याद्या गायत्र्यः सत्यः जागतं गच्छन्ति? इत्याशङ्क्य लक्षणया जगतीत्वात् सङ्गतिरित्याह—

**गायत्र्यः सत्यो जगत्यो रूपेण तस्माज्जगतीनां लोके क्रियन्ते ॥ १० ॥**

(२)गतमेतत् ॥ १० ॥

अथ 'यस्ते मदो वरेण्य'(पृ०९७)इति विहिते तृचे पूर्ववद्गायत्रं साम विधाय तद्विधिकर्त्तव्यताविधायकं ब्राह्मणञ्चाऽतिदिशति—

**गायत्रं भवति यदेव गायत्रस्य ब्राह्मणम् ॥ ११ ॥**

सिद्धमेतत् ॥ ११ ॥

अथाऽस्मिन्नेव तृचे सामान्तरं विधत्ते—

**दक्षणिधनं भवति ॥ १२ ॥**

'दक्षाये'ति दक्षशब्दो निधनं यस्य तद्दक्षणिधनम्। एतदपि साम 'यस्ते मद' इत्येतस्मिंस्तृचे आवृत्ते गातव्यम्। अथ सूत्रकारेण कल्पकारोक्तसामद्वयमुदाहृत्य स्तोमातिरेकपरिहाराय व्यवस्था दर्शिता—(३)'सप्तमेऽहन्यग्नेरर्कोऽध्यर्द्धेडञ्च सोमसाम मौक्षस्य पूर्वयोः, मौक्षसोमसामनी गायत्रस्योत्तरयोरग्नेरर्कस्तिसृष्वित वे'ति। अयमर्थः—यदेतद्दक्षणिधनाख्यं तस्यैव मौक्षमिति नाम। तत्र गायत्रतृचे गीत्वा अग्नेरर्काख्यं अध्यर्द्धेडञ्च सोमसाम मौक्षं वेति त्रीणि सामानि 'यस्ते मद'इत्याद्यासु तिसृषु एकर्क्षाणि क्रमेण गातव्यानि। अथवा गायत्रमेकस्यां गीत्वा तदुत्तरयोर्मौक्षसोमसामनी गातव्ये। अग्नेरर्काख्यं तिसृषु गातव्यमिति। अत्र ब्राह्मणे अग्नेरर्कसोमसाम्नोरविधानात् विहितयोरेव गायत्रमौक्षयोस्तृचे गानादेव स्तोमसम्पत्तेः सूत्रकारवचनस्य शाखान्तरीयत्वप्रतीतेर्विकल्प एव युक्तः, न तूक्तप्रकारेण समुच्चयः। तथा

---

१. गायत्रीं जागतत्वेन स्तौतीति ख. पु.

२. गायत्र्यस्सत्योऽपि गायत्रीरूपेण विद्यमाना अपि जगत्यो रूपेण 'ये सोमासः परावती'ति शब्दवत्त्वात् जगत्यो रूपत्वम्। 'उद्वत त्रिवदि'ति हि जागतं रूपम्। एतद्रूपेण जगतीनां लोके स्थाने क्रियन्ते इति ख. पु.

३. लाट्या. श्रौ. ३. ६. २२.

निरालम्बरूपता भगवता पतञ्जलिनोक्तं (?) सप्तमेऽहन्यर्कः कृताकृतो भवत्यब्राह्मणाविहितत्वादिति ॥ १२ ॥

अथैतद्ब्रह्महेतुत्वेन स्तौति—

**प्रजापतिः प्रजा असृजत ता अस्मात् सृष्टा अबला इवाऽच्छदयँस्तास्वेतेन साम्ना दक्षायेत्योजोवीर्यमदधाद्देतत् साम भवत्योज एव वीर्यमात्मन्धत्ते॥१३॥**

पुरा प्रजापतिः सर्वाः प्रजाः सृष्टवान् । ताः सृष्टाः प्रजाः अस्मात्प्रजापतेस्सकाशात् अबला बलरहिताः अवस्थातुमशक्ताहसन्त्यः अच्छदयन् देशान्तरमावृण्वन् अपागच्छन्नित्यर्थः । अथ तासु प्रजासु मौक्षेण साम्ना दक्षायेति निधनेन बलवाचिना ओजो बलात्मकं वीर्यमदधादस्थापयत् । तस्मादेतत्साम भवतीति यत् तेन ओजोरूपं वीर्यमेवाऽऽत्मन् आत्मनि तस्मिन् धत्ते धारयति ॥ १३ ॥

. अथ तृचान्तरे सामान्तरं विधत्ते—

**शार्करं भवति ॥ १४ ॥**

शर्करेण दृष्टं साम शार्करम् । तत् 'वृषस्य धारया सुत' इति ( पृ. २९. ) विहिते तृचे गातव्यम् ॥ १४ ॥

अथैतदाख्यायिकया सर्वकामप्राप्तिहेतुरित्यत आह—

**इन्द्रँ सर्वाणि भूतान्यस्तुवन् स शार्करँ शिशुमारर्षिमुपेत्याऽब्रवीत् स्तुहि मेति सोऽपः प्रस्कन्दन्नब्रवीदेतावतोऽहं त्वाँ स्तुयामिति तस्मादपां वेगमवेजयत् स हीन इवाऽमन्यत स एतत्सामाऽपश्यत्तेनापोऽनुसमाश्नुत तद्वाव स तर्ह्यकामयत कामसनि साम शार्करं काममेवैतेनाऽवरुन्धे ॥ १५ ॥**

पुरा खल्विन्द्रं सर्वाणि भूतानि भूतजातानि देवर्षिमनुष्यगन्धर्वादीन्यस्तुवन् विविधैः स्तोत्रैरप्रीणयन् स इन्द्रः शर्कराख्यं शिशुमारर्षिं शिशुमारो जलचरः तद्रूपिणमृषिमुपेत्योपगत्य स इन्द्रोऽब्रवीत्—मां स्तुहीति । स शर्करः अपो जलं प्रस्कन्दन् । प्रक्षिपन्नब्रवीत् उक्तवान् । प्रस्कन्नास्वप्सु यावन्तो बिन्दवो निष्पद्यन्ते एतावता एतावत्पर्यन्तं अहं त्वां स्तवानीति । यस्मादेवमुक्तवान् तस्मात्तमृषिं अपां वेगमवेज-

यत्। स ऋषिः अपां वेगं दृष्ट्वा ततो हीनैव मदीया स्तुतिरित्यमन्यत। ततस्तस्यातरणार्थं प्रयतमानः स ऋषिरेतत्सामाऽपश्यत्। तेन साम्ना स्तुवन्नपः अपां वेगं अनु समाश्नुत आप्नोत्। एतदीया स्तुतिः प्रक्षीयमाणा अपोऽप्यत्यक्रमीदित्यर्थः। गतमन्यत् ॥ १५ ॥

अथ तृचान्तरे सामान्तरं विधत्ते—

**प्लवो भवति ॥ १६ ॥**

'सखाय आनिषीदते'ति वालखिल्यतृचे प्लवाख्यं साम कार्यम् ॥१६॥

अथैतं द्वादशाहं समुद्रात्मना रूपयन् तस्य पारप्राप्तिसाधनमेतदिति स्तौति—

**समुद्रं वा एते प्रस्नान्तीत्याहुर्ये द्वादशाहमुपयन्तीति यो वा अप्लवः समुद्रं प्रस्नाति न स तत उदेति यत प्लवो भवति स्वर्गस्य लोकस्य समष्ट्यै ॥ १७ ॥**

ये यजमानाः द्वादशाहमुपयन्ति उपगच्छन्ति, एते समुद्रमुदधिं प्रस्नान्ति अवगाहन्त इत्याहुः ब्रह्मवादिनः। एवञ्च यः खलु अप्लवः प्लवरहितः अनौकः समुद्रं प्रस्नाति प्रविशति, स ततः समुद्रात् नोदेति नोद्गच्छति तत्रैव निमज्जतीत्यर्थः। तथा चाऽस्मिन् द्वादशाहाख्ये समुद्रे अवगाहतामपि केनचित् प्लवेन भवितव्यम्। तस्मादस्मिन् सप्तमेऽहनि प्लवाख्यं साम भवतीति यत् तत् स्वर्गस्य लोकस्य समष्ट्यै प्राप्त्यै भवति। द्वादशाहाख्यस्य समुद्रस्य तरणाय भवतीत्यर्थः ॥ १७ ॥

अथाऽस्य निधनमनूद्य स्तौति—

**(१)अतिविश्वानि दुरिता तरेमेति यदेवैषां दुष्टुतं दुश्शस्तं तदेतेन तरन्ति ॥ १८ ॥**

अनेन निधनेन दुरितातितरणं प्रतिपाद्यते। तथा च एषामृत्विजां सम्बन्धि यदेव दुष्टुतं दुश्शस्तं अयथास्तवनमयथाशंसनञ्च तदेतेन निधनेनाऽतितरन्ति अतिक्रामन्ति ॥ १८ ॥

अथैतन्निधनं संख्याद्वारा स्तौति—

**एकादशाक्षरणिधनो भवत्येकादशाक्षरा त्रिष्टुबोजो वीर्यं त्रिष्टुबोजस्येव वीर्ये प्रतितिष्ठति ॥ १९ ॥**

---

१. अयं मन्त्रो क्वचिदप्यादर्शपुस्तके नाऽस्ति ।

'अतिविश्वानी'त्याद्यानि एकादशाक्षराणि निधनानि यस्य तादृशः क्रुञ्चो भवति । छन्दसां मध्ये त्रिष्टुप् छन्दः एकादशाक्षरा । सा च त्रिष्टुबोजोवीर्य्यरूपा । एवं परम्परया संख्याद्वारा ओजस्येव ओजो बलं तद्रूप एव वीर्य्ये यजमानः प्रतिष्ठितो भवति ॥ १९ ॥

अथ तृचान्तरं सामान्तरं विधाय तद्ब्राह्मणञ्चाऽतिदिशति—

**गौरीवितं भवति यदेव गौरीवितस्य ब्राह्मणम् ॥ २० ॥**

'पुरोजिती वो अन्धस' इति (पृ०९९) तृचे गौरीविताख्यं साम गातव्यम् । अस्य गौरीवितस्य यद्ब्राह्मणं प्रागाम्नातम्-(१) 'गौरीवितिर्वा एतच्छाक्त्यो ब्रह्मणोऽतिरिक्तमपश्यदि'ति तदत्राऽपि द्रष्टव्यम् ॥ २० ॥

अथाऽस्मिन्नेव तृचे सामान्तरं विधत्ते—

**कार्त्तयशं भवति ॥ २१ ॥**

कृतयशेन दृष्टं साम कार्त्तयशम् । एतदाख्यं साम 'पुरोजिती व' इत्यस्मिन् तृचे गातव्यम् । अस्मिन् साम्नि अर्द्धर्चावसानेषु उपेत्यध्ययनार्थं निधनं क्रियते ॥ २१ ॥

तस्य स्थाने अन्यन्निधनं विधत्ते—

**हीति निधनमुपयन्ति पाप्मनोऽपहत्यै ॥ २२ ॥**

उपास्थाने ही इति निधनमुपयन्त्युपगच्छन्ति । तत्र पाप्मनः पापस्याऽपहत्यै पापहननाय विनाशनाय भवति । ही इत्यस्य हन्तिधातुनिष्पन्नत्वात् ॥ २२ ॥

अथ स्तोतुः फलमाह—

**अप पाप्मानꣳ हते कार्त्तयशेन तुष्टुवानः ॥ २३ ॥**

स्पष्टोऽर्थः ॥ २३ ॥

अथाऽन्यस्मिंस्तृचे सामान्तरं विधत्ते—

**सौहविषं भवति ॥ २४ ॥**

सुहविषा दृष्टं साम सौहविषम् । तत् 'प्र वाज्यक्षा'रि'त्यस्मिन् तृचे गातव्यम् ॥ २४ ॥

तदेतत् स्तौति—

**सुहविर्वा एतेनाऽऽङ्गिरसोऽञ्जसा स्वर्गं लोकमपश्यत्**

१. तां. ब्रा. १२. १३. १०.

**स्वर्गस्य लोकस्याऽनुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः ॥ २५ ॥**

सुहविर्नामाऽऽङ्गिरसः अङ्गिरोगोत्र ऋषिः एतेन साम्ना साधनेनाऽसा अनायासेन स्वर्गं लोकमजानीत् । शिष्टं स्पष्टम् ॥ २५ ॥

अथैतदाधारभूतानामृचां छन्दोद्वारेण तुष्टुषुराह—

**ब्रह्मवादिनो वदन्ति यत् षडहे स्तोमाश्छन्दाꣳस्याप्यन्ते किंछन्दसश्छन्दोमा इति पुरुषश्छन्दस इति ब्रूयात्पुरुषो वै पाङ्क्तः पुरुषो द्विपदा छन्दोमानामयातयामतायै ॥ २६ ॥**

ब्रह्मवादिनो वेदार्थचिन्तकाः वदन्ति चोदयन्ति—यद्यस्मात् षड़हे पृष्ठाख्ये समाप्यमाने त्रिवृदादयस्स्तोमाः, 'यस्ते मद' इति गायत्र्यादीनि छन्दांसि च समाप्यन्ते । तस्माद्विनियुक्तस्याऽन्यच्छन्दसोऽभावाद्विनियुक्तानाञ्च गतसारत्वात् छन्दोमाः किंछन्दसः केन छन्दसा निष्पाद्या इति । एवं ब्रह्मवादिभिश्चोदिते पुरुषश्छन्दसश्छन्दोमा इत्यभिज्ञ उत्तरं ब्रूयात् । किं तत् पुरुषछन्दस इति । तदुच्यते—तत् मांसस्नाय्वस्थिमज्जारेत इति पञ्चभिर्धातुभिरुपेतत्वात् पुरुषः पाङ्क्तः पङ्क्तिसम्बद्धः सा हि पञ्चभिः पादैरुपेतत्वात् पञ्चसंख्यावती । तस्मात् पङ्क्तिस्तावदेकं पुरुषछन्दः । तथा द्विपदाऽपि पुरुषात्मका पादद्वयसामान्यात् । एवंविधस्य पुषछन्दसः पूर्वमेव नियुक्तः (?) तेन सारवत्त्वात् तच्छन्दस्के 'प्र वज्रिन्नि'ति तृचे गीयमानं साम छन्दोमानां त्रयाणामयातयामतायै अगतसारतायै भवति ॥ २६ ॥

अथ तृचान्तरेऽन्यत्साम विधत्ते—

**जराबोधीयं भवत्यन्नाद्यस्याऽवरुध्यै ॥ २७ ॥**

जराबोधीयं जराशब्दयुक्तायां योन्यामुत्पन्नं साम जराबोधीयम् । तत् 'ये सोमासः परावति' त्यार्भवस्याऽन्तिमे तृचे गातव्यम् । तत्राऽऽद्यस्याऽदनीयस्याऽन्नस्य अवरुध्यै अवरोधनाय लाभाय भवति ॥२७॥

एतदेव व्याचष्टे—

**अन्नं वै जराबोधीयं मुखं गायत्री मुख एव तदन्नं धत्तेऽन्नमत्ति ॥ २८ ॥**

यदेतज्जराबोधीयं साम तदन्नं वै जीर्य्यमाणावस्थायामनेन हि बोध उत्पाद्यते । येषां गायत्री 'ये सोमासः परावती'त्याद्या तत् मुखं प्रजापतेर्मुखाद्धि सा पूर्वं दृश्यते । तथा च गायत्र्यां जराबोधीयस्य गानात् मुखे आस्य एव तत् अन्नं धत्ते धारयति । यस्मादेवं तस्मादेतेन साम्ना स्तुवन्नन्नमत्ति लब्धान्नः सन् भोक्तृत्वं लभत इत्यर्थः ॥२८॥

एतद्वेदनफलमाह—

**अन्नादो भवति य एवं वेद ॥२९॥**

स्पष्टोऽर्थः ॥ २९ ॥

अथैतद्गायत्रीषु स्तवनमनूद्य प्रकारान्तरेण स्तौति—

**गायत्रीषु स्तुवन्ति प्रतिष्ठायै ब्रह्मवर्चसाय येनैव प्राणेन प्रयन्ति तमभ्युद्यन्ति ॥ ३० ॥**

सिद्धमेतत् ॥ ३० ॥

जराबोधीयस्याऽवसाने औ इडेत्याम्नायते । तमनूद्य स्तुवन् स्तोत्रमुपसंहरति—

**इडान्ताः पावमाना भवन्ति पशवो वा इडाः पशवश्छन्दोमाः पशुष्वेव तत्पशून्दधाति स्तोमः ॥ ३१ ॥**

पवमानार्भवावसाने जराबोधीयेन प्रयन्ति । सिद्धमेतत्। जराबोधीयगाने पवमानान्ताः पवमानाः स्तोत्राणि इडान्ताः इडावसानानि भवन्ति । किं ततो भवति ? उच्यते—पशवो वै इडारूपाः पशवः खलु । छन्दोमाश्च पशवश्च । तत्तथा सति पशुष्वेव पशून्दधाति अभिवृध्यर्थम् । एवं गायत्रादिषु जराबोधीयान्तेष्वष्टसु सामसु तृचे गीयमानेषु चतुर्विंशतिः स्तोत्रीया भवन्ति । तदात्मकश्चतुर्विंशः स्तोमोऽस्याऽऽर्भवपवमानस्य कार्य्य इत्यर्थः ॥ ३१ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे चतुर्दशाध्यायस्य पञ्चमः खण्डः ॥

## अथ षष्ठः खण्डः ॥

अथ प्राकृतमेवाऽग्निष्टोममभिप्रेत्य उपरितनानामुक्थस्तोत्राणां प्रथमस्य स्तोत्रीयं तृचमाह—

**(१)"आ ते वत्सो मनो यमदि"त्यपच्छिदिव वा एतद्यज्ञकाण्डं यदुक्थानि यदेति सलोमत्वायैव ॥ १ ॥**

उक्थानि स्तोत्राणीति यत् एतत् यज्ञकाण्डं यज्ञभागः अपाछिदिव वै अपाछिन्नमिव भग्नमिव भवति। तत्र प्रथमे उक्थस्तोत्रे 'आ ते वत्स' इत्ययं स्तोत्रीयस्तृचो भवतीति। आ इति योऽयमुपसर्गः आभिमुख्यवाची 'आ ते वत्स' इत्यादिकः, सोऽयमुक्थानां सलोमत्वाय भवति पूर्वैः स्तोत्रैः सलोम्याय सन्तानाय भवतीत्यर्थः ॥ १ ॥

अथ द्वितीयस्योक्थस्य स्तोत्रीयं तृचं दर्शयति—

**(२)"त्वं न इन्द्राऽऽभरे"ति पूर्णाः ककुभः ॥ २ ॥**

'त्वं न इन्द्रे' त्याद्याः पूर्णाः अक्षरैकन्यूनाः ककुभः ककुप्छन्दस्काः ब्रह्मण उक्थस्य स्तोत्रीया भवन्ति। अभितोऽष्टाक्षरौ पादौ मध्ये द्वादशाक्षर इति ककुभो लक्षणम् ॥ २ ॥

अथैतासां पूर्णत्वे कनीयसस्स्तोमस्य करणे अह्नो यत् अपभ्रंशनं तत्परिहारार्थं स्तौति—

**अपभ्रꣳश इव वा एष यज्ज्यायसः स्तोमात्कनीयांसꣳस्तोममुपयन्ति यदेताः पूर्णाः ककुभो भवन्त्यनपभ्रꣳशाय ॥ ३ ॥**

---

१. आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात्।
अग्ने त्वां कामये गिरा ॥ १ ॥
पुरुत्रा हि सदृङ्ङसि दिशो विश्वा अनु प्रभुः। समत्सु त्वा हवामहे ॥ २ ॥
समत्स्वग्निमवसे वाजयन्तो हवामहे। वाजेषु चित्रराधसम् ॥ ३ ॥
सा. सं. उ. ४. २. १२.

२. त्वं न इन्द्राऽऽभर ओजो नृम्णं शतक्रतो विचर्षणे। आ वीरं पृतनासहम् ॥१॥
त्वं हि नः पिता वसो त्वं माता शतक्रतो बभूविथ। अथा ते सुम्नमीमहे ॥२॥
त्वां शुष्मन्पुरुहूत वाजयन्तमुप ब्रुवे सहस्कृत। स नो रास्व सुवीर्यम् ॥ ३ ॥
सा. सं. उ. ४. २. १३.

सिद्धमेतत् ॥ ३ ॥

अथ तृतीयस्योक्थस्य स्तोत्रीयं तृचं दर्शयति—

(१)"यदिन्द्र चित्रं म इह नाऽस्ति त्वादातमद्रिवः राधस्तन्नो विदद्वस उभया हस्त्याभरे"ति रयिमेवैतेनाऽवरुन्धे ॥ ४ ॥

'यदिन्द्र चित्रमि'ति तृचः अच्छावाकोक्थस्य स्तोत्रीयः। 'इह नास्ती' त्यादेरनुवादः स्तुत्यर्थः। तस्याऽयमर्थः—हे इन्द्र चित्रं चायनीयं मे मम इहाऽस्मिन्नेव स्थाने यद्धनं नाऽस्ति त्वादातं त्वया दातव्यम्। हे अद्रिवो वज्रिन् हे विदद्वसो लब्धधनेन्द्र तद्राधो धनं उभाभ्यां हस्ताभ्यां मह्यमाहरेति। एवं राधसः प्राप्तेः प्रतिपाद्यत्वात् एतेन स्तुवन् रयिं समृद्धिमेवाऽवरुन्धे यजमानो लभते ॥ ४ ॥

अथ प्रथमोक्थस्य साम विधत्ते—

वात्सं भवति ॥ ५ ॥

वत्सेन दृष्टं साम वात्सम्। तत् 'आ ते वत्स' इति तृचे गातव्यम् ॥५॥

अथैतदाख्यायिकया सर्वकामप्राप्तिसाधनमिति स्तौति—

वत्सश्च वै मेधातिथिश्च काण्वावास्तां तं वत्सं मेधातिथिराक्रोशदब्राह्मणोऽसि शूद्रापुत्र इति सोऽब्रवीदृतेनाऽग्निं व्ययाव यतरो नौ ब्रह्मीयानिति वात्सेन वत्सो व्यैन्मैधातिथेन मेधातिथिस्तस्य न लोम च नौषत्तद्वाव स तर्ह्यकामयत कामसनि साम वात्सं काममेवैतेनाऽवरुन्धे ॥ ६ ॥

वत्सश्च मेधातिथिश्च इमावृषी काण्वौ कण्वगोत्रौ आस्तां पुरा

---

१. यदिन्द्र चित्रं म इह नाऽस्ति त्वादातमद्रिवः।
राधस्तन्नो विदद्वस उभया हस्त्या भर ॥ १ ॥
यन्मन्यसे वरेण्यमिन्द्र द्युक्षं तदा भर।
विद्याम तस्य ते वयमकूपारस्य दावनः ॥ २ ॥
यत्ते दिक्षु प्रराध्यं मनो अस्ति श्रुतं बृहत्।
तेन दृढा चिदद्रिव आ वाजं दर्षि सातये ॥ ३ ॥

सा. सं. उ. ४. २. १४.

किलाऽभवताम् । तं वत्सं ऋषिं मेधातिथिराक्रोशत् अश्लीलया वाचा पर्य्यवदत् । हे वत्स त्वं अब्राह्मणो ब्राह्मण्यरहितोऽसि शूद्रापुत्रः शूद्रायाः पुत्रः अशूद्रापुत्रोऽपि शूद्रापुत्र इत्याक्रोश्यते । (१)'षष्ठ्या आक्रोश' इति विहितस्य लुकः(२)'पुत्रेऽन्यतरस्यामि'ति विकल्पनादभावः । एवमाकुश्यमाणः स वत्सोऽब्रवीत् । ऋतेन सत्यभूतेन मन्त्रेणाऽग्निं व्ययाव आवां विशेषेण गच्छावःप्रविशाव इत्यर्थः । नावावयोर्मध्ये यतरो यो ब्रह्मीयान् ब्राह्मिष्ठ इति निर्णेतुम् । एवमुक्त्वा वत्सो वात्सेनाऽनेन साम्ना व्यैत् व्यगच्छदग्निं प्राविशत्, मेधातिथेन साम्ना मेधातिथिः । तस्य वत्सस्य लोम च नौषत् अग्निर्नाऽदहत् । उष दाह इति धातुः । तर्हि तस्मिन् समये तत् अदहनं स खलु ऋषिः अकामयत । तस्माद्वात्सं साम कामप्रदम् । गतमन्यत् ॥ ६ ॥

अथ द्वितीयस्योक्थस्य साम विधत्ते—

**सौश्रवसं भवति ॥ ७ ॥**

सुश्रवसः सम्बन्धि सौश्रवसम् । एतदाख्यं साम 'त्वं न इन्द्राभरे'ति तृचे गातव्यम् ॥ ७ ॥

इदमपि सर्वकामप्राप्तिसाधनमिति प्रशंसितुमाख्यायिकामाह—

**उपगुर्वै सौश्रवसः कुत्सस्यौरवस्य पुरोहित आसीत् स कुत्सः पर्य्यशपद्य इन्द्रं यजाता इति स इन्द्रः सुश्रवसमुपेत्याऽब्रवीद्यजस्व माशनायामिवा इति तमयजत स इन्द्रः पुरोडाशहस्तः कुत्समुपेत्याऽब्रवीदयक्षत मा क्व ते परिशसमभूदिति कस्त्वा यष्टेति सुश्रवा इति स कुत्स औरव उपागाः सौश्रवसस्योद्गायत औदुम्बर्य्या शिरोऽच्छिनत्स शुश्रवा इन्द्रमब्रवीत्त्वत्तनाद्वै मेदमीदृगुपागादिति तमेतेन साम्ना समैरयत्तस्माव स तर्ह्यकामयत कामसनि साम सौश्रवसं काममेवैतेनाऽवरुन्धे ॥ ८ ॥**

सौश्रवसः सुश्रवसः पुत्र उपगुर्नाम ऋषिः औरवस्य उरुपुत्रस्य कुत्सस्य राजर्षेः पुरोहित आसीत् । स च कुत्सः प्रद्वेषेण पर्य्यशपत् यो यजमान इन्द्रं यजाता इति यजेत । अपरिपूर्णार्थत्वात् तस्य शिर-

१. पा. सू. ६. ३. २१. २. पा सू. ६. ३. २२.

छिन्द्यादिति अध्याहारेण योज्यम्। एवं शापे कृते सामर्थ्यप्रकटनाय स इन्द्रः पुरोडाशहस्तः सुश्रवसा दत्तं पुरोडाशं हस्ते धारयन् कुत्समुपगम्याऽब्रवीत्—मामयक्षत इष्टवान्। तव क परिशप्तं परिशापः कुत्स अभूदिति। एवमिन्द्रेणाऽधिक्षिप्ते अत्र पुनरब्रवीत्—को यजमानः त्वामिष्टवानिति। सुश्रवा इतीन्द्रोऽब्रवीत्। स और्वः कुत्सः सौश्रवसस्य सुश्रवसः पुत्रस्य उपगोः उद्गायतः सदस्युद्गानं कुर्वतः शिरः औदुम्बर्या सदसि निखातया औदुम्बराख्यया स्थूणया अछिनत् छिन्नवान्। स सुश्रवा इन्द्रमब्रवीत् त्वत्तनात् यजमानात् खलु ईदृगेवंविधमिदमप्राप्तोदिति। तं छिन्नं सौश्रवसं एतेन साम्ना समैरयत् सङ्गतावयवमकरोत्॥ ८॥

अथ तृतीयस्योक्थस्य साम विधत्ते—

वीङ्कं भवति॥ ९॥

वीङ्काख्यं साम 'यदिन्द्र चित्रे'ति तृचे गातव्यम्॥ ९॥

तदेतदाख्यायिकया पूर्ववत् स्तौति—

च्यवनो वै दाधीचोऽश्विनोः प्रिय आसीत्सोऽजीर्यत्तमेतेन साम्नाऽप्सु व्यैङ्कयतां तं पुनर्युवानमकुरुतां तद्वाव तौ तर्ह्यकामयेतां कामसनि साम वीङ्कं काममेवैतेनाऽवरुन्धे॥ १०॥

दाधीचो दधीचः पुत्रः च्यवनो नाम ऋषिः अश्विनोरश्विदेवतयोः प्रिय इष्टतमः स्तोताऽऽसीत्। स च्यवनोऽजीर्यत् जीर्णावयवोऽभूत्। तं जीर्णमेतेन वीङ्केन साम्ना अप्सूदकेषु व्यैङ्कयतां अश्विनौ व्यचलयतां अमृजीतामित्यर्थः। ततस्तं पुनर्युवानमकुरुतां यौवनावस्थां प्रापयताम्। शिष्टं सिद्धम्॥ १०॥

अथ पूर्ववदेषूक्थेषु स्तोत्रीयेषु स्तोमक्लृप्तिं विधत्ते—

चतुर्विंश एव स्तोमो भवति तेजसे ब्रह्मवर्चसाय॥

चतुर्विंशतिभिः स्तोत्रीयाभिर्निष्पाद्यस्तोमश्चतुर्विंश एवोक्थानां स्तोमो भवति। स चतुर्विंशतिसंख्याद्वारा गायत्रीसम्बन्धात् गायत्र्याश्च अग्निना सहोत्पत्तेः तेजसे ब्रह्मवर्चसाय भवति। तेजः शरीरकान्तिः। ब्रह्मवर्चसं श्रुताध्ययनादिजन्यं ब्राह्मं तेजः॥ ११॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे चतुर्दशाध्यायस्य षष्ठः खण्डः॥

## अथ सप्तमः खण्डः ॥

एवं दाशरात्रिकस्य सप्तमस्याऽह्नः स्तोमक्लृप्तिरुक्ता । अथाऽष्टमस्याऽह्नः स्तोमक्लृप्तिराध्यायपरिसमाप्तेः प्रतिपाद्यते । तत्र बहिष्पवमानस्य स्तोत्रीयाख्यं प्रथमं तृचं दर्शयति—

**(१)"शिशुञ्जज्ञानꣳ हर्यतं मृजन्ती"त्यष्टमस्याऽह्नः प्रतिद्भवति ॥ १ ॥**

प्रतिपद्यते प्रारभ्यतेऽनयेति प्रतिपत् । सा चाऽष्टमस्य चतुश्चत्वारिंशस्तोमकस्याऽह्नः 'शिशुं जज्ञानमि'त्येषा भवति । इदमादिको बहिष्पवमाने प्रथमस्तृच इत्यर्थः । (२)'तृचसूक्तानामादिग्रहणेन विधिरनादेश' इति परिभाषितत्वात् ॥ १ ॥

अथाऽस्य तृचस्याऽष्टमेऽहनि साङ्गत्यं स्तौति—

**शिशुरिव वा एष सप्तमेनाऽह्ना जायते तमष्टमेनाऽह्ना मृजन्ति ॥ २ ॥**

एषः स्तोमः शिशुरिव वै बालः पुत्र इव । सोऽयं सप्तमेनाऽनुष्ठितेनाऽह्नः जायते उत्पद्यते । तं जातं शिशुं अष्टमेन अष्टसंख्यापूरकेणाऽनेन क्रियमाणेनाऽह्ना मृजन्ति हस्तैः संमृजन्ति । जन्मनि हि शिशुः उल्वेन प्रावृतो मलाश्लिष्टो भवति । यथा उष्णोदकादिना प्रक्षाल्य संमृज्यते तद्वत् । तस्मादष्टमेऽहनि 'शिशुञ्जज्ञानं हर्यतं मृजन्ती'ति शिशुजन्ममार्ज्जनलिङ्गवांस्तृचस्सङ्गत इत्यर्थः ॥ २ ॥

अथाऽस्य स्तोत्रस्य स्तोत्रीयस्य सङ्गतिमनूद्य स्तौति—

**स्तोत्रीयस्तृचो भवति प्राणापानानामवरुद्ध्यै ॥ ३ ॥**

---

१. शिशुं जज्ञानं हर्यतं मृजन्ति शुम्भन्ति विप्रं मरुतो गणेन ।
कविर्गीर्भिः काव्येन कविः सन्त्सोमः पवित्रमत्येति रेभन् ॥ १ ॥
ऋषिमना य ऋषिकृत्स्वर्षाः सहस्रनीथः पदवीः कवीनाम् ।
तृतीयं धाम महिषः सिषासन्त्सोमो विराजमनु राजति ष्टुप् ॥ २ ॥
चमूषच्छ्येनः शकुनो विभृत्वा गोविन्दुर्द्रप्स आयुधानि बिभ्रत् ।
अपामूर्मिं सचमानः समुद्रं तुरीयं धाम महिषो विवक्ति ॥ ३ ॥
सा. सं. उ. ५. १. १.

२. लाट्या. श्रौ ६. ३. १.

गतमेतत् ॥ ३ ॥

त्रिवृदादीनां स्तोमानां गायत्र्यादिच्छन्दसां षडहे समाप्तत्वात् विनियुक्तैः स्तोमैः छन्दोमानां त्रयाणामह्नां कल्पेन यातयामत्वं स्यादित्यत आह—

**हरिवत्यो भवन्ति छन्दोमानामयातयामतायै ॥ ४ ॥**

हरिवत्यो हरिवच्छब्दयुक्ताः 'शिशुञ्जज्ञानमि'त्याद्याः। गतमन्यत्॥४॥

अथ स्तोत्रीयतृचानन्तरं क्रमेण नवर्चत्रितयं विधत्ते—

**नवर्चा भवन्ति ॥ ५ ॥**

नवानामृचां समाहारो नवर्चः। (१)'एते सोमा अभी'त्येकः। (२)'सो·

---

१. एते सोमा अभि प्रियमिन्द्रस्य काममक्षरन्। वर्धन्तो अस्य वीर्यम् ॥ १ ॥
पुनानासश्चमूषदो गच्छन्तो वायुमश्विना। ते नो धत्त सुवीर्यम् ॥ २ ॥
इन्द्रस्य सोम राधसे पुनानो हार्दि चोदय। देवानां योनिमासदम् ॥ ३ ॥
मृजन्ति त्वा दश क्षिपो हिन्वन्ति सप्त धीतयः। अनु विप्रा अमादिषुः ॥ ४ ॥
देवेभ्यस्त्वा मदाय कं सृजानमति मेष्यः। सं गोभिर्वासयामसि ॥ ५ ॥
पुनानः कलशेष्वा वस्त्राण्यरुषो हरिः। परि गव्यान्यव्यत ॥ ६ ॥
मघोन आ पवस्व नो जहि विश्वा अप द्विषः। इन्दो सखायमा विश ॥ ७ ॥
नृचक्षसं त्वा वयमिन्द्रपीतं स्वर्विदम्। भक्षीमहि प्रजामिषम् ॥ ८ ॥
वृष्टिं दिवः परिस्रव द्युम्नं पृथिव्या अधि। सहो नः सोम पृत्सुधाः ॥ ९ ॥
सा. सं. उ. ५ १. २.

२. सोमः पुनानो अर्षति सहस्रधारो अत्यविः। वायोरिन्द्रस्य निष्कृतम् ॥ १ ॥
पवमानमवस्यवो विप्रमभि प्र गायत। सुष्वाणं देववीतये ॥ २ ॥
पवन्ते वाजसातये सोमास्सहस्रपाजसः। गृणाना देववीतये ॥ ३ ॥
उत नो वाजसातये पवस्व बृहतीरिषः। द्युमदिन्दो सुवीर्यम् ॥ ४ ॥
अत्या हियाना न हेतृभिरसृग्रं वाजसातये। विवारमव्यमाशवः ॥ ५ ॥
ते नस्सहस्रिणं रयिं पवन्तामा सुवीर्यम्। स्वाना देवास इन्दवः ॥ ६ ॥
वाश्रा अर्षन्तीन्दवोऽभि वत्सं न मातरः। दधन्विरे गभस्त्योः ॥ ७ ॥
जुष्ट इन्द्राय मत्सरः पवमानः कनिक्रदत्। विश्वा अप द्विषो जहि ॥ ८ ॥
अपघ्नन्तो अराव्णः पवमानाः स्वर्दृशः। योनावृतस्य सीदत ॥ ९ ॥
सा. सं. उ. ५. १. ३.

मः पुनान' इत्येकः। (१)'सोमा असृग्रमिन्दव' इत्यपरः। एते त्रयो नवर्चाः स्तोत्रीया तृचानन्तरं क्रमेण भवन्ति ॥ ५ ॥

अत्रत्यां नवसंख्यां स्तौति—

**नव वै प्राणाः पशवश्छन्दोमाः पशुष्वेव तत्प्राणान्दधाति ॥ ६ ॥**

सप्त शीर्षण्याः प्राणाः द्वाववाञ्चौ। एवं पुरुषे नवैव खलु प्राणा भवन्ति। छन्दोमाः गायत्र्यादिभिः छन्दोभिर्मीयमानाः सप्तमादीनि त्रीण्यहानि। पशव एवम्। तत्तथा सति नवर्चानां करणेन पशुष्वेव नवसंख्यान् प्राणान् दधाति ॥ ६ ॥

अथ पञ्चर्चं विधाय स्तौति—

**पञ्चर्चो भवति पञ्चपदा पङ्क्तिः पाङ्क्तमन्नमन्नाद्यस्याऽवरुद्ध्यै ॥ ७ ॥**

(२)'उत्ते शुष्मास' इत्याद्याः पञ्चर्चः पञ्चानामृचां समाहारो

---

१. सोमा असृग्रमिन्दवः सुता ऋतस्य धारया। इन्द्राय मधुमत्तमाः ॥ १ ॥
अभि विप्रा अनूषत गावो वत्सं न धेनवः। इन्द्रं सोमस्य पीतये ॥ २ ॥
मदच्युत्क्षेति सादने सिन्धोरूर्मा विपश्चित्। सोमो गौरी अधिश्रितः ॥ ३ ॥
दिवो नाभा विचक्षणोऽव्या वारे महीयते। सोमो यः सुक्रतुः कविः ॥ ४ ॥
यस्सोमः कलशेष्वा अन्तः पवित्र आहितः। तमिन्दुः परिषस्वजे ॥ ५ ॥
प्रवाचमिन्दुरिष्यति समुद्रस्याऽधि विष्टपि। जिन्वन् कोशं मधुश्च्युतम् ॥ ६ ॥
नित्यस्तोत्रो वनस्पतिर्धेनामन्तः सबर्दुघाम्। हिन्वानो मानुषा युजा ॥ ७ ॥
आ पवमान धारय रयिं सहस्रवर्चसम्। अस्मे इन्दो स्वाभुवम् ॥ ८ ॥
अभि प्रिया दिवः कविर्विप्रः स धारया सुतः। सोमो हिन्वे परावति ॥ ९ ॥
सा. सं. उ. ५. १. ४.

२. उत्ते शुष्मास ईरते सिन्धोरूर्मेरिव स्वनः। बाणस्य चोदय पविम् ॥ १ ॥
प्रसवे त उदीरते तिस्रो वाचो मखस्युवः। यदव्य एषि सानवि ॥ २ ॥
अव्या वारैः परि प्रियं हरिं हिन्वन्त्यद्रिभिः। पवमानं मधुश्चुतम् ॥ ३ ॥
आ पवस्व मदिन्तम पवित्रं धारया कवे। अर्कस्य योनिमासदम् ॥ ४ ॥
स पवस्व मदिन्तम गोभिरञ्जानो अक्तुभिः। ऐन्द्रस्य जठरं विश ॥ ५ ॥
सा. सं. उ. ५. १. ५.

भवति । अनया पञ्चसंख्यया अन्नप्राप्तिमुपपादयति 'पञ्चपदा पङ्क्तिरि' त्यादिना ॥ ७ ॥

अस्मिन् पञ्चर्चे विद्यमानं किञ्चिल्लिङ्गं प्रदर्श्य अष्टमेनाऽह्ना सङ्गतिमाह—

**बाणवान् भवत्यन्तो वै बाणोऽन्त एतदष्टममहरन्त एव तदन्तेन स्तुवते प्रतिष्ठायै ॥ ८ ॥**

पूर्वोक्तः पञ्चर्चो बाणवान् बाणशब्दयुक्तो भवति । बाणः शततन्त्रीको वीणाविशेषः । स चाऽन्तो वै वाद्यानां पर्य्यवसानभूमिरेव । बाणस्य वादने या परिमितिः तद्वाचकः शब्दोऽस्मिन् पञ्चर्चे दृश्यते । अह्नां पूर्वं प्रयुक्तानामेतदष्टममहरन्तः । तत्तथा सति अन्त एव अन्तेन स्तुवन्त उद्गातारः । अतस्तत्संस्तुतेऽहनि अन्तस्संस्तुतबाणशब्दयुक्तस्य पञ्चर्चस्य करणं प्रतिष्ठायै यजमानस्य प्रतिष्ठानाय भवति अन्तत्वसाम्येन संश्लिष्टत्वात् ॥ ८ ॥

अथ तृचत्रयं विधत्ते—

**त्रयस्तृचा भवन्ति प्राणापानानां सन्तत्यै ॥ ९ ॥**

तिसृणामृचां समाहारस्तृचः । पञ्चर्चानन्तरं (१)'अया वीती परि स्रुव' (२)'अपघ्नन् पवते' (३)'अया पवस्व धारये'त्याद्यास्त्रयस्तृचा भवन्ति । तथा च नवसंख्योपपत्तेः प्राणापानानामुपरि वर्त्तमानाश्च-

---

१. अया वीती परि स्रुव यस्त इन्द्रो मदेष्वा । अवाहन्नवतीर्नव ॥ १ ॥
पुरस्सद्य इत्थाधिये दिवोदासाय शम्बरम् । अध त्यं तुर्वशं यदुम् ॥ २ ॥
परि नो अश्वमश्वविद्गोमदिन्दो हिरण्यवत् । क्षरा सहस्रिणीरिषः ॥ ३ ॥
सा. सं. उ. ५. १. ६.

२. अपघ्नन् पवते मृधोऽप सोमो अराव्णः । गच्छन्निन्द्रस्य निष्कृतम् ॥ १ ॥
महो नो राय आ भर पवमान जही मृधः । रास्वेन्दो वीरवद्यशः ॥ २ ॥
न त्वा शतं च न ह्रुतो राधो दित्सन्तमा मिनन् । यत्पुनानो मखस्यसे ॥३॥
सा. सं. उ. ५. १. ७.

३. अया पवस्व धारया यया सूर्यमरोचयः । हिन्वानो मानुषीरपः ॥ १ ॥
अयुक्त सूर एतशं पवमानो मनावधि । अन्तरिक्षेण यातवे ॥ २ ॥
उत त्या हरितो रथे सूरो अयुक्त यातवे । इन्दुरिन्द्र इति ब्रुवन् ॥ ३ ॥
सा. सं. उ. ५. १. ८.

क्षुश्श्रोत्राद्याः प्राणा अधोवर्त्तमानैर्गुदोपस्थापानैस्संहतानामेषां नवानां प्राणापानानां सन्तत्यै सन्तानाय भवन्ति ॥ ९ ॥

अथाऽस्य बहिष्पवमानस्तोत्रस्य स्तोमं विधाय स्तौति—

**चतुश्चत्वारिंᳪश एव स्तोमो भवत्योजस्येव तद्वी-र्य्ये प्रतितिष्ठत्योजोवीर्य्यं त्रिष्टुप् ॥ १० ॥**

प्रथमत एकस्तृचः, ततस्त्रयो नवर्च्चाः। अथैकः पञ्चर्चः, ततस्त्रयस्तृचा इत्येवं क्रमेण प्रयुज्यमानाश्चतुश्चत्वारिंशत्स्तोत्रीया भवन्ति। तत्सङ्खातात्मकस्य चतुश्चत्वारिंशस्तोम एवाऽस्य बहिष्पवमानस्य भवति। तत्तेन स्तोमेन ओजोरूप एव वीर्य्ये प्रतितिष्ठति यजमानः प्रतिष्ठितो भवति। कुत एतत्? यस्मादोजोवीर्य्यात्मकं त्रिष्टुप्छन्दः तद्धि वीर्य्यवतः प्राजापत्यादङ्गादुत्पन्नम्। सा च त्रिष्टुप् चतुश्चत्वारिंशदक्षरा भवति। तत् संख्यया मीयमानश्चतुश्चत्वारिंशस्तोमोऽपि ओजोवीर्य्यहेतुरित्यर्थः ॥ १० ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्य्यविरचिते माधवीये वेदार्थ-प्रकाशे चतुर्द्दशाध्यायस्य सप्तमः खण्डः ॥

## अथ अष्टमः खण्डः ॥

अथाऽस्मिन्नष्टमेऽहनि प्रथममाज्यस्तोत्रं दर्शयति—

**(१)"अग्निं वो देवमग्निभिः सजोषा" इत्याग्नेय-माज्यं भवति ॥ १ ॥**

"अग्निं वो देवमि"ति तृचः आग्नेयमग्निदेवत्यं प्रथममाज्यस्तोत्रं भवति ॥ १ ॥

१. अग्निं वो देवमग्निभिस्सजोषा यजिष्ठं दूतमध्वरे कृणुध्वम्।
यो मर्त्येषु नि ध्रुविर्ऋतावा तपुर्मूर्धा घृतान्नः पावकः ॥ १ ॥
प्रोथदश्वो न यवसेऽविष्यन्यदा महः संवरणाद्व्यस्थात्।
आदस्य वातो अनु वाति शोचिरध स्म ते व्रजनं कृष्णमस्ति ॥ २ ॥
उद्यस्य ते नवजातस्य वृष्णोऽग्ने चरन्त्यजरा इधानाः।
अच्छा द्यामरुषो धूम एषि सं दूतो अग्न ईयसे हि देवान् ॥ ३ ॥
सा. सं. उ. ५. १. ९.

अथैनं तृचं स्तौति—

**अग्निभिरित्येव पूर्वाण्यहानि अग्नि समिद्धान्यष्ट-ममहरभिसमिन्धे ॥ २ ॥**

एतत् तृचगतेनाऽग्निभिरिति बहुवचनान्तेनाऽग्निशब्देनैव पूर्वाण्यनुष्ठितानि सप्तसंख्याकान्यहानि समिद्धानि सन्दीपितानि। अथ 'अग्नि व' इत्येकवचनान्तेन अग्निशब्देनाऽष्टममहरभिसमिन्धे पूर्वाण्यक्षराण्यभिलक्ष्य सम्यग्दीप्तं करोति ॥ २ ॥

अथ द्वितीयमाज्यस्तोत्रं दर्शयति—

**(१)"मित्रं वयᳪ हवामह" इति बार्हतं मैत्रावरुणम् ॥३॥**

'मित्रं वयमि'ति तृचे बार्हतं बृहत्साम्ना सम्बद्धं बृहत्पृष्ठके द्वितीयेऽहनि अस्य तृचस्याऽऽज्यस्तोत्रत्वेन विधानात् तत्सम्बद्धं मैत्रावरुणं मित्रावरुणदेवताकं अष्टमेऽहनि द्वितीयमाज्यस्तोत्रं भवति ॥३॥

यद्येवं विनियुक्तविनियोगलक्षणो दोषः स्यादित्यत आह—

**उग्रगाधमिव वा एतच्छन्दोमास्तद्यथाऽत उग्रगाधे व्यतिषज्य गाहन्त एवमेवैतद्रूपे व्यतिषजति छन्दोमानामसंव्याथाय ॥ ४ ॥**

यत् छन्दोमा एतदुग्रगाधमिव वै। यथा वेगयुक्तो नदीप्रवाहः उग्रगाधः उग्र उद्गूर्णस्तीक्ष्णो गाधः अवस्थानं यस्य स तथोक्तः दुरवगाह इत्यर्थः। एवमेव छन्दोमत्रितयमपि उग्रगाधं दुरवगाहम्। तत् तथा सति अतः अस्मात्कारणात् उग्रगाधे वेगवत्प्रवाहे दुरवगाहप्रदेशे यथा पुरुषाः परस्परं व्यतिषज्य हस्तानवलम्ब्य गाहन्ते अवगाहन्ते वेगवत्प्रवाहमुत्तरन्ति, एवमेवैतद्रूपे 'अग्नि वो देवमि'ति वैकृतं 'मित्रं वयं हवामह' इति प्राकृतं एते रूपे व्यतिषजति व्यतिषक्ते संश्लिष्टे करोति छन्दोमानामसंव्याथाय संव्याथः सञ्चलनं अन्यथाऽनुष्ठानं तदभावाय पारप्राप्त्या इत्यर्थः ॥ ४ ॥

---

१. मित्रं वयं हवामहे वरुणं सोमपीतये। या जाता पूतदक्षसा ॥ १ ॥
ऋतेन यावृतावृधावृतस्य ज्योतिषस्पती। ता मित्रावरुणा हुवे ॥ २ ॥
वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः। करतां नस्सुराधसः ॥ ३ ॥
सा० सं. उ. २. १. ७.

अथ तृतीयमाज्यस्तोत्रं दर्शयति—

(१)"तमिन्द्रं वाजयामसी"त्यैन्द्रम् ॥ ५ ॥

'तमिन्द्रं वाजयामसी'ति तृचः ऐन्द्रं इन्द्रदेवत्यं तृतीयमाज्यस्तोत्रं भवति ॥ ५ ॥

अथैतत् स्तौति—

**अष्टमेन वै देवा अहेन्द्रमवाजयन्नवमेन पाप्मानम-घ्नन्नहरेवैतेन वाजयन्ति ॥ ६ ॥**

अष्टमेन अष्टसंख्यापूरकेणाऽनेन खल्वह्ना देवाः पुरेन्द्रमवाजयन् बलवन्तमकुर्वन्। नवमेनाऽह्ना पाप्मानं पापरूपमसुरं अहिंसिषन्। एवञ्च 'तमिन्द्रं वाजयामसी'ति वाजयतिधातुयुक्तेनैतेन तृचेन अहरेव वाजयन्ति कुर्वन्ति बलवन्तमुद्गातारः ॥ ६ ॥

अथ चतुर्थमाज्यस्तोत्रं दर्शयति—

(२)"इन्द्रे अग्ना नमो बृहदि"ति बार्हतमैन्द्राग्नम् ॥७॥

'इन्द्रे अग्ना' इति बार्हतं बार्हते द्वितीयेऽहनि विनियुक्तत्वात् बृहता सम्बद्धं ऐन्द्राग्नमिन्द्राग्निदेवताकं चतुर्थमाज्यस्तोत्रं भवति ॥७॥

अत्राऽपि पूर्ववद्विनियुक्तविनियोगदोषमाशङ्क्य समाधत्ते—

**उग्रगाधमिव वा एतद्यच्छन्दोमास्तद्यथाऽप्त उग्रगाधे व्यतिषज्य गाहन्त एवमेवैतद्रूपे व्यतिषजति छन्दोमा-नामसंव्यथाय स्तोमः ॥ ८ ॥**

---

१. तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे। स वृषा वृषभो भुवत् ॥ १ ॥
इन्द्रस्स दामने कृत ओजिष्ठस्स बले हितः। द्युम्नी श्लोकी स सोम्यः ॥ २ ॥
गिरा वज्रो न सम्भृतः सबलोऽनपच्युतः। ववक्ष उग्रो अस्तृतः ॥ ३ ॥
सा. सं. उ. ५. १. १०.

२. इन्द्रे अग्ना नमो बृहत्सुवृक्तिमेरयामहे। धिया धेना अवस्यवः ॥ १ ॥
ता हि शश्वन्त ईडत इत्था विप्रास ऊतये। सबाधो वाजसातये ॥ २ ॥
ता वां गीर्भिर्विपन्युवः प्रयस्वन्तो हवामहे। मेधसाता सनिष्यवः ॥ ३ ॥
सा. सं. उ. २. १. ६.

अत्र 'तमिन्द्रं वाजयामसी'ति वैकृतं रूपम् । अन्यत्सर्वं पूर्ववद्योज्यम् । एतेषु चतुर्ष्वाज्यस्तोत्रेषु पूर्वोक्तश्चतुश्चत्वारिंश एव स्तोमः कार्य्यः । एवं प्रातस्सवनिकेषु पञ्चसु स्तोत्रेषु स्तोत्रीया विहिताः । तासु प्राकृतमेव गायत्रं साम गातव्यमिति द्रष्टव्यम् ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ प्रकाशे चतुर्दशाध्यायस्य अष्टमः खण्डः ॥

## अथ नवमः खण्डः ॥

अथाऽस्मिन्नष्टमेऽहनि माध्यन्दिनपवमानस्य स्तोमक्लृप्तिं विधित्सुस्स्तोत्रीयामृचं दर्शयति—

**(१)"अध्वर्यो अद्रिभिः सुतमि"ति गायत्री भवत्यह्नो धृत्यै ॥ १ ॥**

'अध्वर्यो अद्रिभिरि'ति गायत्री माध्यन्दिनपवमानस्य प्रतिपद्भवति गायत्रः प्रथमस्तृचो भवतीत्यर्थः । स चाऽष्टमस्याऽह्नो धृत्यै धारणाय स्थैर्य्याय भवति । अद्रिभिरिति लिङ्गात् । अद्रयो हि लोके दृढहेतुतया प्रसिद्धाः ॥ १ ॥

नन्वयं त्रिरात्रः त्रिष्टुप्प्रायत्वात् त्रैष्टुभः । तत्र कथं गायत्रस्य तृचस्य सङ्गतिरित्यत आह—

**गायत्र्यः सत्यस्त्रिष्टुभोरूपेण त्रैष्टुभꣳ ह्येतदहः ॥ २ ॥**

इन्द्रशब्दो मरुच्छब्दश्चाऽस्मिन्नेव तृचे दृश्यते । तत् त्रैष्टुभं रूपम् । गतमन्यत् ॥ २ ॥

---

१. अध्वर्यो अद्रिभिस्सुतं सोमं पवित्र आनय । पुनाहीन्द्राय पातवे ॥ १ ॥
तव त्य इन्दो अन्धसो देवा मधोर्व्याशत । पवमानस्य मरुतः ॥ २ ॥
दिवः पीयूषमुत्तमं सोममिन्द्राय वज्रिणे । सुनोता मधुमत्तमम् ॥ ३ ॥
सा. सं. उ. ५. १. ११

अथाऽपरं तृचं विधत्ते—

(१)"अभि सोमास आयव" इत्यभीति रथन्तरस्य रूपं बृहदिति बृहत उभयोः सह रूपमुपैत्युभौ हि वर्णावेतदहः ॥ ३ ॥

'अभि सोमास आयव' इत्ययं तृचः। तत्र अभीत्यभिशब्दो रथन्तरस्य रूपम्, तद्योनौ 'अभि त्वा शूर' इति दृष्टत्वात्। बृहदिति बृहच्छब्दः बृहत्साम्नो रूपम्, तद्वाचकत्वात्। एवं च उभयोः बृहद्रथन्तरयो रूपं सहोपैति एकधोपगच्छति। कुतः? हि यस्मात् एतदहरुभौ वर्णौ उभयवर्णात्मकम् ॥ ३ ॥

अथाऽन्यं तृचं विधत्ते—

(२)"धर्त्ता दिवः पवते कृत्व्यो रस" इत्यधृत इव वा एषत्र्यहो यद्धर्त्तेति धृत्या एव ॥ ४ ॥

'धर्त्ता दिव' इति तृचः कार्यः। एष दशरात्रस्य तृतीयस्त्रिरात्रः अधृत इव वै अधारित इव शिथिल इव खलु। तस्मिंस्त्रिरात्रे मध्यमेऽहनि 'यद्धर्त्ते'ति पदयुक्तस्तृचः क्रियते। तत्तस्य त्रिरात्रस्य धृत्यै धारणाय दार्ढ्याय भवति ॥ ४ ॥

ननु प्रकृतौ माध्यन्दिनपवमानान्त्यस्तृचः त्रैष्टुभः। तत्र कथमसौ जागतस्तृचस्सङ्गत इति तत्राऽऽह—

जगत्यस्सत्यस्त्रिष्टुभो रूपेण तस्मात्त्रिष्टुभो लोके क्रियन्ते ॥ ५ ॥

सिद्धमेतत् ॥ ५ ॥

---

१. अभिसोमास आयवः पवन्ते मद्यं मदम्।
समुद्रस्याऽधि विष्टपे मनीषिणो मत्सरासः मदच्युतः ॥ १ ॥
तरत्समुद्रं पवमान ऊर्मिणा राजा देव ऋतं बृहत्।
अर्षा मित्रस्य वरुणस्य धर्मणा प्र हिन्वान ऋतं बृहत् ॥ २ ॥
नृभिर्येमाणो हर्यतो विचक्षणो राजा देवः समुद्र्यः ॥ ३ ॥
सा. सं. उ. २. २. ९.

२. धर्ता दिवः पवते कृत्व्यो रसो दक्षो देवानामनुमाद्यो नृभिः।
हरिस्सृजातो अत्यो न सत्वभिर्वृथा

'अध्वर्यो अद्रिभिरि'ति (पृ०११९) तृचे पूर्ववद्गायत्रं साम विधाय तद्ब्राह्मणञ्चाऽतिदिशति—

**गायत्रं भवति यदेव गायत्रस्य ब्राह्मणम् ॥ ६ ॥**

गतमेतत् ॥ ६ ॥

अथाऽस्मिन्नेव तृचे सामान्तरं विधत्ते—

**वैरूपं भवति ॥ ७ ॥**

'अध्वर्यो अद्रिभिरि'त्येतस्यां योन्यामुत्पन्नं साम वैरूपम् । तस्मिन्नेव 'अध्वर्यो अद्रिभि'रिति तृचे पुनरावृत्ते गातव्यम् ॥ ७ ॥

वैरूपं साम प्रशंसति—

**पशवो वै वैरूपं पशूनामवरुध्यै विरूपः संवत्सरो विरूपमन्नमन्नाद्यस्याऽवरुध्यै ॥ ८ ॥**

यदेतद्वैरूपं साम तत्पशवो वै । तस्मात्पशूनामवरोधायैतत् साम भवति । कथमस्य पशुरूपतेत्यत आह—'विरूपः संवत्सर' इति । वसन्ताद्यृतुभेदेन विरूपो विविधरूपो नानारूपः संवत्सरः । तत्सम्बन्धं वैरूपं साम । संवत्सरे च पूर्णे पशवः प्रजायन्त इति वैरूपस्य साम्नः पशुरूपत्वम् । अपि च विरूपं नानारूपमन्नम् । तत्सम्बन्धाद्वैरूपं साम । तदन्नाद्यस्य अत्तुं योग्यस्याऽन्नस्याऽवरोधाय भवति ॥ ८ ॥

अथैतस्मिन्नृचे सामान्तरं विधत्ते—

**आशु भार्गवं भवति ॥ ९ ॥**

भार्गवं भृगुणा दृष्टं आशु । एतदाख्यं साम 'अध्वर्यो अद्रिभिरि'-त्यस्मिन्नेव पुनरावृत्ते तृचे गातव्यम ॥ ९ ॥

अस्य साम्नो दृढहेतुतां ब्रुवन् तत्सामसंज्ञां निर्वक्ति—

**अहर्वा एतच्छ्लथित तद्देवा आशुनाऽभ्यधिन्वंस्तदाशोराशुत्वम् ॥ १० ॥**

---

पाजांसि कृणुषे नदीष्वा ॥ १ ॥

शूरो न धत्त आयुधा गभस्त्योः स्वाः सिषासन्नथिरो गविष्टिषु ।

इन्द्रस्य शुष्ममीरयन्नपस्युभिरिन्दुर्हिन्वानो अज्यते मनीषिभिः ॥ २ ॥

इन्द्रस्य सोम पवमान ऊर्मिणा तविष्यमाणो जठरेष्वा विश ।

प्र नः पिन्व विद्युदभ्रेव रोदसी धिया नो वाजां उपमाहि शश्वतः ॥ ३ ॥

सा. सं. उ. ५. १. १२.

एतदष्टममहः खलु पुरा अश्लीयत अशीर्यत । तस्मादष्टममहर्देवाः आशुना आशुसंज्ञेनाऽनेन साम्ना अभ्यभिन्वन् अदृढयन् व्याप्नुवन्नित्यर्थः । तस्मात् व्याप्तिसामर्थ्यात् आशोः एतत्संज्ञस्य साम्नः आशुत्वं आश्विति नाम सम्पन्नम् ॥ १० ॥

अथ सामान्तरं विधत्ते—

**मार्गीयवं भवति ॥ ११ ॥**

मार्गीयवाख्यं साम 'अध्वर्यो अद्रिभि'रिति तृचे पुनरावृत्ते गातव्यम् ॥ ११ ॥

तदेतत्पशुहेतुत्वेन स्तौति—

**देवं वा एतं मृगयुरिति वदन्त्येतेन वै स उभयेषां पशूनामाधिपत्यमाश्नुतोभयेषां पशूनामाधिपत्यमश्नुते मार्गीयवेण तुष्टुवानः ॥ १२ ॥**

एतं प्रसिद्धं देवं महादेवं मृगयुरिति वदन्ति कथयन्ति ऐतिहासिकाः । (१)मृगात्मना गच्छतीति मृगयुः किरातः । स हि महादेवः पुरा किरातरूपमास्थायाऽरण्ये चचारेति स मृगयुः महादेवः एतेन खलु साम्ना उभयेषां उभयविधानां ग्राम्यारण्यानां पशूनामाधिपत्यमाधिपतित्वं आश्नुत प्राप्नोत् । तस्मादद्यतनोऽपि मार्गीयवेण तुष्टुवानः स्तुवन् उभयेषां पशूनामाधिपत्यं प्राप्नोति ॥ १२ ॥

अथ सामान्तरं दर्शयति—

**सौमित्रं भवति ॥ १३ ॥**

सौमित्राख्यं साम अस्मिन्नेवाऽऽवृत्ते 'अध्वर्यो अद्रिभिरि'ति तृचे गातव्यम् ॥ १३ ॥

अथाऽस्य स्तावकं प्रागाम्नातं ब्राह्मणमतिदिशति—

**यदेव सौमित्रस्य ब्राह्मणम् ॥ १४ ॥**

यत्पञ्चमेऽहनि सौमित्रस्य साम्नः स्तावकं ब्राह्मणमाम्नातं (२)'दीर्घजिह्वी वा इदं रक्षो यज्ञहे'त्यादि तदेव ब्राह्मणमस्याऽपि सौमित्रस्य शेषत्वेन द्रष्टव्यम् ॥ १४ ॥

---

१. मृगानात्मना इच्छतीति ग. पु. २. तां ब्रा. १३. ६. ९.

अथ सामान्तरं दर्शयति—

**ऐटतं भवति ॥ १५ ॥**

एतदपि साम आवृत्ते 'अध्वर्यो अद्रिभिरि'त्येव तृचे गेयम् ॥१५॥

तदेतत्स्वर्गसाधनत्वेन स्तौति—

**इटन्वा एतेन काव्योऽञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्याऽनुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः ॥ १६ ॥**

काव्यः कवेः पुत्र इटन्वै इटसाम ऋषिः । गतमन्यत् ॥ १६ ॥

अथ सामान्तरं विधाय तद्ब्राह्मणञ्चाऽतिदिशति—

**साकमश्वं भवति यदेव साकमश्वस्य ब्राह्मणम् ॥१७॥**

साकमश्वाख्यं साम प्रकृत एव तृचे गातव्यम्। तस्य च साकमश्वस्य स्तावकं(१) 'देवा वा अग्निष्टोममभिजित्ये'त्यादिना यद्ब्राह्मणमाम्नातं तदत्राऽनुसन्धेयम् ॥ १७ ॥

अथैतत्प्रकारान्तरेण स्तौति—

**तदु धुराᳫं सामेत्याहुः प्राणा वै धुरः प्राणानामवरुध्यै ॥ १८ ॥**

तदु तत्साकमश्वाख्यं धुरां सामेत्याहुः कथयन्ति ब्रह्मवादिनः। काः पुनस्ता धुर इति ? तत्रोच्यते प्राणा वै धुर इति । प्राणा एव धुरः। ते हि म्रियमाणस्य देहान्निर्गच्छन्तः समीपस्थं परिजनं धूर्वन्ति हिंसन्तीति । तस्मादेतत् धुरां साम प्राणानामवरुध्यै अवरोधनाय शरीरधारणाय भवति ॥ १८ ॥

अथ सामान्तरं दर्शयति—

**विलम्बसौपर्णं भवति ॥ १९ ॥**

विलम्बसौपर्णाख्यमपि साम प्रकृते 'अध्वर्यो अद्रिभिरि'ति तृचे गेयम ॥ १९ ॥

अथाऽस्य विलम्बसौपर्णसंज्ञां निर्बुवन् स्तौति—

**आत्मा वा एष सौपर्णानां यदष्टमेऽहनि पक्षावेता-**

---

१. तां० ब्रा० ८. ८. १.

**वभितो भवतो ये सप्तमनवमयोर्वीव वा अन्तरात्मा पक्षौ लम्बते यदन्तरात्मा पक्षौ विलम्बते तस्माद्विलम्ब-सौपर्णम् ॥ २० ॥**

सौपर्णानां साम्नां मध्ये एष आत्मा वै एतद्विलम्बसौपर्णं साम मध्यदेहस्थानीयं यदष्टमेऽहनि विनियुज्यते । ये एकस्वाराख्ये सौपर्णे सप्तमनवमयोरह्नोर्विनियुज्येते एतावभितः पार्श्वयोर्वर्त्तमानौ पक्षौ भवतः । वयसां हि पक्षावन्तरा । एवं पक्षयोर्मध्ये आत्मा मध्यदेहे वीव लम्बते विशेषेण लम्बमानो भवति । (१)'अन्तरा अन्तरेणे'ति द्वितीया । यद्यस्मात् पक्षौ पक्षभूतयोः सौपर्णयोर्मध्ये आत्मा आत्मभूतः सौपर्णं विलम्बते तस्माद्विलम्बसौपर्णमिति साम्नो नाम सम्पन्नम् ॥ २० ॥

किं तत इत्यत आह—

**स्वर्गस्य लोकस्य समष्ट्यै सौपर्णं क्रियते ॥ २१ ॥**

स्पष्टोऽर्थः ॥ २१ ॥

अथ तृचान्तरे सामान्तरं विधत्ते—

**द्विहिङ्कारं वामदेव्यं भवत्यन्नाद्यस्याऽवरुध्यै ॥२२॥**

हुम् आ हुम् आ इति हिङ्कारद्वययुक्तं वामदेव्यं साम 'अभि सोमास आयव'( पृ० १२० ) इति तृचे गातव्यम् । तच्चाऽन्नाद्यस्याऽवरोधाय भवति ॥ २२ ॥

वामदेव्यस्य पश्वात्मना संस्तूयमानत्वाद्धिङ्कारद्वययुक्तस्याऽष्टमेऽहनि अष्टसंख्यापूरके कस्सम्बन्ध इत्यत आह—

**द्वितीयꣳ ह्येतद्रूपं यच्छन्दोमाः ॥ २३ ॥**

यत् एतत् द्वितीयं हि रूपं षडहः एकः समूहः तदपेक्षया छन्दोमत्रितयात्मकस्य समूहस्य द्विसंख्यापूरकत्वात् । अतो द्विहिङ्कारं सामाऽस्मिन्नहनि सङ्गतमित्यर्थः ॥ २३ ॥

अथैतत्पशुसमृद्धिहेतुरिति स्तौति—

**पशवो वै वामदेव्यं पशवश्छन्दोमाः पशुष्वेव तत् पशून् सन्दधाति ॥ २४ ॥**

स्पष्टोऽर्थः ॥ २४ ॥

---

१. पा० सू० २. ३. ४.

अथ सामान्तरं विधत्ते—

गायत्रपार्श्वं भवति ॥ २५ ॥

'अभि सोमास आयव' इत्यस्मिन्नेव तृचे गायत्रपार्श्वाख्यमपि साम गातव्यम् ॥ २५ ॥

अथैतत्स्तौति—

अहर्वा एतदव्लीयत तद्देवा गायत्रपार्श्वेन समतन्वꣳस्तस्माद्गायत्रपार्श्वम् ॥ २६ ॥

एतदष्टममहरव्लीयत अजीर्यत । तदहर्देवा गायत्रपार्श्वेन साम्ना समतन्वन् समादधुः । तस्मादह्नः सन्तानार्थं गायत्रपार्श्वं गातव्यमिति शेषः ॥ २६ ॥

एतदेव व्याचष्टे—

त्रिरात्रो वा अशीर्यत तमेतैः सामभिरभिषज्यन् गायत्रपार्श्वेनोपायच्छन् सन्तनिना समतन्वन् सङ्कृतिना समस्कुर्वन् प्रतिष्ठितौ पूर्वौ त्रिरात्रावप्रतिष्ठित एव यदेतान्येवꣳ सामानि क्रियन्त एतस्यैव प्रतिष्ठित्यै ॥२७॥

अयं तृतीयस्त्रिरात्रो यद्यदा व्यशीर्यत विशीर्णः शिथिलावयवोऽभवत्, तदा तत् त्रिरात्रं एतैर्वक्ष्यमाणैः सामभिर्देवा अभिषज्यन् दार्ढ्याय भैषज्यमकुर्वन् । भिषज्यतिः कण्ड्वादिः भैषज्यप्रकार उच्यते–गायत्रपार्श्वेन साम्ना उपायच्छन् शिथिलावयवानां पुनः सन्तानार्थमुपादानमकुर्वन् । अथ सन्तनिसाम्ना समतन्वन् समदधुः । सङ्कृतिसाम्ना समस्कुर्वन् । कृतसन्धाने तस्मिंस्त्रिरात्रे गुणातिशयाधानं संस्कारः तदकुर्वन् । (१)'सम्पर्य्युपेभ्यः करोतौ भूषण' इति कात्पूर्वसुट् (२) 'अड्भ्यासव्यवायेऽपी'त्यडागमेन व्यवायेऽपि भवति । अपि च पूर्वौ त्रिरात्रौ प्रतिष्ठितौ, एष तृतीयस्त्रिरात्रोऽप्रतिष्ठितः, यदेतानि गायत्रपार्श्वादीनि सामानि एवंक्रमेण क्रियन्ते तृतीये त्रिरात्रे प्रयुज्यन्ते, तदेतस्यैव त्रिरात्रस्य प्रतिष्ठानाय भवति । सप्तमेऽहनि सन्तनिसाम, नवमे सङ्कृति, अष्टमेऽहनि तु गायत्रपार्श्वमित्येषमानुपूर्वी द्रष्टव्या ॥ २७ ॥

---

१. पा. सू. ६. १. १३७. २. पा. सू. ६. १. १३६.

अथ सामान्तरं विधत्ते—

**पौरुहन्मनं भवति ॥ २८ ॥**

पौरुहन्मनाख्यमपि साम 'अभि सोमास आयव' इत्यस्मिन्नेव तृचे गातव्यम् ॥ २८ ॥

अथैतत् स्तौति—

**पुरुहन्मा वा एतेन वैखानसोऽञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्याऽनुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः ॥ २९ ॥**

वैखानसो विखनसगोत्रः । पुरुहन्मा नाम ऋषिः । गतमन्यत् ॥२९॥

अथैतस्मिन् सामगानविषये किञ्चिद्रूपं विधत्ते—

**अभ्याघात्यं भवत्यभ्याघात्यसामानो हि छन्दोमाः ॥ ३० ॥**

अभ्याघात्यमभ्याघातः अभ्याहतं अभ्यासः । अस्मिन् साम्नि स भवति । अस्य हि योनौ भिराधा १ ईगूरः २ नरुता ३ तरुता ३ त्राहागार ३४ र्णाइ त्रहा ५ गृणाई इत्यभ्यासो दृष्टः । तद्वदेव तृचे गीयमानेऽप्यभ्यासः कार्य इत्यर्थः । कुत एतत् ? हि यस्मात् छन्दोमा अभ्याघात्यसामानः अभ्याघात्यं अभ्यस्यमानावयवं साम येषां ते तथोक्ताः तस्मादित्यर्थः ॥ ३० ॥

अथ सामान्तरं विधत्ते—

**द्वैगतं भवति ॥ ३१ ॥**

द्वैगतं नाम साम 'अभि सोमास आयव' इत्यस्मिन्नेव तृचे गातव्यम् ॥ ३१ ॥

अथैतत् द्विविधफलप्राप्तिहेतुरिति स्तौति—

**द्विगद्वा एतेन भार्गवो द्विः स्वर्गं लोकमगच्छदागत्य पुनरगच्छत् द्वयोः कामयोरवरुध्यै द्वैगतं क्रियते ॥३२॥**

द्विर्वारं गच्छतीति द्विगत् (१) 'क्विप् च'ेति क्विपि(२) 'गमः क्वौ' वित्यनुनासिकलोपः । (३)'ह्रस्वस्य पिति कृती'ति तुक् । एतत्संज्ञो भा-

---

१. पा. सू. ३. २. ७६. २. पा. सू. ६. ४. ४०. ३. पा. सू. ६. १. ७१.

र्वो भृगुगोत्र ऋषिः। द्विर्द्विवारं एनेन साम्ना साधनेन स्वर्गं लोकं अगच्छत् गतवान्। एतदेव विशदयति—आगत्येत्यादिना। सकृत् स्वर्गं लोकं गत्वा पुनरिमं लोकमागत्य पुनः स्वर्गं लोकमगच्छत्। तस्मात् द्वयोः कामयोरवरुध्यै द्विविधफलप्राप्त्यै द्वैगतं सामाऽष्टमेऽहनि क्रियते ॥ ३२ ॥

अथ सामान्तरं विधत्ते—

**हारायणं भवति ॥ ३३ ॥**

हारायणं नामाऽपि साम 'अभि सोमास' इत्यस्मिन्नेव तृचे गातव्यम् ॥ ३३ ॥

अथैतत् स्तौति—

**इन्द्रस्तेजस्कामो हरस्कामस्तपोऽतप्यत, स एतद्धारायणमपश्यत्तेन तेजो हरोऽवारुन्ध तेजस्वी हरस्वी भवति हारायणेन तुष्टुवानः ॥ ३४ ॥**

तेजः शरीरकान्तिः। हरः पराभिभवक्षमं सामर्थ्यम्। एतदुभयं कामयमान इन्द्रः पुरा तपस्तप्तवान्। तदनन्तरमेतद्धारायणाख्यं सामाऽपश्यत् अद्राक्षीत्। तेन च साम्ना तेजो हरश्चाऽवारुन्ध प्राप्नोत्। तस्मादद्यतनोऽपि हारायणेन तुष्टुवानः स्तुवन् तेजस्वी हरस्वी च भवति ॥

अथ सामान्तरं विधत्ते—

**अच्छिद्रं भवति ॥ ३५ ॥**

अच्छिद्रं नाम साम प्रकृत एव तृचे गातव्यम् ॥ ३५ ॥

अथैतस्याऽच्छिद्रसंज्ञाऽन्वर्थेति स्तौति—

**यद्वा एतस्याऽह्नश्छिद्रमासीत्तद्देवा अच्छिद्रेणाऽप्यौहंस्तदच्छिद्रस्याऽच्छिद्रत्वम् ॥ ३६ ॥**

एतस्याऽष्टमस्याऽह्नो यदेवं छिद्रं सुषिरमासीत्, तत् छिद्रमनेनाऽच्छिद्रेण साम्ना देवा अप्यौहन् अपिहितमकुर्वन्। तत्तस्मात्कारणात् अच्छिद्रस्य साम्नः आच्छिद्रमिति नाम सम्पन्नम् ॥ ३६ ॥

अथ 'प्राहिम्नानऋतं बृहदि'ति अध्यास्यायां गेयं साम दर्शयति—

**बार्हदुक्थं भवति ॥ ३७ ॥**

बार्हदुक्थाख्यं साम तस्यामध्यास्यायां गातव्यमित्यर्थः ॥ ३७ ॥

अथैतत् स्तौति—

बृहदुक्थो वा एतेन वाम्नेयोऽग्नस्य पुरोधामगच्छ-
दन्नं वै ब्रह्मणः पुरोधामन्नाद्यस्याऽवरुध्यै ॥ ३८ ॥

वाम्नेयो वाम्न्याः पुत्र बृहदुक्थो नाम ऋषिः एतेन साम्ना अन्न-
स्य पुरोधां पुरोधानमगच्छत् । शिष्टं सिद्धम् ॥ ३८ ॥

अथाऽन्तिमे तृचे गेयं साम विधत्ते—

उद्वद्भार्गवं भवति ॥ ३९ ॥

उद्वद्भार्गवाख्यं साम(१) 'धर्त्ता दिव' इत्यस्मिन् तृचे गातव्यम्॥३९॥

तदेतत् पूर्वस्मिन्नहनि विहितेन प्रवद्भार्गवेण संहत्य स्तौति—

प्रवता वै देवाः स्वर्गं लोकं प्रायन्नुद्वतोदायन् ॥४०॥

सिद्धमेतत् ॥ ४० ॥

तदेतत् पवमानस्य स्तोत्रमुपसंहरति—

निधनान्ताः पवमाना भवन्त्यधृत्यै स्तोमः ॥

एतदपि व्याख्यातम् । एतदुक्तं भवति—(२)'अध्वर्यो अद्रिभिरि'
ति तृचे गायत्रं, वैरूपं, आशुभार्गवं, मार्गीयवं, सौमित्र, सैन्धवं, साकमश्वं,
बिलम्बसौपर्णं इत्येवमष्टौ सामानि।(३)'अभि सोमास आयव' इति तृचे
द्विहिङ्कारं, वामदेव्यं, गायत्रपार्श्वं, पौरुहन्मनं, द्वैगतं, हारायण, मक्षिद्रमिति
षट्सामानि । 'धर्त्ता दिवः पवत' इति तृचे उद्वद्भार्गवमेकं साम । 'प्रहि-
न्वान' इत्यध्यास्यायां गीयमानं बार्हदुक्थं साम । इत्थं पञ्चदशसामानि
तृचे विहितानि । एकमेकर्चम्। तथा च षट्चत्वारिंशत्स्तोत्रीया भव-
न्ति । एवं विहितस्य चतुश्चत्वारिंशस्तोमस्याऽतिरेकः स्यात् । अत-
स्तत्परिहाराय गायत्र्यादीनामन्यतममेकर्च्चं कार्यम् । तथा च चतु-
श्चत्वारिंशस्तोम एव माध्यन्दिनपवमानस्य भवतीति ॥ ४१ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-
प्रकाशे नवमः खण्डः ॥

---

१. सा. सं. उ. ५. १. १२.
२. सा. सं. उ. ५. १. ११.
३. सा. सं. उ. २. २. ७.

## अथ दशमः खण्डः ॥

अथ ब्रह्मपृष्ठसाम्नः स्तोत्रीयां विधित्सुरत्र शाखान्तरीयं प्रथमं तृचं दर्शयति—

**(१)"क ईं वेद सुते सचे"ति (२)सतोबृहत्यः ॥ १ ॥**

'क ईं वेदे'त्याद्यास्तिस्रः सतोबृहत्य ऋचो ब्रह्मसाम्नः स्तोत्रीयाः कार्याः । अयुजौ पादौ जागतौ, युजौ गायत्र्यौ यस्याः सा सतोबृहती॥१॥

---

१. क ईं वेद सुते सचा पिबन्तं कद्वयो दधे ।
अयं यः पुरो विभिनत्योजसा मन्दानः शिप्र्यन्धसः ॥ १ ॥
दाना मृगो न वारणः पुरुत्रा चरथं दधे ।
न किष्ट्वा नियमदा सुते गमो महांश्चरस्योजसा ॥ २ ॥
य उग्रः सन्ननिष्टृतः स्थिरो रणाय संस्कृतः ।
यदि स्तोतुर्मघवा शृणवद्धवं नेन्द्रो योषत्या गमत ॥ ३ ॥

सा० सं० उ० ८. २. १५.

२. इदमत्राऽवधेयम्—'क ईं वेद सुते सचेति सतोबृहत्य' इति मूले 'कईं' इत्यस्याः सतोबृहतीत्वमुक्तम् । समग्रा ऋक् च—

क ईं वेद सुते सचा पिबन्तं कद्वयो दधे ।
अयं यः पुरो विभिनत्योजसा मन्दानः शिप्र्यन्धसः ॥

इत्येवंरूपा । कात्यायनीययजुस्सर्वानुक्रमसूत्रे 'अयुजौ जागतौ सतोबृहती' ( ५. ५३. ) ( यस्या ऋचः अयुजौ प्रथमतृतीयौ पादौ जागतौ द्वादशाक्षरौ द्वितीयचतुर्थौ च पादावष्टाक्षरौ सा सतोबृहतीत्यर्थः ) इति सतोबृहत्या लक्षणमुक्तम् । न च तदस्यामृचि सङ्घटते । अत्र हि तृतीयः पाद एव द्वादशाक्षरः, अन्ये त्रयोऽपि पादा अष्टाक्षराः । किन्तु 'तृतीयो द्वादशकः' इति ( ५. ४० ) तत्रैवोक्तं बृहत्यास्सामान्यलक्षणमेव सङ्घटते । तत्तु मूलेन विसंवदति । कात्यायनीये ऋक्सर्वानुक्रमसूत्रेऽपि 'वयं घत्येकोनविंशत्यृचस्य सूक्तस्य मेध्यातिथिरिन्द्रो बृहती षोडश्याद्यास्तिस्रो गायत्र्योऽन्त्याऽनुष्टुप्' इत्यनेनाऽस्या बृहतीत्वमेवोक्तम् । आचार्यपिङ्गलेन तु 'पथ्या पूर्वश्चेत्तृतीयः' ( ३. २७ ) ( पूर्वः पूर्वोक्तो द्वादशाक्षरः पादः यस्यामृचि तृतीयो भवति सा पथ्या नाम्नी बृहतीत्यर्थः ) इत्यनेनाऽस्याः पथ्यासंज्ञकत्वमुक्तम् । तदपि मूलविसंवादि नाऽत्रघटते । अतोऽस्या ऋचस्सतोबृहतीत्वं क्वचिल्लक्षणग्रन्थेऽन्वेष्टव्यम् । सायणाचार्यैस्तु अविचार्यैवेदं 'अयुजौ जागतौ सतोबृहती'ति लक्षणमत्र सङ्घटितमिति प्रतिभाति ।

अथैतासां सतोबृहतीनां विधानमुपपादयति--

**अपभ्रंश इव वा एष यत्सप्तमेऽहनि सतोबृहत्यो भवन्ति नाऽष्टमे तस्मादष्टमे कार्य्या अनपभ्रंशाय ॥२॥**

यत् सप्तमेऽहनि(१) 'वयङ्घत्वे'त्याद्याः(पृ.९३.) सतोबृहत्यो भवन्ति, अष्टमेऽहनि न भवन्तीति य एषोऽपभ्रंश इव वै अधःपतनसदृशमेव, अधिकाक्षरात्सतोबृहतीच्छन्दसो न्यूनाक्षरे बार्हते तृचे साम्नो गानप्रसङ्गात् । यस्मादेवं तस्मादपभ्रंशपरिहाराय अष्टमेऽहनि सतोबृहती कार्य्या प्रयोज्या । अतः 'क ईं वेदे' त्याद्यास्तिस्रस्सतोबृहत्यः ब्रह्मसाम्नः स्तोत्रीयाः कार्य्या इत्यर्थः ॥ २ ॥

अथ सिद्धान्तमाह--

**तदाहुः शिथिलमिव वा एतच्छन्दो यत्सतोबृहतीत्येषा वै प्रतिष्ठिता बृहती या पुनःपदा यदिन्द्र प्रागपागुदगिति दिशां विमर्शः प्रतिष्ठित्यै ॥ ३ ॥**

तत्राऽष्टमेऽहनि ब्रह्मसामस्तोत्रीयाविषये ब्रह्मवादिन आहुः प्रतिपद्यन्ते--सतोबृहत्याख्यं यत् छन्दः एतत् शिथिलमिव वै शिथिलावयवमिव खलु । तस्येहाऽयुजौ पादौ जागतौ, युजौ गायत्र्यौ । तथा च नैरन्तर्य्येण पादद्वयस्य संख्यावैलक्षण्यनैकरूप्याभावात्तस्य शैथिल्योक्तिः । एषा खलु प्रतिष्ठिता लब्धास्पदा स्थिरा बृहती या पुनःपदा सकृत्प्रयुक्तः पादः बृहतीत्वसम्पत्तये यस्यामृचि पुनरुपादाय प्रयुज्यते सा पुनःपदा । यैव पुनःपदा बृहती एषा प्रतिष्ठिता बृहतीत्यन्वयः । काः पुनस्ताः ? (२)'यदिन्द्रप्रागपागुदगि'त्याद्याः । अत्र हि पूर्वस्याः पूर्वस्या ऋचः अन्त्यं पादं द्विरभ्यस्य तिस्रो बृहत्यो गानसमये क्रियन्ते । अपि चाऽस्मिन् प्रगाथे प्रागपागुदगिति प्राच्यादीनां दिशां विमर्शः कीर्त्तनं दृश्यते । अतस्तासु दिक्षु यजमानस्य प्रतिष्ठानाय भवति ॥३॥

---

१. "वयं घत्वे"त्यादीनामपि बृहतीत्वमेवोक्तं कात्यायनेनर्क्सर्वानुक्रमसूत्रे ।

२. यदिन्द्र प्रागपागुदङ्न्यग्वा हूयसे नृभिः ।
सिमा पुरू नृषूतो अस्यानवेऽसि प्रशर्ध तुर्वशे ॥ १ ॥
यद्वा रुमे रुशमे श्यावके कृप इन्द्र मादयसे सचा ।
कण्वासस्त्वा स्तोमेभिर्ब्रह्मवाहस इन्द्रा यच्छन्त्या गहि ॥ २ ॥

सा. सं. उ. ५. १. १३.

आसु गातव्यं ब्रह्मसाम दर्शयति--

**तासु नैपातिथं ब्रह्मसाम ॥ ४ ॥**

तासु 'यदिन्द्र प्रागि'त्याद्यासु बृहतीषु नैपातिथं नीपातिथिना दृष्टं एतदाख्यं ब्रह्मसाम कार्यं ब्रह्मणः पृष्ठस्तोत्रनिर्वर्त्तकं साम कार्य्यम् ॥ ४ ॥

अथैतदृषिसम्बन्धप्रदर्शनपुरस्सरं स्वर्गहेतुरित्याह—

**सामार्षेयवत् स्वर्गाय युज्यते स्वर्गाल्लोकान्न च्यवते तुष्टुवानः ॥ ५ ॥**

सिद्धमेतत् ॥ ५ ॥

चतुर्थस्य पृष्ठस्य स्तोत्रीयं तृचमाह—

**(१)"उभयꣳ शृणवच्च न" इति ॥ ६ ॥**

स्पष्टोऽर्थः ॥ ६ ॥

अथैतं तृचमुभयशब्दयोगेन सन्तानहेतुरिति स्तौति—

**यच्च पृष्ठानि यानि चैतान्यहानि तेषामुभयेषाꣳ सन्तत्यै ॥ ७ ॥**

यत् यानि च पृष्ठानि रथन्तरबृहद्वैरूपादीनि प्राक् षडहे प्रयुक्तानि, यानि चैतानि छन्दोमाख्यान्यहानि तेषामुभयेषां द्विविधानां सन्तत्यै संश्लेषाय। उभयशब्दयुक्तोऽयं तृचो भवति, उभयशब्देन द्विधा द्वय-स्य स्मारितत्वात् ॥ ॥ ७ ॥

अथैतस्मिस्तृचे गातव्यं साम दर्शयति—

**तासु वैयश्वम् ॥ ८ ॥**

तासु'उभयं शृणवच्च न' इत्याद्यास्वृक्षु वैयश्वाख्यं साम गेयम् ॥८॥

---

1. उभयं शृणवच्च न इन्द्रो अर्वागिदं वचः।
   सत्राच्या मघवांत्सोमपीतये धिया शविष्ठ आ गमत् ॥ १ ॥
   तं हि स्वराजं वृषभं तमोजसा धिषणे निष्टतक्षतुः।
   उतोपमानां प्रथमो निषीदसि सोमकामं हि ते मनः ॥ २ ॥
   सां. सं. उ. ५. १. १४.

अथैतदृषिसम्बन्धप्रदर्शनपुरस्सरं स्वर्गसाधनमिति ब्रुवञ्छ्यावाश्वसाम कार्य्यमित्याह—

**श्यावाश्वो वा एतेनाऽऽङ्गिरसोऽञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्याऽनुख्यात्या एतत् पृष्ठानामन्ततः क्रियते स्तोमः ॥ ९ ॥**

आङ्गिरसोऽङ्गिरोगोत्रः श्यावाश्वो नाम ऋषिः। शिष्टं स्पष्टम्। एतेषु च पृष्ठस्तोत्रेषु पूर्वोक्त एव चतुश्चत्वारिंशः स्तोमः कार्य्यः ॥ ९ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-
प्रकाशे चतुर्दशाध्याये दशमः खण्डः ॥

## अथैकादशः खण्डः ॥

अथाऽऽर्भवपवमानस्य प्रतिपत्तृचं विधाय तस्य तृतीयसवने सङ्गतिमाह—

**(१)"पवस्व देव आयुषगिन्द्रं गच्छतु ते मद" इति गायत्री भवति मदवद्वै रसवत्तृतीयसवनं मदमेव तद्रसं दधाति ॥ १ ॥**

'पवस्व देव' इति गायत्री प्रतिपद्भवति गायत्रः प्रथमस्तृचो भवतीत्यर्थः। 'पवस्व देव आयुषगिति गायत्री भवती'त्येतावता पर्य्याप्ते पुनरधिकोपादानं मदशब्दप्रदर्शनान्मदवत्त्वेन तृतीयसवने सङ्गतिकथनार्थम्। शिष्टं पूर्ववद्व्याख्येयम् ॥ १ ॥

---

१. पवस्व देव आयुषगिन्द्रं गच्छतु ते मदः। वायुमारोह धर्मणा ॥ १ ॥
पवमान नि तोषसे रयिं सोम श्रवाय्यम्। इन्दो समुद्रमा विश ॥ २ ॥
अपघ्नन् पवसे मृधोऽपसोमो अराव्णः। गच्छन्निन्द्रस्य निष्कृतम् ॥ ३ ॥
सा. सं. उ. ५. १. १५.

अथाऽन्यं तृचं विधत्ते—

(१)"अभिद्युम्नं बृहद्यश" इत्यभीति रथन्तरस्य रूपं बृहदिति बृहत उभयोः सहरूपमुपैत्युभौ हि वर्णावेतदहः॥२॥

एतदपि (पृ०२६) सिद्धम् ॥ २ ॥

अथ तृचान्तरं विधत्ते—

(२)"प्राणा शिशुर्महीनामिति' प्राणवत्यो भवन्ति प्राणानेव तद्यजमाने दधाति ॥ ३ ॥

'प्राणा शिशुर्महीनामि'त्याद्यास्तिस्रः प्राणवत्यः प्राणशब्दयुक्ताः स्तोत्रीया भवन्ति । एकस्यां प्राणशब्ददर्शनात् छत्रिन्यायेन तिस्रोऽपि प्राणवत्यः । तत्तेन यजमाने प्राणानिन्द्रियाणि मुख्यप्राणसहितानि दधाति धारयति ॥ ३ ॥

अथ तृचान्तरं विधाय अष्टमेनाऽह्ना तस्य सङ्गतिमाह—

(३)"अभी नो वाजसातम"मि त्यभीति रथन्तरस्य रूपꣳ राथन्तरꣳ ह्येतदहः ॥ ४ ॥

अभिशब्दयुक्तस्तृचोऽष्टमेऽहनि सङ्गत इत्यर्थः । शिष्टं सिद्धम् ॥४॥

अथाऽक्षरपङ्क्तिच्छन्दस्कं तृचं विधाय सप्तमेऽहनीव तत् स्तौति—

(४)"पवस्व सोम महान् समुद्र" इत्यक्षरपङ्क्तिः स्तो-

---

१. सा. सं. उ. ३. २. १७. २. सा. सं. उ. ३. २. १८.

३. अभी नो वाजसातमं रयिमर्षसतस्पृहम् ।
इन्दो सहस्रभर्णसं तुविद्युम्नं विभ्वासहम् ॥ १ ॥
वयं ते अस्य राधसो वसोर्वसो पुरुस्पृहः ।
नि नेदिष्टतमा इषस्स्याम सुम्ने ते अध्रिगो ॥ २ ॥
परि स्य स्वानो अक्षरदिन्दुरव्ये मदच्युतः ।
धारा य ऊर्ध्वो अध्वरे भ्राजा न याति गव्ययुः ॥ ३ ॥
सा. सं. उ. ५. १. १६.

४. पवस्व सोम महांत्समुद्रः पिता देवानां विश्वाभि धाम ॥ १ ॥
शुक्रः पवस्व देवेभ्यस्सोम दिवे पृथिव्यै शं च प्रजाभ्यः ॥ २ ॥
दिवो धर्ताऽसि शुक्रः पीयूषस्सत्ये विधर्मन्वाजी पवस्व ॥ ३ ॥
सा. सं. उ. ५. १. १७.

मानां प्रभूतिरथो एतर्ह्येवैतर्हि छन्दोऽयातयाम यदक्षरपङ्क्तिस्तेन छन्दोमा अयातयामानः क्रियन्ते ब्रह्मवादिनो वदन्ति यत् षडहे स्तोमाश्छन्दांꣳस्याप्यन्ते किंछन्दसश्छन्दोमा इत्येतच्छन्दसो यदेता अक्षरपङ्क्तय इति ब्रूयात् ॥ ५ ॥

एतत्सर्वं 'यस्ते मदो वरेण्य' इति पञ्चमखण्ड इवाऽत्राऽपि व्याख्येयम् ॥ ५ ॥

अथाऽन्यं तृचं विधत्ते—

(१)"हिन्वन्ति सूरमुस्रय" इति गायत्र्यः सत्यो जगत्यो रूपेण तस्माज्जगतीनां लोके क्रियन्ते ॥ ६ ॥

"हिन्वन्ती'त्याद्यास्तिस्रो गायत्र्यः आर्भवस्याऽन्तिमाः स्तोत्रीयाः। ताश्च 'देव देवेभ्य' इति देवशब्देन जागतेन रूपेण योगाज्जगत्यः। प्रजापतेर्मध्यदेहाद्देवैस्सह खलु जगती सृष्टिकाल उत्पन्ना। तस्माद्देवानां वाचको देवशब्दो जागतं रूपम्। यस्मादेवं जगत्यस्तस्माज्जगतीनां लोके आर्भवान्तो हि प्रकृतौ जगतीनां स्थानम्, तत्र क्रियन्ते ॥६॥

अथ 'पवस्व देव आयुषगि'ति विहिते तृचे पूर्ववद्गायत्रं साम विधाय तद्ब्राह्मणञ्चाऽतिदिशति—

गायत्रं भवति यदेव गायत्रस्य ब्राह्मणम् ॥ ७ ॥

स्पष्टोऽर्थः ॥ ७ ॥

अथाऽस्मिन्नेव तृचे सामान्तरं विधत्ते—

स्वाशिरामर्को भवति ॥ ८ ॥

स्वाशिरामर्काख्यं साम 'पवस्वे'त्यस्मिन्नेवाऽऽवृत्ते तृचे गेयम् ॥ ८ ॥

---

१. हिन्वन्ति सूरमुस्रयस्स्वसारो जामयस्पतिम्। महामिन्दुं महीयुवः ॥ १ ॥
पवमान रुचा रुचा देव देवेभ्यस्सुतः। विश्वा वसून्या विश ॥ २ ॥
आ पवमान सुष्टुतिं वृष्टिं देवेभ्यो दुवः। इषे पवस्व संयुतम् ॥ ३ ॥
सा. सं. उ. ३. १. ५.

अत्र स्वाशिरामर्क इति पदद्वयाभिधेयेन साम्ना साध्यं फलमाह—

**अन्नं वा अर्कोऽन्नाद्यस्याऽवरुद्ध्यै प्राणा वै स्वाशिरः प्राणानामवरुद्ध्यै ॥ ९ ॥**

अन्नं खल्वशनसाधनत्वादर्क इत्युच्यते । तस्मादर्कशब्दाभिधेयं सामाऽन्नाद्यस्याऽऽप्त्यै भवति । तथा प्राणाः खलु स्वाशिरः स्वयमेव शरीरस्याऽऽश्रयितारः । तस्मात्प्राणानामवरोधनाय भवति ॥ ९ ॥

अथ सामान्तरं दर्शयति—

**सुरूपं भवति ॥ १० ॥**

एतदपि साम 'पवस्व देव' इत्यस्मिन्नेव तृचे गातव्यम् ॥ १० ॥

अथैतत् स्तौति—

**पशवो वै सुरूपं पशूनामवरुद्ध्यै ॥ ११ ॥**

सुरूपं साम पशवो वै तेषां शोभनरूपयोगेन समानशब्दाभिधेयत्वात् । तस्मादेतत्साम पशूनामवरोधनाय भवति ॥ ११ ॥

अथ सामान्तरं विदधाति—

**भासं भवति भाति तुष्टुवानः ॥ १२ ॥**

भासाख्यमेतदपि साम 'पवस्व देव' इत्यस्मिन्नेव तृचे गातव्यम् । अनेन तुष्टुवानः स्तुवन् भाति यशसा दीप्यते ॥ १२ ॥

अथाऽष्टमेनाऽह्ना सङ्गतिमाह—

**पदनिधनं राथन्तरं ह्येनदहः ॥ १३ ॥**

राथन्तरं रथन्तरसम्बन्धि रूपं पदनिधनं रथन्तरपृष्ठे प्रथमेऽहनि पदनिधनं प्रथमस्याऽह्नो रूपमिति विधानात्तद्रूपता । एतदष्टममहश्च राथन्तरं रथन्तरसम्बन्धि । बृहद्रथन्तरं साम हि द्वितीयच्छन्दोमाख्यमहः ॥ १३ ॥

अथैतत्प्रकारान्तरेण स्तोतुं संज्ञां निर्वक्ति—

**स्वर्भानुर्वा आसुर आदित्यं तमसाऽविध्यत् स न व्यरोचत तस्याऽत्रिर्भासेन तमोऽपाहन् स व्यरोचत यद्वै तद्भा अभवत्तद्भासस्य भासत्वम् ॥ १४ ॥**

आसुरः असुरवंशजः स्वर्भानुर्नाम पुरा आदित्यं सूर्यं तमसा अन्धकारेणाऽविध्यत् आच्छादितवान्। तदनन्तरं स सूर्यो न व्यरोचत नाऽदीप्यत। तस्य सूर्यस्य सम्बन्धि स्वर्भानुकृतं तमः अत्रिऋषिः भासेनाऽनेन साम्ना अपाहन् अपहतवान्। ततः स सूर्यो व्यरोचत विशेषेण दीप्तोऽभवत्। यद्यस्मादेवं तदा तदानीं सूर्यो भास्वरोऽभवत्, तत्तस्माद्भासस्साधनत्वात् भासस्य साम्नो भासत्वं भासमिति नाम सम्पन्नम् ॥ १४ ॥

किन्तत इत्याह—

**तम इव वा एतान्यहानि यच्छन्दोमास्तेभ्य एतेन साम्ना विवासयति ॥ १५ ॥**

तम इव वै तमोरूपाण्येव एतान्यहानि छन्दोमाख्यानि। प्रयोगबाहुल्येन दुःखप्रदत्वादेषां तमोरूपत्वम्। ततस्तेभ्योऽहोभ्य एतेन भाससाम्ना विवासयति तमो विश्लेषयति ॥ १५ ॥

अथ सामान्तरं विधत्ते—

**काक्षीवतं भवति ॥ १६ ॥**

कक्षीवता दृष्टं काक्षीवतम्। तदपि पूर्वोक्त एव तृचे गेयम् ॥ १६ ॥

अथैतत्स्तौति—

**कक्षीवान्वा एतेनौशिजः प्रजातिं भूमानमगच्छत् प्रजायते बहुर्भवति काक्षीवतेन तुष्टुवानः ॥ १७ ॥**

उशिजः पुत्रः कक्षीवान्नाम ऋषिः एतेन साम्ना प्रजातिं प्रकृष्टजननं प्रजोत्पत्तिं भूमानं बाहुल्यञ्चाऽगच्छत्। अतोऽद्यतनोऽप्यनेन स्तुवन् फलद्वयं लभत इत्यर्थः ॥ १७ ॥

**आसितं भवति ॥ १८ ॥**

असितेन दृष्टमासितम्। तदपि पूर्वोक्ते तृचे गेयम् ॥ १८ ॥

अथैतत् स्तौति—

**असितो वा एतेन दैवलस्त्रयाणां लोकानां दृष्टिमपश्यत् त्रयाणां कामानामवरुध्या आसितं क्रियते ॥ १९ ॥**

दैवलो देवलस्य पुत्रः असितो नाम ऋषिः एतेन साम्ना साधनेन

त्रयाणां पृथिव्यादीनां लोकानां दृष्टिं दर्शनसाधनमपश्यत् अजानात् । तस्मादद्यतनैरपि पुरुषैस्त्रयाणां कामानां लोकत्रयविषयाणां त्रिविधानां फलानामवरुध्यै अवरोधनाय प्राप्त्यर्थं आसितं साम क्रियते प्रयुज्यते ॥ १९ ॥

अथ सामान्तरं विधत्ते—

**ऐषिरं भवति ॥ २० ॥**

ऐषिराख्यं साम 'अभिद्युम्नं बृहदि'ति तृचे गातव्यम् ॥ २० ॥

अथैतत्स्तौति—

**प्रजातिर्वा ऐषिराणि प्रजायते बहुर्भवत्यैषिरेण तुष्टुवानः ॥ २१ ॥**

यान्यैषिराख्यानि सामानि तानि प्रजातिर्वै प्रजननहेतुः । शिष्टं स्पष्टम् ॥ २१ ॥

अथ सामान्तरं विधत्ते—

**त्रैतं भवति प्रतिष्ठायै ॥ २२ ॥**

त्रितेन दृष्टं साम त्रैतम् । तत् 'प्राणा शिशुर्महीनामि'ति तृचे गेयम् । तच्च यजमानस्य प्रतिष्ठानाय भवति ॥ २२ ॥

अथाऽस्मिन्नहनि सङ्गतिमाह—

**पदनिधनꣳ राथन्तरꣳ राथन्तरꣳ ह्येतदहः ॥२३॥**

गतमेतत् ॥ २३ ॥

अथैतत्स्तौति—

**नाथविन्दु साम विन्दते नाधं नाथविन्दून्येतान्यहानि यत् छन्दोमा नाथमेवैतैर्विन्दते ॥ २४ ॥**

तत्रैतं साम नाथविन्दु नाथस्य नाथनीयस्य याचनीयस्य लम्भकम् । अतोऽनेन स्तुवन् नाथं याचितं फलं विन्दते । किञ्चाऽनेन साम्ना योगात् एतान्यहान्यपि नाथविन्दूनि याचनीयस्य फलस्य लम्भकानि यत् यानि छन्दोमाख्यानि । स्पष्टमन्यत् ॥ २४ ॥

अथ सामान्तरं विधत्ते—

**गौरीवितं भवति यदेव गौरीवितस्य ब्राह्मणम् ॥२५॥**

गौरीविताख्यं साम 'अभी नो वाजसातममि'ति तृचे गेयम्। तस्य च यदेव प्रागाम्नातं ब्राह्मणं "गौरीवितिर्वा एतच्छाक्त्य"इत्यादि, तदत्राऽपि द्रष्टव्यमित्यर्थः ॥ २५ ॥

अथाऽन्यत्साम विधत्ते—

**कौत्सं भवति ॥ २६ ॥**

कुत्सेन दृष्टं साम कौत्सम्। तच्च 'अभी न'इति पूर्वोक्त एव तृचे गेयम् ॥ २६ ॥

अथैतत्स्तौति—

**एतेन वै कुत्सोऽन्धसो विपानमपश्यत् स ह स्म वै सुरादृतिनोपवसथं धारयत्युभयस्याऽन्नाद्यस्याऽवरुध्यै कौत्सं क्रियते ॥ २७ ॥**

एतेन खलु साम्ना पुरा कुत्स ऋषिः अन्धसोऽन्नस्य विपानं विशेषेण पातव्यं रसं अपश्यत् दृष्टवान्। तत एव स ऋषिः सुरादृतिना सुरापूर्णेन दृतिना युक्तस्सन् उपवसथं उप अग्निसमीपे वसत्यस्मिन्दिवस इति उपवसथं यागदिवसात् पूर्वमहः तद्धारयति स्म। यत एवं ततो हेतोः उभयस्य पेयस्य खाद्यस्य चाऽन्नाद्यस्य अत्तुं योग्यस्याऽन्नस्य अवरुध्यै अवरोधनाय कौत्सं क्रियते यजमानेन प्रयुज्यते ॥ २७ ॥

अथाऽस्मिन्नेव तृच आवृत्ते सामान्तरं विधत्ते—

**शुद्धाशुद्धीयं भवति ॥ २८ ॥**

स्पष्टोऽर्थः ॥ २८ ॥

अशुद्धस्य शुध्यापादकत्वात् शुद्धाशुद्धीयमिति निर्वचनमभिप्रेत्याह—

**इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत्तमश्लीला वागभ्यवदत्सोऽशुद्धोऽमन्यत स एतच्छुद्धाशुद्धीयमपश्यत्तेनाऽशुध्यच्छुध्यति शुद्धाशुद्धीयेन तुष्टुवानः ॥ २९ ॥**

यतीन् कर्मविरोधिजनान् सालावृकेभ्यः सलावृकीपुत्रेभ्यः इन्द्रो दत्तवान्। तमिन्द्रं अश्लीला पापरूपा वागभ्यवदत्। इन्द्रस्य ब्रह्महत्या सञ्जातेत्येवंरूपा अपयशस्करी वाग्जातेत्यर्थः। तदनन्तरं स इन्द्र आत्मानमशुद्धोऽमन्यत अजानात्। स च एतत् शुद्धाशुद्धीयाख्यं साम-

ऽपश्यत् । तेनाऽशुध्यत् शुद्धोऽभवत् । तस्मादद्यतनोऽपि शुद्धाशुद्धीयेन तुष्टुवानः स्तुवन् शुध्यति शुद्धो भवति ॥ २९ ॥

अथ सामान्तरं विधाय तद्ब्राह्मणं प्रागाम्नातमप्यतिदिशति—

**क्रौञ्चं भवति यदेव क्रौञ्चस्य ब्राह्मणं यत् द्वितीयेऽहनि ॥ ३० ॥**

क्रौञ्चं साम 'अभी नो वाजसातममि'त्यस्मिन्नेव तृचे गेयम् । तस्य क्रौञ्चस्य यदेव ब्राह्मणं स्तावकमाम्नातं तदत्राऽपि द्रष्टव्यम् । तच्च ब्राह्मणं द्वितीयेऽहनि षष्ठेऽहनि च पृथगेवाऽऽम्नातम् । तत्र द्वितीयेऽहनि (१)'वाग्वै क्रौञ्चमि'त्यादिकं तदेवात्राऽतिदिश्यत इत्यर्थः ॥ ३० ॥

अथ सामान्तरं विधत्ते—

**रयिष्ठं भवति ॥ ३१ ॥**

एतत्साम 'अभी नो वाजसातममि'त्यस्मिन्नेव तृचे गातव्यम् ॥३१॥

अथैतत् स्तौति—

**पशवो वै रयिष्ठं पशूनामवरुध्यै ॥ ३२ ॥**

यदेतद्रयिष्ठं साम तत्पशवो वै अतिशयेन पशुमान् हि लोके रयिमानित्युच्यते । अस्य च बहुपशुत्वमपि सम्भवतीति रयिष्ठस्य पशुरूपता । तस्मादेतत्पशूनामवरुध्यै भवति ॥ ३२ ॥

अथाऽस्मिन्नेव तृचेऽन्यत्साम विधत्ते—

**औदलं भवति ॥ ३३ ॥**

स्पष्टोऽर्थः ॥ ३३ ॥

अथैतत् स्तौति—

**उदलो वा एतेन वैश्वामित्रः प्रजातिं भूमानमगच्छत् प्रजायते बहुर्भवत्यौदलेन तुष्टुवानः ॥ ३४ ॥**

वैश्वामित्रो विश्वामित्रगोत्रः उदलो नाम ऋषिः । गतमन्यत् ॥३४॥

अथाऽन्यत्साम विधत्ते—

**धर्म्मं भवति धर्म्मस्य धृत्यै ॥ ३५ ॥**

---

१. तां. ब्रा. ११. १०. १९.

धर्माख्यं साम(१) 'पवस्व सोमे'त्यक्षरपङ्क्तिच्छन्दस्के तृचे गातव्यम्। तच्च धर्मस्य यागजन्यस्याऽपूर्वस्य धृत्यै धारणाय यावत्फलमवस्थानाय भवति ॥ ३५ ॥

अथैतत् छन्दोद्वारेण स्तौति—

**ब्रह्मवादिनो वदन्ति यत् षडहे स्तोमाश्छन्दाꣳस्याप्यन्ते किंछन्दसश्छन्दोमा इति पुरुषछन्दस इति ब्रूयात् पुरुषो वै पाङ्क्तः पुरुषो द्विपदाश्छन्दोमानामयातयामतयै ॥ ३६ ॥**

एतदपि 'यस्ते मदो वरेण्य' इति पञ्चमखण्ड इवाऽत्राऽपि व्याख्येयम् ॥ ३६ ॥

अथाऽन्यत्साम विधत्ते—

**विशोविशीयं भवति ॥ ३७ ॥**

एतत्संज्ञं साम(२) 'हिन्वन्ति सूरमुस्रय' इति तृचे गेयम् ॥ ३७ ॥

अथैतत् स्तौति—

**अग्निरकामयत विशोविशोऽतिथिस्स्यां विशोविश आतिथ्यमश्नुवीयेति स तपोऽतप्यत स एतद्विशोविशीयमपश्यत्तेन विशोविशोऽतिथिरभवत् विशोविश आतिथ्यमाश्नुत विशोविशोऽतिथिर्भवति विशोविश आतिथ्यमश्नुते विशोविशीयेन तुष्टुवानः ॥ ३८ ॥**

अग्निः पुरा अकामयत। किमिति? विशोविशः सर्वस्या विशः सर्वासां प्रजानामहमतिथिः स्यां अतिथिवत् पूज्यो भवेयम्। तथा विशोविशः सर्वस्या विशस्सकाशादातिथ्यं हविरश्नुवीय प्राप्नुयामिति। एवं कामयित्वा तदर्थं तपस्तप्तवान्। तप्त्वा च सोऽग्निरेतद्विशोविशीयं सामाऽपश्यत्। तेन साम्ना विशोविशः सर्वस्या अपि प्रजायाः अग्निरतिथिरभवत्। तथा सर्वस्या विशस्सकाशात् आतिथ्यमाश्नुत प्राप्नोत्। तस्मादद्यतनोऽपि विशोविशीयेन तुष्टुवानः स्तुवन् विशोविशोऽतिथिर्भवति आतिथ्यञ्चाऽश्नुते ॥ ३८ ॥

---

१. सा. सं. उ. ५. १. १७.  २. सा. सं. उ. ३. १. ५.

अथैतत् छन्दोद्वारेण स्तौति—

**गायत्रीषु स्तुवन्ति प्रतिष्ठायै ब्रह्मवर्चसाय येनैव प्राणेन प्रयन्ति तमभ्युद्यन्ति ॥ ३९ ॥**

गायत्रीषु ऋक्षु विशोविशीयेन स्तुवन्ति । तासाञ्च त्रिपादत्वात् अग्निना सहोत्पन्नत्वाच्च प्रतिष्ठाब्रह्मवर्च्चसे यजमानस्य सिध्यतः । अपि च गायत्रेण तृचेन स्तोत्रस्य प्रायणं कृतम् । उदयनमपि गायत्रेण क्रियते । तथा च त्रिवृदात्मकेन प्राणसंस्तुतेन येनैव गायत्रेण प्रयन्ति तेनैव स्तोत्रं परिसमापयन्ति ॥ ३९ ॥

अथैतत्पवमानस्तोत्रं पूर्ववदुपसंहरति—

**इडान्ताः पवमाना भवन्ति पशवो वा इडा पशवश्छन्दोमाः पशुष्वेव तत्पशून्दधाति स्तोमः ॥ ४० ॥**

सिद्धमेतत् । एवं गायत्रादीनि विशोविशीयान्तानि षोडशसामानि विहितानि । अतश्चतुश्चत्वारिंशस्तोमस्य विधानात् तदतिरेकपरिहाराय सामद्वयमेकर्च्चं कार्य्यम् । तच्च सूत्रकारेणोक्तं(१) 'सुरूपकौञ्चे एकर्च्चयोरेक' इति । अयमर्थः—अष्टमेऽहन्यार्भवे स्तोमातिरेकपरिहाराय सुरूपकौञ्चे सामानी एकैकस्यां गातव्ये इत्येकेषां मतम् । स्वपक्षस्तु(२) 'द्विप्रभृतीन् ककुप्प्रभृत्यानन्तर्य्येणे'ति वचनादैषिरत्रैतयोरेकर्च्चकरणमिति ॥ ४० ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे चतुर्दशाध्यायस्य एकादशः खण्डः ।



---

१. लाट्या. श्रौ. ६. ३. २५.　　२. लाट्या. श्रौ. ६. ३. २६.

## अथ द्वादशः खण्डः ॥

अथोक्थानां प्रथमस्य स्तोत्रीयं तृचं दर्शयति—

(१) "प्रेष्ठं वो अतिथिमि"त्यातिथ्यस्यैव तद्रूपं क्रियते ॥ १ ॥

'प्रेष्ठं वो अतिथिमि'त्यतिथिशब्दयोगात् एतस्य तृचस्य करणं आतिथ्यस्यैव रूपं क्रियते ॥ १ ॥

अथ द्वितीयस्योक्थस्य स्तोत्रीयं तृचं दर्शयति—

(२) "ऐन्द्र नो गधि प्रिये"तीन्द्रियस्य वीर्यस्याऽवरुध्यै ॥ २ ॥

'ऐन्द्र नो गधि प्रिये'ति तृचः इन्द्रशब्दयोगात् इन्द्रियस्य वीर्यस्य चाऽवरुध्यै अवरोधनाय भवति ॥ २ ॥

अथ तृतीयस्योक्थस्य स्तोत्रीयं तृचं दर्शयति—

(३) "पुरां भिन्दुर्युवा कविरमितौजा अजायत ।

---

१. प्रेष्ठं वो अतिथिं स्तुषे मित्रमिव प्रियम् । अग्ने रथं न वेद्यम् ।
कविमिव प्रशंस्यं यं देवास इति द्विता । नि मर्त्येष्वादधुः ॥ २ ॥
त्वं यविष्ठ दाशुषो नॄं पाहि शृणुही गिरः । रक्षा तोकमुत त्मना ॥
सा. सं. उ. ५. १. १८.

२. ऐन्द्र नो गधि प्रिय सत्राजिदगोह्य । गिरिर्न विश्वतः पृथुः पतिर्दिवः ॥
अभि हि सत्य सोमपा उभे बभूथ रोदसी । इन्द्रासि सुन्वतो वृधः पतिर्दिवः ॥
त्वं हि शश्वतीनामिन्द्र धर्ता पुरामसि । हन्ता दस्योर्मनोर्वृधः पतिर्दिवः ॥
सा. सं. उ. ५. १. १९.

३. पुरां भिन्दुर्युवा कविरमितौजा अजायत ।
इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः ॥ १ ॥
त्वं वलस्य गोमतोऽपावरद्रिवो बिलम् ।
त्वां देवा अबिभ्युषस्तुज्यमानास आविषुः ॥ २ ॥
इन्द्रमीशानमोजसाभि स्तोमैरनूषत ।
सहस्रं यस्य रातय उत वा सन्ति भूयसीः ॥ ३ ॥
सा. सं. उ. ५. १. २०.

**इन्द्रो विश्वस्य कर्म्मणो भर्त्ता वज्री पुरुष्टुत" इति धृत्या एव ॥ ३ ॥**

'पुरां भिन्दु'रिति तृतीयस्योक्थस्य स्तोत्रीयस्तृचः कार्य्यः। स च धर्त्तशब्दयोगात् धृत्यै धारणाय भवति। धर्तशब्दप्रयोगप्रदर्शनाय भूयसः पदसमूहस्याऽनुवादः ॥ ३ ॥

अथ प्रथमस्योक्थस्य साम विधत्ते—

**औशनं भवति ॥ ४ ॥**

औशनाख्यं साम 'प्रेष्ठं व' इति तृचे गेयम् ॥ ४ ॥

अथैतत् स्तौति—

**उशना वै काव्योऽकामयत यावानितरेषां काव्यानां लोकस्तावन्तꣳस्पृणुयामिति स तपोऽतप्यत स एतदौशनमपश्यत्तेन तावन्तं लोकमस्पृणोद्यावानितरेषां काव्यानामासीत्तद्वाव स तर्ह्यकामयत कामसनि सामौशनं काममेवैतेनाऽवरुन्धे ॥ ५ ॥**

काव्यः कवेः पुत्र उशना नाम ऋषिः पुरा कामितवान् इतरेषां स्वव्यतिरिक्तानां काव्यानां कविपुत्राणां स्वदायादानां यावान् यावत्परिमाणको लोकः तावन्तं लोकं स्पृणुयां अहं प्राप्नुयामिति। स च तपस्तप्त्वैतत्साम दृष्टवान्। तेन च तावन्तं लोकं प्राप्नोत् यावान् यावत्परिमाणको लोक इतरेषां काव्यानामासीत्। सिद्धमन्यत् ॥ ५ ॥

अथ द्वितीयस्योक्थस्य साम विधत्ते—

**सांवर्त्तं भवति ॥ ६ ॥**

एतदाख्यं साम 'ऐन्द्र नो गधी'त्यस्मिंस्तृचे गेयम् ॥ ६ ॥

अथाऽस्य साम्नः सांवर्त्तसंज्ञां निर्ब्रुवन् पापक्षयहेतुतामाह—

**देवानां वै यज्ञꣳ रक्षाꣳस्यजिघाꣳसꣳस्तान्येतेन इन्द्रः संवर्त्तमपावपद्यत् संवर्त्तमपावपत्तस्मात् सांवर्त्तं पाप्मा वाव स तानसचत(१) तं सांवर्त्तेनापाघ्नताऽप**

---

१. तानसचत इत्यत्र तमगृह्णात् इति भाष्यसम्मतः पाठः।

**पाप्मानꣳहते सांवर्त्तेन तुष्टुवानः ॥ ७ ॥**

देवानां सम्बन्धिनं यज्ञं रक्षांस्यजिघांसन् हन्तुमैच्छन्। तानि रक्षांसि एतेन साम्ना इन्द्रः संवर्त्तं प्रलयं उपावपत् उपागमयत्। यत्संवर्त्तमुपावपत् उपागमयत् तस्मादस्य साम्नः सांवर्त्तमिति नाम। तं यज्ञं पाप्मा पापमेव अगृह्णात् गृहीतवान्। तं पाप्मानं सांवर्त्तेन अनेन साम्ना देवा अपाघ्नत। तस्मादद्यतनोऽपि सांवर्त्तेन स्तुवन् पाप्मानमपहते ॥ ७ ॥

अथ तृतीयस्योक्थस्य साम दर्शयति—

**मारुतं भवति ॥ ८ ॥**

मारुतं साम 'पुरां भिन्दुरि'त्यस्मिंस्तृचे गेयम् ॥ ८ ॥

अथैतत् स्तौति—

**मासा वै रश्मयो मरुतो रश्मयो मरुतो वै देवानां भूयिष्ठा भूयिष्ठा असामेति वै सत्रमासते भूयिष्ठा एव भवन्त्यृतुमन्ति पूर्वाण्यहान्यनृतवः छन्दोमा यदेतत्साम भवति तेनैतान्यहान्यृतुमन्ति भवन्ति ॥ ९ ॥**

मासा एव संवत्सरस्य रश्मिभूताः मरुतश्चेन्द्रस्य रश्मयः। अतो मासानां मरुताञ्च साम्यात् छन्दोमानामृतुमत्त्वमिति उपरिष्टाद्योज्यम्। एतत्सामसम्बन्धिनो ये मरुतः ते खलु देवानां मध्ये भूयिष्ठा बहुतराः अद्यतना यजमाना अपि भूयिष्ठाः पुत्रपौत्रादिभिर्बहुतरा असाम भवाम इत्येवंकामा यजमानाः सत्रमासते। अतो भूयसां मरुतां सम्बन्धिनाऽनेन साम्ना स्तुवन्तो भूयिष्ठा एव भवन्ति। किञ्च पूर्वाणि त्रिवृत्पञ्चदशादिस्तोमकानि षडहानि ऋतुमन्ति ऋतुयुक्तानि, त्रिवृदादीनां षण्णां स्तोमानां वसन्ताद्यात्मना संस्तवात्। तथा च तैत्तिरीयके 'वसन्तेनर्तुना देवाः वसवस्त्रिवृता स्तुतमि'त्यनुवाके संस्तवो दृश्यते। उक्तवैलक्षण्यात् अनृतवः ऋतुरहितास्त्रयश्छन्दोमा यद्यस्मात् एतन्मारुतं साम भवति तेनैतानि छन्दोमाख्यानि त्रीण्यहान्यृतुमन्ति ऋतुयुक्तानि भवन्ति। कुत एतत् 'मासा वै रश्मयो मरुतो रश्मय' इति मरुतां मासात्मना संस्तवात् मासद्वयात्मकत्वाच्च ऋतूनाम् ॥ ९ ॥

एतेषु त्रिषूक्थस्तोत्रेषु पूर्ववत् स्तोमं विधाय स्तौति—

**चतुश्चत्वारिंꣳश एव स्तोमो भवत्योजस्येव तद्वीर्ये प्रतितिष्ठत्योजो वीर्यं त्रिष्टुप् ॥ १० ॥**

सिद्धमेतत् ॥ १० ॥

(१)वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्क-
भूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते
माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे
चतुर्दशाध्यायस्य द्वादशः खण्डः ॥

चतुर्दशाध्यायस्समाप्तिमगमत् ॥



१. इदं 'क' पुस्तके नोपलभ्यते.

# पञ्चदशोऽध्यायः ॥

## प्रथमः खण्डः ॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ।

एवं दशरात्रस्याऽष्टानामह्नां स्तोमक्लृप्तिरुक्ता । अथ नवमस्याऽष्टाचत्वारिंशस्तोमकस्य प्रथमेनाऽऽवरणेन स्तोमक्लृप्तिरारभ्यते । तत्र बहिष्पवमानस्य प्रतिपदं तृचं दर्शयति—

(१)"अक्रान् समुद्रः परमे विधर्म्मन्नि"ति नवमस्याऽह्नः प्रतिपद्भवति ॥ १ ॥

प्रतिपद्यतेऽनयेति प्रतिपत् 'अक्रान् समुद्र' इति तृचो बहिष्पवमानस्य प्रथमो भवतीत्यर्थः ॥ १ ॥

(२)'परमे विधर्म्मन्नि'ति पदद्वययोगादस्य तृचस्याऽनेन नवमेनाऽह्ना सङ्गतिमाह—

परमं वा एतदहर्विधर्म विधर्म्म वा एतदन्यैरहर्भिरहर्यन्नवमं ज्येष्ठꣳ हि वरिष्ठम् ॥ २ ॥

एतन्नवममहः परमं वै उत्कृष्टतरं अष्टाचत्वारिंशेन त्रिवृदादिभ्यस्सर्वेभ्यः स्तोमेभ्योऽधिकेन स्तोमेन युक्तत्वात् । अत एवैतदहर्विधर्म्म स्तोत्रीयाधिक्येन गुरुत्वातिशयात् विशेषेण धारणीयम् । एतदेव व्याचष्टे 'विधर्म्म वा' इति । अन्यैस्त्रिवृदादिस्तोमकैरेतदहर्विधर्म वै विशेषेण धारणीयं यन्नवमं नवसंख्यापूरकमेतदहः । कुतो विधरणीय-

---

१. अक्रान्त्समुद्रः प्रथमे विधर्मन् जनयन्प्रजा भुवनस्य गोपाः ।
वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे स्वानो अद्रिः ॥ १ ॥
मत्सि वायुमिष्टये राधसे नो मत्सि मित्रावरुणा पूयमानः ।
मत्सि शर्धो मारुतं मत्सि देवान्मत्सि द्यावापृथिवी देव सोम ॥ २ ॥
महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवान् ।
अदधादिन्द्रे पवमान ओजोऽजनयत्सूर्ये ज्योतिरिन्दुः ॥ ३ ॥
सा. सं. उ. ५. २. १.

२. 'प्रथमे विधर्मन्नि'ति सामसंहितायां ऋग्यजुस्संहितयोश्च पाठः । परन्तु मूलेऽत्र 'परम' इत्येव दृश्यते । तं पाठमन्यथयितुमनभिलषता मया स एव पाठोऽत्र निवेशितः ।

मित्यत आह—ज्येष्ठं बृहत्तरम् । तस्य व्याख्यानं 'वरिष्ठमि'ति । हि यस्मादेतन्नवममहः वरिष्ठं गुरुतरं तस्मात् त्रिधर्म । एवञ्च परमविधर्म-शब्दयुक्तस्तृचोऽस्मिन्नहनि सङ्कल्पत इत्यर्थः ॥ २ ॥

अथाऽस्य तृचस्य द्वितीयामृचमनूद्य स्तौति—

**"मत्सि वायुमिष्टये राधसे न" इति वारुण्येषा भवति यद्वै यज्ञस्य दुरिष्टं तद्वरुणो गृह्णाति तदेव तदवयजति ॥ ३ ॥**

'मत्सि वायुमिष्टय' इत्यस्यामृचि 'मत्सि मित्रावरुणा पूयमान' इति वरुणशब्दश्रवणात् एषा ऋक् वारुणी वरुणसम्बन्धिनी भवति । यद्वै यत् खलु यज्ञस्य दुरिष्टं दुर्यजनं तद्वरुणो गृह्णाति आदत्ते । तत्तया वारुण्या तदेव दुरिष्टं तदवयजति ॥ ३ ॥

अथैतस्य प्रथमस्य तृचस्य स्तोत्रीयसंज्ञां कुर्वन् प्रकारान्तरेण स्तौति—

**स्तोत्रीयस्तृचो भवति प्राणापानानामवरुध्यै ॥ ४ ॥**

सिद्धमेतत् ॥ ४ ॥

अथैतस्मिन् बहिष्पवमाने दश स्तोत्रीया विधत्ते—

**दशर्चो भवति दशाक्षरा विराट् वैराजमन्नमन्नाद्यस्याऽवरुध्यै ॥ ५ ॥**

दशानामृचां समाहारो दशर्चः (१)'ऋक्पूरब्धूः पथामानक्षे'इत्यकारस्समासान्तः । स च(२) 'एष देवो अमर्त्य' इत्यादिकः । स्पष्टमन्यत् ॥५॥

---

१. पा. सू. ५. ४. ७४.

२. एष देवो अमर्त्यः पर्णवीरिव दीयते । अभि द्रोणान्यासदम् ॥ १ ॥
एष विप्रैरभिष्टुतोऽपो देवो विगाहते । दधद्रत्नानि दाशुषे ॥ २ ॥
एष विश्वानि वार्या शूरो यन्निव सत्वभिः । पवमानस्सिषासति ॥ ३ ॥
एष देवो रथर्यति पवमानो दिशस्यति । आविष्कृणोति वग्वनुम् ॥ ४ ॥
एष देवो विपन्युभिः पवमान ऋतायुभिः । हरिर्वाजाय मृज्यते ॥ ५ ॥
एष देवो विपाकृतोऽति ह्वरांसि धावति । पवमानो अदाभ्यः ॥ ६ ॥
एष दिवं विधावति तिरो रजांसि धारया । पवमानः कनिक्रदत् ॥ ७ ॥
एष दिवं व्यासरत्तिरो रजांस्यस्तृतः । पवमानस्स्वध्वरः ॥ ८ ॥

अथैतत्स्तौति—

**सप्रभृतयो भवन्तीन्द्रियस्य वीर्यस्य रसस्याऽनतिक्षाराय यत्र वै देवा इन्द्रियं वीर्यं रसमपश्यंस्तदनुन्यतुदन् ॥ ६ ॥**

ता ऋचः सप्रभृतयः समानोपक्रमाः 'एष देवो अमर्त्यः' 'एष विप्रैरभिष्टुतः' 'एष विश्वानि वार्यो'त्येवंविधा भवन्ति । तच्च सप्रभृतित्वं इन्द्रियस्य इन्द्रियलिङ्गस्य वीर्यस्य वीर्यात्मकस्य रसस्य अनतिक्षाराय अतिक्षरणाभावाय भवति । यत्र खलु मन्त्रभागे देवा इन्द्रियं वीर्यं रसमपश्यन् दृष्टवन्तः तन्मन्त्रभागं अनुन्यतुदन् प्रत्यृचमभ्यस्यन् रसस्याऽनपगमाय अभ्यसनाद्रक्षयन्नित्यर्थः ॥ ६ ॥

अथाऽन्यां अष्टर्चस्तोत्रीयां विधत्ते—

**अष्टर्चा भवति ॥ ७ ॥**

अष्टानामृचां समाहारोऽष्टर्चः । स च (१)'एष धिया यात्यण्व्ये' त्यादिकः ॥ ७ ॥

अथैतामष्टसंख्यामुपजीव्य स्तौति—

**( अष्टाशफाः पशवः शफशस्तत्पशूनाप्नोति ) अष्टा-**

---

एष प्रत्नेन जन्मना देवो देवेभ्यस्सुतः । हरिः पवित्रे अर्षति ॥ ९ ॥
एष उ स्य पुरुव्रतो जज्ञानो जनयन्निषः । धारया पवते सुतः ॥ १० ॥
सा. स. उ. ५. २. २

१. एष धिया यात्यण्व्या शूरो रथेभिराशुभिः । गच्छन्निन्द्रस्य निष्कृतम् ॥ १ ॥
एष पुरू धियायते बृहते देव वीतये । यत्राऽमृतास आशत ॥ २ ॥
एतं मृजन्ति मर्त्यमुप द्रोणेष्वायवः । प्रचक्राणं महीरिषः ॥ ३ ॥
एष हितो विनीयतेऽन्तश्शुन्ध्यावता पथा । यदी तुञ्जन्ति भूर्णयः ॥ ४ ॥
एष रुक्मिभिरीयते वाजी शुभ्रेभिरंशुभिः । पतिस्सिन्धूनां भवन् ॥ ५ ॥
एष शृङ्गाणि दोधुवच्छिशीते यूथ्यो वृषा । नृम्णा दधान ओजसा ॥ ६ ॥
एष वसूनि पिब्दनः परुषा ययिवां अति । अव शादेषु गच्छति ॥ ७ ॥
एतमुत्यं दश क्षिपो हरिं हिन्वन्ति यातवे । स्वायुधं मदिन्तमम् ॥ ८ ॥
सा. सं उ. ५. २. ३.

( ) कुण्डलान्तर्गतो भागः क पुस्तके नाऽस्ति ।

**क्षरा गायत्री तेजो ब्रह्मवर्चसं गायत्री तेज एव ब्रह्मवर्चसमवरुन्धे ॥ ८ ॥**

सिद्धप्रायमेतत् ॥ ८ ॥

अथ चतुरः षड्टृचान् विधत्ते—

**षड्टृचा भवन्त्यृतूनां धृत्यै ॥ ९ ॥**

षण्णामृचां समाहारः षड्टृचः, षट्संख्यासाम्यात् षण्णामृतूनां धृत्यै धारणाय भवति ॥ ९ ॥

अथाऽस्य षड्टृचस्य चतुस्संख्यामुपजीव्य स्तौति—

**चत्वारः षड्टृचा भवन्ति चतुर्विंशतिरर्द्धमासाः संवत्सरः संवत्सर एव प्रतितिष्ठति ॥ १० ॥**

(१)'एष उक्थः' (२)'एष वाजी' (३)'एष कविः'

---

१. एष उक्थ वृषा रथोऽव्या वारेभिर्व्यत । गच्छन्वाजं सहस्रिणम् ॥ १ ॥
एतं त्रितस्य योषणो हरिं हिन्वन्त्यद्रिभिः । इन्दुमिन्द्राय पीतये ॥ २ ॥
एष स्य मानुषाष्वा श्येनो न विक्षु सीदति । गच्छन् जारो न योषितम् ॥३॥
एष स्य मद्यो रसोऽवचष्टे दिवःशिशुः । य इन्दुर्वारमाविशत् ॥ ४ ॥
एष स्य पीतये सुतो हरिरर्षति धर्णसिः । क्रन्दन्योनिमभि प्रियम् ॥ ५ ॥
एतं त्यं हरितो दश मर्मृज्यन्ते अपस्युवः । याभिर्मदाय शुम्भते ॥ ६ ॥
सा. सं. उ. ५. २. ४.

२. एष वाजी हितो नृभिर्विश्वविन्मनसस्पतिः । अव्यं वारं विधावति ॥ १ ॥
एष पवित्रे अक्षरत्सोमो देवेभ्यस्सुतः । विश्वा धामान्याविशत् ॥ २ ॥
एष देवश्शुभायतेऽधि योनावमर्त्यः । वृत्रहा देववीतमः ॥ ३ ॥
एष वृषा कनिक्रदद्दशभिर्जामिभिर्यतः । अभि द्रोणानि धावति ॥ ४ ॥
एष सूर्यमरोचयत्पवमानो अधि द्यवि । पवित्रे मत्सरो मदः ॥ ५ ॥
एष सूर्येण हासते संवसानो विवस्वता । पतिर्वाचो अदाभ्यः ॥ ६ ॥
सा. सं. उ. ५. २. ५.

३. एष कविरभिष्टुतः पवित्रे अधि तोशते । पुनानो घ्नन्नप द्विषः ॥ १ ॥
एष इन्द्राय वायवे स्वर्जित्परिषिच्यते । पवित्रे दक्षसाधनः ॥ २ ॥
एष नृभिर्विनीयते दिवो मूर्धा वृषा सुतः । सोमो वनेषु विश्ववित् ॥३॥
एष गव्युरचिक्रदत्पवमानो हिरण्ययुः । इन्दुस्सत्राजिदस्तृतः ॥ ४ ॥

(१)'स सुतः पीतय' इति चत्वारः षडृचा भवन्ति । त एव चतुर्विंशतिस्तोत्रीया भवन्ति। संवत्सरश्चतुर्विंशतिरर्द्धमासाः संवत्सरात्मकः। तथा च चतुर्भिः षडृचैः संवत्सर एव यजमानः प्रतिष्ठितो भवति ॥१०॥

तेषु चतुर्थस्य षडृचस्य किञ्चिल्लिङ्गमुपजीव्य स्तौति—

**सवानुत्तमः षडृचो भवत्युभयस्य परोक्षप्रत्यक्षस्याऽवरुध्यै ॥ ११ ॥**

सवान् 'स सुतः पीतये' 'स पवित्रे' 'स वाजी रोचनं दिव' इत्येवं सशब्दयुक्तः उत्तमः अन्त्यश्चतुर्थः षडृचो भवति । तच्छब्दस्य परोक्षवाचित्वात् । तच्च स इति पदं परोक्षवाचकं इतरत्प्रत्यक्षवाचकमित्युभयस्य द्विविधस्य परोक्षप्रत्यक्षस्य देशकालादिविप्रकृष्टस्य प्रत्यक्षस्य पुरोवर्त्तिनः फलस्याऽवरोधनाय भवति ॥ ११ ॥

अथ बहिष्पवमानस्याऽन्त्यं तृचं विधाय स्तौति—

**तृच उत्तमो भवति येनैव प्राणेन प्रयन्ति तमभ्युयन्ति ॥ १२ ॥**

अत्रोत्तरापाठे वियुजामन्तिमस्य तृचस्य पृथगाम्नानात् कोऽसावित्याशङ्क्य सूत्रकारेणोक्तम्—(२)'नवमस्य ज्योतिष्टोमः पर्य्यासः सामिक इत्येक'इति । अयमर्थः–नवमस्याऽह्नो बहिष्पवमानेऽन्त्यस्तृचो ज्योतिष्टोमः ज्योतिष्टोमसम्बन्धी । भवति सर्वत्र प्रकृतिभूते ज्योतिष्टोमे

---

एष शुष्म्यसिष्यददन्तरिक्षे वृषा हरिः । पुनान इन्दुरिन्द्रमा ।
एष शुष्म्यदाभ्यस्सोम पुनानो अर्षति । देवावीरघशंसहा ॥ ६ ॥
सा. सं. उ. ५. २. ६.

१. स सुतः पीतये वृषा सोमः पवित्रे अर्षति विघ्नन्रक्षांसि देवयुः ॥
स पवित्रे विचक्षणो हरिरर्षति धर्णसिः । अभि योनिं कनिक्रदत् ॥
स वाजी रोचनं दिवः पवमानो विधावति । रक्षोहा वारमव्ययम् ।
स त्रितस्याधि सानवि पवमानो अरोचयत् । जामिभिस्सूर्यं सह ॥
स वृत्रहा वृषा सुतो वरिवोविददाभ्यः । सोमो वाजमिवाऽसरत् ।
स देवः कविनेषितोऽभिद्रोणानि धावति । इन्दुरिन्द्राय मंहयन् ॥
सा. सं. उ. ५. २. ७.

२. लाट्या. श्रौ. ३. ६. २६.

सप्तमेऽहनि वा (१)'यः पावमानी'रित्यस्याऽन्त्यस्तृचः अनयोरन्यतरोऽस्मिन्नवमेऽहनि बहिष्पवमानस्याऽन्त्यस्तृचः कार्य इत्यर्थः । गतमन्यत् ॥ १२ ॥

अथाऽस्मिन् बहिष्पवमाने स्तोमं विधत्ते—

**अष्टाचत्वारिंशं एव स्तोमो भवति प्रतिष्ठायै प्रजात्यै ॥ १३ ॥**

अष्टाचत्वारिंशस्तोत्रीयात्मकः स्तोमो भवति । स च संख्याद्वारा प्रतिष्ठायै प्रतिष्ठानाय प्रजात्यै प्रजननाय च भवति । जगती ह्यष्टाचत्वारिंशदक्षरा । पशवश्च जागताः । पशूनाञ्च प्रतिष्ठाहेतुत्वं लोकसिद्धम् । एवं संख्याद्वारा अष्टाचत्वारिंशस्य प्रतिष्ठाहेतुता द्रष्टव्या ॥ १३ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे पञ्चदशाध्यायस्य प्रथमः खण्डः ॥

---

## अथ द्वितीयः खण्डः ॥

अथाऽस्मिन्नवमेऽहनि प्रथममाज्यस्तोत्रं दर्शयति—

**(२)"अगन्म महा नमसा यविष्ठ"मित्याग्नेयमाज्यं भवति ॥ १ ॥**

---

१. यः पावमानीरध्येत्यृषिभिस्संभृतं रसम् ।
सर्वं स पूतमश्नाति स्वदितं मातरिश्वना ॥ १ ॥
पावमानीर्यो अध्येत्यृषिभिस्सम्भृतं रसम् ।
तस्मै सरस्वती दुहे क्षीरं सर्पिर्मधूदकम् ॥ २ ॥
पावमानीस्स्वस्त्ययनीस्सुदुघा हि घृतश्चुतः ।
ऋषिभिस्सम्भृतो रसो ब्राह्मणेष्वमृतं हितम् ॥ ३ ॥

सा. सं. उ. ५. २. ८.

२. अगन्म महा नमसा यविष्ठं यो दीदाय समिद्धस्स्वे दुरोणे ।
चित्रभानुं रोदसी अन्तरुर्वी स्वाहुतं विश्वतः प्रत्यञ्चम् ॥ १ ॥
स मह्ना विश्वा दुरितानि साह्वानग्निष्टवे दम आजातवेदाः ।
स नो रक्षिषद्दुरितादवद्यादस्मान् गृणत उत नो मघोनः ॥ २ ॥

'अगन्म मह'त्ययं तृचः आग्नेयमग्निदैवत्यं प्रथममाज्यस्तोत्रं भवति॥ गमिधातुयुक्तत्वादयं नवमेऽहनि सङ्गत इत्याह—

**गच्छन्तीव वा एते ये नवममहर्गच्छन्ति ॥ २ ॥**

ये यजमानाः नवममहर्गच्छन्ति प्राप्नुवन्ति एते गच्छन्तीव वै दशरात्रस्य समाप्तप्रायत्वाद्यागाग्निं गच्छन्तीव वै । तस्मादगन्म महेति गमिधातुयुक्तस्तृचो नवमेऽहनि योग्य इत्यर्थः ॥ २ ॥

अथाऽस्य तृचस्य प्रथमायामृचि लिङ्गत्रयमनूद्य सङ्गतिप्रदर्शनायाऽऽह—

**"यो दीदाय समिद्धस्स्वे दुरोण" इति दीदायेव ह्येष यो नवभिरहर्भिस्तुष्टुवानः "स्वाहुतमि"ति स्वाहुतो ह्येष यो नवभिरहर्भिराहुतो "विश्वतः प्रत्यञ्च"मिति विश्वतो ह्येष प्रत्यङ् ॥ ३ ॥**

योऽग्निर्नवभिरहर्भिः प्रायणीयातिरात्रसाहितैरतीतैरष्टभिरहोभिस्तुष्टुवानः स्तुतः एष दीदायेव विदीप्त एव हि । तस्मात् 'दीदाय समिद्धस्स्वे दुरोण' इति लिट्छिरस्कस्य दीदतेः प्रयोगस्सङ्गत इत्यर्थः । तथा योऽग्निर्नवभिरहर्भिराहुत आहुतिभिस्तर्पितः एष हि स्वाहुतः सुष्ठु आहुत्या तर्पितो भवति । तस्मात् स्वाहुतमिति पदयोगः । तथा एष ह्यग्निर्विश्वतः सर्वत्र प्राणिषु प्रत्यङ् प्रत्यञ्चति सरूपेण अन्तर्वर्त्तमानो भवति । तस्मात् विश्वतः प्रत्यङ्ङिति पदं तत्र प्रयुज्यते ॥ ३ ॥

अथाऽस्य तृचस्य तृतीयायामृचि किञ्चिल्लिङ्गं प्रदर्श्य स्तौति—

**"त्वं वरुण उत मित्रो अग्न" इति वारुण्येषा भवति यद्वै यज्ञस्य दुरिष्टं तद्वरुणो गृह्णाति तदेव तदवयजति ॥ ४ ॥**

'त्वं वरुण' इति वरुणशब्दश्रवणात् एषा स्तोत्रीया वारुणी वरुणसम्बन्धिनी भवति । शिष्टं सिद्धम् ॥ ४ ॥

---

त्वं वरुण उत मित्रो अग्ने त्वां वर्धन्ति मतिभिर्वसिष्ठाः ।
त्वे वसु सुषणनानि सन्तु यूयं पात स्वस्तिभिस्सदानः ॥ ३ ॥
सा. सं. उ. ५. २. ६.

अथ द्वितीयमाज्यस्तोत्रं दर्शयति—

**(१)"मित्रꣳ हुवे पूतदक्ष"मिति राथन्तरं मैत्रावरुणम्॥५॥**

'मित्रं हुव' इति रथन्तरसम्बन्धि मैत्रावरुणं मित्रावरुणदेवताकं द्वितीयमाज्यस्तोत्रं भवति । (२)'गव्यन्तस्त्वा हवामहे' इति राथन्तरे प्रगाथे हवतिधातुदर्शनात् अत्राऽपि तत्सद्भावात् राथन्तरत्वम् ॥५॥

वैकृतेषु मध्ये सकृत्प्रयुक्तस्याऽस्य राथन्तरस्याऽऽज्यस्य पुनः प्रयोगे कारणमाह—

**उग्रगाधमिव वा एतद्यच्छन्दोमास्तद्यथाऽत उग्रगाधे व्यतिषज्य गाहन्त एवमेवैतद्रूपे व्यतिषजति छन्दोमानामसंव्याथाय ॥ ६ ॥**

एतच्च(३)'अग्निं वो देवमग्निभिः सजोषा' इति खण्डे व्याख्यातम्॥६॥

अथ तृतीयमाज्यस्तोत्रं दर्शयति—

**(४)"महाꣳ इन्द्रो य ओजस"इत्यैन्द्रमष्टमेन वै देवा अह्नेन्द्रमवाजयन्नवमेन पाप्मानमघ्नन्नहरेवैतेन महयन्ति ॥**

'महाँ इन्द्रो य ओजसे'ति तृच ऐन्द्रमिन्द्रदैवत्यं तृतीयमाज्यस्तोत्रं भवति । अस्य तृचस्य नवमेऽहनि सङ्गतिरुच्यते—अष्टमेन खल्वह्ना देवाः पुरा इन्द्रमवाजयन्नवनयन् । नवमेनाऽह्ना पाप्मानं पापरूपं वृत्रं अघ्नन्नहिंसन् । एतेन महच्छब्दयुक्तेन तृचेन तन्नवममहरेव महयन्ति· महत् कुर्वन्ति ॥ ७॥

---

१. मित्रं हुवे पूतदक्षं वरुणं च रिशादसम् । धियं घृताचीं साधन्ता ॥ १ ॥
ऋतेन मित्रावरुणावृतावृधावृतस्पृशा । क्रतुं बृहन्तमाशाथे ॥ २ ॥
कवी नो मित्रावरुणा तुविजाता उरुक्षया । दक्षं दधाते अपसम् ॥ ३ ॥
सा. सं. उ. २. २. ६.

२. सा. सं. उ. १. १. ११. २.　　३. ता. ब्रा. १४. ८. १.

४. महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ इव । स्तोमैर्वत्सस्य वावृधे ॥ १ ॥
कण्वा इन्द्रं यदक्रत स्तोमैर्यज्ञस्य साधनम् । जामि ब्रुवत आयुधा ॥ २ ॥
प्रजामृतस्य पिप्रतः प्र यद्भरन्त वह्नयः । विप्रा ऋतस्य वाहसा ॥ ३ ॥
सा. सं. उ. ५. २. १०.

अथ चतुर्थमाज्यस्तोत्रं दर्शयति—

**(१)"ता हुवे ययोरिद"मिति राथन्तरमैन्द्राग्नम् ॥८॥**

'ता हुव' इति तृचः राथन्तरं रथन्तरसम्बन्धि ऐन्द्राग्नं इन्द्राग्निदेवताकं चतुर्थमाज्यस्तोत्रं भवति। 'मित्रं हुव' इति पदस्याऽपि रथन्तरसम्बन्धो द्रष्टव्यः ॥ ८ ॥

रथन्तरसम्बन्धिनोऽस्य तृचस्य (२)प्रयोगे दोषं पूर्ववदुपपादयति—

**उग्रगाधमिव वा एतद्यच्छन्दोमास्तद्यथाऽप्त उग्रगाधे व्यतिषज्य गाहन्त एवमेवैतद्रूपे व्यतिषजति छन्दोमानामसंव्याथाय स्तोमः ॥ ९ ॥**

एतेष्वपि चतुर्ष्वाज्यस्तोत्रेषु पूर्वोक्ताष्टाचत्वारिंश एव स्तोमः कार्य्यः। लिङ्गमन्यत्। इत्थं पञ्चसु प्रातस्सवनिकेषु स्तोत्रीयाः स्तोमक्लृप्तिश्च विहिता। तासु गातव्यं साम प्राकृतमेवेत्यवगन्तव्यम् ॥ ९ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे पञ्चदशाध्यायस्य द्वितीयः खण्डः ॥

---

## अथ तृतीयः खण्डः ॥

अथाऽस्मिन्नवमेऽहनि माध्यन्दिनपवमानस्य प्रथमं तृचं दर्शयति—

**"(३)पवमानस्य जिघ्नतो हरेश्चन्द्रा असृक्षते"ति हरिवत्यो गायत्र्यो भवन्ति छन्दोमानामयातयामतायै ॥१॥**

---

१. ता हुवे ययोरिदं पप्ने विश्वं पुरा कृतम्। इन्द्राग्नी न मर्धतः ॥ १ ॥
उग्रा विघनिना मृध इन्द्राग्नी हवामहे। ता नो मृडात ईदृशे ॥ २ ॥
हथो वृत्राण्यार्या हथो दासानि सत्पती। हथो विश्वा अप द्विषः ॥ ३ ॥
सा. सं. उ. २. २. ८.

२. प्रयोगं पूर्ववदिति क. पु.

३. पवमानस्य जिघ्नतो हरेश्चन्द्रा असृक्षत। जीरा अजिरशोचिषः ॥ १ ॥
पवमानो रथीतमः शुभ्रेभिश्शुभ्रशस्तमः। हरिश्चन्द्रो मरुद्गणः ॥ २ ॥
पवमान व्यश्नुहि रश्मिभिर्वाजसातमः। दधत्स्तोत्रे सुवीर्यम् ॥ ३ ॥
सा. सं. उ. ५. २. ११.

'पवमानस्य जिघ्नत' इत्याद्यास्तिस्रो हरिवत्यो हरिवच्छब्द-युक्ताः गायत्र्यः स्तोत्रीया भवन्ति। ताश्च हरिवच्छब्दयोगात् छन्दो-मानां त्रयाणामह्नामयातयामतायै अगतश्रतायै भवन्ति ॥ १ ॥

अथैता ऋचः प्रकारान्तरेण स्तौति--

**"पवमानस्य जिघ्नत" इति वै बृहतो रूपꣳ "हरे-श्चन्द्रा असृक्षते"त्ति जगत्या उभयोः सहरूपमुपैति सा-म्नश्च छन्दसश्च ॥ २ ॥**

जिघ्नत इति प्रतिपाद्यमानं हननं बृहत्साम्नो रूपम्। तद्धि क्षत्रिय-जात्या सहोत्पन्नत्वेन शौर्य्यवत्त्वात् हननक्षमम्। तथा चन्द्राः आह्ला-दकारिणः हरेर्हरणशीलादसृक्षत सृष्टा अभूवन्निति आह्लादकत्वं प्रति-पाद्यते। तच्च पशूनां सम्भवति। पशवश्च जागता इति चन्द्रा इति पदं जगत्या जगतीच्छन्दसो रूपम्। तथा च 'पवमानस्य जिघ्नत' इति तृचं प्रयुञ्जानः साम्नश्च बृहतश्छन्दसश्च उभयो रूपं सहोपैति उपगच्छति भूयसे फलायेति शेषः ॥ २ ॥

अथाऽन्यं स्तोत्रीयं तृचं विधाय स्तौति--

**"(१)परीतो षिञ्चता सुतमि"त्ति परिवत्यो भवन्त्यन्तो वै नवममहस्तस्यैताः पर्याप्त्यै ॥ ३ ॥**

'परीतो षिञ्चता सुतमि'त्याद्यास्तिस्रः परिवत्यः परिशब्दयुक्ताः स्तोत्रीया भवन्ति। तेन च परिशब्देन पर्य्याप्तिर्लक्ष्यते। नवममहश्चा-न्तो वै दशरात्रे तृतीयस्य त्रिरात्रस्याऽनेनाऽह्ना समापनात्। अतस्त-स्य नवमस्याऽह्नः एताः परिवत्यः पर्य्याप्त्यै परिसमापनाय भवन्ति ॥३॥

अथाऽन्यं तृचं विधत्ते—

**"(२)असावि सोमो अरुषो वृषा हरि"रिति जगत्य-**

---

१. परीतो षिञ्चता सुतं सोमो य उत्तमं हविः।
दधन्वाँ यो नर्यो अप्स्वान्तरा सुषाव सोममद्रिभिः ॥ १ ॥
नूनं पुनानोऽविभिः परि स्रवादब्धः सुरभिन्तरः।
सुते चित्वाऽप्सु मदामो अन्धसा श्रीणन्तो गोभिरुत्तरम् ॥ २ ॥
परि स्वानश्चक्षसे देवमादनः क्रतुरिन्दुर्विचक्षणः ॥ ३ ॥
सा. सं. उ. ५. २. १२.

२. असावि सोमो अरुषो वृषा हरी राजेव दस्मो अभि गा अचिक्रदत्।

**स्सत्यस्त्रिष्टुभो रूपेण तस्मात्त्रिष्टुभां लोके क्रियन्ते ॥४॥**

'असावि सोम' इत्याद्यास्तिस्रः स्तोत्रीयाः । ताश्च स्वभावतो जगत्योऽपि रूपेण त्रिष्टुभः । वृषशब्दो हि त्रैष्टुभं रूपम । (१)वृषवद्वृत्रहवद्राथिमाद्विश्ववदि'त्यादिना तद्रूपत्वस्य परिगणनात् । यस्मादेवमेताः त्रिष्टुभः तस्मात् त्रिष्टुभां लोके स्थाने क्रियन्ते प्रयुज्यन्ते । प्रकृतौ हि माध्यन्दिनपवमानान्त्यस्तृचः(२) 'प्र तु द्रवे'ति त्रैष्टुभः ॥ ४ ॥

इत्थं त्रयस्तृचा विहिताः । अथ सामानि क्रमेण विधित्सुः प्रथमतृचे गायत्रं साम विधाय पूर्ववत्तद्ब्राह्मणञ्चाऽतिदिशति—

**गायत्रं भवति यदेव गायत्रस्य ब्राह्मणम् ॥५॥**

प्रकृतौ गायत्रसाम्नो यद्ब्राह्मणं(३) 'इमे वै लोका गायत्रमि'त्यादिकमाम्नातं तदेवाऽस्याऽपि गायत्रस्य ब्राह्मणम् ॥ ५ ॥

अथाऽस्मिन्नेव प्रथमे तृचे सामान्तरं विधत्ते—

**भरद्वाजस्यादारसृद्भवति ॥ ६ ॥**

भरद्वाजस्यादारसृदाख्यं साम 'पवमानस्य जिघ्नत' इति तृचे गेयम् ॥ ६ ॥

अथाऽस्यैतां संज्ञां निर्ब्रुवन् स्तौति—

**दिवोदासं वै भरद्वाजपुरोहितं ननाजनाः पर्ययन्त स उपासीददृषे गातुं मे विन्देति तस्मा एतेन साम्ना गातुमविन्दद्गातुविद्वा एतत्सामाऽनेन दारे नासृन्मेति तददारसृतोऽदारसृत्त्वं विन्दते गातुं न दारे धावत्यदारसृता तुष्टुवानः ॥ ७ ॥**

---

पुनानो वारमत्येष्यव्ययं श्येनो न योनिं घृतवन्तमासदत् ॥ १ ॥
पर्जन्यः पिता महिषस्य पर्णिनो नाभा पृथिव्यां गिरिषु क्षयं दधे ।
स्वसार आपो अभि गा उदासरंत्सं ग्रावभिर्वसते वीते अध्वरे ॥ २ ॥
कविर्वेधस्या पर्येषि माहिनमत्यो न मृष्टो अभि वाजमर्षसि ।
अपसेधं दुरिता सोम नो मृड घृता वसानः परि यासि निर्णिजम् ॥ ३ ॥
सा. सं. उ. ५. २. १३.

१. तां. ब्रा. १०. ६. २. २. सा. सं. ड. १. १. १०. १.
३. तां. ब्रा. ७. १. १.

भरद्वाजः पुरोहितो यस्य तं भरद्वाजपुरोहितं दिवोदासं ननाजनाः नानाविधा जनाः शत्रुजनाः पर्य्यैयन्त पर्य्यवेष्टयन् । स दिवोदासो भरद्वाजमुपासीदत् विनयपूर्वमुपागच्छत्—हे ऋषे गातुं मार्गं मे मम विन्द लम्भयेति ब्रुवन् । एवमागताय तस्मै दिवोदासाय एतेन साम्ना गातुं मार्गमविन्दत् अलभत । अत एतत्साम गातुविद्वै मार्गलम्भकम् । एवमस्य भरद्वाजसम्बन्धमुक्त्वा अदारसृत्त्वमपि निर्वक्ति–अनेन खलु साम्ना दारे दरे श्वभ्रे नाऽसृम्म नाऽगच्छामेति । यस्मादेवमब्रुवन् तत्तस्माददारसृतस्साम्नोऽदारसृत्त्वं अदारसृदिति नाम सम्पन्नम् । यस्मादेवं तस्मादनेनाऽदारसृता तुष्टुवानो गातुं मार्गं विन्दते दारे दरे श्वभ्रे न धावति न प्रापयत्यात्मानम् ॥ ७ ॥

अथ सामान्तरं विधाय तद्ब्राह्मणञ्चाऽतिदिशति—

**सुरूपं भवति यदेव सुरूपस्य ब्राह्मणम् ॥ ८ ॥**

सुरूपाख्यमपि साम 'पवमानस्य जिघ्नत' इत्यस्मिन्नेव तृचे गेयम् । (१)पशवो वै सुरूपमि'त्यादिकं यद्ब्राह्मणं सुरूपस्य प्रागाम्नातं तदेवाऽस्याऽपि स्वरूपस्तावकं ब्राह्मणम् ॥ ८ ॥

अथाऽन्यत्साम विधत्ते—

**हरिश्रीनिधनं भवति ॥ ९ ॥**

हरी३श्री२३४५इः इति निधनं यस्य तत्तथोक्तम् । एतत्संज्ञं साम 'पवमानस्य जिघ्नत' इत्यस्मिन्नेव तृचे गातव्यम् ॥ ९ ॥

अथैतत्स्तौति—

**पशवो वै हरिश्रियः पशूनामवरुध्यै श्रियश्च हरश्चोपैति तुष्टुवानः ॥ १० ॥**

गवाद्याः पशवः खलु हरिश्रियः क्षरणशीलश्रवणात् । अतो हरिश्रीशब्दनिधनमेतत्साम पशूनामवरोधनाय भवति । अथाऽनेन तुष्टुवानः स्तुवन् श्रियं सम्पदं हरस्तेजश्चोपैत्युपगच्छति हरिश्रीशब्दाभ्यामुभयोस्सूचनात् ॥ १० ॥

अथाऽन्यत्साम विधत्ते—

**सैन्धुक्षितं भवति यदेव सैन्धुक्षितस्य ब्राह्मणम्॥११॥**

---

१. तां. ब्रा. १४. ११. ११.

सिन्धुक्षिता दृष्टं साम सैन्धुक्षितम्। तदपि 'पवमानस्य जिघ्नत' इत्येव तृचे गेयम्। तस्य च सैन्धुक्षितस्य(१) 'सिन्धुक्षिद्वै राजन्य ऋषि'रित्यादिकं यद्ब्राह्मणं स्तावकं प्रागाम्नातं तदेवाऽस्य ब्राह्मणं स्तुत्यर्थमानेतव्यम् ॥ ११ ॥

अथाऽन्यत्साम विधत्ते—

**गतनिधनं बाभ्रवं भवति गत्यै ॥ १२ ॥**

गमिधातुनिष्पन्नगुशब्दयुक्तं निधनं यस्य तद्गतनिधनं बभ्रुणा दृष्टं साम पूर्वोक्त एव तृचे गेयम्। तच्च गत्यै गमनाय भवति ॥ १२ ॥

अथैतद्बभ्रुसम्बन्धप्रदर्शनपुरस्सरं स्वर्गसाधनतया स्तौति—

**बभ्रुर्वा एतेन कौम्भ्योऽञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्याऽनुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः ॥ १३ ॥**

कौम्भ्यः कुम्भ्यगोत्रः बभ्रुर्नाम ऋषिः एतेन साम्ना साधनेन अञ्जसा आर्जवेन स्वर्गं लोकमपश्यत् अजानात्। शिष्टं सिद्धम् ॥ १३ ॥

अथाऽन्यत्साम विधत्ते—

**इडानाᳪसंक्षारो भवति ॥ १४ ॥**

इडानां संक्षाराख्यं साम 'पवमानस्य जिघ्नत' इत्यस्मिन्नेव तृचे गेयम् ॥ १४ ॥

अथैतत्स्तौति—

**पशवो वा इडा पशवश्छन्दोमाः पशुष्वेव तत्पशून्दधाति ॥ १५ ॥**

'इडानां संक्षार' इत्यत्र षष्ठ्यन्तेनेडाशब्देनाऽभिधेया या इडाः ताः पशवो वै पशव एव। छन्दोमानां च पशुत्वं(२) प्रागुक्तम्। तत्तथा च पशुष्वेव पशून्दधाति स्थापयति ॥ १५ ॥

अथाऽन्यत्साम विधत्ते—

**ऋषभः पावमानो भवति ॥ १६ ॥**

पावमानः पवमानसामसम्बन्धी ऋषभ एतत्पदद्वयाभिधेयं सा-

१. तां. ब्रा. १२. १२. ६.   २. तां. ब्रा. १४. ५. ३१.

माऽपि 'पवमानस्य जिघ्नत' इत्यस्मिन्नेव तृचे कार्य्यम् ॥ १६ ॥

अथैतत्पशुजन्महेतुत्वेन स्तौति—

**पशवो वै छन्दोमाः पशुष्वेव तन्मिथुनमप्यर्ज्जति प्रजात्यै न ह वा अनृषभाः पशवः प्रजायन्ते ॥ १७ ॥**

छन्दोमाख्यान्यहानि पशवो वै पशुरूपाण्येव । एवञ्च ते 'ऋषभो भवती'ति यत्तेन पशुष्वेव मिथुनमप्यर्ज्जति सम्पादयति । किमर्थम्? प्रजात्यै प्रजननाय वत्सादिरूपेणाऽभिवृद्ध्यर्थं भवति, न खल्वनृषभाः ऋषभेण पुंसा वियुक्ताः पशवः प्रजायन्ते वत्साञ्जनयन्ति ॥१७॥

अथाऽन्यत्साम विधत्ते—

**पृष्ठं भवति ॥ १८ ॥**

पृष्ठाख्यं साम 'परीतो षिञ्चता सुतमि'त्यस्मिन् तृचे गेयम् ॥ १८ ॥

अथैतत् स्तौति—

**पृष्ठं वा एतदह्नां यन्नवमं पृष्ठ एव तत्पृष्ठेन स्तुवते प्रतिष्ठायै ॥ १९ ॥**

यन्नवममहः एतदह्नां प्रायणीयादीनां पृष्ठं वै पृष्ठवंशस्थानीयम् । तथा च पृष्ठरूप एवैतस्मिन्नवमेऽहनि पृष्ठेन स्तुवते स्तुवन्त्युद्गातारः । किमर्थम्? प्रतिष्ठायै प्रतिष्ठनार्थम, उभयोस्साम्याद्यजमानस्य प्रतिष्ठाहेतुर्भवतीत्यर्थः ॥ १९ ॥

अथाऽन्यत्साम विधत्ते—

**कौल्मलबार्हिषं भवति ॥ २० ॥**

कुल्मलबार्हिस्सम्बधि कौल्मलबार्हिषम् । एतदाख्यं साम 'परीतो षिञ्चते'त्यस्मिन्नेव तृचे गेयम् ॥ २० ॥

अथैतत्स्तौति—

**कुल्मलबर्हिर्वा एतेन स्वर्गं लोकमपश्यत् प्रजातिं भूमानमगच्छत् प्रजायते बहुर्भवति कौल्मलबर्हिषेण तुष्टुवानः ॥ २१ ॥**

स्पष्टोऽर्थः ॥ २१ ॥

अथाऽन्यत्साम दर्शयति—

अर्कपुष्पं भवति ॥ २२ ॥

अर्कपुष्पाख्यं सामाऽपि 'परीतो षिञ्चते'त्यस्मिन्नेव तृचे गातव्यम्॥२२॥

(१)अथैतद्रससहितान्नाद्यहेतुत्वेन स्तौति—

अन्नं वै देवा अर्क इति वदन्ति रसमस्य पुष्पमिति सरसमेवाऽन्नाद्यमवरुन्धेऽर्कपुष्पेण तुष्टुवानः ॥२३॥

देवा अन्नं खलु अर्क इति वदन्ति अर्च्यते अनेनेति व्युत्पत्तेः। अस्याऽन्नस्य रसं पुष्पमिति वदन्ति। तस्मादन्नरसयोर्वाचकोऽर्कपुष्पशब्दः। तदाख्येन साम्ना तुष्टुवानः सरसं रससहितमेवाऽन्नाद्यमवरुन्धे ॥ २३ ॥

अथाऽन्यत्साम विधत्ते—

दैर्घश्रवसं भवति ॥ २४ ॥

दीर्घश्रवसः सम्बन्धि दैर्घश्रवसम्। एतदाख्यं सामाऽपि 'परीतो षिञ्चते'त्यस्मिन्नेव तृचे गेयम् ॥ २४ ॥

अथैतत्स्तौति—

दीर्घश्रवा वै राजन्य ऋषिर्ज्योगपरुद्धोऽशनायꣳश्चरन् स एतद्दैर्घश्रवसमपश्यत्तेन सर्वाभ्यो दिग्भ्योऽन्नाद्यमवारुन्ध सर्वाभ्यो दिग्भ्योऽन्नाद्यमवरुन्धे दैर्घश्रवसेन तुष्टुवानः ॥ २५ ॥

दीर्घश्रवा नाम राजन्यो राजपुत्र ऋषिः ज्योक् चिरकालमपरुद्धः शत्रुभिराक्रान्तो राज्याद्भ्रष्टः अशनायन् अशनमात्मन इच्छन् क्षुधार्त्तश्चरन् सर्वतः (२)परिभ्रमन् आसीत्। स ऋषिः एतद्दैर्घश्रवसमपश्यत्। तेन च साम्ना सर्वाभ्यो दिग्भ्योऽन्नाद्यमवारुन्ध प्राप्नोत्। अतोऽद्यतनोऽपि दैर्घश्रवसेन तुष्टवानः सर्वाभ्यो दिग्भ्यः प्राच्यादिसर्वदिक्सकाशात् अन्नाद्यमवरुन्धे प्राप्नोति ॥ २५ ॥

अथाऽन्यत्साम विधत्ते—

वैयश्वं भवति यदेव वैयश्वस्य ब्राह्मणम् ॥ २६ ॥

---

१. अथैतत्स्तौतीति क.पु. २. परिभ्रममाण इति क. पु.

वैयश्वेन दृष्टं साम वैयश्वम् । (१)तदपि 'परीतो षिञ्चते'ति तृचे गेयम् । तस्य च स्तावकं(२)'व्यश्वो वा एतेने' त्यादिकं यद्ब्राह्मणं पूर्वमाम्नातं तदत्राऽपि स्तुत्यर्थमानेतव्यम् ॥ २६ ॥

अथैतस्मिन्नेव तृचे ऽन्यत्साम विधाय तद्ब्राह्मणञ्चाऽतिदिशति—

**अभीशवं यदाभीशवस्य ॥ २७ ॥**

अभीशवमिति । भवति ब्राह्मणमिति पदद्वयमनुषज्यते । अभीश-वाख्यं साम(३)'यद्वा अधृतमभीशुना तद्दाधारे'त्यादिकं तस्य प्रागा-म्नातम् । अन्यत्स्पष्टम् ॥ २७ ॥

अथाऽन्यत्सामद्वयं विधत्ते—

**देवस्थानं भवति प्रतिष्ठायै संस्कृति भवति संꣳ-स्कृत्यै ॥ २८ ॥**

देवास्तिष्ठन्त्यस्मिन् साम्नीति देवस्थानम् । (४)तत्साम 'परीतो षि-ञ्चते'त्यस्मिन्नेव तृचे गेयम् । तस्य स्थितिवाचिस्थानशब्दाभिधेयत्वात् प्रतिष्ठायै प्रतिष्ठानाय भवति । तथा सङ्कृत्याख्यमपि साम तस्मिन्नेव तृचे गेयम् । तच्च संस्कृत्यै संस्काराय भवति ॥ २८ ॥

(५)अथैतत्सामद्वयं सम्प्रयुज्य स्तौति—

**अहर्वा एतदव्लीयत तद्देवा देवस्थाने तिष्ठन्तः स-ङ्कृतिना समस्कुर्वꣳस्तत् सङ्कृतेः संकृतित्वं देवस्थानेन वै देवाः स्वर्गे लोके प्रत्यतिष्ठन् स्वर्गे लोके प्रतितिष्ठा-मेत्येतत् ॥ २९ ॥**

एतन्नवममहः खलु पुरा अव्लीयत व्यशीर्य्यत तद्देवा देवस्थाने सा-म्नि आधारभूते तिष्ठन्तः तन्नवममहः सङ्कृतिना साम्ना (६)समस्कुर्वन् तत्तस्मात्संस्कारसाधनत्वात्सङ्कृतेरस्य साम्नः सङ्कृतित्वं संकृतीति

---

१. तदप्यस्मिन्नेव तृचे गेयमिति. क. पु.

२. तां. ब्रा. १४ १०. ९.

३. तां. ब्रा१२. ९. १६.

४. एतत्सामेति. क. पु.

५. अथैकत्र सामद्वयं प्रयुज्येति. क. पु.

६. समस्कुर्वन् संस्कृतं सम्पूर्णमकुर्वन् । यस्मादनेन समकुर्वन् तस्मात् संस्कारसा-धनत्वात् संस्तुवते । तस्मादस्य साम्नस्संकृतित्वं संकृतिनाम सम्पन्नमिति. क. पु.

नाम सम्पन्नम्। अत एव संस्कृत्या इति युक्तम्। तथा देवस्थानेन खलु साम्ना देवाः पुरा स्वर्गे लोके प्रत्यतिष्ठन् प्रतिष्ठिता अभवन्। यजमाना अपि स्वर्गे लोके प्रतितिष्ठाम प्रतिष्ठिता भवामेति हि (१)एतत् एतर्हि एतस्मिन्काले सत्रमासते। अतो देवस्थानं एवं प्रतिष्ठाप्रापकमित्यर्थः ॥ २९ ॥

अथ देवस्थानं विशिष्य श्रैष्ठ्यहेतुत्वेन स्तौति—

**वरुणाय देवता राज्याय नातिष्ठन्त स एतद्देवस्थानमपश्यत्ततो वै तास्तस्मै राज्यायातिष्ठन्त तिष्ठन्तेऽस्मै समानाः श्रैष्ठ्याय ॥ ३० ॥**

वरुणाय षष्ठ्यर्थे चतुर्थी। पुरा वरुणस्य राज्याय राजत्वाय अन्याः सर्वा देवता नाऽतिष्ठन्त राजत्वं नाऽभ्युपागच्छन् राजत्वानभ्युपगमं प्रकाशितवन्त इत्यर्थः। (२)'प्रकाशनस्थेयाख्ययोश्च'ति तिष्ठतेरात्मनेपदम्। (३)'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः' इति सम्प्रदानत्वाच्चतुर्थी। स वरुणः एतद्देवस्थानाख्यं सामाऽपश्यत्। ततोऽनन्तरमेव ता देवतास्तस्मै वरुणाय राज्यायाऽतिष्ठन्त वरुणस्य राज्यत्वमन्वमन्यन्तेत्यर्थः। अतो यो देवस्थानेन स्तौति, अस्मै यजमानाय समानाः सदृशा ज्ञातयः श्रैष्ठ्याय श्रेष्ठत्वाय तिष्ठन्ते अनुमन्यन्ते। पूर्ववदात्मनेपदचतुर्थ्यौ ॥३०॥

अथैतद्वेदनफलमाह—

**क्षत्रस्येवाऽस्य प्रकाशो भवति प्रतितिष्ठति य एवं वेद ॥ ३१ ॥**

क्षत्रस्य क्षत्रियस्येवाऽस्य वेदितुः प्रकाशः कीर्त्तिर्भवति। स्पष्टमन्यत् ॥ ३१ ॥

अथाऽन्यत्सामद्वयं विधत्ते—

**भर्गो भर्गेण तुष्टुवानो भवति यशो यशसा ॥३२॥**

'परीतो षिञ्चते'त्यस्मिंस्तृचे 'श्रीणन्त' इत्यस्मिन्नेकर्चे च क्रमेण भर्गेण यशसा च द्वाभ्यां सामभ्यां स्तुवन् भर्गः तेजस्वी यशो यशस्वी च भवति ॥ ३२ ॥

---

१. एतत् एतस्मिन् लोक इति क. पु. २. पा. सू. १. ३. २३.
३. पा. सू. १. ४. ३४.

अथाऽन्यत्साम विधाय तद्ब्राह्मणञ्चाऽऽदिशति—

**वासिष्ठं भवति यदेव वासिष्ठस्य ब्राह्मणम् ॥३३॥**

वसिष्ठेन दृष्टं साम वासिष्ठम्। तदपि 'परीतो षिञ्चते'ति तृचे 'श्रीणन्त' इत्यभ्यस्यमानायामृचि गेयम्। (१)'वसिष्ठो वा एतेन वैडव' इत्यादिकं तत्स्तावकं यद्ब्राह्मणं प्रागाम्नातं तदत्राऽपि स्तुत्यर्थमानेयम् ॥३३॥

अथाऽन्यत्साम विधत्ते—

**दीर्घतमसोऽर्को भवत्यन्नं वा अर्कोऽन्नाद्यस्याऽवरुद्ध्यै ॥३४॥**

दीर्घतमा नाम ऋषिः तस्य सम्बन्धी अर्कः एतत्संज्ञं साम 'असावि सोमो अरुषो वृषा हरि'रित्यस्मिंस्तृचे गेयम्। शिष्टं सिद्धम् ॥३४॥

अथाऽन्यत्साम विधत्ते—

**सामराजं भवति साम्राज्यमाधिपत्यं गच्छति सामराज्ञा तुष्टुवानः ॥ ३५ ॥**

साम्नां राजा सामराजः(२)'राजाहस्सखिभ्यष्टच्'इति समासान्तः। एतत्संज्ञं साम 'असावि सोमो अरुष' इत्यस्मिन्नेवाऽऽवृत्ते तृचे गेयम्। अनेन च सामराज्ञा साम्ना तुष्टुवानः स्तुवन् साम्राज्यमभिषिक्तस्य राजसूयेनेष्टवतः सार्वभौमस्य राज्ञः कर्म आधिपत्यं अधिपतित्वं गच्छति। अत्र सामराज्ञेति समासान्तविधेः (३)अनित्यतेति टजभावे रूपम्॥३५॥

अथैतत्स्वर्गसाधनमित्याह—

**तदु संवदित्याहुः संवता वै देवाः स्वर्गं लोकं प्रायन्नुच्छतोदायन् ॥ ३६ ॥**

तदु तत्सामराजाख्यं साम संवत् संशब्दवदित्याहुर्ब्रह्मवादिनः। (४) 'अचोदसो नो धन्वन्त्विन्दवः' इत्यस्यां हि योनौ तत्सामोत्पन्नम्। तत्र च 'अर्यो नस्सन्त्वि'ति पदैकदेशस्य संशब्दस्य दर्शनादस्य संवत्वम्। संवता खलु साम्ना पुरा देवाः स्वर्गं लोकं प्रायन् गन्तुं प्रारब्धवन्तः। तथोच्छ्रता उच्छब्दवता साम्ना उदायन्। तस्मादेतत् संवत् स्वर्गप्रापणाय भवतीत्यर्थः ॥ ३६ ॥

---

१. तां. ब्रा. ११. ८. १४. २. पा. सू. ५. ४. ९१. ३. आनत्यत्वेनेति. क. पु.

४. अचोदसो नो धन्वन्त्विन्दवः प्र स्वानासो बृहद्देवेषु हरयः ।
विचिदश्नना इषयो अरातयोऽर्यो नस्सन्तु सनिषन्तु नो धियः ॥
सा. सं. पू. ६. २. २. २.

(१)अथैतत्पवमानस्तोत्रमुपसंहरति—

**निधनान्ताः पवमाना भवन्त्यह्नो धृत्यै स्तोमः ॥३७॥**

अष्टाचत्वारिंशः पूर्वोक्त एवाऽस्य स्तोत्रस्य स्तोमः । सिद्धमन्यत् । ननु 'पवमानस्य जिघ्नत' इति गायत्रतृचे गायत्रादिसामाष्टकं विहितम् । तथा 'परीतो षिञ्चे'ति बार्हते पृष्ठकौल्मलबर्हिषादीनि एकादश सामानि विहितानि । 'असावि सोमो अरुषो वृषा हरि'रिति जागते तृचे सामद्वयम् । एवमेकविंशतिसामसु तृचेषु गीयमानेषु त्रिषष्टिस्तोत्रियास्सम्पद्यन्ते । तथा चाऽष्टाचत्वारिंशस्तोमानीत्येतदसङ्गतम् । नैष दोषः, सूत्रकृता परिहृतत्वात् । स खल्वेवं नवममहः प्रस्तुत्याऽसूत्रयत् (२) 'तस्य बृहत्यामरण्ये गेयानि तृचेषु पृष्ठञ्चे'ति । अस्याऽयमर्थः—यानि बार्हते तृचे एकादश सामानि विहितानि, तेषु पृष्ठं कौल्मलबर्हिषं अर्कपुष्पं दैर्घश्रवसं वैयश्वमाभीशवं वासिष्ठमिति सप्त ग्रामे गेयानि । देवस्थानं सङ्कृति भर्गो यश इति चत्वार्यरण्ये गेयानि । तथा च तस्य नवमस्याऽह्नो बृहत्यां गेयेषु सामसु मध्ये देवस्थानप्रभृति अरण्ये गेयं सामचतुष्टयं ग्रामे गेयेषु च पृष्ठञ्चेत्येतत्सामपञ्चकमेव तृचे कुर्य्यात् । अन्यानि षट्सामान्येकर्चानि कार्य्याणि । (३)'दीर्घतमसोऽर्कोऽन्त्यः सामराजं वे'ति सूत्रकारेण जगत्यां गीयमानस्य सामद्वयस्य विकल्पविधानात् । अन्यतरस्यैव प्रयोगात् पञ्चदशस्तोत्रीया हि गीयन्ते । तथा चाऽष्टाचत्वारिंश एव स्तोमो भविष्यति । (४)पक्षान्तरमपि सूत्रकृतोक्तं तत् अतिविस्तरभयात् न लिखितमिति तत्रैव द्रष्टव्यम् ॥ ३७ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे पञ्चदशाध्याये तृतीयः खण्डः ॥

---

१. अत्रैव पवमानस्तोत्रमिति. क. पु. २. लाट्या. श्रौ. ३. ६. २८.

३. लाट्या. श्रौ. ३. ६. ३२.

४. 'पृष्ठस्योत्तरयोर्दीर्घतमसोऽर्कौ माण्डवञ्चैडं सामराजेऽन्त्ये'(लाट्या श्रौ. ३. ६. ३३.) इति पक्षान्तरमभिहितम् ।

## अथ चतुर्थः खण्डः ॥

अथ पृष्ठस्तोत्रेषु तृतीयं स्तोत्रीयं तृचं दर्शयति—

**(१)"आयन्त इव सूर्यमि"ति सूर्यवत्यो भवन्ति ॥१॥**

सूर्यवत्यः सूर्यशब्दयुक्ताः 'आयन्त इवे'त्याद्यास्तिस्र ऋचो ब्रह्म-साम्नः स्तोत्रीयाः ॥ १ ॥

अथाऽऽसां सूर्यवत्त्वं कथमस्मिन्नहनि सङ्गतमित्यत आह—

**आदित्यदेवत्यꣳ ह्येतदहरन्तो वै सूरोऽन्त एतन्नव-ममह्नामन्त एव तदन्तेन स्तुवते प्रतिष्ठायै ॥ २ ॥**

एतन्नवममहरादित्यदेवत्यं आदित्यदेवतार्थम् । अग्निर्वायुस्सूर्य इति क्रमेणाऽऽदित्यस्तृतीयो भवति । तदहश्च छन्दोमानां तृतीयमिति तद्देवत्यत्वम् । यस्मादेवं तस्मात् सूर्यवत्यस्सङ्गता इत्यर्थः । अपि च सूरः सूर्योऽन्तो वै उक्तप्रकारेणाऽन्तिमः । एतन्नवममहश्च अह्नां अनुष्ठि-तानां प्रायणीयादीनामन्तः अवसानम् । अनेन नवरात्रस्य समाप्यमान-त्वात् । तथा च अन्त एवाऽन्तेन सूर्यवतीभिः स्तोत्रीयाभिः स्तुवते । तच्च स्तवनं उभयोरैकरूप्यात्प्रतिष्ठानाय भवति ॥ २ ॥

अथाऽच्छावाकपृष्ठस्य स्तोत्रीयं तृचं दर्शयति—

**(२)"यत इन्द्र भयामहे ततो नो अभयं कृधि । मघ-वञ्छग्धि तव तन्न ऊतये विद्विषो विमृधो जही"ति द्विष-श्चैव मृधश्च नवमेनाऽह्ना विहत्य दशमेनाऽह्नोत्तिष्ठन्ति ॥३॥**

---

१. आयन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत ।
वसूनि जातो जनिमान्योजसा प्रति भागं न दीधिमः ॥ १ ॥
अलर्षिरातिं वसुदामुप स्तुहि भद्रा इन्द्रस्य रातयः ।
यो अस्य कामं विधतो न रोषति मनो दानाय चोदयन् ॥ २ ॥
( प्रगाथात्मकः ) सा. स. उ. ५. २. १४.

२. यत इन्द्र भयामहे ततो नो अभयं कृधि ।
मघवं छग्धि तव तन्न ऊतये विद्विषो विमृधो जहि ॥ १ ॥
त्वं हि राधसस्पते राधसो महः क्षयस्याऽसि विधर्ता ।
तं त्वा वयं मघवन्निन्द्र गिर्वणः सुतावन्तो हवामहे ॥ २ ॥
( प्रगाथात्मकः ) सा. सं. उ. ५. २. १५.

'यत इन्द्र भयामहे' इत्याद्यास्तिस्र ऋचोऽच्छावाकसाम्नस्स्तोत्रीयाः स्तुत्यर्थमृचोऽनुवादः। अस्यामृचि विद्विषो द्वेष्टॄन् मृधः संग्रामकारिणः, अत एवमुभयविधान् शत्रून् हे इन्द्र त्वं जहि विनाशयेत्यर्थः प्रतिपाद्यते। अत एवंरूपार्थत्वात्तच्छब्दयुक्तेन तृचेन द्विषश्चैव मृधश्च द्वेष्टॄंश्च संग्रामकारिणः उभयविधांश्च शत्रून् अनेन नवमेनाऽह्ना विहत्य विनाश्य दशमेनाऽनुष्ठास्यमानेनाऽविवाक्यसंज्ञेनाऽह्ना उत्तिष्ठन्ति सत्रादुत्थानं कुर्वन्ति। तस्मा 'द्विद्विषो विमृधो जही'ति लिङ्गयुक्तस्तृचो नवमेऽहनि सङ्गत इत्यर्थः ॥ ३ ॥

अथ ब्रह्मपृष्ठनिर्वर्त्तकं साम दर्शयति—

**आयन्तीयं भवति ॥ ४ ॥**

'आयन्त इव सूर्य्यमि'त्याद्यासु गीयमानं आयन्तीयं ब्रह्मसाम भवति ॥ ४ ॥

अथैतत्स्तौति—

**श्रीर्वै आयन्तीयꣳ श्रीर्नवममहः श्रियमेव तच्छ्रियां प्रतिष्ठापयति ॥ ५ ॥**

श्रीर्वै सम्पद्रूपमेव आयन्तीयम्। श्रीशब्दो हि श्रयतिधातोर्निष्पन्नः आयन्तशब्दश्च तथेति ताद्रूप्यम्। नवममहश्च श्रीर्वै ऐश्वर्यरूपम् अष्टाचत्वारिंशस्तोमकत्वेन स्तोत्रीयाबाहुल्यात्। तत्तेन श्रियमेव सम्पदमेव श्रियां सम्पदि प्रतिष्ठापयति उद्गाता प्रतिष्ठितां करोति ॥५॥

अथाऽच्छावाकपृष्ठस्तोत्रनिर्वर्त्तकं साम दर्शयति—

**समन्तं भवति ॥ ६ ॥**

समन्ताख्यं साम 'यत इन्द्र भयामहे' इत्यस्मिंस्तृचे गातव्यम् ॥६॥

एवं नित्यत्वेन विधाय(१) काम्यमपीत्याह—

**समन्तेन पशुकामः स्तुवीत पुरोधाकामः समन्तेन स्तुवीत ॥ ७ ॥**

पशुकामः पशून् कामयमानो यजमानः समन्तेन साम्ना स्तुवीत। तथा पुरोधाकामः पौरोहित्यं कामयमानोऽप्येतेन समन्तेन स्तुवीत।

१. काम्यत्वमप्यस्तीत्याहेति. क. पु.

(१)एवं नित्यकाम्यविषयवाक्यद्वयेन 'खादिरो यूपो भवति' 'खादिरं वीर्य्यकामस्य यूपं कुर्वीते'तिवत् एकस्यैव नित्यत्वं काम्यत्वञ्चोक्तं भवति। तदुक्तम्—(२) 'एकस्य तूभयत्वे संयोगपृथक्त्वमि'ति॥ ७॥

अथैतस्य फलद्वयसाधनतामुपपादयति—

**आग्नेयी पृथिव्याग्नेयो ब्राह्मण ऐन्द्री द्यौरैन्द्रो राजन्योऽन्तरिक्षेण द्यावापृथिवी समन्ते अन्तरिक्षेणैवैनꣳ समन्तं करोति विन्दते पशून् प्र पुरोधामाप्नोति य एवं विद्वान् समन्तेन स्तुवते स्तोमः॥ ८॥**

आग्नेयी अग्निदेवत्या पृथिवी। ब्राह्मणश्चाऽऽग्नेयः, अग्निना सह प्रजापतिमुखादुत्पत्तेः। तथा द्यौरैन्द्री इन्द्रदेवत्या। राजन्यश्चैन्द्र इन्द्रेण सह प्रजापतेः उरसो बाहुभ्याञ्चोत्पत्तेः। एतेन ब्राह्मणराजन्ययोर्द्यावापृथिव्यात्मकत्वमुक्तं भवति। ते च द्यावापृथिवी द्यावापृथिव्यौ अन्तरिक्षेण मध्यवर्त्तिना समन्ते सङ्गच्छेते। अतः समन्तेन स्तुवन् समन्तत्वहेतुनाऽन्तरिक्षेणैवैनं यजमानं समन्तं समन्ततां गतं करोति। किमुक्तं भवतीत्यत आह—'विन्दत' इत्यादि। य एवं ब्राह्मणार्थं विद्वान् जानन् समन्तेन स्तुवते, सोऽयं पशून् विन्दते लभते पुरोधां पुरोधानं पौरोहित्यञ्च प्राप्नोतीति। तेषु च पृष्ठस्तोत्रेषु पूर्वोक्त एवाऽष्टाचत्वारिंश एव स्तोमः कार्य्यः॥ ८॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे पञ्चदशाध्यायस्य चतुर्थः खण्डः॥

---

१. इत्थमिति. क. पु.

२. ( जैं. सू. ४. ३. ५. ) एकस्य खादिरादेः उभयत्वे नित्यकाम्यार्थत्वे संयोगपृथक्त्वं संयुज्यते तादर्थ्येन बोध्यतेऽनेनेति व्युत्पत्त्या संयोगः वाक्यं तस्य पृथक्त्वं नानात्वं कारणमिति सूत्रार्थः।

## अथ पञ्चमः खण्डः ॥

अथाऽस्मिन्नवमेऽहन्यार्भवपवमानस्तोत्रीयांस्तृचान् क्रमेण दर्शय- ति। तत्र प्रथमं तृचं विधाय स्तौति—

**(१)"त्वꣳ सोमासि धारयु"रिति गायत्री भवत्य- ह्नो धृत्यै त्वमिति बृहतो रूपं बार्हतꣳ ह्येतदहः ॥१॥**

'त्वं सोमासी'ति गायत्री आर्भवस्य प्रतिपद्भवति एतदादिकस्तृ चो भवतीत्यर्थः। तच्च 'धारयुरि'ति धृञ् धातोर्निष्पन्नेन शब्देन यो- गादस्य नवमस्याऽह्नो धृत्यै धारणाय भवति। कोऽसावनेनाऽह्ना सङ्ग- तिः? इति तदाह—त्वामित्येतत्पदं बृहत्साम्नो रूपम्। तद्योनौ(२) 'त्वा मिद्धि हवामह' इति युष्मच्छब्ददर्शनात्। एतदहश्च बार्हतं बृहत्साम्नः सम्बन्धि तृतीयं बृहत्पृष्ठो हि तृतीयश्छन्दोमः। अतोऽस्मिन्नहनि तृचः सङ्गत इत्यर्थः ॥ १ ॥

अथ तृचान्तरं विधाय सङ्गतिमाह—

**(३)"त्वꣳ ह्यङ्ग दैव्ये"ति त्वमिति बृहतो रूपं बार्ह- तꣳ ह्येतदहः ॥ २ ॥**

'त्वं ह्यङ्ग दैव्ये'ति तृचोऽप्यार्भवस्य स्तोत्रीयः। सिद्धमन्यत् ॥२॥

अथाऽपरं तृचं विधाय सङ्गतिमाह—

---

१. त्वं सोमाऽसि धारयुर्मन्द्र ओजिष्ठो अध्वरे। पवस्व मंहयद्रयिः ॥ १ ॥
त्वं सुतो मदिन्तमो दधन्वान्मत्सरिन्तमः। इन्दुस्सत्राजिदस्तृतः ॥ २ ॥
त्वं सुष्वाणो अद्रिभिरभ्यर्ष कनिक्रदत्। द्युमन्तं शुष्ममा भर ॥ ३ ॥
सा. सं. उ. ५. २. १६.

२. त्वामिद्धि हवामहे सातौ वाजस्य कारवः।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥
सा. सं. पू. ३. १. १. २.

३. त्वं ह्यङ्ग दैव्य पवमान जनिमानि द्युमत्तमः। अमृतत्वाय घोषयन् ॥ १ ॥
येन नवग्वा दध्यङ्ङपोर्णुते येन विप्रास आपिरे।
देवानां सुम्ने अमृतस्य चारुणो येन श्रवांस्याशत ॥ २ ॥
सा. सं. उ. २. १. १७.

(१)"पवस्व देव वीतय" इति बृहतो रूपं बार्हतꣳ ह्येतदहः ॥ ३ ॥

'पवस्व देव वीतय' इति तृचः । तत्र 'पवस्वे'त्येतद् बृहत्साम्नो रूपम् । सिद्धमन्यत् ॥ ३ ॥

अथाऽन्यं तृचं विधत्ते--

(२)"परि स्यꣳ हर्यतꣳ हरि"मिति परिवत्यो भवन्त्यन्तो वै नवममहरन्तस्यैताः पर्याप्त्यै ॥ ४ ॥

'परि स्यं हर्यतं हरिमि'ति परिशब्दयुक्तास्तिस्रः स्तोत्रीया भवन्ति । शिष्टं सिद्धप्रायम् ॥ ४ ॥

अथाऽक्षरपङ्क्तिच्छन्दस्कं तृचं विधाय पूर्ववदह्नोरिव तं प्रशंसति--

(३)"पवस्व सोम महे दक्षाये"त्यक्षरपङ्क्तिः स्तोमानां प्रभूतिरथो एतर्ह्येवैतर्हि छन्दोऽयातयाम यदक्षरपङ्क्तिस्तेन छन्दोमा अयातयामानः क्रियन्ते ब्रह्मवादिनो वदन्ति यत् षडहे स्तोमाश्छन्दाꣳस्याप्यन्ते किंछन्दस-

---

१. पवस्व देववीतय इन्दो धाराभिरोजसा । आकलशं मधुमान्त्सोम नस्सदः ॥ १ ॥
तव द्रप्सा उदप्रुत इन्द्रं मदाय वावृधुः । त्वां देवासो अमृताय कं पपुः ॥ २ ॥
आ नस्सुतास इन्दवः पुनाना धावता रयिम् । वृष्टिद्यावो रीत्यापः स्वर्विदः ॥ ३ ॥
सा. सं. उ. ५. २. १७.

२. परि स्यं हर्यतं हरिं बभ्रुं पुनन्ति वारेण ।
यो देवान्विश्वाँ इत्परि मदेन सह गच्छति ॥ १ ॥
द्विर्यं पञ्च स्वयशसं सखायो अद्रिसंहतम् ।
प्रियमिन्द्रस्य काम्यं प्रस्नापयन्त ऊर्मयः ॥ २ ॥
इन्द्राय सोम पातवे वृत्रघ्ने परिषिच्यसे ।
नरे च दक्षिणावते वीराय सदनासदे ॥ ३ ॥ सा. सं. उ. ५. २. १८.

३. पवस्व सोम महे दक्षायाऽश्वो न निक्तो वाजी धनाय ॥ १ ॥
प्र ते सोतारो रसं मदाय पुनन्ति सोमं महे द्युम्नाय ॥ २ ॥
शिशुं जज्ञानं हरिं मृजन्ति पवित्रे सोमं देवेभ्य इन्दुम् ॥ ३ ॥
सा. सं. उ. ५. २. १९.

'अक्षरपङ्क्तिः पञ्चकाश्चत्वारः' ( पिं. सू. ३. ४४. ) ( यत्र चत्वारः पादाः पञ्चाक्षरा भवन्ति तत्राऽक्षरपङ्क्तिरित्यर्थः ) इत्याचार्यपिङ्गलोक्तं लक्षणमस्या बोध्यम् ।

**इच्छन्दोमा इत्येतच्छन्दसो यदेता अक्षरपङ्क्तय इति ब्रूयात् ॥ ५ ॥**

एतत्सर्वं पूर्वस्मिन्नध्याये व्याख्यातम् ॥ ५ ॥

अथाऽपरं तृचं विधत्ते—

**(१)"उपोषु जातमप्तुर"मिति गायत्र्यस्सत्यो जगत्यो रूपेण तस्मात् जगतीनां लोके क्रियन्ते ॥ ६ ॥**

'गोभिर्भङ्गं परिष्कृत'मिति गोशब्दो जागतं रूपम् । 'पशवो वै जगत्य'इति श्रुतेः । अत एता गायत्र्यस्सत्योऽपि जागतेन रूपेण योगाज्जगत्यः । गतमन्यत् ॥ ६ ॥

अथैतेषु तृचेषु क्रमेण सामानि विधास्यन्ते । तत्र प्रथमे तृचे (२) गायत्रं साम विधाय तद्ब्राह्मणमप्यतिदिशति—

**गायत्रं भवति यदेव गायत्रस्य ब्राह्मणम् ॥७॥**

(३)स्पष्टम् ॥ ७ ॥

अथैतस्मिन्नेव तृचेऽन्यत्साम विदधाति—

**आश्वसूक्तं भवति ॥ ८ ॥**

आश्वसूक्तं नाम 'त्वं सोमासी'त्येव तृचे गातव्यम् ॥ ८ ॥

(४)तस्य च साम्नोऽवसाने 'शुक्र आहुत' इति पदद्वयं श्रूयते तत् स्तौति--

**अग्निं वै पूर्वैरहोभिराजुहोत्यथैतदादित्यदैवत्यमहः शुक्र आहुत इत्यसौ वा आदित्यः शुक्रस्तमेवैतेनाऽऽजुहोति ॥ ९ ॥**

---

१, उपोषु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम् । इन्दुं देवा अयासिषुः ॥ १ ॥
तमिद्वर्धन्तु नो गिरो वत्सं सं शिश्वरीरिव । य इन्द्रस्य हृदं सनिः ॥२॥
अर्षा नस्सोम शं गवे धुक्षस्व पिप्युषीमिषम् । वर्धा समुद्रमुक्थ्य ॥३॥
सा. सं. उ. ५. २. २०.

२. गायत्रं प्रथमं साम गातव्यम् , तस्य पूर्वोक्तं ब्राह्मणमतिदिशतीति मुद्रितपुस्तकपाठः ।

३. 'त्वं सोमासी'ति तृचे गायत्रं साम प्रथमं गातव्यमिति क. पु.

४. अस्येति. क. पु.

पूर्वैः पूर्वमनुष्ठितैरष्टभिरहोभिः अग्निं वै अग्निमेवाऽऽजुहोति अग्निं जुहोति न सूर्यम्। अधुना तु एतन्नवममहः आदित्यदैवत्यं आदित्यदेवताकम्। एवञ्चाऽस्मिन्नहनि आश्वसूक्तेन 'शुक्र आहुत'इति श्रूयमाणेनैतेन पदेन तमेवाऽऽदित्यमभिजुहोति असौ खल्वादित्यः शुक्रो दीप्तः। सोऽयं शुक्र आहुतः आहुतिभिस्तर्पित इत्यस्याऽर्थस्य प्रतिभासमानत्वात् एतद्विशिष्टेनाऽनेन नवमेनाऽह्ना अभिजुहोतीति व्यपदेशः ॥९॥

अथैतस्मिन्नेव तृचे सामान्तरं विदधाति—

**शाम्मदं भवति ॥ १० ॥**

शम्मदा ऋषिणा दृष्टं साम शाम्मदम्। एतदपि 'त्वं सोमासी' त्यस्मिन्नेव तृचे गेयम् ॥ १० ॥

तदेतत् साक्षात्स्वर्गसाधनमिति स्तौति—

**शम्मद्वा एतेनाऽऽङ्गिरसोऽञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्याऽनुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः ॥ ११ ॥**

आङ्गिरसो अङ्गिरोगोत्रः शम्मदृषिः एतेन साम्ना। सिद्धमन्यत् ॥११॥

अथाऽस्मिन्नेव(१) तृचेऽन्यत् साम विधत्ते—

**दावसुनिधनं भवति ॥ १२ ॥**

दावस्विति निधनं यस्य तत्तथोक्तम् ॥ १२ ॥

अथैतत् स्तौति—

**आशिषमेवाऽस्मा एतेनाऽऽशास्ते साम हि सत्याशीः ॥ १३ ॥**

दातव्यं वसु धनं यस्येति दावसुशब्दार्थः। तथा चाऽस्मै यजमानाय धनविषयामाशिषमेवैतेन दावसुनिधनेन साम्ना आशास्ते कामयते। साम खलु सत्याशीः ऋचां यजुषाञ्च मध्ये अवितथत्वेन फलप्रतिपादकं सामेत्यर्थः ॥ १३ ॥

अथैतत्पशुपोषहेतुत्वेन स्तौति—

**दावसुर्वा एतदाङ्गिरसः पशुकामः सामाऽपश्यत्तेन सहस्रं पशूनसृजत् यदेतत् साम भवति पशूनां पुष्ट्यै ॥**

---

१. सामान्तरमिति. क. पु

दावसुर्नामाऽऽङ्गिरस ऋषिः पशुकामस्सन् तत्साधनत्वेनैतत्साम दृष्टवान्। तेन च साम्ना सहस्रसंख्याकान् पशून् असृजत् अलभत। तथा चैतत् सामाऽस्मिन्नवमेऽहनि भवतीति यत् तत्पशूनां पुष्ट्यै पोषायाऽभिवृद्ध्यै भवति ॥ १४ ॥

अथ सामान्तरं विधत्ते—

**प्रतीचीनेडं काशीतं भवति ॥ १५ ॥**

प्रतीचीना इडा यस्य तथाविधं काशीताख्यं सामाऽपि 'त्वं सोमासि धारयु'रित्यस्मिन्नेव तृचे गेयम् ॥ १५ ॥

अथैतस्य प्रतीचीनेडत्वं पुत्रपश्वादिरूपस्य फलस्य जनिहेतुरिति स्तौति—

**पराचीभिर्वा अन्याभिरिडाभी रेतो दधत्यथैतत्प्रतीचीनेडं काशीतं प्रजात्यै तस्मात्पराञ्चो गर्भाः सम्भवन्ति प्रत्यञ्चः प्रजायन्ते तस्मादुतेऽर्वाचीनबिलेभ्यो नाऽवपद्यन्त एतेन ह्येव ते धृताः ॥ १६ ॥**

कालेयगौतमरौरवारिष्टैतरश्व्यान्धीगवादिषु पूर्वं प्रयुक्तेषु सामसु हो इडा इत्येवं रूपाः पराच्य इडास्ताभिः अन्याभिः पराचीभिरावृत्ताभिः परागताभिरिडाभिर्यजमानरेतो दधत पुत्रपश्वादेरुपादानभूतं वीर्यं स्वयोनावादधतेति। अथाऽधुना प्रयुज्यमानं प्रतीचीनेडं काशीतं प्रजात्यै पूर्वमाहितस्य गर्भस्य प्रजननाय भवति। औ हो वा ईडा इत्यनेन योगादेतत्साम प्रतीचीनेडम्। यस्मादेवं वेदे प्रतिपाद्यते तस्मादेव कारणाल्लोकेऽपि गर्भाः पुंसा योनौ निषिच्यमानाः पराञ्चः प्राङ्मुखाः सम्भवन्ति, उत्पत्तिसमये प्रत्यञ्चः प्रत्यङ्मुखाः प्रजायन्ते उत्पद्यन्ते। हि यस्मादेतेन साम्ना ते गर्भा धृताः, तस्मादेव हेतोरर्वाचीनबिलेभ्यो योनिभ्यो नाऽवपद्यन्ते नाऽधः पद्यन्ते ॥ १६ ॥

अथाऽन्यत्साम विधत्ते—

**हाविष्कृतं भवति प्रतिष्ठायै कृतानुवाद एव सः ॥**

हाविष्कृतं हविष्कृता दृष्टं साम। तदपि 'त्वं सोमासि धारयुरि'ति तृचे गातव्यम्। तच्च यजमानस्य प्रतिष्ठानाय भवति। स च हविष्कृत 'पुरा हविष्मान्वै हविष्कृच्चाऽऽङ्गिरसावास्तामि'त्यादिना कृतानुवाद उक्तानुवाद एव। तत्र हि नवमेऽहनि हविष्कृन्नाध्नोदित्यर्थः प्रतिपा-

दितः। अत एतत्साम समृद्धिहेतुरित्युक्तं भवति ॥ १७ ॥

अथ सामान्तरं विधाय तद्ब्राह्मणञ्चाऽतिदिशति—

**सौपर्णं भवति यदेव सौपर्णस्य ब्राह्मणम् ॥ १८ ॥**

सौपर्णाख्यं साम 'त्वं ह्यङ्ग दव्ये'त्यस्मिंस्तृचे गातव्यम्। (१)'यज्ञो वै देवेभ्योऽपाक्रामत् स सुपर्णरूपं कृत्वाऽचरदि'त्यादिकं सौपर्णस्य यद्ब्राह्मणं प्रागाऽऽम्नातं, तदेवाऽस्याऽपि सौपर्णस्य ब्राह्मणमानीय तेन स्तोतव्यम् ॥ १८ ॥

अथाऽन्यत्साम विधत्ते—

**वैश्वमनसं भवति ॥ १९ ॥**

विश्वमनसा ऋषिणा दृष्टं साम वैश्वमनसम्। तत् 'पवस्व देव वीतय' इत्यस्मिंस्तृचे गेयम् ॥ १९ ॥

अथैतस्य साम्नो विश्वमनसस्सम्बन्धं पापहननहेतुताञ्च प्रतिपिपादयिषुराख्यायिकामाह—

**विश्वमनसं वा ऋषिमध्यायमुद्व्राजितꣳ रक्षोऽगृह्णात्तमिन्द्रोऽचायदृषिं वै रक्षोऽग्रहीदिति तमभ्यवददृषे कस्त्वैष इति, स्थाणुरिति ब्रूहीति रक्षोऽब्रवीत्, स स्थाणुरित्यब्रवीत्तस्मै वा एतेन प्रहरेत्यस्मा इषीकां वज्रं प्रयच्छन्नब्रवीत्तेनाऽस्य सीमानमभिनत् सैषेन्द्रेणतेषीका पाप्मा वाव स तमगृह्णात्तं वैश्वमनसेनापाहताऽपपाप्मानꣳ हते वैश्वमनसेन तुष्टुवानः ॥ २० ॥**

अध्यायमध्ययनं उद्व्राजितं प्राप्तं वैश्वमनसं विश्वमनस्संज्ञमृषिं रक्षोऽगृह्णात् पुरा कश्चित् राक्षसो ग्रहीतवान्। तं वृत्तान्तमिन्द्रोऽचायत् ध्यानयोगेनाऽज्ञासीत्। चायृपूजानिशामनयोरिति धातुः। ऋषिं खलु रक्षोऽग्रहीदिति मनसाऽजानात्। स इन्द्रः तमृषिमभ्यवदत्—हे ऋषे कः खल्वेष तव ग्रहीतेति। एवमिन्द्रेण पृष्टे ऋषिं रक्षोऽब्रवीत्—स्थाणुर्मामग्रहीदितीन्द्राय ब्रूहीति। ततः स ऋषिः स्थाणुर्मां गृहीतवानित्यब्रवीत्। एवमृषिणोक्ते तस्मै राक्षसं एतेन वज्रेण प्रहर जहीति अस्मा ऋषये इषीकां वज्रं इषीका तृणविशेषः। तदेव वज्रीकृत्य प्रय-

१. तां ब्रा. १४. ३. १०.

च्छन् इन्द्रोऽब्रवीत्। ततस्तेन वज्रेण स ऋषिरस्य रक्षसः सीमानं शिरःकपालमध्यमभिनत् विदारितवान्। इन्द्रेणता इन्द्रेण निर्मिता सैषेषीका भूमावुपलभ्यते। एवं तस्मिन् रक्षसि हते स एव स्थाणुः पाप्मा वाव स पापरूप एव भूत्वा तं विश्वमनसमगृह्णात्। तं पाप्मानं तेन वैश्वमनसेन साम्नाऽपाहत व्यनाशयत्। अतोऽद्यतनोऽपि वैश्वमनसेन स्तुवन् यजमानः पाप्मानमपहते ॥ २० ॥

अथाऽन्यस्मिंस्तृचे सामान्तरं विधाय तत्स्तावकं ब्राह्मणञ्चाऽतिदिशति—

**गौरीवितं भवति यदेव गौरीवितस्य ब्राह्मणम् ॥२१॥**

(१)'परित्यं हर्यतं हरिमि'ति तृचे गौरीवितं साम गातव्यम्। तस्य च(२)'गौरीवितिर्वा एतच्छाक्त्य' इत्यादिकं यद्ब्राह्मणमाम्नातं (३)तदत्राऽप्यनुसन्धेयम् ॥ २१ ॥

अथाऽस्मिन्नेव तृचेऽन्यत्साम विधत्ते—

**निहवो भवत्यन्नाद्यस्याऽवरुन्ध्यै ॥ २२ ॥**

(४)वसिष्ठस्यानिहवाख्यं साम 'परित्य'मिति पूर्वोक्त एव तृचे गेयम्। तच्चाऽन्नाद्यस्याऽवरोधनाय भवति ॥ २२ ॥

कुत एतदित्यत आह—

**हीति वा अन्नं प्रदीयत ईत्याग्निरन्नमत्ति ॥ २३ ॥**

अस्मिन् साम्नि ओ ही हीऽ२ ओ ही एहि या ओ २३४ वा हा ही इति स्तोभो दृश्यते। लोके च हीशब्देनाऽन्नं प्रदीयते बालानामास्यनिवारणार्थं भोजयितृभिर्हीशब्दस्य प्रयोगात्। तथैवाऽनुब्रूहीति हिशब्दमुच्चार्य ततो देवेभ्यो हविर्लक्षणमन्नं प्रदीयते। तथा ई इत्येवं रूपं शब्दं कुर्वन्नग्निरन्नं स्वात्मनि हुतं हविरत्ति दहति। अतो ईहीत्यन्नप्रदानसम्बद्धयोः शब्दयोः प्रयोगादस्य साम्नोऽन्नहेतुत्वम् ॥ २३ ॥

अथैतत्साम प्रकारान्तरेण स्तोतुमाख्यायिकामाह—

**ऋषयो वा इन्द्रं प्रत्यक्षं नाऽपश्यन् स वसिष्ठोऽकामयत कथमिन्द्रं प्रत्यक्षं पश्येयमिति स एतन्निहवमप-**

---

१. सा. सं. उ. ५.२.१८. २. तां. ब्रा. १२.११.१०. ३. तदस्याऽपीति क.पु.

४. निहव इत्येव साम्नो नाम मूले दृश्यते, तथाऽपि तस्यैव वसिष्ठस्यनिहव इति संज्ञा भाष्ये कृतेति बोध्यम्।

**श्यत्ततो वै स इन्द्रं प्रत्यक्षमपश्यत्, स एनमब्रवीद् ब्राह्मणं ते वक्ष्यामि यथा त्वत्पुरोहिता भरताः प्रजनिष्यन्तेऽथ माऽन्येभ्य ऋषिभ्यो मा प्रवोच इति तस्मा एतान् स्तोमभागानब्रवीत्ततो वै वसिष्ठपुरोहिता भरताः प्राजायन्त सेन्द्रं वा एतत्साम यदेतत्साम भवति सेन्द्रत्वाय ॥ २४ ॥**

वसिष्ठाद्या ऋषयः पुरा इन्द्रं प्रत्यक्षं नाऽपश्यन् अपरोक्षेण नाऽजानन् । तेषामृषीणां मध्ये स प्रसिद्धो वसिष्ठ ऋषिरकामयत कथं केन प्रकारेणोपायेन इन्द्रं प्रत्यक्षं पश्येयं साक्षात्कुर्यामिति । एवं कामयमानस्सः निहवाख्यमेतत्सामाऽपश्यत् । तस्मादेतस्य वासिष्ठस्य निहव इति संज्ञा । ततोऽनन्तरमेव स ऋषिरिन्द्रं प्रत्यक्षमपश्यत्साक्षात्कृतवान् । स इन्द्र एवमृषिमब्रवीत्—हे वसिष्ठ ते तुभ्यं ब्राह्मणं वक्ष्यामि अनुष्ठेयार्थप्रतिपादकं वेदभागमुपदेक्ष्यामि, यथा येन प्रकारेण त्वत्पुरोहिताः त्वं पुरोहितो येषां तथाविधा भरता एतत्संज्ञा राजानः । यद्वा भरता इति मनुष्यनाम । सर्वे मनुष्याः प्रजनिष्यन्ते उत्पस्यन्ते । अथ मदुपदेशानन्तरं मामिन्द्रं अन्येभ्यस्त्वद्व्यतिरिक्तेभ्य ऋषिभ्यो मा प्रवोचः न ब्रूयाः इत्येवमुक्त्वा तस्मै वसिष्ठाय एतान् पूर्वोक्तान् स्तोमभागान् 'रश्मिरसी'त्याद्यान् स्तोत्रानुमन्त्रणमन्त्रान् अब्रवीत् उक्तवान् । ततो वै तत एव कारणात् सर्वे भरता वसिष्ठपुरोहिताः प्राजायन्त वसिष्ठः पुरोहितो येषां ते तथोक्ताः । एवमिन्द्रप्रत्यक्षीकरणं वसिष्ठेन दृष्टत्वात् एतन्निहवाख्यं साम सेन्द्रं इन्द्रसहितं खलु । स्पष्टमन्यत् ॥ २४ ॥

अथाऽन्यत्साम विधत्ते—

**यद्वाहिष्ठीयं भवति ॥ २५ ॥**

स्वयोनौ यद्वाहिष्ठशब्दश्रवणाद्यद्वाहिष्ठीयं एतत्संज्ञं सामाऽपि 'परित्यमि'त्यस्मिन्नेव तृचे गेयम् ॥ २५ ॥

**ब्रह्मयशसं वा एतानि सामान्यृचा श्रोत्रीयाणि ब्रह्मयशसी भवति यद्वाहिष्ठीयेन तुष्टुवानः ॥ २६ ॥**

एतानि यद्वाहिष्ठीयप्रभृतीनि सामानि ऋचा योनिभूतेन ऋचोऽवयवेन पदेन श्रोत्रीयाणि श्रोतव्यानि । ब्रह्मयशसं वै ब्राह्मणजातेः सम्ब-

न्धि यशोरूपाणि । अतोऽनेन यद्वाहिष्टीयेन तुष्टुवानः स्तुवन् यजमानो ब्रह्मयशसी भवति ॥ २६ ॥

अथ सामान्तरं विधाय तत्स्तावकं ब्राह्मणमाऽऽतिदिशति—

**आसितं भवति यदेवाऽऽसितस्य ब्राह्मणम् ॥२७॥**

(१)असितेन ऋषिणा दृष्टं सामाऽऽसितम् । तदपि 'परित्यं हर्यत'मित्यस्मिन्नेव तृचे गातव्यम् । तस्य चासितस्य(२)'असितो वा एतेन देवल' इत्यादिकं यद्ब्राह्मणं पूर्वमाम्नातं तदस्याऽप्यासितस्य स्तावकं ब्राह्मणम् ॥ २७ ॥

अथैतस्मिस्तृचेऽन्यत्साम विधत्ते—

**साध्रं भवति सिद्ध्यै ॥ २८ ॥**

राधसाध संसिद्धाविति धातोः रक्प्रत्यये साध्रशब्दनिष्पत्तिः । तथा च साध्रशब्दाभिधेयं साम 'परित्यं हर्यतं हरिमि'ति तृचे गीयमानं यजमानाभिमतफलस्य सिध्यै प्राप्त्यै सम्पद्यते ॥ २८ ॥

अथाऽन्यत्साम विधत्ते—

**आकूपारं भवति ॥ २९ ॥**

एतदपि 'परित्यमि'ति पूर्वोक्त एव तृचे गेयम् ॥ २९ ॥

अथैतत् स्तौति—

**अकूपारो वा एतेन कश्यपो जेमानं महिमानमगच्छज्जेमानं महिमानं गच्छत्याकूपारेण तुष्टुवानः ॥३०॥**

अकूपाराख्यः कश्यपगोत्र ऋषिः जेमानं जेतृत्वं महिमानं महत्वञ्चैतेन साम्ना प्राप्नोत् । स्पष्टमन्यत् ॥ ३० ॥

अथ सामान्तरं विधत्ते—

**विधर्म भवति धर्मस्य विधृत्यै ॥ ३१ ॥**

(३)'पवस्व सोममहे दक्षाये'त्यस्मिन्नक्षरपङ्क्तिच्छन्दस्के तृचे विधर्माख्यं साम गेयम् । विधर्मेत्यस्य साम्नोऽवसाने दर्शनाद्विधर्मसंज्ञा । यस्मादेतत्साम विधर्म विधृत्य कारणं तस्माद्धर्मस्याऽनुष्ठेयस्य(४) या-

---

१. 'परित्यमि'ति तृचे असिताख्यं साम गेयम् । तद्ब्राह्मणं—'असितो वा एतेने'त्यादिकं पूर्वमाम्नातमत्राऽनुसन्धेयमिति. क. पु. २. तां ब्रा. १४. ११. १९.

३. सा. सं. उ. ५. २. १९. ४. प्राचीनस्येति. क. पु.

गस्य विधृत्यै (१)विधारणाय भवति ॥ ३१ ॥

अथैतेषु छन्दोमाख्येष्वहस्सु ब्रह्मवादिभिः कृतं कञ्चित् प्रश्नमुपन्य·स्याऽस्य साम्न आधारभूतं तृचं छन्दसा परिहरति—

**ब्रह्मवादिनो वदन्ति यत् षडहे स्तोमाश्छन्दाꣳ‍सि स्याप्यन्ते किंछन्दसश्छन्दोमा इति पुरुषच्छन्दस इति ब्रूयात् पुरुषो वै पाङ्क्तः पुरुषो द्विपदा छन्दोमानामया·तयामतायै ॥ ३२ ॥**

ब्रह्मवादिनो वेदार्थचिन्तकाश्छन्दोमेषु चोदयन्ति । किमिति ? पृष्ठ्यषडहे समाप्ते त्रिवृदादयः स्तोमाः गायत्र्यादीनि छन्दांसि च क्रमेण षट्स्वहस्सु विनियुक्तत्वाद्यस्मात्समाप्यन्ते तस्मात् छन्दोमाः किंछ·न्दसः ? केन छन्दसा निष्पन्नाः ? यदि विनियुक्तानां गायत्र्यादीनाम·न्यतमेन, तर्हि गतसारता स्यात् । (२)अस्योत्तरम्—पुरुषच्छन्दसः छ न्दोमा इति ब्रूयात् । ननु पुरुषो नाम गायत्र्यादि(३)छन्दसोऽनन्तरं न प्रसिद्ध इत्यत आह—पुरुषो वै पाङ्क्त इति । अयमर्थः—पङ्क्तिस्तावत् पञ्च·पदत्वात् पञ्चसंख्यावती । पुरुषश्च त्वङ्मांसवसास्थिमज्जेति पञ्चधातुभिः पञ्चज्ञानेन्द्रियैः पञ्चकर्मेन्द्रियैश्चोत्पत्तिमत्त्वेन पञ्चसंख्याद्वारा प·ङ्क्तिः । द्विपदाश्च पादद्वयसाम्यात् पुरुषस्थानीयाः । ताश्च 'पवस्व सोम महे दक्षाये'त्याद्याः तिस्रोऽक्षरपङ्क्तिच्छन्दस्काः द्विपदाः । अत एव छन्दोद्वयं पुरुषशब्दाभिधेयं पूर्वमविनियुक्तत्वात् छन्दोमानामयातया·मतायै अगतसारतायै भवति ॥ ३२ ॥

अथाऽन्यत्साम विधत्ते—

**श्रुध्यं भवति ॥ ३३ ॥**

(४) 'उपोषु जातमि'त्यस्मिंस्तृचे एतत् श्रुध्याख्यं साम गेयम् ॥३३॥

अथैतत्पशुसाधनत्वेन स्तौति—

**पशवो वै श्रुध्यं पशूनामवरुध्यै ॥ ३४ ॥**

स्पष्टोऽर्थः ॥ ३४ ॥

एतदेव व्याचष्टे—

---

१. विहरणायेति. क. पु. २. तस्योत्तरमिति. क. पु.
३. छन्दोत्तरमिति. क. पु. ४. सा. सं. उ. ५. २. २०.

**प्रजापतिः पशूनसृजत तेऽस्मात् सृष्टा अपाक्राम७ँस्तानेतेन साम्ना श्रूधिया एहियेत्यन्वह्वयत्त एनमुपावर्त्तन्त यदेतत् साम भवति पशूनामुपावृत्त्यै ॥ ३५ ॥**

पुरा प्रजापतिः पशूनसृजत सृष्टवान्। ते च सृष्टा अस्मात् प्रजापतेस्सकाशादपाक्रामन् पलायन्त। तानप, क्रान्तान् पशूनेतेन श्रुध्येन साम्ना 'श्रूधिया एहिये'ति सामावयवेन स्तोभेनाऽन्वह्वयत् अनुक्रमेणाऽऽहूतवान्। स्तोभस्याऽयमर्थः—हे पशुसङ्घ त्वं मद्वचनं श्रुधि शृणु, एहि आगच्छेति। एवमाहूतास्ते पशव एनं प्रजापतिमुपावर्त्तन्तोपागताः। तस्मादेतत्साम पशूनामुपावृत्त्या उपावर्त्तनाय भवति ॥ ३५ ॥

अथैतद्वेदनफलमाह—

**उपैनं पशव आवर्त्तन्ते य एवं वेद ॥ ३६ ॥**

स्पष्टोऽर्थः ॥ ३६ ॥

अथाऽस्य साम्न आधारभूतानामृचां छन्दोद्वारेण स्तुतिं कुर्वन् एतत्पवमानस्तोत्रमुपसंहरति—

**गायत्रीषु स्तुवन्ति प्रतिष्ठायै ब्रह्मवर्चसाय येनैव प्राणेन प्रयन्ति तमभ्युद्यन्तीडान्ताः पवमाना भवन्ति पशवो वा इडा पशवश्छन्दोमाः पशुष्वेव तत्पशून्दधाति स्तोमः ॥ ३७ ॥**

'उपोषु जातमप्तुरमि'त्याद्यासु गायत्रीषु श्रुध्येन साम्ना स्तुवन्त्युद्गातारः। अस्य चाऽवसाने इडाशब्दः श्रूयते। तस्मादस्य पवमानस्तोत्रस्येडान्तत्वम्। सिद्धमन्यत्। एवं गायत्र्यादिश्रुध्यान्तेषु षोडशसु सामसु प्रत्येकं तृचे गीयमानेषु अष्टाचत्वारिंशत् स्तोत्रीयास्सम्पद्यन्ते। तत्सङ्ख्यातात्मकोऽष्टाचत्वारिंशस्तोम एवाऽस्य स्तोत्रस्य कार्य्यः ॥ ३७ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे पञ्चदशाध्यायस्य पञ्चमः खण्डः ॥

## अथ षष्ठः खण्डः ॥

अथोक्थेषु प्रथमस्य स्तोत्रीये तृचं विधित्सुराह—

**आग्नेयीषु पूर्वेषामह्नामुक्थानि प्रणयन्त्यथैतस्या-ऽह्न आग्नेयैन्द्रयां प्रणयन्त्युभयोरेव रूपयोः प्रतिति-ष्ठति ॥ १ ॥**

अथाऽऽग्नेयीषु अग्निदेवत्यासु ऋक्षु(१) 'एह्यू षु ब्रवाणि ते' इत्याद्यासु पूर्वेषां गतानामह्नां उक्थानि तृतीयसवन उक्थस्तोत्राणि प्रणयन्ति कुर्वन्ति। अथशब्दस्तुशब्दार्थे। एतस्य नवमस्याऽह्नस्तु आग्नेयैन्द्र्यां अग्निरिन्द्रश्चोभे देवते यस्यास्तस्यामृचि प्रणयन्ति तथा चोभयोरेव रूपयोः अग्नाविन्द्रे च यजमानः प्रतिष्ठितो भवति ॥ १ ॥

अथ प्रथमोक्थस्तोत्रनिर्वर्त्तकं साम दर्शयति—

**ऐध्मवाहं भवति ॥ २ ॥**

ऐध्मवाहाख्यं साम आग्नेयैन्द्र्याङ्गातव्यमित्यर्थः ॥ २ ॥

एतदेवाऽनूद्य स्तौति—

**आग्नेयैन्द्रीषु स्तुवन्ति ब्रह्म चैव तत् क्षत्रञ्च सयुजीकरोति ब्रह्मैव क्षत्रस्य पुरस्तान्निदधाति ब्रह्मणे क्षत्रञ्च विशञ्चाऽनुगे करोति ॥ ३ ॥**

आग्नेयैन्द्रीषु अग्नीन्द्रौ देवते यासां तासु(२) 'आ घा ये अग्निमिन्धत' इत्याद्यासु ऐध्मवाहेन स्तुवन् ब्रह्म ब्राह्मणजातिं क्षत्रं क्षत्रियजातिञ्चैव सयुजी समानयुञ्जाने संयुक्ते करोति। अग्नेर्ब्राह्मणजात्या सह

१. एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः। एभिर्वर्धास इन्दुभिः ॥ १ ॥
यत्र क्व च ते मनो दक्षं दधस उत्तरम्। तत्र योनिं कृणवसे ॥ २ ॥
न हि ते पूर्तमक्षिपद्भुवन्नेमानां पते। अथा दुवो वनवसे ॥ ३ ॥
सा. सं. उ. १. १. २१.

२. आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक्। येषामिन्द्रो युवा सखा ॥ १ ॥
बृहन्निदिध्म एषां भूरि शास्त्रं पृथुस्स्वरुः। येषामिन्द्रो युवा सखा ॥ २ ॥
अयुद्ध इद्युधा वृतं शूर आजति सत्वभिः। येषामिन्द्रो युवा सखा ॥ ३ ॥
सा. सं. उ. ५. २. २१.

प्रजापतिमुखादुत्पन्नस्य, इन्द्रस्य क्षत्रियजात्या सह प्रजापतेरुरस्तो बाहुभ्याञ्चोत्पन्नस्य च उभयोरेकस्यामृचि संयोजनात्। तत्राऽग्निशब्दः प्रथमः श्रुतः पश्चादिन्द्रस्य। क्षत्रियजातेः पुरस्ताद्ब्रह्मैव ब्राह्मणजातिमेव निदधाति स्थापयति। तथा ब्रह्मणे ब्राह्मणजातये क्षत्रं क्षत्रियजातिं च विशं वैश्यजातिञ्चाऽनुगे अनुगन्त्र्यौ करोति ॥ ३ ॥

अथ द्वितीयोक्थस्तोत्रनिर्वर्त्तकं साम दर्शयति—

**त्रैककुभं भवति ॥ ४ ॥**

(१)'य एक इद्विदयत' इत्यादिके तृचे एतत्त्रैककुभाख्यं साम गीयमानं ब्रह्मण उक्थस्तोत्रं भवति ॥ ४ ॥

अथैतत् स्तौति—

**ओजस्येव तद्वीर्य्ये प्रतितिष्ठत्योजो वीर्य्यं त्रैककुभम् ॥ ५ ॥**

तत्तेन त्रैककुभेन ओजोरूप एव वीर्य्ये प्रतितिष्ठति। अस्य च साम्नो वीर्य्यरूपत्वं (२)'तांस्त्रिककुबधिनिधायाऽचरदि'त्यारभ्य 'त्रिवीर्य्यं वा एतत्सामे'त्यादिना पूर्वमेव प्रतिपादितम् ॥ ५ ॥

अथ तृतीयस्योक्थस्य निर्वर्त्तकं साम दर्शयन् तद्ब्राह्मणं चाऽदिशति—

**उद्वꣳशीयं भवति यदेवोद्वꣳशीयस्य ब्राह्मणम् ॥६॥**

(३)'गायन्ति त्वा गायत्रिण' इत्यस्मिंस्तृचे गीयमानमुद्वंशीयमच्छा-

---

१. य एक इद्विदयते वसु मर्ताय दाशुषे।
ईशानो अप्रतिष्कुत इन्द्रो अङ्ग ॥ १ ॥
यश्चिद्धि त्वा बहुभ्य आ सुतावाँ आ विवासति।
उग्रं तत्पत्यते शव इन्द्रो अङ्ग ॥ २ ॥
कदा मर्तमराधसं पदा क्षुम्पमिव स्फुरत्।
कदा नः शुश्रवत् गिर इन्द्रो अङ्ग ॥ ३ ॥

सा. सं. उ. ५. २. २२.

२. तां. ब्रा. ८. १. ४.

३. गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः।
ब्रह्माणस्त्वा शतक्रतो उद्वंशमिव येमिरे ॥ १ ॥

वाकस्योक्थस्तोत्रं भवति । तस्य चोद्वंशीयस्य (१)'पृष्ठानि वा अस्‌-ज्यन्त तेषां यत्तेजो रसोऽत्यरिच्यते'त्यादिकं यत् स्तावकं ब्राह्मणमाम्नातं तदत्राऽपि स्तुत्यर्थमनुसन्धेयम् ॥ ६ ॥

अथैतेषु स्तोत्रेषु पूर्ववत् स्तोमं विधाय स्तौति—

**अष्टाचत्वारिꣳश एव स्तोमो भवति प्रतिष्ठायै प्रजात्यै ॥ ७ ॥**

अस्य स्तोमस्य संख्याद्वारा जगतीसम्बन्धात्तस्याश्च पश्वात्मक-त्वात्पशूनाञ्च प्रतिष्ठाहेतुत्वं स्पष्टमित्येवं संख्याद्वारा अष्टाचत्वारिंश-स्तोमस्योभयहेतुत्वमधिगन्तव्यम् ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ प्रकाशे पञ्चदशाध्यायस्य षष्ठः खण्डः ॥

## अथ सप्तमः खण्डः ॥

इत्थं दाशरात्रिकाणां नवानामह्नां स्तोमक्लृप्तिरुक्ता । अथ दशम-स्याऽह्नः स्तोमक्लृप्तिरध्यायशेषेण विधीयते । प्रथमं तावदस्मिन्नहनि अनुष्टुभि प्रत्यक्षोपायनं निषेद्धुकामः तत्राऽऽनुष्टुभस्य छन्दसः प्र-सक्तिमाह—

**गायत्रं वै सप्तममहस्त्रैष्टुभमष्टमञ्जागतं नवममथै-तदानुष्टुभमहर्यद्दशमम् ॥ १ ॥**

गायत्र्यादीनां छन्दसां पृष्ठ्यषडहे क्रमेण विनियुक्तत्वेन समाप्त-त्वात् पुनरपि सप्तमाष्टमादिष्वहस्सु तान्येव गायत्र्यादीनि छन्दांसि

यत्सानोस्सान्वारुहो भूर्यस्पष्ट कर्त्वम् ।
तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति ॥ २ ॥
युंक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा ।
अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर ॥ ३ ॥

सा. सं. उ. ५. २. २३.

६. तां ब्रा. ८. ९. ६.

क्रमेण प्रयोज्यानि। यस्मादष्टमं गायत्रीच्छन्दस्कं सप्तममहस्त्रिष्टुप्छन्दस्कमष्टमम्, जगतीच्छन्दस्कं नवमम्, यद्दशममहः एतदानुष्टुभं अनुष्टुप्छन्दस्कम्। तस्मादनुष्टुभोऽस्मिन् दशमेऽहनि प्रयोज्या इत्यर्थः॥१॥

इत्थं प्रयोज्यानामनुष्टुभां प्रत्यक्षोपायने दोषं दर्शयन् सम्पत्त्या तासां सद्भावमाह—

**तदाहुर्यदानुष्टुभꣳस्तोम्यां प्रत्यक्षमुपेयुः परां परावतं यजमानो गच्छेन्न प्रतितिष्ठेदिति या वै चतुर्विꣳशतिर्गायत्र्यस्ता अष्टादशानुष्टुभोऽनुष्टुभमेव तत् स्तोम्यां परोक्षमुपयन्ति प्रतिष्ठायै प्रतितिष्ठति॥ २॥**

तत्तत्र दशमेऽहनि विषये ब्रह्मवादिन आहुः—स्तोम्यां स्तोमार्हां स्तोत्रीयामानुष्टुभमृचं यद्यपि प्रत्यक्षं स्वरूपेणोपेयुरुपगच्छेयुः कुर्युरित्यर्थः। तदा परां परावतं अतिशयेन दूरं यजमानो गच्छेत् तथा न प्रतितिष्ठेत् प्रतिष्ठितश्च न भवेदिति, तस्मादनुष्टुप् तत्प्रत्यक्षमुपेयात्। कथं तर्ह्यस्याऽह्न आनुष्टुभत्वं प्रतिज्ञातमिति तदुच्यते—चतुर्विंशस्तोमो ह्यस्मिन्नहनि विधास्यते। तत्र बहिष्पवमाने विधास्यमाना याः चतुर्विंशतिर्गायत्र्यस्ता अष्टादशानुष्टुभो भवन्ति। अष्टादशसु गायत्रीष्ववशिष्टानां गायत्रीषट्कसम्बन्धिनां पादानामष्टादशानां एकैकस्य प्रक्षेपणेन द्वात्रिंशदक्षरसम्पत्तेः। तत्तस्मात् स्तोम्यां स्तोत्रीयामनुष्टुभमेव परोक्षं उक्तसम्पत्तिद्वारा परोक्षेणोपयन्त्युपगच्छन्ति, प्रतिष्ठायै(१)प्रतिष्ठार्थं, अनुष्टुभो हि चतुष्पादत्वात् प्रतिष्ठाहेतवः॥ २॥

अथाऽस्मिन्नहनि प्रमादाद्विस्मृतस्याऽनुष्ठेयस्य प्रतिबोधनं पार्श्वस्थैर्न कार्य्यमिति दर्शयति—

**प्रजापतिं वा एतेनाऽह्ना परिवेविषति तन्न व्यववद्यं यद्वै श्रेष्ठे परिविष्यमाणो वदत्यन्नाद्यस्य सोऽवग्रहस्तस्मान्न व्यववद्यमन्नाद्यस्याऽनवग्राहाय॥ ३॥**

प्रजापतिं सर्वकारणभूतं स्रष्टारं खलु एतेन दशमेनाऽह्ना परिवेविषति भोजयति तर्पयति। तत्तस्मान्न व्यववद्यं ऋत्विग्भिर्विस्मृतं अनुष्ठेयं न विवाच्यम्। एतदेव सदृष्टान्तमुपपाद्यते—'यद्वै'त्यादिना। श्रेष्ठे(२)प्रशस्यतमे विद्यातपःप्रभृतिभिरधिके अतिथौ परिविष्यमाणे

१. प्रतिष्ठानायेति. क. पु. २. प्रशस्त इति ख. पु.

भोज्यमाने यत् खलु तत्रत्यं वैकल्यं वदति सोऽन्नाद्यस्य भोजनस्याऽवग्रहः प्रतिबन्धकः । तस्मात्कारणाद्य व्यववद्यं विवादो न कार्यः । किमर्थम् ? अन्नाद्यस्य भोजनस्याऽनवग्राहाय अप्रतिबन्धाय । एवमन्नाऽपि प्रजापतेर्भोजनाविच्छेदाय विस्मृतमनुष्ठेयजातं न केनचिद्व्यमिज्ञेनाऽऽविष्करणीयमित्यर्थः ॥ ३ ॥

अथ पक्षान्तरमाह—

**तदु व्यववद्यं यथा श्रेष्ठाय बलिꣳ ह्रियमाणं पन्थानं पर्यनुवेदयति गत्यै तथा तत् ॥ ४ ॥**

उशब्दोऽवधारणे । तत्तत्र दशमेऽहनि व्यववद्यं विस्मृतमनुष्ठेयं कर्म व्यववद्यं विविच्य कथनीयमेव । यथा खलु श्रेष्ठाय प्रशस्यतमायाऽतिथये अपथेन ह्रियमाणं नीयमानं बलिमुपहारं मार्गाभिज्ञः पन्थानं पर्यनुवदति गत्यै गमनार्थं तथैव तत् यद्दशमेऽहन्यनुष्ठेयस्य विस्मृतस्य प्रकटनमिति ॥ ४ ॥

अस्मिन् पक्षे कञ्चिद्धर्मं विधत्ते—

**यावत्यनुष्टुप्तावतीं वाचं सम्पाद्य विब्रूयुस्तद्वनतिरिक्तꣳ स्वस्योचैव यज्ञस्याऽरिष्ट्यै ॥ ५ ॥**

यावती यत्परिमाणाक्षराऽनुष्टुप् तावतीं तावदक्षरपरिमाणां वाचं सम्पाद्य उच्चार्य विब्रूयुः विस्मृतं स्मारयेयुः । विस्मरणं हि मन्त्रविषयमर्थविषयं चेति द्वेधा सम्पद्यते । तत्रानुष्टुभोऽधिकच्छन्दसि विस्मरणे द्वात्रिंशदक्षरपर्यन्तं मन्त्रमुच्चार्य ततो विवेचनं कार्यम् । न्यूने छन्दसि विस्मरणे गायत्र्यादौ यावत् द्वात्रिंशदक्षरसम्पत्तिस्तावदभ्यस्य ततो विवेचनीयम् । अथ विस्मृतौ तु तमनुष्टुभा श्लोकेन स्मारयेयुः । तद्यथा पृष्ठहोमस्त्वृया कार्यस्तदनन्तरमृग्जपः, ततश्च स्तोमयोगः स्यात्ततः स्तोत्रं, ततो जप इति । एतत्सर्वं सूत्रकृतोक्तम्–(१)'अप्रतिभामेतस्मिन्नहन्यनुष्टुम्मात्रां कृत्वाऽऽचक्षीरन्' 'ज्यायसि छन्दसि लुम्पेयुरक्षराणि कनीयस्यभ्यस्येयु'रित्यादिना । एवमनुष्टुभं सम्पाद्य यद्विवेचनं तदु अनतिरिक्तं अतिरिक्तमधिकं न भवति, स्वस्याऽहस्त्वानुष्टुभत्वात् । एवं अस्याऽनुष्ठेयस्य विलोपाभावात् एतद्विवेचनं यज्ञस्याऽरिष्ट्यै अहिंसायै सम्पूर्णतायै भवति ॥ ५ ॥

---

१. लाट्या. श्रौ. ३. ७. ६. ७.

एवं कृत्स्नाहस्सम्बन्धिविशेषधर्ममुक्त्वा बहिष्पवमानस्य स्तोत्रीया ऋचो विधित्सुराह—

**अभि वा एते देवानारोहन्तीत्याहुर्ये दशाभिरहर्भिः स्तुवत इति पञ्चानामह्नामनुरूपैः प्रत्यवयन्ति यथाभ्या रुह्य प्रत्यवरोहेत्तथा तन्नवर्चो भवति या एवामूः प्रथ- च्छन् या अवदधाति ता एता उदस्यति ॥ ६ ॥**

ये यजमाना अतीतैः प्रायणीयातिरात्रसहितैर्दशभिरहर्भिः स्तु- वते एते देवानारोहन्ति क्रमेण तैरहोभिः देवान् प्राप्तुमेतदारोहन्ति। तथा चेह लोके स्थितिर्न स्यात्तदर्थं पञ्चानामह्नामनुरूपैः प्रत्यवयन्ति अवरोहन्ति। एतत् सूत्रकृता विस्पष्टं व्याख्यातम्-(१)'दशमस्य ब- हिष्पवमानं द्वितीयप्रभृतीनां पञ्चानामह्नामनुरूपाः प्रथमाश्च बहिष्प- वमानं तन्नवर्चमि'ति। अस्याऽयमर्थः—पृष्ठ्यषडहस्य द्वितीयप्रभृती- नामह्नां बहिष्पवमानेषु येऽनुरूपास्तृचाः (२)'पवस्वेन्दो वृषासुतः'(३) 'एते असृग्रमिन्दवः'(४)'पवमानो अजीजनत'(५)'पवमानस्य विश्ववित्' (६)'असृक्षत प्रवाजिनः' इत्यादिकाः तानत्राऽऽहरेत्। प्रथमाश्चाऽह्नः कृ-

---

१. लाट्या. श्रौ. ३. ७. १.

२. पवस्वेन्दो वृषा सुतः कृधी नो यशसो जने। विश्वा अप द्विषो जहि ॥ १ ॥
यस्य ते सख्ये वयं सासह्याम पृतन्यतः। तवेन्दो द्युम्न उत्तमे ॥ २ ॥
या ते भीमान्यायुधा तिग्मानि सन्ति धूर्वणे। रक्षा समस्य नो निदः ॥ ३ ॥
सा. सं. उ. २. १. २.

३. एते असृग्रमिन्दवस्तिरः पवित्रमाशवः। विश्वान्यभि सौभगा ॥ १ ॥
विघ्नन्तो दुरिता पुरु सुगा तोकाय वाजिनः। त्मना कृण्वन्तो अर्वतः ॥ २ ॥
कृण्वन्तो वरिवो गवेऽभ्यर्षन्ति सुष्टुतिम्। इडामस्मभ्यं संयतम् ॥ ३ ॥
सा. सं. उ. २. २. १.

४. पवमानो अजीजनद्दिवश्चित्रं न तन्यतुम्। ज्योतिर्वैश्वानरं बृहत् ॥ १ ॥
पवमान रसस्तव मदो राजन्नदुच्छुनः। वि वारमव्यमर्षति ॥ २ ॥
पवमानस्य ते रसो दक्षो विराजति द्युमान्। ज्योतिर्विश्वं स्वर्दृशे ॥ ३ ॥
सा. सं. उ. ३. १. २.

५. ( सा. सं. उ. ३. २. २. ) अयं तृचः २ पृष्ठे टिप्पण्यां द्रष्टव्यः।

६. ( सा. सं. उ. ४. १. २. ) अयमपि ४० पृष्ठेऽवलोकनीयः।

त्वं बहिष्पवमानं'अस्य प्रत्नामनुद्युतमि'त्यादिकमाहरेदिति । यथा खलु वृक्षमारुह्य प्रत्यवरोहेत् तथा तदनुरूपैः प्रत्यवरोहणम् । एवमनुरूपतृचपञ्चकानन्तरं तन्नवर्चो भवति प्रथमस्याऽह्नो बहिष्पवमानस्य 'अस्य प्रत्नामनुद्युतमि'त्यादिकं नवर्चं प्रयोक्तव्यमित्यर्थः । तत्र च प्रत्यवरोहणे सूत्रकारेण बहवः पक्षाः प्रदर्शिताः–(१)'अनुरूपेषु तृचाः प्रतिलोमा ऋचो नवर्च इति गौतमः' इत्येकः पक्षः । अनुरूपेषु 'असृक्षत प्रवाजिन' इति षष्ठस्याऽह्नोऽनुरूपतृचं प्रथममाहृत्य पञ्चमचतुर्थाद्यनुरूपं(२)तदवरोहेणाऽऽहरेत् 'अस्य प्रत्नामनुद्युतमि'ति नवर्चेषु'पास्मै गायता नर' इत्युपक्रम्य 'अस्य प्रत्नामनुद्युतमि'त्यन्तं ऋच एव प्रतिलोमाः स्युरिति गौतमपक्षस्याऽर्थः । अथ(३)तथैव सूत्रकृता पुनस्त्रयः पक्षाः प्रतिपादिताः–(४)'सर्वत्र तृचा इति धानञ्जय्यः' 'यथाधीतं नवर्चमिति शाण्डिल्यायनः' 'सर्वत्रर्चः प्रतिलोमा इति शाण्डिल्य'इति । यथाऽनुरूपेषु तृचानां प्रातिलोम्यं तथा नवर्चेऽपि तृचा एव प्रतिलोमा भवेयुः, न पुनः ऋच इति धानञ्जय्यमतम् । नवर्चे नाऽस्त्येव प्रातिलोम्यं यथाधीतमेव प्रयोक्तव्यमिति शाण्डिल्यायनमतम् । अनुरूपेषु नवर्चे च ऋच एव प्रतिलोमाः स्युर्न पुनस्तृचा इति शाण्डिल्यमतम् । प्रकृतमनुसरामः–अथ दशरात्रं प्रारभमाणः प्रथमेऽहनि या एवाऽमूः (५)'अस्य प्रत्नामनुद्युतमि'त्याद्या नवर्चः शस्याः नवरात्रस्य शस्यास्थानीयाः अ-

---

१. लाट्या. श्रौ. ३. ७. २. २. पश्चादवरोहेणेति. क. पु.

३. तेनैवेति. क. पु. ४. लाट्या. श्रौ. ३. ७. ३, ४, ५.

५. अस्य प्रत्नामनु द्युतं शुक्रं दुदुह्रे अह्रयः । पयस्सहस्रसामृषिम् ॥ १ ॥
अयं सूर्य इवोपदृगयं सरांसि धावति । सप्त प्रवत आ दिवम् ॥ २ ॥
अयं विश्वानि तिष्ठति पुनानो भुवनोपरि । सोमो देवो न सूर्यः ॥ ३ ॥
एष प्रत्नेन जन्मना देवो देवेभ्यस्सुतः । हरिः पवित्रे अर्षति ॥ ४ ॥
एष प्रत्नेन मन्मना देवो देवेभ्यस्परि । कविर्विप्रेण वावृधे ॥ ५ ॥
दुहानः प्रत्नमित्पयः पवित्रे परिषिच्यसे । क्रन्दं देवां अजीजनः ॥ ६ ॥
उप शिक्षा पतत्रिषो भियसं समाधेहि शत्रवे । पवमान विदा रयिम् ॥ ७ ॥
उपो षु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम् । इन्दुं देवा अयासिषुः ॥ ८ ॥
उपास्मै गायता नरः पवमानायेन्दवे । अभि देवां इयक्षते ॥ ९ ॥
सा. सं. उ. १. २. १६. १७. १८.

इमा नव ऋचस्सामसंहितायां तृचक्रमेणाऽऽम्नाताः, तथाऽप्यध्येतृसौकर्यायाऽत्र ऋक्क्रमेण लिखिता इति बोध्यम् ।

वद्धाति योजनाय प्रक्षिपति ता एताः शम्या इदानीमुदस्यति अह्नां विमोचनार्थमुत्क्षिपति ॥ ६ ॥

अथ तस्मिन्नेव नवर्चे द्वयोर्ऋचोर्लिङ्गविशेषमनूद्य स्तौति—

**वारुण्येषा भवति यद्वै यज्ञस्य दुरिष्टं तद्वरुणो गृह्णाति तदेव तदवयजत्यादित्यैषा भवतीयं वा अदितिरस्यामेव प्रतितिष्ठति ॥ ७ ॥**

'एष प्रत्नेन मन्मना देवो देवेभ्यः' इत्यस्यामृचि 'कविर्विप्रेण वावृधे' इति कविशब्दश्रवणादेषा वारुणी, (१)'कवी नो मित्रावरुणे'त्यादौ कविशब्दस्य मित्रावरुणयोर्वाचकत्वात्। इत्थं वारुणी वरुणसम्बन्धिनी एषा ऋग्भवति। यत् खलु यज्ञसम्बन्धि दुरिष्टं दुर्यजनं तद्वरुणो गृह्णात्यादत्ते, तत्तया वारुण्या तदेव दुरिष्टं अवयजति निरस्यति। तथा आदित्या अदितिसम्बन्धिनी एषा भवति 'दुहानः प्रत्नमित्पय' इत्यस्यामृचि 'क्रन्दं देवां अजीजन' इति देवजनयितृत्वं प्रतिपाद्यते। तच्चाऽदितेरेव स्त्रीलिङ्गादेषा आदित्या। इयं पुरोवर्त्तिनी भूमिरेवाऽदितिः अदितिशब्दाभिधेया। तथा चाऽऽदित्यया ऋचा अस्यां पृथिव्यामेव यजमानः प्रतितिष्ठतीति ॥ ७ ॥

अथैतस्मिन् बहिष्पवमाने स्तोमं विधाय स्तौति—

**चतुर्विंश एव स्तोमो भवति तेजसे ब्रह्मवर्चसाय॥८॥**

पञ्चस्वनुरूपतृचेषु नवर्चे च क्रियमाणे चतुर्विंशस्तोत्रीयास्सम्पद्यन्ते। तत्सङ्ख्यात्मकचतुर्विंशस्तोम एवाऽस्य बहिष्पवमानस्य भवति। स च चतुर्विंशतिसंख्याद्वारा गायत्रसम्बन्धात् गायत्रच्छन्दसः प्रजापतिमुखादग्निना सहोत्पत्तेस्तेजोरूपत्वाद् ब्रह्मवर्चसस्य च तेजोवान्तरजातित्वात् तेजोब्रह्मवर्चसयोर्हेतुर्भवतीत्यर्थः ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे पञ्चदशाध्यायस्य सप्तमः खण्डः ॥



१. सा. सं. उ. २. २. ६. ३.

## अथाऽष्टमः खण्डः ॥

अथाऽस्मिन् दशमेऽहनि प्रथममाज्यस्तोत्रं दर्शयति—

**(१)"सुषमिद्धो न आवह" इत्याप्रिय आज्यानि भवन्ति ॥ १ ॥**

आप्रिय इति प्रयाजानूयाजानां संज्ञा। 'सुषमिद्धो न आवहे'त्याद्या एकादशर्चो दाशतय्यामाम्नाताः आश्वलायनेन सूत्रकृता (२)'समिद्धो अद्येति सर्वेषां यथर्षि चे'ति प्रयाजयाज्यात्वेन विहिताः। तस्मादेता आप्रियसंज्ञाः 'सुषमिद्धो न आवहे'त्याद्यास्तिस्र ऋचः आग्नेयं प्रथममाज्यस्तोत्रं भवति। आज्यानि भवन्तीति बहुवचनं आप्रिय इति बहुत्वापेक्षया ॥ १ ॥

अथैतासामाप्रियसंज्ञां निर्ब्रुवन् स्तौति—

**प्रजापतिः प्रजा असृजत स दुग्धो रिरिचानोऽमन्यत स एतान्याप्रिय आज्यान्यपश्यत्तैरात्मानमाप्रीणात् दुग्ध इव वा एष रिरिचानो यो दशभिरहर्भिस्तुष्टुवानो यदेतान्याप्रिय आज्यानि भवन्त्यात्मानमेवैतैराप्रीणाति ॥ २ ॥**

पुरा प्रजापतिः सृष्टवान् प्रजाः। सोऽमन्यत—आत्मन्यन्तर्गतानां निर्गतत्वात् दुग्धो नीरसस्सन् रिरिचानः आत्मानं रिक्त इत्यमन्यत। स प्रजापतिः एतान्याप्रिय आज्यानि आप्रीभिर्निष्पाद्यमेतदाज्यस्तोत्रमपश्यत्। तैराज्यैरात्मनमाप्रीणात् अतृपत्। आप्रीणनसाधनत्वात् एतासां आप्री इति संज्ञा। एवञ्च यो दशभिरहर्भिस्तुष्टुवानः स्तुवन् यजमानः एष दुग्ध इव रिरिचानो रिक्तो भवति यत् यान्येतान्याप्रिय आज्यानि भवन्ति आत्मानमेव एतैराज्यैराप्रीणाति तर्पयति ॥ २ ॥

---

१. सुषमिद्धो न आवह देवां अग्ने हविष्मते। होतः पावक यक्षि च ॥ १ ॥
मधुमन्तं तनूनपाद्यज्ञं देवेषु नः कवे। अद्या कृणुह्यूतये ॥ २ ॥
नराशंसमिह प्रियमस्मिन्यज्ञ उप ह्वये। मधुजिह्वं हविष्कृतम् ॥ ३ ॥
सा. सं. उ. ६. १. १.

२. आश्व. श्रौ. पू. ष. ३. २. ६.

अथ द्वितीयमाज्यस्तोत्रं दर्शयति—

(१)"यदद्य सूर उदित" इति सूरवन्मैत्रावरुणम् ॥३॥

सूरशब्दयुक्तं मित्रावरुणदेवताकं द्वितीयमाज्यस्तोत्रं भवति ॥३॥

अथैतस्य तृचस्याऽनेनाऽह्ना सह सङ्गतिमाह—

अन्तो वै सूरोऽन्त एतद्दशममहामन्त एव तदन्तेन स्तुवते प्रतिष्ठायै ॥ ४ ॥

सूरशब्दाभिधेयस्सूर्यो द्युस्थानीयत्वात् अन्तो वै अवसानभूतः। शिष्टं सिद्धम् ॥ ४ ॥

अथ तृतीयमाज्यस्तोत्रं दर्शयति—

(२)"उत्त्वा मदन्तु सोमा" इत्युद्वदैन्द्रमुत्थानस्य रूपम् ॥ ५ ॥

'उत्त्वा मदन्त्वि'ति तृचे उच्छब्दयुक्तमैन्द्रं इन्द्रदेवत्यं तृतीयमाज्यस्तोत्रं भवति। तच्चोच्छब्दयोगादुत्थानस्य द्वादशाहं समाप्योद्गमनस्य रूपम्। उच्छब्दः केवलोऽप्युत्पूर्वतिष्ठतेरर्थे वर्तत इत्यर्थः ॥ ५ ॥

अथ चतुर्थमाज्यस्तोत्रं दर्शयति—

(३)"इन्द्राग्नी आगतं सुतमि"ति येनैव रूपेण प्रयन्ति तदभ्युद्यन्ति स्तोमः ॥ ६ ॥

---

१. यदद्य सूर उदितेऽनागा मित्रो अर्यमा। सुवाति सविता भगः ॥ १ ॥
सुप्रावीरस्तु स क्षयः प्र नु यामन्त्सुदानवः। ये नो अंहोऽतिपिप्रति ॥ २ ॥
उत स्वराजो अदितिरदब्धस्य व्रतस्य ये। महो राजान ईशते ॥ ३ ॥
सा. सं. उ. ६. १. २.

२. उत्त्वा मदन्तु सोमाः कृणुष्व राधो अद्रिवः। अव ब्रह्म द्विषो जहि ॥ १ ॥
पदा पणीनराधसो निबाधस्व महाँ असि। न हि त्वा कश्च न प्रति ॥ २ ॥
त्वमीशिषे सुतानामिन्द्र त्वमसुतानाम्। त्वं राजा जनानाम् ॥ ३ ॥
सा. सं. उ. ६. १. ३.

३. इन्द्राग्नी आ गतं सुतं गीर्भिर्नभो वरेण्यम्। अस्य पातं धियेषिता ॥ १ ॥
इन्द्राग्नी जरितुस्सचा यज्ञो जिगाति चेतनः। अया पातमिमं सुतम् ॥ २ ॥
इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे। ता सोमस्येह तृम्पताम् ॥ ३ ॥
सा. सं. उ. १. १. ७.

'इन्द्राग्नी आगतं सुतमि'ति तृचः इन्द्राग्निदेवताकं चतुर्थमाज्य-स्तोत्रं दशरात्रस्य प्रथमेऽहन्यपि पूर्वं विहितम् । तथा च येनैव रूपेण एतत्तृचलक्षणेन प्रयन्ति दशरात्रं प्रारभन्ते तदेवाऽभिलक्ष्योद्यन्ति दश-रात्रं परिसमापयन्ति । एतेषु चतुर्ष्वाज्यस्तोत्रेषु पूर्वोक्तश्चतुर्विंश एव स्तोमः कार्य्यः । इत्थं प्रातस्सवनिकानां स्तोत्राणां स्तोत्रीया ऋचो विहिताः । साम एतासु प्राकृतमेवेत्यवगन्तव्यम् ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे पञ्चदशाध्यायस्याऽष्टमः खण्डः ॥

---

## अथ नवमः खण्डः ॥

अथाऽस्मिन् दशमेऽहनि माध्यन्दिनपवमानस्य स्तोत्रीयं तृचं द-र्शयति—

**(१)उच्चा ते जातमन्धस" इत्युद्धत्यो गायत्र्यो भव-न्त्युत्थानस्य रूपम् ॥ १ ॥**

'उच्चा ते जातमन्धस' इत्याद्यास्तिस्रो गायत्र्य उद्वत्यः उच्छब्दयु-क्तास्स्तोत्रीया भवन्ति । ताश्चोद्वत्यः पूर्ववदुत्थानस्य रूपम्, अनेनाऽह्ना दशरात्रस्य समापनादुत्थानतापेक्ष इति तस्य सङ्गतिः ॥ १ ॥

अथाऽन्यं स्तोत्रीयं तृचं दर्शयति—

**(२)"पुनानस्सोम धारये"ति पन्थानमेव तत् पर्य्यव-यन्ति ॥ २ ॥**

---

१. उच्चा ते जातमन्धसो दिवि सद्भूम्या ददे । उग्रं शर्म महि श्रवः ॥
स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः । वरि वोवित्परिस्रव ॥ २ ॥
एना विश्वान्यर्य्य आ द्युम्नानि मानुषाणाम् । सिषासन्तो वनामहे ॥ ३ ॥
सा. सं. उ. १. १. ८.

२. पुनानस्सोम धारयाऽपो वसानो अर्षसि ।
आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः ॥ १ ॥
दुहान ऊधर्दिव्यं मधु प्रियं प्रत्नं सधस्थमासदत् ।
आपृच्छ्यं धरुणं वाज्यर्षसि नृभिर्धौतो विचक्षणः ॥ २ ॥
(प्रगाथात्मकः) सा. सं. उ. १. १. ९.

'पुनानस्सोमधारये'ति बार्हतस्तृचो भवति। तस्तेन पन्थानमेव पर्य्यवयन्ति परिप्राप्नुवन्ति। सर्वप्रकृतिभूतेऽग्निष्टोमे 'उच्चा ते जातमन्धस' इत्यनन्तरं 'पुनानस्सोमे'ति तृचो विहितः। स च तत्र क्लृप्तत्वात् पन्था इत्युच्यते ॥ २ ॥

अथाऽन्यं तृचं विधत्ते—

**(१)"आ जागृविर्विप्र ऋतं मतीना"मिति यदासे प्रवतीः कुर्य्युरतिपद्येरन्यदावत्यो भवन्त्यनतिपादाय ॥३॥**

'आजागृविरि'त्याद्यास्तिस्रः स्तोत्रीयाः कार्य्याः। यद्यदि आसे समाप्यमाने दशरात्रे प्रवतीः (२)'प्र तु द्रव'त्याद्याः प्रशब्दयुक्ताः कुर्युः। तदा ते अतिपद्येरन् अतिदूरं गता भवेयुः प्रशब्देन प्रकर्षगमनस्य सूचनात्। तस्मादावत्यः आ इत्यनेनोपसर्गेण युक्ताः स्तोत्रीयाः भवन्ति पशुवद्यजमानानामनतिपादाय अतिदूरं गमनाभावाय भवति ॥ ३ ॥

अथ प्रथमे तृचे पूर्ववद्गायत्रं साम विधाय तद्ब्राह्मणञ्चाऽतिदिशति—

**गायत्रं भवति यदेव गायत्रस्य ब्राह्मणम् ॥ ४ ॥**

'उच्चा ते जातमन्धस' इति तृचे गायत्रं साम गातव्यम्। तस्य च (३)'इमे वै लोका गायत्रमि'त्यादिकं यद्ब्राह्मणमाम्नातं तदत्राऽप्यनुसन्धेयम् ॥ ४ ॥

अथाऽस्मिन्नेव तृचेऽन्यत्साम विधाय स्तौति—

**आमहीयवं भवति क्लृप्तिश्चाऽन्नाद्यञ्च क्लृप्तिञ्चैवैतेनाऽन्नाद्यञ्चाऽभ्युत्तिष्ठन्ति ॥ ५ ॥**

---

१. आ जागृविर्विप्र ऋतं मतीनां सोमः पुनानो असदच्चमूषु।
सपन्ति यं मिथुनासो निकामा अध्वर्यवो रथिरासस्सुहस्ताः ॥ १ ॥
स पुनान उप सूरे दधान ओभे अप्रा रोदसी वीष आवः।
प्रिया चिद्यस्य प्रियसास ऊती सतो धनं कारिणे न प्रयं सत् ॥ २ ॥
स वर्धिता वर्धनः पूयमानस्सोमो मीढ्वां अभि नो ज्योतिषावीत्।
यत्र नः पूर्वे पितरः पदज्ञाः स्वर्विदो अभि गा अद्रिमिष्णन् ॥ ३ ॥
सा. सं. उ. ६. १. ४.

२. सा. सं. उ. १. १. १०. ३. तां. ब्रा. ७. १. १.

आमहीयवाख्यमपि साम 'उच्चा ते जातमन्धस' इत्यस्मिन्नेव तृच आवृत्ते गेयम्। तच्च साम क्लृप्तिः कल्पकं सामर्थ्यप्रदं अन्नाद्यं अदनीयान्नरूपञ्च। तथा च क्लृप्तिञ्चैवाऽन्नाद्यञ्चाऽभिलक्ष्य एतेनाऽऽमहीयवेन साम्नोत्तिष्ठन्ति॥ ५॥

अथ सामान्तरं विधत्ते—

**आजिगं भवत्याजिजित्यै॥ ६॥**

आजिगाख्यमपि साम पूर्वोक्त एव तृचे गेयम्। आजिं गच्छतीत्याजिगमिति अन्वर्थसंज्ञकत्वात् तत्साम आजिजित्यायै आजिः गन्तव्यभूमेर्मर्यादा। तस्य जयाय भवति॥ ६॥

एतदेव व्याचष्टे—

**आजिर्वा एष प्रततो यद्द्वादशाहस्तस्यैतदुज्जित्यै॥७॥**

यत् योऽयं द्वादशाहः एष प्रततो विस्तृतः, आजिर्वै यथा धावतां पुरुषाणां गतिशीघ्रपरीक्षार्थं आजिः कल्पते, एवमनुष्ठातॄणां सामर्थ्यपरीक्षणाय आजिवत्कल्पत इत्यर्थः। तस्य द्वादशाहलक्षणस्याऽऽजेः उज्जित्यै उज्जयाय एतत्साम भवति॥ ७॥

अथाऽन्यत्साम विधत्ते—

**आभीकं भवत्यभिक्रान्त्यै॥ ८॥**

आभीकाख्यमपि साम 'उच्चा ते जातमन्धस' इत्यस्मिन्नेव तृच आवृत्ते गेयम्। तच्चाऽभिक्रान्त्यै स्वर्गस्याऽभिक्रमणाय भवति॥ ८॥

अथैतत् शोकोपशमनहेतुरित्याख्यायिकाप्रदर्शनेन स्तौति—

**आङ्गिरसस्तपस्तेपानाः शुचमशोचꣳस्त एतत्सामापश्यꣳस्तानभीकेऽभ्यवर्षत्तेन शुचमशमयन्त यदभीकेऽभ्यवर्षत्तस्मादाभीकं यामेव पूर्वैरहर्भिः शुचꣳशोचन्ति तामेतेनाऽत्र शमयित्वोत्तिष्ठन्ति॥ ९॥**

पुरा खल्वाङ्गिरस ऋषयः तपस्तेपानाः तप्तवन्तः शुचमशोचन् शोकमप्राप्नुवन्। ततः शोकस्य निष्कृतिं कामयमानाः एतत्सामाऽपश्यन्। तच्च साम तानृषीन् अभीके समीपेऽभ्यवर्षदभिप्राप्नोत्। तेन समीपं गतेन साम्ना तेऽङ्गिरसः शुचमशमयन्त अपाघ्नन्। यस्मादेतत् सामाऽभीकेऽभ्यवर्षत् तस्मादाभीकसम्बन्धादस्य साम्नः आभीकमिति नाम

सम्पन्नम् । यस्मादेवं तस्मात् यामेव शुचं शोकं पूर्वैरहर्भिः प्रायणीयाद्यैरनुष्ठितैः शोचन्ति शोकं प्राप्नुवन्ति तां शुचं शोकं एतेनाऽऽभीकेन साम्ना अत्राऽस्मिन् काले शमयित्वा अपहत्योत्तिष्ठन्ति यागादुत्थानं कुर्वन्ति यागं समापयन्तीति यावत् ॥ ९ ॥

अथ तृचान्तरेऽन्यत्साम विधत्ते—

**उत्सेधो भवति ॥ १० ॥**

उत्सेधाख्यं साम 'पुनानः सोम धारये' त्यस्मिंस्तृचे गेयम् ॥ १०॥

अथैतत् स्तौति—

**उत्सेधेन वै देवाः पशूनुदसेधन्निषेधेन पर्यगृह्णन्॥११॥**

उत्सेधाख्येन साम्ना खलु देवाः पशूनपक्रान्तान् उदसेधन् । निषेधाख्येन साम्ना पर्यगृह्णन् पर्यवेष्टयन् । एतेन निषेधाख्यमपि सामाऽस्मिन्नेव तृचे गेयमिति विहितं भवति ॥ ११ ॥

अथैतयोः साम्नोर्मध्ये सामान्तरस्य गानं विधत्ते—

**अन्तरोत्सेधनिषेधौ यज्ञायज्ञीयम् ॥ १२ ॥**

उत्सेधनिषेधावन्तरा उत्सेधनिषेधयोः साम्नोर्मध्ये यज्ञायज्ञीयं साम 'पुनानः सोमे'ति तृचे गेयम् । प्रथममुत्सेधं गीत्वा ततो यज्ञायज्ञीयं ततो निषेधं गायेदित्यर्थः ॥ १२ ॥

अथैतस्य यज्ञायज्ञीयस्य उत्सेधनिषेधयोरन्तराले करणं स्तौति—

**पशवोऽन्नाद्यं यज्ञायज्ञीयं पशूनेव तदन्नाद्यमुत्सेधनिषेधाभ्यां परिगृह्णाति ॥१३॥**

यदेतद्यज्ञायज्ञीयं साम एतत्पशवः पश्वात्मकं अन्नाद्यरूपञ्च । तत्तस्मात्पशूंश्चैवाऽन्नाद्यञ्च उत्सेधनिषेधाभ्यामुभयतो वर्त्तमानाभ्यामिति परिगृह्णाति परितो बध्नाति ॥ १३ ॥

अथैतद्यज्ञायज्ञीयस्य माध्यन्दिनपवमाने गानं स्वर्गसाधनमिति स्तौति—

**माध्यन्दिने वै पवमाने देवा यज्ञायज्ञीयेन यज्ञं सꣳस्थाप्य स्वर्गं लोकमारोहꣳस्तद्य एवं वेद माध्यन्दिन एवैतत्पवमाने यज्ञायज्ञीयेन यज्ञꣳसꣳस्थाप्य स्वर्गं लोकमारोहति ॥ १४ ॥**

पुरा देवाः माध्यन्दिनपवमान एव यज्ञायज्ञीयेन साम्ना स्तुत्वा यज्ञं संस्थाप्य परिसमाप्य स्वर्गं लोकमारोहन् । यज्ञायज्ञीयेन हि साम्ना प्रकृतिभूतस्याऽग्निष्टोमस्य समापनात्, यत्र कुत्राऽपि क्रियमाणमेतत्साम समाप्तिहेतुर्भवति । तत्तथा च यो यजमानः एवमुक्तं ब्राह्मणार्थं वेद जानाति, एतत् एष वेदिता माध्यन्दिने पवमान एव यज्ञायज्ञीयेन साम्ना यज्ञं समाप्य स्वर्गं लोकमारोहति ॥ १४ ॥

यदुक्तमस्मिन् दशमेऽहनि अनुष्टुप् परोक्षमुपेतव्येति तदप्यनेन साम्ना सिध्यतीत्याह—

**अथो परोक्षमनुष्टुभं सम्पद्यतेऽहरेषा वै प्रत्यक्षमनुष्टुप् यद्यज्ञायज्ञीयं तद्यत्तृतीयसवने कुर्युः प्रत्यक्षमनुष्टुभमृच्छेयुस्तस्मान्माध्यन्दिने कुर्वन्ति तेन परोक्षमनुष्टुभमुपयन्ति ॥ १५ ॥**

अथो अपि च एतद्दशममहः परोक्षं परोक्षेण वर्त्तमानमनुष्टुभं सम्पद्यते सम्प्राप्नोति । कथमिति तदुच्यते–एषा वै प्रत्यक्षं प्रत्यक्षेण वर्त्तमानाऽनुष्टुप् यद्यज्ञायज्ञीयाख्यं साम वाङ्निधनत्वात् 'वागनुष्टुबि'ति हि ब्राह्मणम् । तत्सामाऽनुष्टुप्संस्तुतं यज्ञायज्ञीयं यद्यदि तृतीयसवने कुर्युः प्रयुञ्जीरन् प्रत्यक्षमनुष्टुभं अस्मिन् दशमेऽहनि ऋच्छेयुः प्राप्नुयुः, तच्च न कार्यं(१) इत्युक्तम् । तस्मान्माध्यन्दिने पवमाने यज्ञायज्ञीयं कुर्युः । तथा च स्तोत्रमध्ये सामान्तरैर्निगूढत्वात परोक्षं परोक्षेणैव वर्त्तमानमनुष्टुभमुपयन्त्युपगच्छन्ति ॥ १५ ॥

अथाऽन्तिमे तृचे गेयं साम दर्शयति--

**गौरीवितं भवति ॥ १६ ॥**

'आ जागृविर्विप्र ऋतं मतीनामि'ति ( पृ० १९० ) तृचे गौरीवितं साम गेयम् ॥ १६ ॥

अथैतस्य माध्यन्दिने करणं स्तौति—

**एतद्वै यज्ञस्य श्वस्तनं यद्गौरीवितमेतदायतनो यजमानो यन्मध्यन्दिनो यद्गौरीवितं मध्यन्दिने भवति श्वस्तनमेव तद्यजमान आत्मन्धत्ते स्तोमः ॥ १७ ॥**

---

१. पञ्चदशाध्यायसप्तमखण्डस्य द्वितीयब्राह्मण इति बोध्यम् ।

यत् गौरीविताख्यं साम एतद्वै एतत्खलु यज्ञसम्बन्धि श्वस्तनं दिनान्तरसम्बन्धहेतुः। तथा च पूर्वमुक्तम्। यन्मध्यन्दिनो माध्यन्दिनपवमान एतदायतन एतत्स्थानकः खलु यजमानः। यन्माध्यन्दिनेन माध्यन्दिनपवमानसम्बन्धिना गौरीवितेन स्तुवन्ति। तत्तेन श्वस्तनं दिवसान्तरसम्बन्धयोग्यं तद्यजमान आत्मन् आत्मनि धत्ते धारयति। एवं गायत्र्यादिगौरीवितान्तेष्वष्टसु सामसु प्रत्येकं तृचे गीयमानेषु चतुर्विंशतिस्तोत्रीयाः सम्पद्यन्ते। तथा च तत्सम्बन्धतश्चतुर्विंश एव स्तोमोऽस्य पवमानस्य स्तोत्रस्य भवति ॥ १७ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे पञ्चदशाध्यायस्य नवमः खण्डः ॥

## अथ दशमः खण्डः ॥

अथ प्रथमस्य पृष्ठस्य स्तोत्रियं तृचं दर्शयति—

**(१)"कया नश्चित्र आभुवदि"ति कवत्यस्तेन प्राजापत्याः को हि प्रजापतिः प्रजापतेराप्त्यै ॥ १ ॥**

'कया नश्चित्र' इत्याद्यास्तिस्रः स्तोत्रीयाः प्रथमस्य पृष्ठस्तोत्रस्याङ्गं भवन्ति। ताश्च कवत्यः कशब्दोपेताः। तेनैव कारणेन प्राजापत्याः प्रजापतिदेवताकाः। हि यस्मात्प्रजापतिः कः कशब्दाभिधेयः। एवञ्चैताः स्तोत्रीयाः प्रजापतेराप्त्यै प्राप्त्यै सम्पद्यन्ते ॥ १ ॥

अथ द्वितीयस्य पृष्ठस्य स्तोत्रीयं तृचं दर्शयति—

**(२)"मा चिदन्यद्विशंसते"त्युत्थानमेव तदाशिषो ह्येतर्हि ॥ २ ॥**

---

१. (सा.सं.उ. १.२.१२.) प्रथमभागस्य ४०१ पृष्ठेऽयं तृचष्टिप्पण्यामवलोकनीयः।

२. मा चिदन्यद्विशंसत सखायो मा रिषण्यत।
इन्द्रमित्स्तोता वृषणं सचा सुते मुहुरुक्था च शंसत ॥ १ ॥
अवक्रक्षिणं वृषभं यथा जुवं गां न चर्षणीसहम्।
विद्वेषणं संवननमुभयङ्करं मंहिष्ठमुभयाविनम् ॥ २ ॥
( प्रगाथात्मकः ) सा. सं. उ. ६. १. ५.

'मा चिदन्यद्विशंसते'ति तृचः मैत्रावरुणपृष्ठस्य स्तोत्रीयः । मा चिदन्यद्विशंसत स्तुतशस्त्रान्तरं मा ब्रूतेति शंसनादुपरमस्य प्रतिपाद्यमानत्वात् एतदुत्थानस्य योगान्निर्गमनस्य रूपम् । एतर्हि एतस्मिन् दशमस्याऽह्नोऽनुष्ठानकाले एतदाशिषो हि एतदुत्थानमाशीः आशीष्यं फलं येषां तथाविधाः खलु यजमानाः भवन्ति । तस्मादेतस्मिन्नहन्ययं तृचस्सङ्गत इत्यर्थः ॥ २ ॥

अथ तृतीयस्य पृष्ठस्य स्तोत्रीयं तृचं दर्शयति—

**(१)"उदु त्ये मधुमत्तमा"इत्युद्वत्य उदयनीयेऽहन्येतदाशिषो ह्येवैतर्हि ॥ ३ ॥**

'उदुत्ये मधुमत्तमा'इत्याद्यास्तिस्त्र ऋचो ब्रह्मसाम्नः स्तोत्रीया भवन्ति । ताश्चोद्वत्य उच्छब्दयुक्ता उदयनीये दशरात्रस्य समापके दशमेऽहनि सम्बन्धयोग्याः । गतमन्यत् ॥ ३ ॥

अथ चतुर्थस्य पृष्ठस्य स्तोत्रीयं तृचं दर्शयति—

**(२)"तरोभिर्वो विदद्वसु"मिति स्तोमो वै तरो यज्ञो विदद्वसुः स्तोमेन वै यज्ञो युज्यते यत्तरोभिर्वो विदद्वसुमित्याह यज्ञमेव तद्युनक्ति ॥ ४ ॥**

'तरोभिर्वो विदद्वसुमि'ति तृचोऽच्छावाकपृष्ठसाम्नः स्तोत्रीयस्तृचः । (३)'स्तोमो वै देवेषु तरो नामासीदि'त्यादिना पूर्वं प्रतिपादितत्वात् । स्तोमो वै तरः तरशब्देन स्तोम एवोच्यते । विदद्वसुशब्देन च यज्ञः ।

---

१. उदु त्ये मधुमत्तमा गिरस्स्तोमास ईरते ।
सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा इव ॥ १ ॥
कण्वा इव भृगवः सूर्या इव विश्वमिद्धीतमाशत ।
इन्द्रं स्तोमेभिर्महयन्त आयवः प्रियमेधासो अस्वरन् ॥ २ ॥
( प्रागाथात्मकः ) सा. सं. उ. ६. १. ६.

२. तरोभिर्वो विदद्वसुमिन्द्रं सबाध ऊतये ।
बृहद्गायन्तस्सुतसोमे अध्वरे हुवे भरं न कारिणम् ॥ १ ॥
न यं दुध्रा वरन्ते न स्थिरा मुरो मदेषु शिप्रमन्धसः ।
य आदृत्या शशमानाय सुन्वते दाता जरित्र उक्थ्यम् ॥ २ ॥
( प्रगाथात्मकः ) सा. सं. उ. १. १. १७.

३. तां. ब्रा. ८. ३. ३.

स्तोमेन खलु त्रिवृदादिना यज्ञो युज्यते संयुक्तो भवति । एवञ्च 'तरोभिर्वो विदद्वसुमि'ति यदाह तत्तेन यज्ञमेव स्तोमेन युनक्ति योजयति ॥ ४ ॥

अथ प्रथमपृष्ठस्तोत्रनिर्वर्त्तकं साम विधत्ते—

**वामदेव्यस्यर्क्षु रथन्तरं पृष्ठं भवति ॥ ५ ॥**

वामदेव्यस्य साम्नो योनिभूतास्वृक्षु 'कया नश्चित्र' इत्याद्यासु पूर्वं विहितासु रथन्तरं साम पृष्ठस्तोत्रं भवति ॥ ५ ॥

अथैतासु 'कया नश्चित्र' इत्याद्यासु गायत्रीषु रथन्तरस्य करणं युक्तमित्याह—

**गायत्री वै रथन्तरस्य योनिः स्वायामेव तद्योनौ रथन्तरं प्रतिष्ठापयति ॥ ६ ॥**

गायत्री खलु रथन्तरस्य योनिः उत्पत्तिकारणम्, (१)प्रजापतिर्वा एतां गायत्रीं योनिमपश्यत्स आदधीते'त्यादिना तथैव पूर्वं प्रतिपादितत्वात् । तथा च स्वायां स्वकीयायां रथन्तरजननहेतावेव योनौ 'कया नश्चित्र' इत्यस्यामृचि तद्रथन्तरं साम प्रतिष्ठापयति ॥ ६ ॥

अथ ऋक्सामस्तोमानां समुदायमत्रत्यं प्रशंसति—

**तेजो वै गायत्री छन्दसा तेजो रथन्तरꣳ साम्ना तेजश्चतुर्विंशस्तोमानां तेज एव तत्सम्यक् सन्दधात्यपि ह पुत्रस्य पुत्रस्तेजस्वी भवति ॥ ७ ॥**

तेज एव खलु गायत्री छन्दसां मध्ये । तथा साम्नां मध्ये रथन्तरं तेजः । उभयोरग्निना सह प्रजापतिमुखादुत्पत्तेस्तेजस्त्वम् । स्तोमानां मध्ये चतुर्विंशाख्यस्तोमस्तेजः, चतुर्विंशतिसंख्यायोगेन तस्य गायत्रीसम्बन्धात् तेजस्त्वं युक्तम् । तथा च गायत्र्यादीन्येतानि त्रीणि संयोजयन् तेज एव सम्यक् समीचीनं सन्दधाति संयोजयति । एवं प्रयोक्तुर्यजमानस्य यः पुत्रः तस्य पुत्रोऽपि तेजस्वी भवति ॥ ७ ॥

अथैतस्य रथन्तरस्य प्रथमस्तोत्रीयायां पूर्वं विहितं प्रस्तावभागपरिमाणं 'अभि त्वा शूर' इत्यस्यामिव 'कया नश्चित्र' इत्यस्यामपि तथैव

---

१. तां ब्रा. ७. ८. ८.

भवितव्यमित्यनूद्य स्तौति—

**अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौत्यष्टाशफाꣳस्तत्पशूनवरुन्धे ॥ ८ ॥**

अष्टाक्षरेण'कया नश्चित्र आभुवदि'त्यनेन पादेन प्रथमाया स्तोत्रीयाया ऋचः प्रस्तौति । (१)'क्रियाग्रहणमपि कर्त्तव्यमि'ति कर्मणः संप्रदानसंज्ञायां, चतुर्थ्यर्थे षष्ठी । यस्मादेवमष्टाक्षरेण प्रथमायाः प्रस्तावस्तस्मात् अष्टाशफान् अष्टौ शफाः खुरा येषां तथाविधान् पशूनवरुन्धे यजमानो लभते ॥ ८ ॥

अथ द्वितीयतृतीययोः स्तोत्रीययोः प्रस्तावभागं पूर्ववदनूद्य स्तौति—

**द्व्यक्षरेणोत्तरयोर्ऋचोः प्रस्तौति द्विपाद्यजमानो यजमानमेव यज्ञे पशुषु प्रतिष्ठापयति ॥ ९ ॥**

उत्तरयोः (२)'कस्त्वा सत्यो मदानामि'त्यादिकयोर्ऋचोरादितो द्व्यक्षरेण प्रस्तावः कार्य्यः । स्पष्टमन्यत् ॥ ९ ॥

अथैतद्रथन्तरं ऋद्धिसाधनत्वेन लोकत्रयप्राप्तिसाधनत्वेन च स्तौति—

**गायत्रं वै रथन्तरं गायत्रच्छन्दो यद्गायत्रीषु रथन्तरं भवति तेन स्वायां जनतायामृध्नोतीमे वै लोका गायत्री यद्गायत्रीषु रथन्तरं भवतीमानेव तल्लोकान् समाप्योत्तिष्ठन्ति ॥ १० ॥**

रथन्तरं साम गायत्रं वै गायत्र्यास्सम्बन्धि (३)'प्रजापतिर्वा एतद्गायत्रीमि'त्यादिना रथन्तरस्य गायत्रीसकाशात् सृष्टेः प्रतिपादितत्वात् । तथा च रथन्तरं गायत्रिच्छन्दस्कं छन्दसां मध्ये गायत्र्याख्यं छन्दो यस्य सम्बन्धि तत्तथोक्तम् । दाशरात्रिके प्रथमे गायत्रेऽहनि रथन्तरपृष्ठस्तोत्रतया सम्बन्धात् गायत्रच्छन्दस्कम् । एवञ्च यद्गायत्रीषु 'कया नश्चित्र' इत्याद्यासु रथन्तरं साम भवति तेन कारणेन स्वायां स्वकीयायामेव जनतायां जनसमूहे यजमानः ऋध्नोति अभिवृद्धो भवति । अपि

---

१. ( व्या. वा. १०८५ ) इदमेव वार्तिकं सिद्धान्तकौमुद्यां भट्टोजीदीक्षितैः 'क्रियया यमभिप्रैति सोऽपि सम्प्रदानमि'त्यादिनार्थतोऽनूदितमिति बोध्यम् ।

२. सा. स. उ. १. १. १२. २. ३. तां. ब्रा. ७. ८. ८.

च इमे वै पृथिव्यादयस्त्रयो लोका गायत्री। शिष्टं सिद्धप्रायम्। समाप्य सम्यक् प्राप्य उत्थानं कुर्वन्तीत्यर्थः ॥ १० ॥

अथ मैत्रावरुणपृष्ठनिर्वर्त्तकं साम विधत्ते—

**मैधातिथं भवति ॥ ११ ॥**

मेधातिथिना दृष्टं साम मैधातिथम्। तत् 'मा चिदन्यद्विशंसते'त्यस्मिंस्तृचे गेयम् ॥ ११ ॥

अथैतदृषिसम्बन्धप्रदर्शनेन पशुप्राप्तिसाधनमित्याह—

**एतेन वै मेधातिथिः काण्वो विभिन्दुकाद्व्यूध्नीर्गा उदसृजत पशूनामवरुध्यै मैधातिथं क्रियते ॥ १२ ॥**

काण्वः कण्वगोत्रो मेधातिथिर्नाम ऋषिः एतेन साम्ना साधनेन विभिन्दुकात् विभेदनशीलादेतत्संज्ञकादसुरात् व्यूध्नीः विवृद्धोधस्का गा उदसृजत उदगमयत्। तस्मादेतन्मैधातिथं पशुप्राप्त्यर्थमेवेदानीं क्रियते ॥ १२ ॥

अथ तृतीयस्य पृष्ठस्य निर्वर्त्तकं साम दर्शयति—

**अभीवर्त्तो ब्रह्मसाम भवत्येकाक्षरानिधनः प्रतिष्ठायै ॥ १३ ॥**

अभीवर्त्ताख्यं साम 'उदुत्ये मधुमत्तमा' इत्यस्मिंस्तृचे ब्रह्मसाम ब्रह्मणः पृष्ठस्तोत्रनिर्वर्त्तकं साम कार्यम्। स चाऽभीवर्त्तः एकाक्षरणिधनः वा २ ३ ४ ५ इति तृचस्याऽन्त्यमक्षरनिधनं यस्य स तथोक्तः। सोऽयं प्रतिष्ठायै यजमानस्य प्रतिष्ठानाय भवति ॥ १३ ॥

कथं प्रतिष्ठाहेतुतेत्यत आह—

**एकाक्षरा वै वाग्वाच्येव प्रतिष्ठायोत्तिष्ठन्ति ॥ १४ ॥**

वागित्येकेनाऽक्षरेणाऽभिधेया हि वाक्। तस्याश्च प्रतिष्ठाहेतुत्वं राजसु दृष्टम्। तथाच वाच्येव प्रतिष्ठाय उत्तिष्ठन्ति ॥ १४ ॥

अथ चतुर्थपृष्ठस्तोत्रनिर्वर्त्तकं साम दर्शयति—

**कालेयमच्छावाकसाम भवति ॥ १५ ॥**

कालेयाख्यं साम 'तरोभिर्वो विदद्वसुमि'त्यस्मिंस्तृचे गीयमानमच्छावाकस्य पृष्ठसाम भवति ॥ १५ ॥

अथाऽस्मिन्नहनि रथन्तरकालेययोः प्रयोगं संहृत्य स्तौति—

**समानलोके वै कालेयञ्च रथन्तरञ्चेयं वै रथन्तरं पशवः कालेयमस्याञ्चैव पशुषु च प्रतिष्ठायोत्तिष्ठन्ति स्तोमः ॥ १६ ॥**

कालेयञ्च रथन्तरञ्चैते सामनी समानलोके वै समानस्थाने खलु । यस्मिन्नहनि रथन्तरं साम पृष्ठं तत्र कालेयमच्छावाकसामत्वेन प्रयुक्तम् । यथा रथन्तरपृष्ठे प्रकृतौ ज्योतिष्टोमे दाशरात्रिके प्रथमेऽहनि च । अतोऽस्य दशमस्याऽह्नो रथन्तरपृष्ठत्वात् कालेयमपि प्रयोज्यम । इयं वै सर्वैरनुभूयमाना पृथिव्येव रथन्तरम् । पशव एव कालेयं तत्साधनत्वात् । तथा च अस्याञ्चैव पृथिव्यां पशुषु च प्रतिष्ठाय प्रतिष्ठिता भूत्वा उत्तिष्ठन्ति सत्रादुत्थानं कुर्वन्ति । एतेषु च पृष्ठस्तोत्रेषु पूर्वोक्तः चतुर्विंश एव स्तोमः कार्य्यः ॥ १६ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे पञ्चदशाध्यायस्य दशमः खण्डः ॥

---

## अथैकादशः खण्डः ॥

अथाऽस्मिन् दशमेऽहन्यार्भवपवमानस्य स्तोत्रीयं प्रथमं तृचं दर्शयति-

**(१)"स्वादिष्ठया मदिष्ठये"ति गायत्री भवति मदवद्वै रसवत्तृतीयसवनं मदमेव तद्रसं दधाति ॥ १ ॥**

'स्वादिष्ठये'ति आर्भवपवमानस्य स्तोत्रीयम । शिष्टं सिद्धम् ॥१॥

अथाऽस्मिंस्तृचे पूर्ववद्गायत्रं साम विधाय तद्ब्राह्मणमत्यतिदिशति-

**गायत्रं भवति यदेव गायत्रस्य ब्राह्मणम् ॥ २ ॥**

सिद्धमेतत् ॥ २ ॥

---

१. स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः ॥ १ ॥
रक्षोहा विश्वचर्षणिरभि योनिमयोहते । द्रोणे सधस्थमासदत ॥ २ ॥
वरिवोधातमो भुवो मंहिष्ठो वृत्रहन्तमः । पर्षि राधो मघोनाम् ॥ ३ ॥
सा. सं. उ. १. १. १५.

अथाऽस्मिन्नेव तृचेऽन्यत्साम विधत्ते—

**सꣳहितं भवति द्व्यक्षरणिधनं प्रतिष्ठायै प्रतिष्ठायै-वोत्तिष्ठन्ति ॥ ३ ॥**

संहिताख्यं साम'स्वादिष्ठये'त्यस्मिंस्तृचे गेयम् । तच्च द्व्यक्षरणिधनं द्वे अक्षरे निधनं यस्य तत्तथोक्तम् । तच्च पादद्वयसाम्यात् प्रतिष्ठायै भवति । तथा च प्रतिष्ठायैवोत्तिष्ठन्ति ॥ ३ ॥

अथाऽन्यत्साम विधत्ते—

**सफं भवति ॥ ४ ॥**

(१)'पवस्व मधुमत्तम' इत्यस्मिंस्तृचे सफाख्यं साम गेयम् ॥ ४ ॥

अथैतस्य सफसंज्ञां निर्ब्रुवन् लोकत्रयप्राप्तिहेतुतामाह—

**सफेन वै देवा इमान् लोकान् समाप्नुवन्यत्समाप्नुवꣳस्तत्सफस्य सफत्वमिमानेवैनेन लोकान् समाप्योत्तिष्ठन्ति ॥ ५ ॥**

(२)सफाख्येन खलु साम्ना पुरा देवा इमान् लोकान् समाप्नुवन् सम्प्राप्ताः । यद्यस्मात् अनेन साम्नाऽऽप्नुवन् तत्तस्मात् सफाख्यस्य साम्नः सफत्वं सफमिति नाम जातम् । सम्पूर्वादाप्नोतेर्वर्णव्यावृत्त्या सफशब्दनिष्पत्तिरित्यर्थः । (३)ततश्चेदानीन्तना अपि यजमानाः एतेन सफेनेमानेव लोकान् समाप्य सम्यक्प्राप्य यज्ञादुत्तिष्ठन्ति ॥ ५ ॥

अथाऽन्यस्मिन् सामान्तरं विधाय तत्स्तावकं ब्राह्मणमतिदिशति—

**रोहितकूलीयं भवति यदेव रोहितकूलीयस्य ब्राह्मणम् ॥ ६ ॥**

रोहितकुलीयाख्यं साम(४)'इन्द्रमच्छे'त्यस्मिंस्तृचे गेयम् । तस्य च

---

१. पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो मदः । महि द्युक्षतमो मदः ॥१॥
यस्य ते पीत्वा वृषभो वृषायतेऽस्य पीत्वा स्वर्विदः ।
स सुप्रकेतो अभ्यक्रमीदिषोऽच्छा वाजं नैतशः ॥ २ ॥
( प्रगाथात्मकः ) सा. सं. उ. १. १. १६.

२. सफेन वै देवा इति. ख. पु.  ३. तथाचेति. ख. पु.

४. इन्द्रमच्छ सुता इमे वृषणं यन्तु हरयः । श्रुष्टे जातास इन्दवः स्वर्विदः ॥१॥

रोहितकूलीयस्य(१)'एतेन वै विश्वामित्रो रोहिताभ्यां रोहितकूल आजिमजयदि'त्यादिकं यद्ब्राह्मणं पूर्वमाम्नातं तदस्याऽपि रोहितकूलीयस्य ब्राह्मणम् ॥ ६ ॥

अथ सामद्वयं विधत्ते—

**श्यावाश्वान्धीगवे भवतः समीच्यौ विराजौ दधात्यन्नाद्याय ॥ ७ ॥**

श्यावाश्वान्धीगवे सामनी भवतः। ते च प्रकृतौ(२) 'पुरोजिती वो अन्धस' इत्यस्मिंस्तृचे गीयेते। तत्र च(३) 'एषावा अन्या विराडक्षर्यान्ये'ति विराट्द्वयं पूर्वमुक्तम्। एवञ्चैते सामनी प्रयुञ्जानः समीच्यौ सङ्गते, एवं विराजौ दधाति। किमर्थम्? अन्नाद्यार्थम् ॥ ७ ॥

अथैतयोराधारभूता ऋचो विधत्ते—

**पिपीलिकामध्यासु स्तुवन्ति ॥ ८ ॥**

(४)'पर्य्यूषु प्र धन्व वाजसातय' इत्याद्यास्तिस्रोऽनुष्टुभः पिपीलिकामध्यास्त्रिपदाः। प्रथमतृतीयौ पादौ द्वादशाक्षरौ, मध्यमोऽष्टाक्षर इति पिपीलिकाया मध्यं यथा अल्पीयो भवति, एवं न्यूनाक्षरत्वेन मध्यमपादस्याऽल्पीयस्त्वात् पिपीलिकामध्याः। तासु श्याश्वान्धीगवाभ्यां स्तुवन्ति ॥ ८ ॥

---

अयं भराय सानसिरिन्द्राय पवते सुतः। सोमो जैत्रस्य चेतति यथा विदे ॥२॥
अस्येदिन्द्रो मदेष्वा ग्राभं गृभ्णाति सानसिम्। वज्रं च वृषणं भरत्समप्सुजित् ।३।
सा. सं. उ. १. १. १७.

१. तां. ब्रा. १४. ३. १२.

२. ( सा. सं. उ. १. १. १८. ) ९९ पृष्ठेऽयं तृचो द्रष्टव्यः ।

३. तां ब्रा० १२. ११. २२.

४. पर्यूषु प्र धन्व वाजसातये परि वृत्राणि सक्षणिः ।
द्विषस्तरध्या ऋणया न ईरसे ॥ १ ॥
अजीजनो हि पवमान सूर्यं विधारे शक्मना पयः ।
गोजीरया रंहमाणः पुरन्ध्या ॥ २ ॥
अनु हि त्वा सुतं सोम मदामसि महे समर्यराज्ये ॥
वाजाँ अभि पवमान प्रगाहसे ॥ ३ ॥
सा. सं. उ. ६. १. ७.

अथैतासु गानं स्तौति—

**इन्द्रो वृत्रं हत्वा नास्तृषीति मन्यमानः परां परावतमगच्छत्स एतामनुष्टुभं व्यौहत्तां मध्ये व्यवासर्पं दिन्द्रगृहे वा एषोऽभये यजते अभय उत्तिष्ठति य एवं विद्वानेतासु स्तुवते ॥ ९ ॥**

इन्द्रो वृत्रमसुरं हत्वा नास्तृषि नाहिंसिषं वृत्रमिति मन्यमानः मन्वानः, तस्माद्भीतस्सन् परां परावतं पलायमानोऽत्यन्तं दूरं प्राप्नोत् । गत्वा च स इन्द्रः एतां पिपीलिकामध्यामनुष्टुभं व्यौहत् विशेषेणाऽऽहृतवान् । ततस्तस्या मध्ये व्यवासर्पत् अभयार्थं प्राविशत् । अतो यो यजमानः एवं ब्राह्मणार्थं विद्वाञ्जानन् एतासु पिपीलिकामध्यास्वनुष्टुप्सु एताभ्यां सामभ्यां स्तुवते एषोऽभये भयरहिते इन्द्रगृहे यजते तथा अभय एव स्थान उत्तिष्ठति ॥ ९ ॥

अथ सामान्तरं विधत्ते--

**यज्ञायज्ञीयनिधनꣳसौहविषं भवति यज्ञायज्ञीयादेव तत्तृतीयसवने न यन्ति ॥ १० ॥**

यज्ञायज्ञीयस्य वागिति निधनम् । तदेव निधनं यस्य तथाविधं सौहविषं साम(१) 'परि प्रधन्वे'त्यस्मिंस्तृचे गेयम् । तथा च तृतीयसवने यज्ञायज्ञीयादेव साम्नो न यन्ति नाऽपगच्छन्ति । तृतीयसवनं हि यज्ञायज्ञीयस्य स्थानम् । तच्चैतस्मिन्नहनि माध्यन्दिन एव पवमाने प्रयुक्तम् । तृतीयसवनेऽपि तदेकदेशस्य निधनस्य प्रयोगात् यज्ञायज्ञीयमेव तृतीयसवने कृतं भवति ॥ १० ॥

अथाऽन्यत्साम विधत्ते--

**वाजजिद्भवति ॥ ११ ॥**

वाजजिदाख्यं साम(२)'सूर्यस्येव रश्मय' इत्यस्मिंस्तृचे गेयम् ॥११॥

---

१. परि प्र धन्वेन्द्राय सोम स्वादुर्मित्राय पूष्णे भगाय ॥ १ ॥
एवामृताय महे क्षयाय स शुक्रो अर्ष दिव्यः पीयूषः ॥ २ ॥
इन्द्रस्ते सोम सुतस्य पेयात्क्रत्वे दक्षाय विश्वे च देवाः ॥ ३ ॥
सा. स. उ. ६. १. ८.

२. सूर्यस्येव रश्मयो द्रावयित्नवो मत्सरासः प्रसुतः साकमीरते ।

वाजोऽन्नं जनयत्यनेनेति निर्वचनमभिप्रेत्य स्तौति—

**सर्वस्याप्त्यै सर्वस्य जित्यै सर्वं वा एते वाजं जयन्ति ये दशममहरागच्छन्त्यन्नं वै वाजोऽन्नाद्यस्याऽवरुद्ध्यै ॥ १२ ॥**

एतत् (१)'इन्द्रायेन्दो मरुत्वत इति मरुत्वत्यो गायत्र्यो भवन्ती'त्यस्मिन् खण्डे व्याख्यातम् ॥ १२ ॥

अथाऽस्य साम्नो निधनभागपरिमाणं विधाय स्तौति—

**दशाक्षरं निधनमुपयन्ति दशरात्रस्य धृत्यै दशाक्षरा विराड्वैराजमन्नमन्नाद्यस्याऽवरुद्ध्यै ॥ १३ ॥**

दशाक्षराणि निधनानि यस्य तत्तथोक्तम् । तच्च दशाक्षरं निधनं अक्षरशो दशरात्रस्य दशानामह्नां धारणाय भवति । शिष्टं सिद्धम् ॥१३॥

अथैतस्याऽऽधारभूतां ऋचं विधाय स्तौति—

**सूर्य्यवतीषु स्तुवन्त्यन्तो वै सूरोऽन्त एतद्दशममह्नामन्त एव तदन्तेन स्तुवते प्रतिष्ठायै ॥ १४ ॥**

'सूर्य्यस्येव रश्मय' इत्याद्यासु सूर्य्यशब्दयुक्तासु तिसृषु ऋक्षु स्तुवन्ति । शिष्टं (२)'सुषमिद्धो न आवहेत्याप्रिय आज्यानी'त्यत्र व्याख्यातम् ॥ १४ ॥

अथैतास्वेव लिङ्गद्वयमनूद्य स्तौति—

**उपवत्यो भवन्ति प्रतिष्ठायै परिवत्यो भवन्ति सर्वस्य पर्य्याप्त्यै ॥ १५ ॥**

'उपो मतिः पृच्यते सिच्यते'इत्युपशब्दयोगादेता उपवत्यो

---

तन्तुं ततं परि सर्गास आ शवो नेन्द्रादृते पवते धाम किञ्चन ॥ १ ॥
उपो मतिः पृच्यते सिच्यते मधु मन्द्राजनी चोदते अन्तरासनि ।
पवमानस्सन्तनिः सुन्वतामिव मधुमां द्रप्सः परि वारमर्षति ॥ २ ॥
उक्षा मिमेति प्रतियन्ति धेनवो देवस्य देवीरुपयन्ति निष्कृतम् ।
अत्यक्रमीदर्जुनं वारमव्ययमत्कं न निक्तं परि सोमो अव्यत ॥ ३ ॥
सा. सं. उ. ६. १. ९.

१. तां. ब्रा. १३. ९. १. २. तां. ब्रा. १५. ८. १.

भवन्ति । उपशब्दश्चोपगमनद्योतक इति ता यजमानस्य प्रतिष्ठायै भवन्तीति । तथा 'मधुमां द्रप्सः परिवारमर्षती'ति परिशब्देनैताः परिवत्यो परिशब्दवत्यः भवन्ति । तथा च सर्वस्य फलस्य पर्य्याप्त्यै सम्पूर्णतायै सम्पद्यते ॥ १५ ॥

एवं गायत्र्यादि वाजजिदन्तेष्वष्टसु सामसु प्रत्येकं तृचे गीयमानेषु यः स्तोमः सम्पद्यते (१)स एवाऽस्य पवमानस्य स्तोत्रस्य स्तोम इत्याह—

**चतुर्विंᳫंश एव स्तोमो भवति तेजसे ब्रह्मवर्चसाय ॥ १६ ॥**

स्पष्टोऽर्थः ॥ १६ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे पञ्चदशाध्यायस्यैकादशः खण्डः ॥

---

## अथ द्वादशः खण्डः ॥

अथाऽस्मिन्नहन्यन्तिमं स्तोत्रीयं दर्शयति—

**विराट्सु वामदेव्यमग्निष्टोमसाम भवति शान्त्यै कॢप्त्यै ॥ १ ॥**

(२)'अग्निं नरो दीधितिभिररण्योरि'त्याद्यासु विराट्सु वामदेव्यं गीयमानं अग्निष्टोमसाम भवति । तच्च शान्त्यै(३) परितापशमनाय, कॢप्त्यै कल्पनाय सामर्थ्याय च भवति ॥ १ ॥

---

१. एष एवेति. ख. पु.

२. अग्निं नरो दीधितिभिररण्योर्हस्तच्युतं जनयत प्रशस्तम् ।
दूरेदृशं गृहपतिमथव्युम् ॥ १ ॥
तमग्निमस्ते वसवो न्यृण्वंत्सुप्रतिचक्षमवसे कुतश्चित् ।
दक्षाय्यो यो दम आस नित्यः ॥ २ ॥
प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ ।
त्वां शश्वन्त उप यन्ति वाजाः ॥ ३ ॥

सा. सं. उ. ६. १. १०.

३. दुरितोपशमनायेति. ख. पु.

अथैतस्मिन् स्तोत्रे सत्कृत्सामस्तोमान् संहृत्य स्तौति—

**सद्वै वामदेव्यꣳसाम्नाꣳसद्विराट् छन्दसाꣳसत्त्रयस्त्रिꣳशः स्तोमानाꣳ सतामन्तान् सन्धायोत्तिष्ठन्त्यपि ह पुत्रस्य पुत्रः सत्त्वमश्नुते ॥ २ ॥**

साम्नां मध्ये वामदेव्यं साम सत् उत्कृष्टम् । तथा विराट् छन्दसां मध्ये । स्तोमानां मध्ये त्रयस्त्रिंशः । एवञ्चैतान् सह प्रयुञ्जानः सतामुत्कृष्टानामन्तान् पर्य्यन्तान् सन्धाय संहृत्य एकीकृत्य सत्राादुत्तिष्ठन्ति । अपि चाऽस्य यः पुत्रः तस्य पुत्रोऽपि सत्त्वं सद्भावमश्नुते प्राप्नोति ॥२॥

अथाऽस्य दशरात्रस्य समापने ब्रह्मवादिभिः कृतञ्चोद्यमुद्भाव्य परिहरति—

**ब्रह्मवादिनो वदन्ति यतस्सत्राादुदस्थाता ३ स्थिता३दिति यद्यत इति ब्रूयुरप्रतिष्ठाना अप्रजसो भविष्यन्तीत्येनान् ब्रूयाद्यत् स्थितादिति ब्रूयुः स्थायुकैषाꣳश्रीर्भविष्यति न वसीयाꣳसो भविष्यन्तीत्येनान् ब्रूयात् पूर्णादेव पूर्णमभ्युदस्थामेति ब्रूयुः ॥ ३ ॥**

ब्रह्मवादिनो वेदार्थचिन्तकाश्चोदयन्ति—किमेते यजमानाः यतो गच्छतः सत्रााद्दशरात्रादुदस्थाता उत्तिष्ठन्ति, उत स्थितात् सत्राादिति यद्यपि यतो गच्छतः सत्राादुदस्थाता इति ब्रूयुः । तथा च गमनशीलाद्यज्ञादुत्थितत्वात् यजमाना अप्रतिष्ठानाः प्रतिष्ठानरहिताः गन्तुकामाः अप्रजसः प्रजारहिताश्च भविष्यन्तीत्येनान् यजमानानभिज्ञः प्रतिब्रूयात् । यद्यदि स्थितान्निश्चलात् सत्राादुदस्थातेति ब्रूयुस्तर्ह्येषां श्रीः स्थायुका स्थानशीला भविष्यति, नोत्तरोत्तरं वर्द्धते । अत एतेन वसीयांसो वसुमत्तरास्ते भविष्यन्तीत्येनान् यजमानान् प्रतिब्रूयात् । एवं पक्षद्वयेऽपि दोषदर्शनात् पूर्णादेव पूर्णमभ्युदस्थामेति ब्रूयुः ॥ ३ ॥

एतद्व्याचष्टे—

**एते वै पूर्णात् पूर्णमभ्युत्तिष्ठन्ति ये वामदेव्येन स्तुत्वोत्तिष्ठन्ति ॥ ४ ॥**

एते खलु पूर्णात् अधिकात् पूर्णमाधिकमभिलक्ष्य सत्राादुत्तिष्ठन्ति, ये वामदेव्येन साम्ना स्तुत्वोत्तिष्ठन्ति ॥ ४ ॥

वामदेव्यस्य च पूर्णत्वमुपपादयति—

**अन्तरिक्षं वै वामदेव्यमन्तरिक्षेणेदꣳसर्वं पूर्णम् ॥५॥**

वामदेव्यं साम्नामन्तरिक्षं अन्तरिक्षरूपम्। अन्तरिक्षेण च इदं सर्वं जगत् पूर्णं सर्वव्यापकान्तरिक्षात्मकत्वात् वामदेव्यस्य पूर्णत्वमित्यर्थः ॥ ५ ॥

एवं साम्नस्समृद्धिहेतुत्वमुक्त्वा स्तोमर्चां सह समृद्धिहेतुतामाह—

**एष वै समृद्धः स्तोमो यत् त्रयस्त्रिꣳशस्त्रयस्त्रिꣳशदक्षरासु समृद्धावेव प्रतितिष्ठन्ति ॥ ६ ॥**

यत्त्रयस्त्रिंशः स्तोमः एष वै एष खलु समृद्धः सम्पूर्णः स्तोमः, त्रिवृदादिभ्यः पञ्चभ्यः स्तोमेभ्योऽधिकत्वात्। स च त्रयस्त्रिंशः स्तोमः त्रयस्त्रिंशदक्षरासु 'अग्निं नर' इत्याद्यासु विराट्सु निष्पद्यते। तथा च समृद्धावेव यजमानाः प्रतितिष्ठन्ति ॥ ६ ॥

अथैता ऋचः सर्वच्छन्दोरूपेण स्तौति—

**सर्वेषां वा एताश्छन्दसाꣳरूपं यत्त्रिपदास्तेन गायत्र्यो यदेकादशाक्षराणि पदानि तेन त्रिष्टुभो यत् द्वादशाक्षरं पदं तेन जगत्यो यत् त्रयस्त्रिꣳशदक्षरास्तेन विराजस्तेनैव चाऽनुष्टुभो न ह्येकस्मादक्षराद्विराधयन्ति ॥ ७ ॥**

एता 'अग्निं नरो दीधितिभि' रित्याद्यास्सर्वेषां गायत्र्यादीनां छन्दसां रूपम्। यद्यस्मादेतास्त्रिपदास्तेन गायत्र्यो भवन्ति, यद्यस्मादासां एकादशाक्षराणि पदानि एकादशाक्षराः पादाः, तेनैतास्त्रिष्टुभः। यद्यस्मात् द्वादशाक्षरं पदं अक्षरव्यूहेन प्रथमः पादो द्वादशाक्षरो भवति, तेनैता जगत्यः। यद्यस्मादेतास्त्रयस्त्रिंशदक्षराः, तेनैता विराजः, तेनैव चाऽनुष्टुभः। तत्र द्वात्रिंशदक्षराणामनुष्टुप्त्वम्। न ह्येकस्मादिति न खल्वेकस्मादक्षरादधिकात् न्यूनाद्वा छन्दांसि विराधयन्ति विभिद्यन्ते। अतो अधिकमप्येकमक्षरमासामनुष्टुप्त्वं न बाधत इत्यर्थः ॥

अथैतस्य स्तोत्रस्य विधित्सितं पूर्ववत्स्तोमं विधाय स्तौति—

**त्रयस्त्रिꣳश एव स्तोमो भवति प्रतिष्ठायै देवतासु वा एष प्रतिष्ठितः ॥ ८ ॥**

अस्याऽग्निष्टोमसाम्नः त्रयस्त्रिंश एव स्तोमः कार्य्यो न प्राकृतश्चतुर्विंशः। त्रयस्त्रिंशत्सङ्ख्याकासु देवतासु खलु एष त्रयस्त्रिंशः प्रतिष्ठितः। तस्मात् त्रयस्त्रिंश एवाऽन्ततः प्रयोक्तव्य इत्यर्थः ॥ ८ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमार्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमहाराजाधिराजपरमेश्वरश्रीवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे पञ्चदशाध्यायस्य द्वादशः खण्डः ॥

पञ्चदशाध्यायस्समाप्तिमगमत् ॥

—

# षोडशाध्याये

## प्रथमः खण्डः ॥

यस्य निश्श्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे समहं वन्दे विद्यातीर्थमहेश्वरम् ॥

एवं द्वादशाहस्य व्यूढस्य दशरात्रस्य स्तोमक्लृप्तिरुक्ता। समूढस्य तु कल्पकारोक्तप्रकारेणाऽवगन्तव्या। स च व्यूढो दशरात्रोऽहीनात्मकः सत्रात्मकश्च, उभयलिङ्गसद्भावात्। (१)'एको दीक्षेते'त्येकस्यैव दीक्षाविधानम्। (२)'द्वादशाहेन यजत' इति यजतिचोदना। (३)'अतिरिक्तं वा एतदतिरिक्तेन स्तुवन्ति यद्गौरीवितेनाऽहीनानि'ति अहीनत्वस्य सिद्धवदनुवादः, (४)'यजमानं वा अनुप्रतितिष्ठन्तमुद्गाता प्रतितिष्ठती'ति ऋत्विग्यजमानयोर्भेददर्शनम्, (५)'यजमानमेवैतया वर्द्धयन्ती'ति एकस्यैव यजमानस्य वर्द्धनम्, (६)'ध्वस्रे वै पुरुषन्ती तरन्तपुरुमीढाभ्यां वैतदश्विभ्यां सहस्राण्यदित्सतामि'ति दक्षिणाप्रवाद इत्यादीनि बहून्यहीनालिङ्गानि। (७)'स्तोमो युज्यते सत्रियेभ्योऽहर्भ्यः' (८)'यतः सत्रादुदस्थाता ३ स्थिता ३ दि'ति सत्रसंशब्दनं(९) 'सर्वं वा एते वाजं जयन्ति ये दशममहरागच्छन्ति येनैव रूपेण प्रयन्ति तमभ्युद्यन्ती'त्यादीनि बहुकर्तृकत्वप्रतिपादकानि बहुशस्सत्रलिङ्गानि चोपलभ्यन्ते। तस्मादेवमुभयलिङ्गसद्भावात् सत्राहीनात्मको दशरात्रः सोऽयं प्रायणीयोदयनीयातिरात्रसंयुक्तो द्वादशाहाख्यः क्रतुर्भवति। स च द्वादशाहो विधास्यमानानां द्विरात्रप्रभृतीनां अहीनानामेकादशरात्रादीनां सत्राणाञ्च प्रकृतिरिति सर्वप्रकृतेरग्निष्टोमस्य विधानानन्तरं गतैरध्यायैर्विहितः। एवं प्रकृतिभूतावग्निष्टोमद्वादशाहौ येनैव क्रमेण विहितौ तेनैव क्रमेणाऽतः परं तद्विकृतयो विधास्यन्ते। तत्र प्रथममग्निष्टोमविकृतिभूतानेकाहान् विधित्सुस्त्रिकद्रुकाख्यानां त्रयाणामेकाहानां प्रथमस्य ज्योतिरिति संज्ञां

---

१. तां. ब्रा. १०. ३. ३.
२. तां. ब्रा. १०. ५. १४.
३. तां. ब्रा. ११. ५. १५.
४. तां. ब्रा. १२. ४. ९.
५. तां. ब्रा. १२. १२. २.
६. तां ब्रा. १३. ७. १२.
७. तां. ब्रा. ११. १. १.
८. तां ब्रा. १५. १२. ३.
९. तां. ब्रा. १५. ११. १२.

निर्वक्ति—

**प्रजापतिर्वा इदमेक आसीन्नाऽहरासीन्न रात्रिरासीत्सोऽस्मिन्नन्धे तमसि प्रासर्पत्स ऐच्छत्स एतमभ्यपद्यत ततो वै तस्मै व्यौच्छद्व्युष्टिर्वा एष आह्रियते यद्वै तज्ज्योतिरभवत्तत् ज्योतिषो ज्योतिष्ट्वम् ॥ १ ॥**

प्रजापतिः प्रजानामधिपतिः सर्वकारणभूतस्स्रष्टा इदं दृश्यमानं यज्जगदस्ति एतदात्मकः एक एव पुरा आसीत् पुरातनस्य प्रपञ्चस्य प्रविलीनत्वात् अद्यतनस्य चाऽसृष्टत्वात् अद्वितीयः प्रजापतिरेक एवाऽवर्त्ततेत्यर्थः। एवञ्चाऽहोरात्रविभागहेतोः सूर्यस्याऽप्यभावात् अहोरात्रविभागोऽपि नाऽऽसीत्। एवं प्रकाशाभावात् स प्रजापतिः अस्मिन्नन्धे अन्धत्वापादके दृष्ट्याच्छादके तमसि अन्धकारे प्रासर्पत् प्रावर्त्तत। स च तमोनिरोधकं तेज ऐच्छत् अकामयत। स च कामयमानः एतं ज्योतिराख्यं यज्ञमभ्यपद्यत अभिप्राप्नोत्। ततोऽनन्तरं तस्मै प्रजापतये व्यौच्छत् तमोऽपागच्छत्। तस्मात् व्युष्टिर्विवासनं तमसो निवृत्तिः एतदात्मक एष एव क्रतुराह्रियते। यत् यस्मात्तदानीं ज्योतिस्तमोनिवर्त्तकं तेजोऽभवत, तस्मादस्य ज्योतिषः ज्योतिराख्यस्य क्रतोः ज्योतिष्ट्वं ज्योतिस्संज्ञकत्वं ज्योतिर्नाम सम्पन्नमित्यर्थः। एवञ्च '(१)स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वादि'ति न्यायेन स्वर्गकामः एतेन ज्योतिषा एकाहेन यजेतेति विधिरुन्नेतव्यः। प्रकृतिभूतस्य ज्योतिष्टोमस्य प्रकरणात् अन्यत्राऽऽम्नातत्वादेतत् ज्योतिस्संज्ञं कर्मान्तरम्। यथा कुण्डपायिनामयने(२) 'मासमग्निहोत्रं जुह्वती'ति मासाग्निहोत्रं नित्याग्निहोत्रात् कर्मान्तरं तथेति द्रष्टव्यम् ॥ १ ॥

अथैतस्य कर्मान्तरस्य ज्योतिष्टोमविकृतेः स्तुत्यर्थं सर्वप्रकृतेर्ज्यो-

---

१. जै. सू. ४. ३. १५. यत्र विधिवाक्ये फलविशेषो न श्रूयते, तद्विषयमिदम्। सः कल्पनीयः फलविशेषः स्वर्गः स्यात् स्वर्गो भवितुमर्हति। कुतः? सर्वान् प्रत्यविशिष्टत्वात् सर्वैरपि पुरुषैरविशेषेणाऽभिलषितत्वात्। पुत्रपश्वादयो हि अनुभूतचराः केषाञ्चिदभिलाषविषयाः कदाचिन्न भवेयुरपि, स्वर्गस्तु न तथा, पुनः पुनरनुभूयमानोऽपि निरतिशयत्वेन तत्राकाङ्क्ष्यनुदयादिति भावः। अयमेव विश्वजिन्न्याय इति कथ्यते।

२. वाक्यमिदमधिकृत्य प्रकरणान्तराधिकरणे पूर्वमीमांसायां द्वितीयतृतीयैकादशे (२. ३. ११.) विचारः कृतः।

तिष्टोमस्य प्रथमानुष्ठानं स्तौति—

**एष वाव प्रथमो यज्ञानां य एतेनाऽनिष्ट्वाऽथाऽन्येन यजते गर्त्तपत्यमेव तज्जीयते प्र वा मीयते ॥ २ ॥**

योऽयमिदानीं ज्योतिस्संज्ञ एकाहो विधीयते एष एव यज्ञानां प्रथमः अन्येषां सोमयागानां प्रथमोऽनुष्ठेयः। एतदुक्तं भवति (१)'प्रजापतिरकामयत बहुः स्यां प्रजायेयेति स एतमग्निष्टोममपश्यदि'त्यादिभिरध्यायैर्योऽयं सर्वप्रकृतिभूतोऽग्निष्टोमो विहितः तत्सदृश एष ज्योतिराख्य एकाह इति। एतेन प्रकृतिभूतेन ज्योतिष्टोमेनाऽग्निष्टोमेनाऽनिष्ट्वा अथाऽन्येन यज्ञक्रतुना यजते तत् स यजमानः गर्त्तपत्यं गर्त्तपतनं यथा भवति तथैव जायते हीयते ज्या वयोहानाविति धातुः। अथ वा प्रमीयते म्रियते। तस्मादन्येभ्यो यज्ञेभ्यः पूर्वमेष एवाऽनुष्ठेयः ॥ २ ॥

एवं विपक्षे बाधोपन्यासमुखेन प्राथम्यमुक्त्वा अथाऽन्येषां यज्ञानां तज्जन्यत्वेन पश्चाद्भाविस्वात्तज्जनकत्वेन चैतस्य प्रथमानुष्ठानं सदृष्टान्तमुपपादयति—

**यथा वा इदमग्नेर्जातादग्नयो विह्रियन्त एवमेतस्मादध्यन्ये यज्ञा विह्रियन्ते ॥ ३ ॥**

इदं इदानीं यथा वै यथा खलु जातात् निर्मथनादुत्पन्नादग्नेः अन्ये अग्नय आहवनीयाद्याः पश्चाद्विह्रियन्ते विभज्यन्ते तं देशमाह्रियन्ते एवं एतस्मात् ज्योतिष्टोमात् अधि ऊर्ध्वं अन्ये तद्विकृतयो यज्ञा विह्रियन्ते विस्तार्यन्ते। अतस्सर्वेषामुत्पादकत्वादेष एव प्रथमोऽनुष्ठेयः ॥ ३ ॥

ज्योतींषि स्तोमा यस्याऽसौ ज्योतिष्टोम इति हि नामनिर्वचनम्, तत्सिद्ध्यर्थं त्रिवृदादीनां स्तोमानां ज्योतीरूपत्वमाह—

**यो हि त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयति यः पञ्चदशः स तं यः सप्तदशः स तं य एकविंशः स तम् ॥ ४ ॥**

यो हि त्रिवृत् स्तोमः अन्यं सर्वप्रकृतेर्ज्योतिष्टोमात् अन्यं सोमयागमापद्यते प्राप्नोति स स्तोमस्तं सोमयागं दीपयति। एवमुत्तरत्राऽपि योज्यम्। त्रिवृदादीनां मध्ये एकैक एव सोमयागं निर्वर्त्तयितुं शक्त

---

१. तां. ब्रा. ६. १. १.

इत्यर्थः । अत एव दशरात्रे प्रथमादिष्वहस्सु त्रिवृदादिक एकैक एव स्तोमः क्रमेण विहितः ॥ ४ ॥

नन्वेवं दीपकत्वादस्त्वेतेषां ज्योतीरूपत्वम्, तथाऽपि ज्योतिष्टोमस्य त्रिवृदादिस्तोमचतुष्टयसाध्यत्वादेकैकस्तोमकानां ज्योतिष्टोमता न स्यादित्यत आह—

**एतत्तद्यदाहुरेको यज्ञ इत्येतद्धि सर्वे ज्योतिष्टोमा भवन्ति ॥ ५ ॥**

त्रिवृदादीनामेक एव यज्ञो यज्ञसाधन इति यदाहुर्ब्रह्मवादिनः, तदेतदेव यत्सामर्थ्यं 'यो हि त्रिवृदन्यं यज्ञक्रतुमि'त्यादिना त्रिवृदादीनां प्रत्येकं प्रतिपादितं एतद्धि एकैकस्य स्तोमस्य प्रत्येकं यज्ञसाधनत्वात् एकस्तोमका अपि सर्वे ज्योतिष्टोमाः ज्योतिष्टोमशब्दवाच्या भवन्ति॥५॥

एवं त्रिवृदादीनां प्रत्येकं ज्योतीरूपत्वेन ज्योतिष्टोमनिष्पादकत्वम-भिधाय अथ प्रकृतिभूते ज्योतिष्टोमे तेषां समावेशविशेषमाह—

**अस्थूरिर्वा एष सन्ततो यज्ञो द्वौ द्वौ हि स्तोमौ सवनं वहतस्त्रिवृत्पञ्चदशौ प्रातस्सवनं पञ्चदशसप्तदशौ माध्यन्दिनꣳसवनꣳसप्तदशैकविंशौ तृतीयसवनम् ॥६॥**

सन्ततो वक्ष्यमाणप्रकारेण अन्योन्यं संश्लिष्टस्तोमक एष ज्योतिष्टोमोऽस्थूरिर्वै एकेनाऽश्वेन युक्तो रथः स्थूरिः । तद्विलक्षणो द्वाभ्यां (१)अश्वाभ्यां नीयमानो रथोऽस्थूरिः । तत्सदृशो ज्योतिष्टोम इत्यर्थः । तथा हि–द्वौ द्वौ स्तोमौ त्रिवृदादिकौ संहतौ अस्य ज्योतिष्टोमस्यैकैकं सवनं वहतः। कतमं कतमौ वहत इति। उच्यते–त्रिवृत्पञ्चदशश्च स्तोमौ प्रातस्सवनं वहतः । तत्र बहिष्पवमानं त्रिवृत्स्तोमः, चतुर्ष्वाज्येषु पञ्चदशः । सवनयोः सान्तत्यार्थं अनुवर्त्तमानः पञ्चदशः सप्तदशश्च इत्येतौ स्तोमौ माध्यन्दिनं सवनं वहतः । माध्यन्दिने पवमानस्तोत्रे पञ्चदशः, पृष्ठस्तोत्रेषु सप्तदशः । तथैव सप्तदशैकविंशौ तृतीयसवनं वहतः। आर्भवपवमाने सप्तदश एकविंशोऽग्निष्टोमसाम्नीत्यर्थः ॥ ६ ॥

एवं ज्योतिश्शब्दवाच्यानां समावेशमुक्त्वा परिच्छिन्नदक्षिणात्वा-

---

१. अश्वाभ्यां संयुक्ताभ्यां नीयमान इति ख. पु.

दपि ज्योतिष्टोम एव प्रथमः कार्य्य इत्याह—

**या मितदक्षिणैव स्यादेष एव कार्य्य इयं वै ज्योति-रियममितस्य यन्त्रिकैषा वा एतं यन्तुमर्हति ॥ ७ ॥**

या यज्ञक्रिया मितदक्षिणैव स्यात् परिमितदक्षिणैव भवेत्। एष एव यज्ञः कार्य्योऽनुष्ठेयः। नन्वेवमपरिमितस्याऽननुष्ठानात् अपरिमितं फलं न स्यादित्यत आह इयं वै सर्वैः परिदृश्यमाना इयमेव पृथिवी ज्योतिः पृथिव्यात्मको ज्योतिष्टोम इत्यर्थः। इयञ्च पृथिवी स्वयमपरिमितत्वात् अमितस्य अपरिमितस्य यागस्य फलस्य वा यन्त्रिका नियन्त्री। एतदेवोपपाद्यते 'एषा वा' इति ॥ ७ ॥

अथैनं ज्योतिष्टोमं स्तोत्रीयासङ्ख्यया स्तौति—

**तस्य नवतिशतꣳ स्तोत्रीयास्तासां या अशीति-शतं ताः षट्त्रिꣳशिन्यो विराजः षड्तव ऋतुष्वेव विराजा प्रतितिष्ठति ॥ ८ ॥**

तस्य ज्योतिष्टोमस्य विहितस्तोमानुसारेण परिगणनायां नवतिशतं नवत्युत्तरशतसङ्ख्यास्तोत्रीयाः सम्पद्यन्ते। प्रातस्सवने पञ्चसु स्तोत्रेषु एकोनसप्ततिस्तोत्रीयाः। माध्यन्दिनसवने त्र्युत्तराशीतिस्तोत्रीयाः। तृतीयसवने त्वष्टत्रिंशदिति नवतिशतस्य सम्पत्तिः। तासां स्तोत्रीयाणां मध्ये या अशीतिशतं अशीत्युत्तरशतसंख्याकाः स्तोत्रीयाः त्रिंशिन्यस्त्रिंशदक्षरास्त्रिंशत्सङ्ख्यया विभज्यमानाः षड्विराजा भवन्ति। वसन्ताद्या ऋतवश्च षट्। तस्मादृतुष्वेव एकैकया विराजा प्रतितिष्ठति यजमानः प्रतिष्ठितो भवति ॥ ८ ॥

अथाऽवशिष्टाभिः स्तोत्रीयाभिः स्तौति—

**अथ या दशैषा वा आत्मन्या विराडेतस्यां वा इदं पुरुषः प्रतिष्ठितः ॥ ९ ॥**

अथाऽशीतिशतादनन्तरं या दशस्तोत्रीया एष खल्वात्मन्या आत्मसम्बन्धिनी देहसम्बद्धदशेन्द्रियरूपा विराट्। एतस्यां खलु विराजि अयं पुरुषः आत्मा प्रतिष्ठितः आश्रितः ॥ ९ ॥

अथाऽस्मिन् ज्योतिष्टोमे दक्षिणाङ्गत्वेन दातव्यानि द्रव्याणि प्रदर्श्य स्तौति—

**गौश्चाऽश्वश्चाऽश्वतरश्च गर्दभश्चाऽजाश्चाऽवयश्च व्री-**

**इयश्च यवाश्च तिलाश्च माषाश्चैतस्यामेव विराजि प्रति-तिष्ठति ॥ ९ ॥**

एवं गवादीनि दश द्रव्याणि दातव्यानीत्यर्थः । तथा चैतस्यां गवादिदशद्रव्यरूपायामेव विराजमानः प्रतितिष्ठति ॥ १० ॥

एवं दक्षिणाङ्गानि विधाय मुख्यदक्षिणां विधत्ते—

**तस्य द्वादशꣳशतं दक्षिणाः ॥ ११ ॥**

यदुक्तं सूत्रकारेण(१) 'स्वतन्त्रस्य ज्योतिष्टोमस्य संस्थाविकल्पा आग्निष्टोम्यमौक्थ्यमातिरात्र्यमि'तीति, तस्य चाऽयमर्थः—योऽयं मूलसंस्तुतः पुरुषस्याऽऽवश्यको ज्योतिष्टोमः सोऽग्निष्टोम उक्थ्यो वा अतिरात्रो वा स्यात् इति विकल्पः । एवं प्रथमप्रयोज्यानां त्रयाणां मध्ये द्वयोरेवैतद्दक्षिणाविधानमिति तेनैव सूत्रकृतोक्तं(२) 'तस्याऽनतिरात्रस्य द्वादशं शतं दक्षिणा' इति ॥ ११ ॥

स्तोत्रीयावद्दक्षिणामप्यवयुत्य स्तौति—

**वीरहा वा एष देवानां यः सोममभिषुणोति याः शतं वैरं तद्देवानवदयतेऽथ या दश दश प्राणाः प्राणाꣳस्ताभिस्स्पृणोति यैकादश्यात्मानं तया या द्वादशी सैव दक्षिणा ॥ १२ ॥**

यो यजमानः सोममभिषुणोति एष देवानां मध्ये वीरहा वै वीरो वीर्यवान् । यः सोमः तस्य हन्ता खलु । तस्मादस्य(३)वीरहन्तृतालक्षणो दोषो जायत इत्यर्थः । तत्र याः शतं शतसंख्या गावः तत्तेन शतेन वैरं वीरहननलक्षणं पापं देवान् प्रत्यवदयते निरस्यति । अथ शतादधिका दश या गावः ताभिः प्राणान् स्पृणोति प्रीणयति । दशसंख्या हि प्राणाः 'नव वै पुरुषे प्राणाः नाभिर्दशमी'ति हि ब्राह्मणम् । अथ या एकादशी गौः तयाऽऽत्मानं स्पृणोति । अथ या द्वादशी द्वादशसंख्यापूरणी सैव यज्ञस्य दक्षिणा ॥ १२ ॥

अथैतद्दक्षिणावत्त्वं स्तौति—

**श्लेष्म वा एतद्यज्ञस्य यद्दक्षिणा न वा अश्लेष्मा र-**

---

१. लाट्या. श्रौ. ८. १. १६. २. लाट्या. श्रौ. ८. १. १७.

३. वीरहत्यालक्षण इति ख. पु.

**थो वहत्यथ यथा श्लेष्मवता यं कामं कामयते तमभ्यश्नुत एवमेतेन दक्षिणावता यं कामं कामयते तमभ्यश्नुते ॥ १३ ॥**

दक्षिणा इति यत् एतद्यज्ञस्य श्लेष्म वै संश्लेषकद्रव्यम्। न वै न खलु अश्लेष्मा संश्लेषकेण महिषीसंयुक्तेन तेनैव ललनाक्षीजनेन वियुक्तो रथो वहति गन्तव्यं प्रापयति। यथा खलु श्लेष्मवता संश्लेषकाञ्जनद्रव्यवता रथेन यं कामं काम्यमानं विषयं कामयते तमभ्यश्नुते पुरुषः प्राप्नोति। एवमेतेन दक्षिणावता यागेन यत् फलं कामयते तत् फलं प्राप्नोति ॥ १३ ॥

अथ प्रकारान्तरेण दक्षिणादानं स्तौति—

**शुभो वा एता यज्ञस्य यद्दक्षिणा यद्दक्षिणावता यजते शुभमेवाऽस्मिन्दधाति ॥ १४ ॥**

यत् या दक्षिणा एता यज्ञस्य शुभो वै शोभाहेतवोऽलङ्काराः। तस्मात् यत् या दक्षिणावता यागेन सोमेन यजते तस्मिन् यज्ञे शुभं शोभा(१)हेतुमलङ्कारमेव दधाति निदधाति(२) स्थापयति। इत्थं सर्वप्रकृतिभूतस्य ज्योतिष्टोमस्य स्तुतिः कृता। सैव 'प्रकृतिवद्विकृतिः कर्त्तव्ये'त्यतिदेशवाक्येन ज्योतिष्टोमविकृतौ ज्योतिराख्येऽस्मिन्नेकाहेऽतिदिश्यमाना अस्यैव स्तुतिर्भवति। यद्यप्येतत्सर्वं तत्प्रकरण एव वक्तव्यम्, तथाऽपि विधास्यमानानां विकृतीनां तत्प्रकृतिकत्वं द्योतयितुं तदुपन्यास इत्यदोषः ॥ १४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षोडशाध्यायस्य प्रथमः खण्डः ॥

---

१. हेतुभूतमिति ख. पु. २. स्थापयतीति नाऽस्ति खपुस्तके

# अथ द्वितीयः खण्डः ॥

अथाऽन्यमेकाहं विधत्ते—

**अथैष गौः ॥ १ ॥**

अथाऽनन्तरं गवाख्योऽन्य एकाहोऽभिधीयत इति शेषः ॥ १ ॥

तस्य भ्रातृव्यजयहेतुत्वं वक्तुमाह—

**गवा वै देवा असुरानेभ्यो लोकेभ्योऽनुदन्तैभ्यो लोकेभ्यो भ्रातृव्यं नुदते य एवं वेद ॥ २ ॥**

गवा वै गवाख्येनैकाहेन खलु देवाः पुरा असुरानेभ्यो लोकेभ्यः पृथिव्यादिभ्यस्त्रिभ्यो लोकेभ्यस्सकाशात् अनुदन्त प्रेरितवन्तः अपाक्रमयन् । स्पष्टमन्यत् ॥ २ ॥

अथाऽस्य गौरितिसञ्ज्ञां निर्वक्ति—

**यद्वै तद्देवा असुरानेभ्यो लोकेभ्यो गोवयꣳस्तद्गोर्गोत्वम् ॥ ३ ॥**

(१)तत्तदानीन्तनसमये यद्वै यस्मादेव असुरानेभ्यो लोकेभ्यो गोवयन् गुप्तांस्तिरोहितानकुर्वन् तत्तस्माद्गोः गवाख्यैकाहस्य गोत्वं गौरिति नाम सम्पन्नम । गोवयतिः तिरोधानार्थः । छान्दसो धातुः । तस्य च क्विपि पृषोदरादित्वात् गोभाव इति श्रुत्यभिप्रायः । यद्वा 'गमेर्डो'इति डोप्रत्यये यथा गमेर्गोशब्दनिष्पत्तिः । एवं गोवयतेरप्यौणादिको डोप्रत्ययः ॥ ३ ॥

अथैतद्वेदनफलमाह—

**गोवयति पाप्मानं भ्रातृव्यं य एवं वेद ॥ ४ ॥**

पाप्मानं पापरूपं भ्रातृव्यं गोवयति तिरोहितं करोति य एवमुक्तं ब्राह्मणार्थं जानाति । इत्थं वाक्यशेषपर्य्यालोचनया भ्रातृव्यवाननेन गवा यजेतेत्युक्तं भवति ॥ ४ ॥

अथैतस्यैकाहस्य स्तोमक्लृप्तिरभिधीयते, तत्र बहिष्पवमानस्य

---

१. ततदानीं नोदनसमय इति. ख. पु.

स्तोमं विधाय स्तौति—

**तस्य पञ्चदशं बहिष्पवमानं वज्रो वै पञ्चदशो वज्र-मेव तत्पुरस्तान्निदधाति तेन विजयते ॥ ५ ॥**

तस्य गोरेकाहस्य बहिष्पवमानं पञ्चदशं पञ्चदशस्तोमकं भवति। स च पञ्चदशो वै वज्रो वज्ररूप एव। इन्द्रेण सहोत्पत्तेरैन्द्रत्वात् वज्रस्य च तदायुधत्वात् पञ्चदशस्य वज्रत्वोपचारः। तत्तथा च वज्रमेव पुर-स्तात् पूर्वभावे यज्ञस्याऽऽदौ निदधाति स्थापयति। तेन च वज्रेण परान् विजयते(१) 'विपराभ्यां जे'रित्यात्मनेपदम् ॥ ५ ॥

अथैतस्य पञ्चदशस्य प्राथम्यं प्रकारान्तरेण स्तौति—

**पशुस्तोमो वा एष एवमिव वै पशुः समाहितः शिरः स्थवीयोऽणीयस्यो ग्रीवा पार्श्वाभ्यां वरीयाꣳस-क्थिभ्यां वरिष्ठः ॥ ६ ॥**

एष सोमयागो गोशब्दाभिधेयत्वात् पशुस्तोमः स्तोमसंस्थानेन पशुसदृशः। एवमिव वै एवंविध एव खलु पशुः समाहितः अवस्थि-तो भवति। एवंशब्देन परामृष्टमेव प्रदर्श्यते शिर इत्यादिना। पशोः शिरो मूर्द्धा स्थवीयः स्थूलतरम्। (२)'स्थूलदूरे'त्यादिना यणादि-परलोपः, पूर्वस्य च गुणः। शिरसः सकाशादणीयस्यः अणुतरा अल्पपरिमाणा ग्रीवा कण्ठो भवति। स च पशुः पार्श्वाभ्यां पार्श्वद्वयेन वरीयान् गुरुतरोऽतिशयेन विस्तीर्णः। तथा सक्थिभ्यां जघनाभ्यां वरिष्ठ उरुतरोऽतिविस्तृततमः। एवं ग्रीवास्थानीयेभ्य आज्येभ्यः शिर-स्स्थानीयं बहिष्पवमानमधिकेन स्तोमेन युज्यमानं सङ्गच्छत इत्यर्थः॥

अथोक्तग्रीवादिसाम्यप्रदर्शनायाऽऽह—

**यत् पञ्चदशं बहिष्पवमानं भवति त्रिवृन्त्याज्यानि सप्तदशं माध्यन्दिनꣳ सवनमेकविꣳशं तृतीयसवनꣳ रूपेणैवैनं तत् समर्द्धयति ॥ ७ ॥**

बहिष्पवमानं पञ्चदशस्तोमकं भवति। आज्यानि त्रिवृन्ति त्रिवृ-त्स्तोमकानि भवन्ति। माध्यन्दिनꣳ सवनं कृत्स्नं सप्तदशं माध्यन्दिन-पवमानादिषु पञ्चस्वपि स्तोत्रेषु सप्तदशः स्तोम इत्यर्थः। तृतीयसवनं

---

१. पा. सू. १. ३. १९. २. पा. सू. ६. ४. १५६.

कृत्स्नमेकविंशं एकविंशस्तोमकम् । उकथसंस्थो ह्ययम, तेन तृतीयसवने पञ्चसु स्तोत्रेषु एकविंशः स्तोमः कार्य्यः । एवमस्मिन्नहनि स्तोमक्लृप्तिर्भवतीति यत् तत्तेन पशुसम्बन्धिरूपेणैव एनं सोमयागं समर्द्धयति ॥ ७ ॥

एवं स्तोमक्लृप्तौ सत्यां एका स्तोत्रीया विराट्सम्पत्तेरतिरिच्यते सा च पशोः पुच्छस्थानीयेत्याह—

**एका सꣳस्तुतानां विराजमतिरिच्यते तस्मात् पशोः पश्चादतिरिक्तम् ॥ ८ ॥**

संस्तुतानां सहस्तुतानां स्तोत्रीयाणां परिगणनायां एका स्तोत्रीया विराजं अतिरिच्यते । यस्मादेवं तस्मादेव पशोर्लौकिकस्य पश्चादपरभागे अतिरिक्तं पुच्छं भवति । अत्र हि प्रातस्सवने एकपञ्चाशत्स्तोत्रीयाः । माध्यन्दिने सवने पञ्चाशीतिस्तोत्रीयाः । तृतीयसवने पञ्चोत्तरशतं स्तोत्रीयाः । एवं मिलित्वा एकचत्वारिंशदधिकाद्विशतस्तोत्रीयास्सम्पद्यन्ते । तथा च 'दशाक्षरा विराडि' तिश्रुतेर्दशसंख्यया विभागे सति एकस्याः स्तोत्रीयाया अतिरेको भवति । सा च पश्वात्मना संस्तूयमानस्य क्रतोः पुच्छस्थानीयेत्यर्थः ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षोडशाध्यायस्य द्वितीयः खण्डः ॥

---

## अथ तृतीयः खण्डः ॥

अथाऽन्यमेकाहं विधत्ते—

**अथैष आयुः ॥ १ ॥**

उच्यत इति शेषः । अथाऽनन्तरं एष वक्ष्यमाणः आयुराख्यः सोमयागः ॥ १ ॥

अथाऽस्याऽऽयुरिति संज्ञामर्थान्निर्वक्ति—

**आयुषा वै देवा असुरानायुवताऽऽयुते भ्रातृव्यं य एवं वेद ॥ २ ॥**

आयुषा वै आयुराख्येन एतेन यज्ञेन देवा असुरानायुवत आसम-

न्तात्प्राणादिभिर्वियोजयन्। यौतिरत्र पृथग्भावे वर्त्तते। (१)तस्मादायुर्वर्त्तनसाधनत्वात् अस्याऽऽयुरिति संज्ञेत्यर्थः। य एवं ब्राह्मणार्थं वेत्ति असौ भ्रातृव्यं शत्रुं आयुने आत्मनस्सकाशात् पृथक्करोति॥

अथाऽस्मिन्नधिकारिणमाह—

**स्वर्गकामो यजेत॥ ३॥**

आयुराख्यो यज्ञः स्वर्गसाधनमित्यर्थः॥ ३॥

अथाऽस्मिन्नहनि स्तोमक्लृप्तिमाह—

**ऊर्ध्वाः स्तोमा यन्त्यनपभ्रंशाय॥ ४॥**

गवाख्येऽतीत एकाहे यैव स्तोमक्लृप्तिरुक्ता सैवाऽस्याऽपि स्तोमक्लृप्तिः। इयांस्तु विशेषः—ऊर्ध्वाः ऊर्ध्वगामिनः त्रिवृत्पञ्चदशसप्तदशादिक्रमणोत्तरोत्तरमधिकसंख्यां प्राप्ताः स्तोमा यन्ति गच्छन्ति सवनत्रये सम्बध्यन्ते। पूर्वत्र हि प्रथमं पञ्चदशस्तोमो बहिष्पवमाने, आज्येषु त्रिवृदित्युक्तम्। यद्येवमेवाऽत्राऽपि क्रियेत, ततोऽधिकसंख्यातो न्यूनसंख्याया आक्रमणात् अपभ्रंशोऽधःपातस्स्यात्। आयुराख्य एकाहे बहिष्पवमाने त्रिवृत्स्तोमः आज्येषु पञ्चदशः शिष्टं गोष्टोमवदिति। एवमूर्ध्वा अभिमुखा एव स्तोमा भवेयुः। तच्चाऽनपभ्रंशाय अपभ्रंशाभावाय भवति॥ ४॥

अथाऽस्याऽधिकारिविशेषे संस्थान्तरमाह—

**एतेनैवाऽऽमयाविनं याजयेदतिरात्रः कार्यः॥५॥**

एतेनैवाऽऽयुराख्येनैकाहेन आमयाविनं दीर्घरोगिणं यजमानं याजयेत् तदानीमयमतिरात्रसंस्थः कार्यः। उक्थसंस्थो ह्यायुः॥ ५॥

आमयाविनः प्रयोगे अतिरात्रसंस्थाया आनुकूल्यमाह—

**स गायत्रीꣳ सम्पद्यते प्राणो गायत्र्यायुरेष आयुश्चैवाऽस्मिन् प्राणश्चोभे समीची दधाति॥ ६॥**

योऽतिरात्रसंस्थ आयुः स गायत्रीं सम्पद्यते। तथाहि—प्रातस्सवने बहिष्पवमाने नव स्तोत्रीयाः, चतुर्ष्वाज्येषु षष्टिः। मिलित्वा नवषष्टिस्तोत्रीया भवन्ति। गोष्टोमवन्माध्यन्दिने सवने स्तोत्रीयाः पञ्चाशीतिः। तृतीयसवने उक्थान्तस्य पञ्चोत्तरशतम्। ततःपरं रात्रिस्तोत्राणि द्वादश। तेषु 'पञ्चदश रात्रि'रिति पञ्चदश एव स्तोमः। सन्धिस्तोत्रस्य तु

१. तस्मादावनसाधनत्वादिति ख. पु.

त्रिवृत् । एवं त्रयोदशसु स्तोत्रेषु नवोत्तराशीतिशतं स्तोत्रीया भवन्ति । एवं सवनत्रयगतानि मिलित्वा अष्टाचत्वारिंशदधिकचतुश्शतसंख्याकाः स्तोत्रीया भवन्ति । ताश्च गायत्र्या चतुर्विंशतिसंख्यया विभज्यमाना अष्टादश गायत्र्यो भवन्ति, द्वौ च गायत्रौ पादौ भवतः । एवमतिरात्रस्य गायत्रीसम्पत्तिर्द्रष्टव्या । अस्त्वेवं किं तत इत्यत आह—प्राणो गायत्रीति । प्राणापानव्यानरूपेण त्र्यात्मकः प्राणः, गायत्री च त्रिपदा । तथा च साम्यात् प्राण एव गायत्रीत्युपचारः । तथा एष सोमयाग आयुस्संज्ञकः । एवं प्राणायुषोस्सद्भावात् अस्मिन्नामयाविनि यजमाने आयुर्जीवनञ्च प्राणञ्च उभे समीची सङ्गते दधाति स्थापयति ॥ ६ ॥

अथ विहितान् ज्योतिरादिकान् त्रीनेकाहान् संहृत्य स्तौति—

**स्वर्ग्या वा एते स्तोमा यत् ज्योतिर्भवति ज्योतिरेवाऽस्मै स पुरस्ताद्धरत्यथैष गौरेकया विराजमतिरिक्त आरम्भणमेव तदथैष आयुरेकस्या विराज ऊन आसाद एव सोऽथो ऊनातिरिक्तौ स्तोमौ मिथुनौ प्रजात्यै ॥७॥**

एते स्तोमाः स्तोमयुक्ता ज्योतिराद्या एकाहाः स्वर्ग्या वै स्वर्गार्हाः खलु स्वर्गहेतव इत्यर्थः । एवं सह स्तुत्वा अवयुत्य स्तूयते—यत् ज्योतिराख्य एकाहो भवति सोऽस्मै यजमानाय ज्योतिरेव पुरस्तात् पूर्वभागे ज्योतिः प्रकाशं हरति गमयति ज्योतिषेष्टवान् यत्र यत्र गच्छति तत्र तत्र सर्वप्रकाशो जायत इत्यर्थः । अथेति वाक्यान्तरोपक्रमे । एष पूर्वोक्तो गौर्गवाख्य एकाहः एकया स्तोत्रीयया विराजमतिरिक्तो अधिको भवति । तदाधिक्यं विराजं तस्याऽऽरम्भणं उपक्रम एव । अथैष आयुः एकस्या विराज ऊनः एकया स्तोत्रीयया विराट्सम्पत्तेर्न्यूनः स गोष्टोमोपक्रान्ताया विराज आसाद एव आसत्तिः प्राप्तिरेव । आयुष एकया स्तोत्रीयया विराजो न्यूनता प्रदर्श्यते । स्वभावत उक्थसंस्थत्वात् एतस्मिन् पञ्चदश स्तोत्राणि । तेषु च पूर्वोक्तसंख्यापरिगणनायां नवपञ्चाशदधिकशतद्वयसंख्याका स्तोत्रीया भवन्ति । तथा च दशसंख्यया विभागे पञ्चदश विराजः । ततः परा विराट् एकया स्तोत्रीयया न्यूना । गोष्टोमेऽधिकया स्तोत्रीयया सहाऽस्या ऊनाया विराजो योजने विराट्सम्पत्तिर्भवति । अथो अपि ऊनातिरिक्तौ उक्तप्रकारेण न्यूनाधिकौ आयुष्टोमगोष्टोमौ मिथुनौ मिथुनरूपौ स्त्रीपुंससदृशौ प्रजात्यै यजमानप्रकृष्टजन्मने भवतः ॥ ७ ॥

अथैतान् संहृत्य प्रकारान्तरेण स्तौति—

**एते वै त्रिकद्रुकाः स्तोमा एतैर्वा इन्द्रः सर्वां तृप्तिमतृप्यत् ॥ ८ ॥**

एते खलु त्रिकद्रुकाख्याः स्तोमाः। एतैः खलु इन्द्रः सर्वां सम्पूर्णां तृप्तिं अतृप्यत् अतिशयेन तृप्तोऽभवत्। 'त्रिकद्रुकेषु महिषो यवाशिरन्तुविशुष्मस्तृम्पदि'ति मन्त्रवर्णात् ॥ ८ ॥

अथैतद्वेदितुः फलमाह—

**तृप्यति प्रजया पशुभिर्य एवं वेद ॥ ९ ॥**

स्पष्टोऽर्थः। एषां त्रयाणां एकाहानां स्तोत्रीयाक्लृप्तिः कल्पकारेण 'ज्योतिष्टोमो गोर्वार्कजम्भस्य लोक' इत्यादिना 'उद्वंशीयस्य नामैधमिति रात्रिः समानमितरं सांवत्सरिकेणे'त्यन्तेन प्रतिपादिता। सा चाऽत्र विस्तरभयान्न लिख्यते ॥ ९ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षोडशाध्यायस्य तृतीयः खण्डः ॥

## अथ चतुर्थः खण्डः ॥

अथाऽभिजिद्विश्वजितावेकाहौ विधित्सुस्तत्संज्ञां निर्वक्तुमाख्यायिकामाह—

**प्रजापतिः प्रजा असृजत ता अस्मै श्रैष्ठ्याय नातिष्ठन्त स आसां दिशां प्रजानाञ्च रसं प्रवृह्य स्रजं कृत्वा प्रत्यमुञ्चत ततोऽस्मै प्रजाः श्रैष्ठ्यायाऽतिष्ठन्त ॥१॥**

पुरा प्रजापतिः प्रजास्सृष्टवान्। ताः सृष्टाः प्रजाः अस्मै अस्य प्रजापतेः श्रैष्ठ्याय नाऽतिष्ठन्त श्रेष्ठत्वं नाऽन्वमन्यन्त। स प्रजापतिः आसां प्रसिद्धानां प्राच्यादिदिशां सर्वासां प्रजानाञ्च रसं सारं प्रवृह्य उद्गृह्य स्रजं मालां कृत्वा प्रत्यमुञ्चत स्वगले ऽबध्नात्। ततोऽनन्तरं स्रजो महिम्ना प्रजापतेः श्रैष्ठ्यं प्रजाः अन्वमन्यन्त ॥ १ ॥

अथैतद्वेदितुः फलमाह—

**तिष्ठन्तेऽस्मै समानाः श्रैष्ठ्याय य एवं वेद ॥ २ ॥**

समानाः विद्याकर्म्मवयोभिः सदृशाः पुरुषाः अस्मै वेदित्रे श्रैष्ठ्याय श्रेष्ठत्वाय तिष्ठन्ते अवतिष्ठन्ते श्रेष्ठत्वमनुजानन्तीत्यर्थः। स्पष्टमन्यत् ॥ २ ॥

ततस्स प्रजापतिः किमकार्षीदिति तदाह—

**सोऽकामयतेन्द्रो मे प्रजायाᳬ श्रेष्ठः स्यादिति तामस्मै स्रजं प्रत्यमुञ्चत्ततो वा इन्द्राय प्रजाः श्रैष्ठ्यायातिष्ठन्त तच्छिल्पं पश्यन्त्यो यत्पितर्यपश्यन् ॥ ३ ॥**

प्रजायामिति जातावेकवचनम्। मे मदीयासु प्रजासु मध्ये इन्द्रः श्रेष्ठः प्रशस्यतमः अधिकः स्यादिति सः प्रजापतिः कामितवान्। कामयित्वा च तामात्मीयां स्रजं अस्येन्द्रस्य प्रत्यमुञ्चत गले बद्धवान्। ततोऽस्येन्द्रस्य श्रैष्ठ्यार्थं प्रजा अन्वजानन् यत्पितरि श्रैष्ठ्यकारणं शिल्पमपश्यन् तच्छिल्पमाश्चर्य्यं (१)सुरूपमिन्द्रे पश्यन्त्यः विलोकयन्त्यः(२) 'लक्षणहेत्वोः क्रियायाः' इति(३)दृशेर्हेतौ शतृप्रत्ययः ॥ ३ ॥

अथाऽन्यत्प्रासङ्गिकमाह—

**तस्माद्यः पुत्राणां दायं धनतमामिवोपैति तं मन्यन्तेऽयमेवेदं भविष्यतीति ॥ ४ ॥**

यस्मात्पितुः प्रजापतेस्सकाशात् स्रजो लाभेन श्रेष्ठोऽभूत् तस्माल्लोके पुत्राणां मध्ये यः पुत्रो धनतमामिव अतिशयितमेव धनदायमुपैति पितुस्सकाशात् दायत्वेनोपगच्छति तं पुत्रं मन्यन्ते लौकिका जानन्ति—अयमेव पुत्र इदं सर्वं पितृसम्बन्धि ग्रामादिकं भविष्यति सर्वस्याऽधिपतिर्भविष्यतीति ॥ ४ ॥

अस्त्वेवं प्रकृते किमायातमित्यत आह—

**ततो वा इदमिन्द्रो विश्वमजयद्यद्विश्वमजयत्तस्माद्विश्वजित् ॥ ५ ॥**

ततः श्रेष्ठ्यप्राप्त्यनन्तरमिदं विश्वं (४)जगदजयत् जितवान् आत्मत्वेन कृतवान्। यद्यस्मात्कारणात् स्रग्रूपेणाऽवस्थितेनाऽनेन यज्ञेन विश्वमजयत् तस्माद्विश्वजिदिति(५)यज्ञस्याऽऽख्या ॥ ५ ॥

---

१. प्राग्रूपमस्मिन्निन्द्र इति ख. पु. २. पा. सू. ३. २. १२६.

३. पश्यतेरिति ख. पु. ४. सर्वं जगदिति ख. पु.

५. अयं यज्ञ आख्यायत इति ख. पु.

अथाऽभिजितस्संज्ञां निर्वक्तुमाह—

**सोऽकामयत यन्मेऽनभिजितं तदभिजयेयमिति स एतमभिजितमपश्यत्तेनाऽनभिजितमभ्यजयत् ॥ ६ ॥**

स इन्द्रोऽकामयत यन्मे ममाऽनभिजितं जयेनाऽप्राप्तमस्ति तदिदानीमभिजयेयं जयेन प्राप्नुयामिति । स एतमभिजिदाख्यं सोमयागमपश्यत् । तेनाऽनभिजितं सर्वमभ्यजयत् । तस्मादभिजयसाधनत्वादस्याऽभिजित्संज्ञा ॥ ६ ॥

अथैतावभिजिद्विश्वजितौ विधत्ते—

**यदभिजिद्भवत्यनभिजितस्याऽभिजित्यै ॥ ७ ॥**

एतद्विश्वजितोऽप्युपलक्षणम् । अयमर्थः—अभिजिदाख्य एकाहो भवति । स चाऽनभिजितस्य वस्तुनोऽभिजित्यै आभिजयाय भवति । विश्वजिदाख्य एकाहो भवति स च विश्वस्य जयाय भवति । (१)'विश्वजिद्भवति विश्वस्य जित्या' इति हि ब्राह्मणान्तरम् ॥ ७ ॥

अथैतौ स्तौति—

**तौ वा एताविन्द्रस्तोमौ वीर्यवन्तौ शिल्पं वा एतौ नाम स्तोमावास्ताम् ॥ ८ ॥**

तावेतावभिजिद्विश्वजिताविन्द्रस्तोमौ उक्तप्रकारेणेन्द्रसम्बन्धित्वादिन्द्रस्तोमाख्यौ इन्द्रसम्बन्धिस्तोमवन्तावित्यर्थः । ततो वीर्यवन्तौ वीर्ययुक्तौ एतौ च पुरा उक्तं शिल्पं वै शिल्पं नाम शिल्पाख्यौ विचित्रसंस्थानौ स्तोमौ स्तोमवन्तावास्तां अभूताम् । 'यच्छिल्पं पश्यन्तो यत्पितर्यपश्यन्नि'ति विश्वजितः शिल्परूपत्वमुक्तं तत्सम्बन्धादभिजितोऽपि शिल्पत्वोपचारः ॥ ८ ॥

अथैतद्वेदनफलमाह—

**पश्यते गृहे शिल्पं य एवं वेद ॥ ९ ॥**

य एवं ब्राह्मणार्थं जानाति सोऽयं गृहे शिल्पं नानारूपं वस्तुजातं पश्यति ॥ ९ ॥

अथैतयोः प्रयोगप्रकारमाह—

**न वै यमौ नाम स्तोमौ स्तो यो यमाभ्यां यजेतैता-**

---

१. तै. सं. ७. ५. १. ६.

**भ्यां यजेत समृध्यै ॥ १० ॥**

न वै खलु यमौ नाम स्तोमौ यमाख्यस्तोमवन्तौ यज्ञौ भवतः । यो यजमानो यमाभ्यां यजेत, स एताभ्यामभिजिद्विश्वजिद्भ्यामकाहाभ्यां यजेत समृध्यै समृध्यर्थम् । एतदुक्तं भवति—यमाभ्यां यमलाभ्यां संहताभ्यामभिजिद्विश्वजिद्भ्यां यजेत, तौ दर्शपूर्णमासवत् संहतावेव फलसाधनमिति । तयोश्चाऽनुष्ठानक्रमः सूत्रकृतोक्तः(१) 'विश्वजिदभिजिद्भ्यां यमाभ्यां यजमानः पूर्वापराभ्यां यजेतेति धानञ्जय्यः, युगपदिति शाण्डिल्यः' 'अभिजितो दक्षिणा देवयजनं स्याद्विश्वजित उत्तरम्' 'तत्प्रति पत्नीशाला स्यात्' 'नानर्त्विज' इत्यादिना । अयमर्थः—दर्शपूर्णमासवदेव पौर्वापर्येणाऽनयोरनुष्ठानमिति धानञ्जय्यमतम् । एकस्मिन् काले उभयोस्सहाऽनुष्ठानमिति शाण्डिल्यमतम् । दक्षिणत उत्तरतश्च देवयजनद्वयं कृत्वा दक्षिणेऽभिजिद उत्तरे विश्वजित् । विश्वजितः पश्चात्पत्नीशाला, नाभिजितः । प्रत्येकं षोडशर्त्विज इति । एवं संहतयोरेव फलसाधनत्वमिति यमाभ्यामिति शब्देनाऽवगम्यते । पक्षान्तरमपि सूत्रकृतोक्तम्—(२) 'कामं त्वयमाभ्यां यजेते'ति । नाऽवश्य संहतयोरेव फलसाधनत्वमपि तु पृथक्साधनत्वमपि विद्यते । तस्मादन्यतरपरिहारेणाऽन्यतरप्रयोगोऽपि कर्त्तुं शक्यत इत्यर्थः ॥ १० ॥

उभयोः स्तोमानामावृत्तिं विधत्ते—

**पुनरभ्यावर्त्तंᳪ स्तोमा भवन्ति पुनरभ्यावर्त्तंᳪ ह्येताभ्यामिन्द्रोऽजितमजयत् ॥ ११ ॥**

पुनरभ्यावर्त्तं पुनः पुनरावृत्तं अनयोरभिजिद्विश्वजितो स्तोमा भवन्ति । हि यस्मात् पुनरभ्यावर्त्तं आवृत्याऽऽभ्यावृत्य एताभ्यामभिजिद्विश्वजिद्भ्यां अजितं जेतव्यं इन्द्रा अजयत जितवान् तस्मादित्यर्थः ॥

अथाऽभिजिति स्तोमानां तामेवाऽऽभ्यावृत्तिं विवृणोति—

**त्रीᳪस्त्रिवृदभिजितः प्रणयति त्रीन् पञ्चदशः त्रीन् सप्तदशः त्रीनेकविंᳪशस्ते द्वादश सम्पद्यन्ते द्वादश मासास्संवत्सरः संवत्सरः प्रजापतिः प्रजापतिमेवाऽऽप्नोति ॥ १२ ॥**

---

१. लाट्या. श्रौ. ८. १. १९–२२. २. लाट्या. श्रौ. ८. १. २७.

त्रिवृत्स्तोमोऽभिजितः त्रीन् प्रणयति बहिष्पवमानादीनि त्रीणि स्तोत्राणि निष्पादयति। एवं पञ्चदशादिष्वपि योजना। त्रिवृदादिनैकैकेन स्तोमेन बहिष्पवमानादीनां स्तोत्राणां त्रयं त्रयं अभिजिति निर्वर्त्यमित्यर्थः। तथा च कल्पकारेणाऽभिजितमधिकृत्योक्तम्—'सर्वस्तोमस्य सतस्त्र्यावृतस्तोमाश्चतुष्प्रणवा' इति। एवं द्वादश स्तोत्राणि सम्पद्यन्ते। तथा च द्वादशमासात्मकः संवत्सरः। संवत्सरः प्रजापत्यात्मकः। तथा च तमेव प्रजापतिं द्वादशभिः स्तोमैः प्राप्नोति ॥ १२ ॥

अथ विश्वजिति स्तोमानामभ्यावृत्तिं स्पष्टयति—

**चतुरस्त्रिवृद्विश्वजितः प्रणयति चतुरः पञ्चदशांश्चतुरः सप्तदशांस्ते द्वादश सम्पद्यन्ते द्वादश मासाः संवत्सरः संवत्सरः प्रजापतिः प्रजापतिमेवाऽऽप्नोति ॥ १३ ॥**

विश्वजितो बहिष्पवमानादीनि चतुरश्चत्वारि स्तोत्राणि त्रिवृत् प्रणयति निर्वर्त्तयति। तथा पञ्चदशस्तदनन्तरभावीनि चत्वारि स्तोत्राणि। सप्तदशोऽप्येवम्। तथा च द्वादश स्तोत्राणि सम्पद्यन्ते। अन्यत् पूर्ववत्। इमामभ्यावृत्तिं विश्वजितमधिकृत्य कल्पकृदुक्तवान्—'सर्वस्तोमस्य सतश्चतुरावृत्तस्तोमास्त्रिप्रणवा' इति ॥ १३ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षोडशाध्यायस्य चतुर्थः खण्डः ॥

---

## अथ पञ्चमः खण्डः ॥

अथ विश्वजिति बहिष्पवमानस्य नव स्तोत्रीयाः क्रमेण विदधाति। तत्र प्रथमामाह—

**(१) "उप त्वा जामयो गिर" इत्युपवती प्रतिपद्भवति स्तोमस्य रूपम् ॥ १ ॥**

उपवती उपशब्दयुक्ता। प्रतिपद्यते अनयेति प्रतिपद्बहिष्पवमानस्य प्रथमा भवति। तत्रोपेति स्तोमस्य अत्र प्रयोज्यस्य त्रिवृदाख्यस्य

---

१. उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः। वायोरनीके अस्थिरन् ॥ १ ॥
सा. सं. उ. ७. २. १४.

रूपम्, 'उपाऽस्मै गायता नर' इति प्रकृतौ त्रिवृत्स्तोमके बहिष्पवमाने दर्शनात् ॥ १ ॥

'वायोरनीके अस्थिर'न्नित्यस्यास्तृतीयः पादः; तद्योगेनैतां प्रशंसितुमाह—

**प्राणैर्वा एष व्यृध्यत इत्याहुर्यः सर्वं ददाति सर्वान् स्तोमान् सर्वाणि पृष्ठान्युपैतीति यद्वायव्या भवति प्राणानाꣳसमृद्ध्यै ॥ २ ॥**

प्राणैरेव एष यजमानो व्यृध्यते वियुज्यत इत्याहुर्ब्रह्मवादिनः । योऽयं यजमानः सर्वं धनं ददाति सर्वांश्च त्रिवृदादीन् स्तोमान्, सर्वाणि च रथन्तरबृहद्वैरूपवैराजादीनि षाडहिकानि पृष्ठसामान्युपैति उपगच्छति, विश्वजित्सर्वपृष्ठः सर्वस्तोमः सर्वस्वदक्षिणः एवं विशिष्टमेवं कुर्वन् प्राणैरेव वियुज्यत इति । तथा च यद्वायव्या भवति 'वायोरनीक' इति वायुशब्दयोगात् वायव्या वायुदेवत्या 'उप त्वा जामय' इत्येषा भवतीति यत् तत्प्राणानां समृद्ध्यै पुनस्समर्थनाय भवति, 'यः प्राणस्स वायुरि'ति वायुप्राणयोस्तादात्म्यश्रवणात् । एवं प्रथमतृचस्य प्रथमा विहिता ॥ २ ॥

अथोत्तरे विधत्ते—

**सरस्वतश्च सरस्वत्याश्चोत्तरे भवतः ॥ ३ ॥**

(१)'जनीयन्तो न्वग्रव' इत्येषा सरस्वतो देवस्य सम्बन्धिनी । (२)'उत नः प्रिये'ति सरस्वत्या । एते ऋचावुत्तरे भवतः ॥ ३ ॥

अथैते स्तौति—

**मिथुनं वा एतद्यत् सरस्वाꣳश्च सरस्वती च मिथुनमेवाऽस्य यज्ञमुखे दधाति प्रजननाय ॥ ४ ॥**

सरस्वांश्च सरस्वती चेति यदेतदृग्द्वयप्रतिपाद्ये देवते, एतन्मिथुनं वै स्त्रीपुंसात्मकत्वात् । एवञ्चाऽस्य यजमानस्य प्रजननाय प्रजात्यर्थं मिथुनमेव यज्ञमुखे यज्ञप्रारम्भे दधाति स्थापयति ॥४॥

---

१. जनीयन्तो न्वग्रवः पुत्रीयन्तस्सुदानवः । सरस्वन्तं हवामहे ॥ १ ॥
सा. सं. उ. ६. ३. ८.

२. उत नः प्रिया प्रियासु सप्तस्वसा सुजुष्टा । सरस्वती स्तोम्याऽभूत् ॥ १ ॥
सा. सं. उ. ६. ३. ९.

अथाऽन्यां स्तोत्रीयां विधत्ते--

**सावित्री चतुर्थी भवति ॥ ५ ॥**

(१)'तत्सवितुर्वरेण्यमि'त्येषा सावित्री सवितृदेवताका चतुर्थी ऋग्भवति ॥ ५ ॥

अथैतां स्तौति--

**दुष्करं वा एष करोति यः सर्वं ददाति यत् सावित्री भवति सवितृप्रसूतं मे कर्माऽसदिति सवितृप्रसूतमेवाऽस्य कर्म भवति ॥ ६ ॥**

यो यजमानः सर्वं धनं ददाति एष दुष्करं कर्त्तुमशक्यमेव करोति । तथा च सर्वस्वदक्षिणे अस्मिन् यज्ञे यदेषा सावित्री भवति सवितृप्रसूतं सवित्रा प्रसवित्रा देवेन प्रसूतमनुज्ञातं मम मदीयं कर्म सर्वस्वदानलक्षणं असत् अस्त्वित्यभिप्रायेण सवितृदेवत्या प्रयुज्यते, तस्य यजमानस्य कर्म सवितृप्रसूतमेव भवति ॥ ६ ॥

अथाऽन्यां स्तोत्रीयां विधत्ते—

**ब्राह्मणस्पत्या पञ्चमी भवति ॥ ७ ॥**

(२)'सोमानां स्वरणमि'ति एषा ब्रह्मणस्पतिदेवताका पञ्चमी ऋग् भवतीति ॥ ७ ॥

अथ स्तौति—

**ब्रह्म वै ब्रह्मणस्पतिर्ब्रह्मैवाऽस्य यज्ञमुखे दधाति ॥८॥**

ब्रह्म वेदः । तस्य पतिरीशिता ब्रह्मणस्पतिः । स च ब्रह्म वै परं ब्रह्म । तथा चाऽस्य यजमानस्य यज्ञमुखे तदेव ब्रह्म दधाति निदधाति ॥ ८ ॥

अथाऽन्यां स्तोत्रीयां विधत्ते—

**आग्निपावमानी षष्ठी भवति ॥ ९ ॥**

---

१. तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ १ ॥
सा. सं. उ. ६. ३ १०. १.

२. सोमानां स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजः ॥ १ ॥
सा. सं. उ. ६. ३. १०. २. पू. २. ५. ५.

अग्निः पवमानो देवता यस्यास्सा आग्निपावमानी (१)'अग्न आयूंषि पवस' इत्येषा षष्ठी भवति ॥ ९ ॥

अथ स्तौति—

**अग्निरेवैनं निष्टपति पवमानः पुनाति पूतमेवैनं यज्ञियं पृष्ठान्युपनयति ॥ १० ॥**

अस्यां हि अग्निः पवमानस्सोम इति देवताद्वयं प्रतिपाद्यते । तयोर्मध्ये अग्निरेव एनं यजमानं निष्टपति निश्शेषेण तप्तकलुषं करोति । पवमानस्सोमः पुनाति पूतं शुद्धं करोति । एवं हि बहिष्पवमानेन पूतमेवैनं यजमानं यज्ञियं यज्ञार्हं पृष्ठानि रथन्तरादीनि करिष्यमाणानि उपनयति उपगमयति ॥ १० ॥

अथोत्तमं तृचं विधित्सुराह—

**यन्ति वा एते पथ इत्याहुर्ये सम्भार्याः कुर्वते ॥ ११ ॥**

य उद्गातारः सम्भार्याः सम्भरणीयाः प्रदेशान्तरेष्वाम्नातामेकैकामृचमुपादाय उक्तक्रमेण सम्भृताः सम्पन्नाः कुर्वते प्रयुञ्जते । एते पथो न्याय्यादनुष्ठानमार्गात् यन्ति अपगच्छन्तीति ब्रह्मवादिन आहुः ॥

कस्तर्हि तत्परिहारः इति तदाह—

**पावमान उत्तमस्तृचो भवति तेन पथो नयन्ति ॥ १२ ॥**

(२)'पवमानस्य ते वयमि'ति पवमानस्सोमदेवताक इति पवमानसोमदेवताकबहिष्पवमानस्याऽन्त्यस्तृचो भवति । तेन यथाम्नाततृचकरणेन पथस्सकाशान्न गच्छन्ति । आम्नातानां तृचानां तथैव प्रयोगो ह्यनुष्ठानमार्गः ॥ १२ ॥

एवं विश्वजितो बहिष्पवमानस्य नव स्तोत्रीयाः सस्तुतिका दर्शिताः । अथैताभिरेव करिष्यमाणानां रथन्तरादीनां षण्णां पृष्ठानां योगं

---

१. अग्न आयूंषि पवस आसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥ १ ॥
सा. सं. उ. ६. ३. १०. ३.

२. पवमानस्य ते वयं पवित्रमभ्युन्दतः । सखित्वमा वृणीमहे ॥ १ ॥
ये ते पवित्रमूर्मयोऽभिक्षरन्ति धारया । तेभिर्नस्सोम मृडय ॥ २ ॥
स नः पुनान आ भर रयिं वीरवतीमिषम् । ईशानस्सोम विश्वतः ॥ ३ ॥
सा. सं. उ. २. १. ५.

प्रतिपादयति—

**स तु वै पृष्ठैः स्तुवीतेत्याहुर्य एतानि बहिष्पवमाने युञ्ज्यादिति ॥ १३ ॥**

स तु वै स एव पृष्ठैः रथन्तरादिभिः स्तुवीत स्तौति, य एतानि पृष्ठानि बहिष्पवमाने युञ्ज्यात् योजयेदिति ब्रह्मवादिन आहुः। तस्मात् षट्पृष्ठानां बहिष्पवमाने स्तोत्रीयाभिर्योजनं कार्य्यम् । यथा दशरात्रस्य प्रथमेऽहनि(१) 'अस्य प्रत्नामनुद्युतमि'त्यादिभिर्नवभिर्नवानामह्नां योगस्तथाऽत्राऽपि पृष्ठानां योजनं कार्य्यमित्यर्थः ॥ १३ ॥

तत्र कया स्तोत्रियया किं योज्यत इत्याशङ्क्य रथन्तरयोगं तावदाह—

**उपवती प्रतिपद्भवत्युप वै रथन्तरꣳ रथन्तरमेवास्मै तया युनक्ति ॥ १४ ॥**

'उप त्वा जामयो गिर' इत्येषा प्रथमा भवति । उपशब्दसम्बद्धं हि रथन्तरपृष्ठम्। ज्योतिष्टोमे 'उपास्मै गायता नर' इति उपशब्दशस्य प्रयुक्तत्वात् । एवञ्चैतयोपवत्या अस्मै यजमानाय रथन्तरं साम युनक्ति ॥

अथ बृहतो योगं दर्शयति—

**सरस्वती द्वितीया भवति स्वर्गो लोकः सरस्वान् स्वर्गो लोको बृहद् बृहदेवाऽस्मै तया युनक्ति ॥ १५ ॥**

सरस्वतः सरस्वदाख्यस्य देवस्य सम्बन्धिनी द्वितीया 'जनीयन्तो न्वग्रव' इत्येषा भवति । स्वर्गाख्यो लोक एव सरस्वान्(२) 'अमावास्या वै सरस्वती पूर्णमासस्सरस्वानि'ति ब्राह्मणान्तरात् सरस्वतः पूर्णमासत्वात् तस्य च स्वर्गसाधनत्वात् तदात्मकत्वव्यपदेशः । बृहत्साम च स्वर्गलोकात्मकं 'इयं वै रथन्तरमसौ वै लोको बृहदि'ति श्रुतेः। एवं परम्परया सरस्वतो बृहत्सम्बन्धिन्या तया सरस्वद्देवताकया बृहदेवाऽस्मै युनक्ति ॥ १५ ॥

अथ वैरूपस्य योगमाह—

**सरस्वत्यास्तृतीया भवति वाग्वै सरस्वती वाग्वैरूपं वैरूपमेवाऽस्मै तया युनक्ति ॥ १६ ॥**

---

१. इमास्स्तोत्रीयाः १८५ पृष्ठे द्रष्टव्याः ।

२. तै, सं. ३ ५. १. ४.

सरस्वत्याः सम्बन्धिनी 'उत नः प्रिया प्रियास्वि'त्येषा तृतीया भवति । वाक् शब्दात्मिका हि सरस्वती । वैरूपञ्च वाक्संस्तुतम् । तथा च तया तृतीयया वैरूपमेवाऽस्मै युनक्ति ॥ १६ ॥

अथ वैराजस्य योगमाह—

**सावित्री चतुर्थी भवति प्रजापतिर्वै सविता प्रजापतिर्वैराजं वैराजमेवाऽस्मै तया युनक्ति ॥ १७ ॥**

सावित्री सवितृदेवताका 'तत्सवितुर्वरेण्यमि'त्येषा चतुर्थी भवति साक्षात् प्रजापतिरेव सविता सर्वस्य प्रेरकत्वात् । वैराजञ्च साम प्रजापतिसंस्तुतम् । तथा चैतया सावित्र्या वैराजमेवाऽस्मै युनक्ति ॥

अथ शाकरस्य साम्नो योगमाह—

**ब्राह्मणस्पत्या पञ्चमी भवति ब्रह्म वै ब्रह्मणस्पतिर्ब्रह्म शक्वर्यः शक्करीरेवाऽस्मै तया युनक्ति ॥ १८ ॥**

ब्राह्मणस्पत्या ब्रह्मणस्पतिदेवताका 'सोमानां स्वरणमि'त्येषा पञ्चमी भवति । परब्रह्मैव ब्रह्मणस्पतिरित्युच्यते, (१)'विदा मघवन्नि'त्याद्याः शक्वर्यश्च परब्रह्मणः प्रतिपादकत्वात् ब्रह्मात्मिकाः । तया चैतया ब्राह्मणस्पत्यया शक्करीरेव शक्करीषु ऋक्षु गीयमानं शाक्करं सामैवाऽस्मै युनक्ति ॥ १८ ॥

अथ रैवतस्य साम्नो योगमाह—

**आग्निपावमानी षष्ठी भवति गायत्री वै रेवती गायत्रच्छन्दा अग्नी रेवतीरेवाऽस्मै तया युनक्ति ॥ १९ ॥**

आग्निपावमानी 'अग्न आयूंषि पवस' इत्येषा षष्ठी भवति गायत्री गायत्रच्छन्दस्का खलु रेवती रैवतस्य साम्नो योनिभूता (२)'रेवतीर्न' इत्येषा । अनया प्रतिपाद्यमानोऽग्निश्च गायत्रच्छन्दाः गायत्रं छन्दो यस्य स तथोक्तः । एवञ्चैतया आग्नेय्या गायत्र्या रेवतीरेव रेवतीषु गीयमानं रैवतं सामाऽस्मै युनक्ति ॥ १९ ॥

नन्वेवं रथन्तरादीनि षट्सामानि योजितानि । कथं तेषां चतुर्षु

---

१. इमा ऋचः १८ पृष्ठे द्रष्टव्याः ।

२. ( सा. सं. पू. २. २. १. ९. ) ऋगियं ५० पृष्ठे टिप्पण्यामवलोकनीया ।

पृष्ठस्तोत्रेष्वन्तर्भाव इत्यत आह—

**न चत्वारि षड्भ्यो विभवन्ति यदनिरुक्तानि तेन विभवन्ति ॥ २० ॥**

इत्थं चत्वारि पृष्ठस्तोत्राणि न षड्भ्यः सामभ्यो विभवन्ति न व्याप्नुवन्ति । यद्यस्मादेतानि षट्सामान्यनिरुक्तानि पृष्ठस्तोत्रेष्वेव कार्य्याणीति न निश्शेषेणोक्तानि । तेन कारणेन पृष्ठस्तोत्रेष्वन्यत्र च प्रयोक्तुं शक्यत्वात् विभवन्ति व्याप्तुं शक्नुवन्ति ॥ २० ॥

आज्यस्तोत्रेषु कञ्चिद्दोषमाशङ्क्य समाधत्ते—

**सर्वाणि स्वाराण्याज्यानि तज्जामि नानादेवत्यैः स्तुवन्त्यजामितायै ॥ २१ ॥**

सर्वाणि चत्वार्य्यप्याज्यस्तोत्राणि स्वाराणि स्वारनिधनानि । तथा च सर्वेषां समानावसानत्वात् जामितादोषस्स्यात् । अतस्तत्परिहाराय नानादेवत्यैः अग्निर्मित्रावरुणाविन्द्राग्नी चेति क्रमेण तद्देवताकैराज्यैः स्तुवन्ति ॥ २१ ॥

कानि पुनस्तथाविधानीत्यत आह—

**(१)"सुषमिद्धो न आवह"इत्याप्रिय आज्यानि भवन्ति ॥ २२ ॥**

आप्रिय इति प्रयाजानुयाजा इत्युच्यन्ते । 'सुषमिद्धो न आवह' इत्याद्यास्तिस्र आप्रियस्तोत्रीया आग्नेयं प्रथममाज्यस्तोत्रं भवति । इतराणि च त्रीणि कल्पकारेणोक्तानि (२)'ता नः शक्तं पार्थिवस्य' (३)'यु-

---

१. ( सा. सं. उ. ६. १. १. ) अयं तृचः १८७ पृष्ठे टिप्पण्यां द्रष्टव्यः ।

२. ता नश्शक्तं पार्थिवस्य महो रायो दिव्यस्य । महि वां क्षत्रं देवेषु ॥ १ ॥
ऋतमृतेन सप्पन्तेषिरं दक्षमाशाते । अद्रुहा देवौ वर्धेते ॥ २ ॥
वृष्टिद्यावा रीत्यापेषस्पती दानुमत्याः । बृहन्तं गर्तमाशाते ॥ ३ ॥
सा. सं. उ. ६. ३. ११.

३. युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः । रोचन्ते रोचना दिवि ॥ १ ॥
युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे । शोणा धृष्णू नृवाहसा ॥ २ ॥
केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ॥ ३ ॥
सा. सं. उ. ६. ३. १२.

अग्नि ब्रदुध्नमरुषम्' (१)'तमीडिष्व यो अर्चिषे'ति ॥ २२ ॥

अथाऽऽप्रियाणामाज्यत्वं सर्वस्वदानेन रिक्तीकृतस्य यजमानस्य पुनः पोषणार्थमिति स्तौति—

**प्रजापतिः प्रजा असृजत स दुग्धो रिरिचानोऽमन्यत स एतान्याप्रिय आज्यान्यपश्यत्तैरात्मानमाप्रीणाद्दुग्ध इव वा एष रिरिचानो यः सर्वं ददाति यदाप्रिय आज्यानि भवन्त्यात्मानमेवैतैराप्रीणाति ॥ २३ ॥**

एतत्सर्वं (२)पूर्वस्मिन्नेवाऽध्याये व्याख्यातम् ॥ २३ ॥

अथ रथन्तरादीनां षण्णां पृष्ठानां स्थानविशेषं व्यवस्थापयितुमाह—

**एतर्हि तु वै पृष्ठानि यथायतनं कल्पन्त इत्याहुर्यद्रथन्तरं प्रथमं बृहदुत्तमं मध्य इतराणीति ॥ २४ ॥**

माध्यन्दिनपवमाने रथन्तरं साम बृहदग्निष्टोमसाम । इतराणि चत्वारि पृष्ठस्तोत्रेषु प्रयोज्यानि । तथा च कल्पः-'अस्य प्रत्नामनुद्युतमिति गायत्रमामहीयवञ्च, परितो षिञ्चता सुतमिति कालेयमेकस्यां रथन्तरं तिसृषु, दैर्घश्रवसं तिसृषु, यौधाजयमेकस्यां, अयं सोम इति पार्थमन्त्यं, वैराजञ्च महानाम्न्यश्च वैरूपञ्च रेवत्यश्चे'ति । तथा 'त्वमग्ने यज्ञानां होतेति बृहदग्निष्टोमसामे'ति । अयमर्थः-माध्यन्दिनपवमाने 'परीतो षिञ्चता सुतमि'ति तिसृषु रथन्तरं कार्यम्, वैराजञ्च होतुः पृष्ठे, शाक्करं मैत्रावरुणपृष्ठे, वैरूपञ्च ब्रह्मपृष्ठे, रैवतमच्छावाकपृष्ठे, 'त्वमग्ने यज्ञानामि'ति तिसृषु बृहदग्निष्टोमसामत्वेन कार्यमिति ॥ २४ ॥

अथैवं क्रियमाणे किञ्चिद्दूषणमाशङ्क्य निरस्यति—

**जामि वा एतद्यज्ञे क्रियत इत्याहुर्यत्सर्वाणि निधनवन्ति सह क्रियन्त इति यदन्तरा सोमा यन्त्यन्तरोक्थानि शस्यन्तेऽन्तरा वषट्कुर्वन्ति तेनाऽजामि ॥ २५ ॥**

अलसमेवैतद्यज्ञे क्रियते यत्सर्वाणि वैराजादीनि सामानि निधनवन्ति निधनयुक्तानि सह क्रियन्ते नैरन्तर्येण प्रयुज्यन्त इति एतज्जामि

---

१. ( सा. सं. उ. ४. २. ६. ) तृचोऽयं ८२ पृष्ठे टिप्पण्यां गतः ।

२. तां. ब्रा. १५. ८. २.

क्रियत इति ब्रह्मवादिन आहुः । अयं दोषः परिह्रियते—'यदन्तरे'त्यादिना । यद्यस्मादन्तरा अन्तराले तेषां मध्ये सोमाः ग्रहचमसपूरितास्सन्तो होमार्थं यन्ति उत्तरवेदिं गच्छन्तीति, तथाऽन्तरा मध्ये उक्थानि शस्त्राणि च शस्यन्ते बह्वृचैः । तथाऽन्तराले होत्रादयस्सप्त वषट्कुर्वन्ति वौषडन्तया याज्यया यजन्ति । तेन कारणेन द्वयोर्द्वयोस्स्तोमयोर्मध्ये उक्तस्य बहुविधस्याऽनुष्ठेयस्य सद्भावेन व्यवधानात् जामिदोषो न भवतीत्यर्थः ॥ २५ ॥

अथ प्रकारान्तरेणाऽजामित्वमुपपादयति—

**व्यत्यासमिडाश्च निधनानि चाऽऽहुस्तेनाऽजामि॥२६॥**

व्यत्यासं व्यत्ययस्य परिहृत्य इडाश्चाऽन्यानि च निधनान्याहुः । तेन अजामि निधनवत्त्वे समानेऽपि तेषां निधनानां व्यत्ययस्य प्रयोगे परस्परं वैलक्षण्याज्जामिदोषो न भवतीत्यर्थः । अत एव पूर्वमुक्तम्—निधनं वैराजं प्रथमं कृत्वा इडानिधनं शाक्वरमनन्तरं कार्यमित्यादि ॥ २६ ॥

अथ रैवतसाम्नि कञ्चिद्दोषमाशङ्क्य समाधत्ते—

**च्यवन्ते वा एतद्रेवत्यः स्वादायतनादित्याहुर्यत् त्रयस्त्रिंशात् स्तोमाद्यन्तीति यद्गायत्र्यो भवन्ति तेनाऽऽयतनान्न च्यवन्ते या हि का च गायत्री सा रेवती॥२७॥**

एतत् एतर्हि रेवत्यो वै रैवतं साम स्वादात्मीयादायतनात् च्यवन्ते प्रच्युता भवन्तीति ब्रह्मवादिन आहुः । यद्यस्मात् त्रयस्त्रिंशात् स्तोमाद्यन्ति गच्छन्तीति । षष्ठेऽहनि तस्यैव स्तोमस्य तदायतनत्वेन क्लृप्तत्वात् । तत्राऽयं परिहारः-यद्यस्मात् अस्य रैवतसाम्नो गायत्र्यो गायत्रीच्छन्दस्का ऋच आधारभूता भवन्ति, तेन कारणेन स्वादायतनान्न च्यवन्ते । कुत एतत् ? 'रेवतीर्नः सधमाद' इति गायत्री रैवतसाम्नो योनिः । तत्सामान्यात् अन्याऽपि या काऽपि गायत्री सैव रेवती । हि यस्मादेवं तस्मात् स्वयोनिसदृशीषु गायत्रीषु ऋक्षु गीयमानं रैवतं स्वादायतनान्न च्यवत इति ॥ २७ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षोडशाध्यायस्य पञ्चमः खण्डः ॥

## अथ षष्ठः खण्डः ॥

अथ सर्वस्वदाननिमित्तं यजमानस्य व्रतं दर्शयति । तदङ्गत्वेनाऽऽदौ वत्सत्वचः परिधानं विधत्ते—

**पशुभिर्वा एष व्यृध्यत इत्याहुर्यः सर्वं ददाति त- च्छर्वीं परिधत्ते पशुभिरेव समृध्यते ॥ १ ॥**

यो यजमानः सर्वं धनं ददाति एष पशुभिः खलु व्यृध्यते विहीयते सर्वेषां गवादीनां पशूनां दत्तत्वात् इति ब्रह्मवादिन आहुः । तस्मात् छर्वीं गोर्वत्सस्य त्वचं परिधत्ते । तथा च पशुत्वक्परिधानात् पुनः पशुभिरेव समृध्यते समृद्धो भवति ॥ १ ॥

(१)तत्र परिधानं विधाय स्तूयते—

**रोहिणी छवी भवत्येतद्वै पशूनां भूयिष्ठꣳ रूपं य- द्रोहितꣳसाक्षादेवैनानवरुन्धे ॥ २ ॥**

(२) सा परिधानीया छवी त्वक् रोहिणी लोहितवर्णा भवति । एत- त्खलु पशूनां भूयिष्ठं बहुतरं यद्रोहितं लोहितवर्णः । तथा च साक्षा- त्प्रत्यक्षमेवैनान् पशून् अवरुन्धे लभते ॥ २ ॥

एवं कृतपरिधानस्य यजमानस्य त्रिरात्रमरण्यवासं विधत्ते—

**अरण्ये तिस्रो वसत्यारण्यं ताभिरन्नाद्यमवरुन्धे॥३॥**

तिस्रो रात्रीः अरण्ये वसति । अत्यन्तसंयोगे द्वितीया । तेन वासेन आरण्यमरण्यसम्बन्धि अन्नाद्यमवरुन्धे लभते ॥ ३ ॥

तत्राऽरण्यवासे स्थानविशेषं विधत्ते—

**उदुम्बरे वसत्यूर्गुदुम्बर ऊर्जमेवाऽवरुन्धे ॥ ४ ॥**

उदुम्बरे उदुम्बरमूले वसति । ऊर्क् अन्नं ह्युदुम्बरः, (३)सदा फल- त्वात् । तथा च तन्मूले (४)वसन् उर्ज्जमन्नमेवाऽवरुन्धे ॥ ४ ॥

---

१. अथ वर्णविशेषं विधाय स्तौतीति. ख. पु.

२. रोहिणी रोहितं वस्त्रं छवी भवति सर्वेषां गवादीनां पशूनां भूयिष्ठं रोहितं तद्बहु- तरं यद्रोहितं लोहितवर्णस्तथा च साक्षात् प्रत्यक्षमेव एनान् पशूनवरुन्धे लभत इति मु द्रितपुस्तकपाठः ।

३. सुफलत्वादिति ख. पु. ४. वासादिति ख. पु.

अथ तत्र जीविकां विधत्ते—

**खनित्रेण जीवत्यवृत्तिमपजयति ॥ ५ ॥**

यदरण्ये कन्दमूलादिकं खाद्यमस्ति, तत् खनित्रेण खननसाधनेन खात्वा तेन जीवेदित्यर्थः । तथा च अवृत्तिं दारिद्र्यमेवाऽपजयति अपजितं करोति ॥ ५ ॥

किं तत् खनित्रमिति तदाह—

**उभयतः क्ष्णुदभ्रिर्भवत्युभयत एवाऽस्मा अन्नाद्यꣳ रजत्यस्माच्च लोकादमुष्माच्च ॥ ६ ॥**

तत् खनित्रं उभयतः क्ष्णुत् उभयतस्तीक्ष्णमुखी अभ्रिर्भवति । सा च वैणवी काल्माषीति (१)केचित् । अन्यवृक्षजाऽपीति(२) पक्षान्तरम् । एवम्भूताभिरुभयतः तीक्ष्णमुखत्वात् उभयविधादेवाऽस्मै यजमानाय अन्नाद्यं रजति रञ्जयति । उभयत इत्येतद्व्याक्रियते अस्मात् भूर्लोकात् , अमुष्माच्च स्वर्गात् ॥ ६ ॥

अथ त्रिरात्रं निषादकुले निवासं विधाय स्तौति—

**निषादेषु तिस्रो वसत्यस्यां वा एते परीत्ता यद्देवाऽस्यामन्नाद्यं तदवरुन्धे ॥ ७ ॥**

निषादेषु निषादग्रामसमीपे तिस्रो रात्रीर्वसेत् । अस्यां भूमौ एते हि निषादाः परीत्ताः प्राप्तपरिदाना भवन्ति । एवं तेषां भूमिसम्बन्धात् यदेवाऽस्यां पृथिव्यामन्नाद्यं तदवरुन्धे लभते । एवं वसतो जीवनं सूत्रकृतोक्तम् (३)'तेषाङ्ग्राममारण्यं भुञ्जीत नैवारं श्यामाकम्मार्गमि'ति ॥७॥

अथाऽपरं त्रिरात्रवासं विधत्ते—

**जने तिस्रो वसति जन्यं ताभिरन्नाद्यमवरुन्धे ॥ ८ ॥**

विवाहयोग्योऽसमानगोत्रो ब्राह्मणो जनः । यद्वा राजन्यबन्धुः । तस्य गृहे तदीयमन्नं भुञ्जानः तिस्रो रात्रीर्वसेत् । तथा च ताभी रात्रिभिर्जन्यं जनसम्बन्ध्यन्नाद्यमवरुन्धे ॥ ८ ॥

---

१. 'वैणवी काल्माषीति शाण्डिल्यः' ( ८. २. ६. ) इति लाट्यायनश्रौतसूत्रोक्तशाण्डिल्यमतमिदम् ।

२. 'या का चेति धानञ्जय्यः' ( लाट्या. श्रौ. ८.२.७. ) इति धानञ्जय्यमतम् ।

३. लाट्या. श्रौ. ८. २. ९.

अथाऽपरं त्रिरात्रवासं विधत्ते—

**समानजने तिस्रः समानजन्यं ताभिः ॥ ९ ॥**

वसति अन्नाद्यमवरुन्ध इत्यनुवर्तते । समानगोत्रो जनः समानजनः यद्वा ब्राह्मणमात्रम् । तस्य गृहे तदीयमन्नं भुञ्जानस्तिस्रो रात्रीर्वसेत् । 'जने तिस्रो वसती'त्यादिवाक्यद्वयं (१)'राजन्यबन्धुर्जनो ब्राह्मणः समानजन इति शाण्डिल्य' इत्यादिना सूत्रकारेण बहुधा व्याख्यातम् ॥

अथैता रात्रीस्संहृत्य स्तौति—

**द्वादशैता रात्रयो भवन्ति द्वादश मासाः संवत्सरः संवत्सरमन्वन्नाद्यं प्रजायते तदेवाऽऽप्त्वाऽवरुन्धे ॥१०॥**

अरण्ये तिस्रः, निषादे तिस्रः, जने तिस्रः, समानजने तिस्र इत्येवमेता रात्रयो द्वादश भवन्ति । संवत्सरश्च द्वादशमासात्मकः । तथा च संवत्सरं संवत्सरपर्यन्तं अन्नं अनु अत्तुमर्हं प्रजायते उत्पद्यते । एवं रात्रिगतसंख्यया तदेवाऽन्नाद्यमाप्त्वा अवरुन्धे स्वीकरोति ॥ १० ॥

(२)अथाऽन्यत् व्रतमाह—

**संवत्सरं न याचेदामाद्यमिव वा एतद्यः सद्योदत्तं प्रत्यत्ति सद्यो वै देवानाꣳ संवत्सरः ॥ ११ ॥**

संवत्सरं सर्वस्वदानानन्तरं संवत्सरपर्यन्तं न याचेत् मह्यमेतद्देहीति परं नाऽभ्यर्थयेत् । किं कारणमयाचनम् ? तदाह—'आमाद्यमिव वा एतद्यः सद्योदत्तं प्रत्यत्ती'ति । एतदामाद्यमिव वै आमस्याऽपरिपक्वफलस्य भक्षणमिव खलु यो दत्तं धनं सद्यस्तदानीमेव प्रत्यात्ति प्रतिनिवृत्य भक्षयति । ननु बहुषु दिवसेषु गतेषु संवत्सरमध्येऽपि प्रतिग्रहो न विरुध्यत इत्यत आह—सद्यो वा इति । अस्माकं संवत्सर इति यत् तद्देवानां सद्यो वै अविलम्बितः कालः 'एकं वा एतद्देवानामहर्यत् संवत्सर' इति हि ब्राह्मणान्तरम् । तस्मात् संवत्सरस्याऽपि सद्यस्कालात्मकत्वात् यदि तन्मध्ये सर्वस्वं दत्तवान् पुनर्याचेत् तदा तदपरिपक्वफलभक्षणसदृशं भवेत् इति याच्ञाप्रतिषेधस्समर्थ्यते ॥ ११ ॥

यद्ययाचमानायाऽपि तस्मै यत्किञ्चिद्धनं (३)दातुमिच्छेत्तदा न

---

१. लाट्या. श्रौ. ८. २. १०.  २. अन्नाद्यव्रतमाहेति ख. पु.

३. दित्सेत्तदा न निरोध्यमित्याहेति ख. पु.

विरोध इत्याह—

नोदीयमानं प्रति नुदेदन्नाद्यस्याऽप्रतिनोदाय ॥१२॥

अयाचितमन्येन दीयमानं न प्रतिनुदेत् न प्रतिषेधेत्, अपि तु प्रतिगृह्णीयादेव। अन्नाद्यस्येतःपरं प्राप्तव्यस्याऽन्नस्य प्रतिनोदः प्रतिषेधो माभूत् इत्येवमर्थम् ॥ १२ ॥

अथाऽस्योष्णीषधारणं विधत्ते—

उष्णीषं बिभर्त्ति शिल्पत्वाय ॥ १३ ॥

उष्णीषं शिरोवेष्टनवस्त्रम्। तद्बिभृयात्। तद्धारणं शिल्पत्वाय वैचित्र्याय भवति। परिधानीयाया रोहिण्या वत्सत्वचस्सकाशात् वैलक्षण्यात् ॥ १३ ॥

अथाऽन्यन्निषेधति—

न मृन्मयेन पिबेदाहुतिर्वा एषा यद्ब्राह्मणस्य मुखं न वै मृन्मयमाहुतिमानशेऽथ यदमृन्मयपो भवति स्व एव मुख आहुतिञ्जुहोति ॥ १४ ॥

मृन्मयेन मृद्विकारेण पात्रेण जलादिकं न पिबेत् एषा आहुतिर्वै यज्ञमिव आहुत्यधिकरणं यत् ब्राह्मणमुखम्। न खलु मृन्मये मृद्विकारपात्रं आहुतिमानशे आहुतियोग्यतां प्राप्नोति। अतो यत् यस्मात् अमृन्मयपः अमृन्मयेन दारुमयादिना पात्रेण पाता भवति तेन स्व एव आत्मीय एव मुखे आहुतिं हविर्जुहोति ॥ १४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षोडशाध्यायस्य षष्ठः खण्डः ॥

-

## अथ सप्तमः खण्डः ॥

अथ सर्वजित्संज्ञकमेकाहं विधास्यन् तस्य स्तोमसंस्थे दर्शयति—

**पञ्चविंशोऽग्निष्टोमः ॥ १ ॥**

अग्निष्टोमसंस्थः पञ्चविंशस्तोमक इत्यर्थः ॥१॥

अथ तं विधत्ते—

**सर्वजिता वै देवाः सर्वमजयन् सर्वस्याऽऽप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाऽऽप्नोति सर्वञ्जयति ॥ २ ॥**

सर्वजिता सर्वजिदाख्येन यज्ञेन खलु पुरा देवाः सर्वं जगदजयन्। तस्मात् सर्वस्य फलस्य प्राप्त्यै सर्वस्य जेतव्यस्य जित्यै जयाय अनेन सर्वजिता यष्टव्यम्। स्पष्टमन्यत् ॥ २ ॥

अथाऽस्मिन्नेकाहे प्रथमं पृष्ठस्तोत्रं विधत्ते—

**तस्य महाव्रतं पृष्ठम् ॥ ३ ॥**

तस्य सर्वजितः महाव्रताख्यं प्रागुक्तं स्तोत्रं पृष्ठं भवति, माहेन्द्रस्तोत्रं भवतीत्यर्थः। कल्पकारेण विस्तरेण महाव्रतस्तोत्रस्वरूपमुक्तम् 'स्वरूपत इन्द्रमिद्गाथिनो बृहदिन्द्रो दधीचो अस्थभिरुद्वेदभिश्रूतामघमि'ति, 'त्रिवृच्छिरा गायत्रं पञ्चदशं रथन्तरं दक्षिणः पक्षः, सप्तदशं बृहदुत्तरः पक्षः, एकविंशं भद्रं पुच्छं तदिदास भुवनेषु ज्येष्ठमि'ति, 'पञ्चविंश आत्मा राजनमि'ति। शिर आद्यवयवपञ्चकत्वेन कल्प्यमानं गायत्रादिसामपञ्चकं उक्तस्तोमकं महाव्रतस्तोत्रमिति कल्पार्थः ॥ ३ ॥

अथ शस्त्रं विधत्ते—

**अर्क्यꣳ शस्यते ॥ ४ ॥**

अर्क्यं अर्कः सूर्यः तत्सम्बन्धि बृहतीसहस्राख्यं शस्त्रं शस्यते, अनेन शस्त्रेण होत्रा महाव्रतस्याऽनुशंसनं कार्य्यमित्यर्थः ॥ ४ ॥

अथ पञ्चविंशस्तोमकत्वं स्तौति—

**चतुर्विꣳशतिः संवत्सरस्याऽर्धमासाः संवत्सरः पञ्चविंशोऽन्नं व्रत ꣳ संवत्सरादेतेनाऽन्नाद्यमवरुन्धे ॥ ५ ॥**

संवत्सरस्य चतुर्विंशतिः संख्या ह्यर्द्धमासास्तत्स्थानीयाश्चतुर्विं-

शतिस्तोत्रीयाः । तेषामर्द्धमासानां पञ्चविंशः पञ्चविंशतिसंख्यापूरकः संवत्सरः । स एव पञ्चविंशस्तोत्रीयात्मकः । यदेतन्महाव्रताख्यं स्तोत्रं तदन्नम् । तस्याऽन्नरूपत्वं प्रथमपञ्चिकायामुक्तम् । एवञ्च पञ्चविंशस्तोत्रं महाव्रतं प्रयुञ्जानः संवत्सरादेव एतेन यागेनाऽन्नाद्यमवरुन्धे ॥ ५ ॥

अथैतद्वेदितुः फलमाह—

**अन्नादो भवति य एवं वेद ॥ ६ ॥**

स्पष्टोऽर्थः ॥ ६ ॥

अथ प्रकारान्तरेण स्तौति—

**एतेन वै गौराङ्गिरसः सर्वं पाप्मानमतरत्सर्वं पाप्मानं तरत्येतेन स्तोमेन तुष्टुवानः ॥ ७ ॥**

एतेन पञ्चविंशस्तोमेन गौर्नामाङ्गिरसः ऋषिः सर्वं पाप्मानं पापं अतरत् अत्यक्रमीत् । स्पष्टमन्यत् । अस्याऽवशिष्टस्तोत्रकल्पनं कल्पकारोक्तं द्रष्टव्यम् ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षोडशाध्यायस्य सप्तमः खण्डः ॥

---

## अथाऽष्टमः खण्डः ॥

अथ सहस्रदक्षिणाः साहस्रा नाम चत्वार एकाहाः । तत्र ज्योतिरग्निष्टोमः प्रथमः । तं दर्शयति—

**अथैषज्योतिः ॥ १ ॥**

अथेत्यानन्तर्य्ये । एष वक्ष्यमाणो ज्योतिस्संज्ञ एकाहः ॥ १ ॥

अथाऽस्याऽग्निष्टोमसंस्थां विधित्सुराह—

**पराङ्वै त्रिरात्रोऽर्वाङग्निष्टोमो यस्त्रिरात्रे विभ्रंशते न तस्मिन् पुनरस्त्यथ योऽग्निष्टोमे प्रायश्चित्तिमत्तदपि ह्येतेनैकविंशतिदक्षिणेन पुनर्यजेत यस्मिन् ह्येव यज्ञक्रतौ विभ्रंशते सैव तस्य प्रायश्चित्तिः ॥ २ ॥**

योऽयं त्रिरात्रस्तिसृणां रात्रीणां समाहारः। अहीनो गर्गत्रिरात्राख्यो विधास्यते, स पराङ्वै परागतः पराङ्मुखः। योऽयं प्रकृतिभूतोऽग्निष्टोमः स अर्वाङ् अभिमुखः। अतो यो यजमानस्त्रिरात्रे क्रतौ विभ्रंशते विभ्रष्टो भवति, स तस्मिंस्त्रिरात्रे पुनर्नाऽस्ति पुनरधिकृतो न भवति। योऽग्निष्टोमे विभ्रंशते तत्तस्य प्रायश्चित्तिमत् प्रायश्चित्तयुक्तं कर्म भवति। किं तत् प्रायश्चित्तम् उच्यते—एतेनाऽग्निष्टोमेन एकविंशतिदक्षिणेन पुनरविकलेन यजेत। यस्मिन्नेव यज्ञक्रतौ विभ्रंशते पूर्वं विभ्रष्टो भवति, तस्य यज्ञस्य सैव प्रायश्चित्तिः। अतस्त्रिरात्रादप्यग्निष्टोमस्य गरीयस्त्वात् अग्निष्टोमसंस्थैवाऽस्य प्रकृतस्य ज्योतिषः कार्येत्यर्थः॥ २॥

अथैतस्मिन्नेकाहे प्रातरनुवाकस्य होत्रानुवक्तव्यस्य परिमाणं कालविशेषं दक्षिणापरिमाणं ब्रह्मसाम्नः स्तोत्रीयाक्षरपरिमाणञ्च त्रिवृद्वदनूद्य प्रतिष्ठाहेतुत्वेन स्तौति—

**उपसदि सहस्रं प्रातरनुवाकमन्वाह तदसौ लोकः सहस्रं दक्षिणास्तदन्तरिक्षꣳसहस्रमेतान्यक्षराणि तदयं लोक एषु लोकेषु प्रतितिष्ठति य एवं वेद॥ ३॥**

उपसदि उपसद्दिवसे सहस्रं सहस्रसंख्याभिर्ऋग्भिः परिमितं प्रातरनुवाकं होताऽनुब्रूयात्। तदनुसहस्रं असौ स्वर्गो लोकः। तथाऽस्मिन्नेकाहे सहस्रं दक्षिणाः सहस्रसंख्या गावो दक्षिणात्वेन दातव्याः। तत् सहस्रमन्तरिक्षात्मकम्। एतानि वक्ष्यमाणानि ब्रह्मसामानि ब्रह्मसाम्नस्सम्बन्धीनि सहस्रमक्षराणि (कल्पकारेणाऽप्युक्तम्-'ब्रह्मसाम स्वादोरित्थेति पङ्क्त्या श्येतमाम्नातं सा च चत्वारिंशद्भिरक्षरैरुपेता एवञ्च पञ्चविंशस्तोमकल्पनया सहस्रं सम्पद्यत' इति) तदयं भूलोकः। एवं सहस्रत्रयस्य लोकत्रयात्मकतां यो वेत्ति विदित्वा चाऽनुतिष्ठति स एषु त्रिषु लोकेषु प्रतितिष्ठति॥ ३॥

अथैतत्सहस्र(१)दक्षिणापरिमाणं प्रकारान्तरेण स्तौति—

**ऋक्स्था वा अन्यत् सहस्रमित्याहुरक्षरस्था अन्यदिति यत् त्रिरात्रे दीयते तदृक्स्था। अथ यदग्निष्टोमे तदक्षरस्था॥ ४॥**

---

( ) कुण्डलान्तर्गतो भागः खपुस्तके नाऽस्ति। १. दक्षिणात्वं प्रकारान्तरेणेति ख० पु०।

अन्यदेकं सहस्रं सहस्रसंख्यादक्षिणा ऋक्स्था ऋक्संख्ययाऽव- स्थिताः। अपरं सहस्रं सहस्रसंख्यादक्षिणा अक्षरेस्था अक्षरसंख्यया ऽवस्थिता इति ब्रह्मवादिन आहुः। का पुनः कुत्रेति विविच्यते—यत् सहस्रं गर्गत्रिरात्रे दक्षिणात्वेन दीयते तदृक्स्था। तत् सहस्रदक्षिणा- ऋक्स्था। तत्र हि सहस्रं स्तोत्रियाः सहस्रं दक्षिणा इति स्तोत्रियाणा मृचां सहस्रसंख्या दृश्यते। तथा च तत्संख्यया दक्षिणाः ऋक्स्था भवन्ति। अथ यत् सहस्रमग्निष्टोमसंस्थे अस्मिन्नेकाहे दक्षिणाः तत् सहस्रमक्षरेस्था ब्रह्मसाम्नः स्तोत्रीयाक्षरसंख्ययाऽवस्थिता अक्षरेस्था ॥४॥

(१)एतावद्विवृणोति—

**यत् सहस्राक्षरासु ब्रह्मसाम भवति सहस्रस्यैव सा प्रतिष्टुतिः ॥ ५ ॥**

(२)'स्वादो रित्था विषूवत' इत्याद्यास्तिस्रः पङ्क्तयोऽत्र ब्रह्मसाम्न- स्तोत्रियाः। ताः प्रत्येकं चत्वारिंशदक्षराः। पञ्चविंशस्तोमकत्वात् आवृत्त्या पञ्चविंशतिसंख्याकाः पङ्क्तयो भवन्ति। एवञ्च प्रत्यृचं चत्वा- रिंशत्सङ्ख्यया परिगणनायां सहस्राक्षराणि सम्पद्यन्ते। तदिदमुक्तम् 'सहस्राक्षरास्वि'ति। यत् सहस्राक्षरासु ब्रह्मसाम ब्रह्मणः पृष्ठस्तोत्र- निर्वर्त्तकं श्यैताख्यं साम भवति। सा सहस्रस्यैव दीयमानस्यैष प्रति- ष्टुतिः प्रतिस्तवनम् ॥ ५ ॥

अथाऽन्यप्रकारेण दक्षिणादानं स्तौति—

**यावद्वै सहस्रं गाव उत्तराधरा इत्याहुस्तावदस्मात् लोकात् स्वर्गो लोक इति तस्मादाहुः सहस्रयाजी वा इमान् लोकान् प्राप्नोति ॥ ६ ॥**

सहस्रं सहस्रसङ्ख्या गावः उत्तराधरा अन्योन्यस्योपरि उत्तराधर- भावेनाऽवस्थिताः यावदुच्छ्रिता भवन्ति अस्माल्लोकात्तावत्प्रमाणे उन्नते स्थाने स्वर्गाख्यो लोक इति ब्रह्मवादिन आहुः यस्मादेवं सहस्र- गवार्द्धप्रमाणं स्वर्गः तस्मादेवं आहुर्ब्रह्मवादिनः सहस्रयाजी सहस्रगोद- क्षिणेन यागेनेष्टवान् इमान् पृथिव्यादीन् लोकान् व्याप्नोतीति। यद्यपि पूर्वं सहस्रगोर्द्धप्रमाणः स्वर्ग इति एकस्यैव लोकस्य प्राप्यत्वमवगम्यते

---

१. अक्षरेस्था इत्येतद्विवृणोतीति० ख० पु०।

२. ( सा. स. उ. ३. २. १५ ) ऋच इमा० २३ पृष्ठे द्रष्टव्याः।

तथाऽपि नान्तरीयकं पृथिव्यन्तरिक्षयोः प्रापणमित्यभिप्रायेणेमान् लोकानिति बहुवचनम् ॥ ६ ॥

अथ ब्रह्मसाम्नः पङ्क्तिच्छन्दस्का ऋचो विधातुमाह—

**पशुभिर्वा एष व्यृध्यत इत्याहुर्यः सद्यः सहस्रं ददातीति पङ्क्तिषु ब्रह्मसाम भवति पाङ्क्तो यज्ञः पाङ्क्ताः पशवो यज्ञ एव पशुषु प्रतितिष्ठति ॥ ७ ॥**

योऽयं यजमानः सद्यो युगपदेव गवां सहस्रं ददाति एष पशुभिः व्यृध्यते हीयते। तत्परिहाराय पङ्क्तिषु पङ्क्तिच्छन्दस्कासु ऋक्षु(१) 'स्वादो रित्था विषूवत' इत्याद्यासु एतैत ब्रह्मसाम भवति। पङ्क्तिः पङ्क्तिसम्बद्धो यज्ञः, पशवश्च पाङ्क्ताः पङ्क्तिसम्बद्धाः। एवञ्च पङ्क्तिच्छन्दसा यज्ञ एव पशुषु प्रतितिष्ठति पुनर्बहुपशुको भवतीत्यर्थः ॥ ७ ॥

अथैतस्याऽह्नः स्तोत्रीयासम्पत्तिद्वारेण स्तुतिं करोति—

**त्रिवृतꣳ स्तोमꣳ सम्पद्यते विराजं छन्दः ॥ ८ ॥**

स्तोत्रीयाणामियत्तापरिज्ञानाय कल्पकारेण कृता स्तोमक्लृप्तिः प्रदर्श्यते—'त्रिवृद्बहिष्पवमानं पञ्चदशत्रिवृन्त्याज्यानि, सप्तदशो माध्यन्दिनः पवमानः, होतुश्च पृष्ठं पञ्चदशम्, मैत्रावरुणस्य एकविंशम्, ब्राह्मणाच्छंसिनः सप्तदशमच्छावाकस्य एकविंशम्, आर्भवः पवमान एकविंशः, एकविंशोऽग्निष्टोम' इति। (पञ्चदश त्रिवृन्त्याज्यानीति द्वे पञ्चदशके द्वे त्रिवृतावित्यर्थः) एवञ्च प्रातस्सवनीयाः स्तोत्रीयाः सप्तपञ्चाशत्, माध्यन्दिनपवमानीया एकनवतिः, तृतीयसवने द्विचत्वारिंशत्, संहृत्य नवत्यधिकशतस्तोत्रीया भवन्ति। ताश्चतुर्विंशतिसंख्यास्त्रिवृतः एका विराट् भवति। तदेतदुच्यते 'त्रिवृतं स्तोममि'ति। पूर्वोक्तस्तोमको यज्ञस्त्रिवृतं स्तोमं सम्पद्यते विराडाख्यं छन्दश्च। त्रिवृतो हि नवस्तोत्रीयाः। तथा च नवस्तोत्रीयाणां नवनवशो विभागे अशीतिशताभिः स्तोत्रीयाभिः विंशतित्रिवृतस्सम्पद्यन्ते। अवशिष्टा दश स्तोत्रीयाः सा एका विराट् ॥ ८ ॥

किं तत इत्याह—

**प्राणो वै त्रिवृदन्नं विराट् न वै प्राण ऋतेऽन्नात्पारय-**

१. (सा. सं. उ. ३.२.५) अयं तृचः २३ पृष्ठे द्रष्टव्यः।

( ) कुण्डलान्तर्गतो भागः खपुस्तके नाऽस्ति।

**ति नाऽन्नमृते प्राणात्प्राणेषु चैवाऽन्नाद्ये च प्रतितिष्ठति ॥९॥**

त्रिवृत्स्तोमः प्रजापतिमुखादुत्पन्नः प्राणवायुश्च मुखे वर्त्तत इति तस्य प्राणात्मकत्वम्। विराट्छन्दो दशाक्षरं अन्नञ्च दशविधेन्द्रियतर्पकम्। तस्माद्विराजोऽन्नत्वम्। न वै खलु प्राणः प्राणवायुः अन्नादृते अन्नं विहाय पारयति शरीरेऽवस्थातुं शक्नोति, 'अन्नं प्राणमन्नमपानमाहुरि'ति श्रुतेः। तथा प्राणादृते प्राणं विहाय अन्नमपि शरीरं पोषयितुं न शक्नोति। (१)तस्मादनयोः परस्परसहकारित्वादुभयोरेव सह सम्पादनेन प्राणेषु चैव अन्नाद्ये च यजमानः प्रतिष्ठितो भवति ॥ ९ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षोडशाध्यायस्याऽष्टमः खण्डः ॥

## अथ नवमः खण्डः ॥

अथ द्वितीयमन्यं साहस्रमेकाहं दर्शयति—

**अथैष सर्वज्योतिः सर्वस्याऽऽप्तिः सर्वस्य जितिः सर्वमेवैतेनाऽऽप्नोति सर्वं जयति ॥ १ ॥**

अथाऽनन्तरमेष वक्ष्यमाणः सर्वज्योतिर्नामैकाह उच्यत इति शेषः। स च सर्वस्य फलस्याऽऽप्तिः प्राप्तिसाधनम्। तथा सर्वस्य जेतव्यस्य जितिर्जयसाधनम्। तस्मादनेन यो यजते स सर्वमेतेन फलमाप्नोति, सर्वं च जेतव्यं जयति ॥ १ ॥

अथाऽस्य सहस्रदक्षिणात्ववेदिनं स्तौति—

**परमो वा एष यज्ञः परमꣳ सहस्रं परमतां गच्छति य एवं वेद ॥ २ ॥**

एष सर्वज्योतिर्नाम यज्ञः परमो वै सर्वेभ्य उत्कृष्टः, सर्वज्योतिरिति संज्ञायाश्च सकलतेजोमयत्वात्। यदस्य दक्षिणारूपं सहस्रं तदपि परमं शतादिसंख्याया आधिक्यात्। एवं सहस्रदक्षिणस्य परमत्वं यो वेद स परमतां श्रेष्ठतां गच्छति ॥ २ ॥

---

१. तस्मादुभयोरिति ख० पु०

अथाऽस्य स्तोत्रीयाः संहत्याऽनूद्य सहस्रदक्षिणात्वमित्याह—

**तस्य द्विशताः स्तोत्रीया अन्तो वै वाचो द्विशतमन्तः सहस्रमन्त एव तदन्तं प्रतिष्ठापयति ॥ ३ ॥**

पूर्ववदत्राऽपि स्तोमक्लृप्तिः कल्पकारकृता प्रदर्श्यते—'तस्य त्रिवृद् बहिष्पवमानम्, पञ्चदशान्याज्यानि, सप्तदशो माध्यन्दिनः पवमानः त्रीणि च पृष्ठानि, पञ्चविंशं ब्राह्मणाच्छंसिनः, सप्तदश आर्भवः, एकविंशोऽग्निष्टोम' इति । एवञ्च प्रातस्सवने एकोनसप्ततिः स्तोत्रीयाः माध्यन्दिने त्रिनवतिः, तृतीयसवनेऽष्टात्रिंशत् , मिलित्वा द्विशतं स्तोत्रीया भवन्ति । तदिदमुक्तं 'तस्य द्विशता' इति । तस्य सर्वज्योतिर्नाम्नः द्विशताः शतद्वयपरिमिताः स्तोत्रीया ऋचो भवन्ति । वाचः शब्दस्य द्विशतसंख्या अन्तो वै अवसानभूतम् । सहस्रसंख्या चाऽन्त एव । स्वस्मात् न्यूनसंख्यानां अवसानभूतत्वात् । तत्तथा च द्विशतस्तोत्रीयात्मके क्रतौ सहस्रदक्षिणादानं कुर्वन् अन्त एवाऽन्तं प्रतिष्ठापयति परस्परं सम्बन्धीकरोतीत्यर्थः ॥ ३ ॥

अथैतत्प्रकारान्तरेण स्तौति—

**कृतस्तोमो वा एष सर्वमेवैतेनाऽऽप्नोति सर्वं जयति सर्वꣳहि कृतेन जयति ॥ ४ ॥**

एष सर्वज्योतिर्नामैकाहः कृतस्तोमो वै कृतः पूर्वस्मिन्नेकाहे क्लृप्तः स्तोमः स्तोत्रीयासमूहो यस्य स तथोक्तः, निष्पन्नस्तोत्रक इत्यर्थः । सर्वं जयति सर्वं जेतव्यम् , हि यस्मात् कृतेन निष्पन्नेनैव साधनेन लोको जयति तस्मादित्यर्थः ॥ ४ ॥

अथाऽन्नप्राप्तिसाधनत्वेन स्तौति—

**विराजꣳसम्पद्यतेऽन्नं विराडन्नाद्यमेवाऽवरुन्धे ॥५॥**

दशाक्षरा विराट् । अस्य चैकाहस्य पूर्वोक्तानां स्तोत्रीयाणां दशसंख्यया विभागे विंशतिर्विराजो भवन्ति । तथा चाऽयं यज्ञो विराजं सम्पद्यते प्राप्नोति । शिष्टं सिद्धम् ॥ ५ ॥

अथाऽग्निष्टोमसाम्नः स्तोमं विधाय स्तौति—

**एकविंशोऽग्निष्टोमो भवति प्रतिष्ठा वा एकविंशोऽन्तत एव यज्ञस्य प्रतितिष्ठति ॥ ६ ॥**

एकविंशोऽग्निष्टोमो भवति अग्निष्टोमसाम्न एकविंशस्तोमो भवतीत्यर्थः। किमतो भवति? तदुच्यते—तथा प्रतिष्ठारूपो ह्येकविंशः पूर्वमुक्तः। तथा च यज्ञस्याऽन्ततोऽवसान एव यजमानः प्रतिष्ठितो भवतीति ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षोडशाध्यायस्य नवमः खण्डः ॥

---

## अथ दशमः खण्डः ॥

अथ विश्वज्योतिस्संज्ञकं तृतीयं साहस्रमेकाहं दर्शयति—

**अथैष विश्वज्योतिरुक्थ्यः ॥ १ ॥**

अथाऽनन्तरं एष वक्ष्यमाणो विश्वज्योतिर्नाम उक्थ्यः उक्थसंस्थः अन्यः साहस्र एकाहः ॥ १ ॥

अथैतस्य विश्वज्योतिरिति सज्ञां उक्थसंस्थताञ्च स्तौति—

**पशवो वा उक्थानि पशवो विश्वं ज्योतिर्विश्व एव ज्योतौ पशुषु प्रतितिष्ठति ॥ २ ॥**

उक्थान्युक्थस्तोत्राणि पशवो वै तत्साधनत्वात् (१)तच्छब्दवाच्याः। पशवश्च विश्वं व्याप्तं ज्योतिस्तेजः, बहुपशुको हि लोकेऽतिशयेन प्रकाशते। तस्माद्विश्वज्योतिस्संज्ञकैकाहे उक्थस्तोत्राणि प्रणयन् विश्वव्याप्ते ज्योतौ ज्योतिष्येव पशुषु प्रतितिष्ठति ॥ २ ॥

अथैतं त्रिरात्रसाम्येन स्तौति—

**अहर्भिर्वै त्रिरात्र इमान् लोकानाप्नोति सवनैरेष उत्तरमुत्तरं त्रिरात्रस्याऽहर्वर्षीय उत्तरमुत्तरमेतस्य सवनं वर्षीयस्तेन त्रिरात्रमाप्नोत्युत्तर उत्तर एषां लोकानां ज्यायाꣳस्तेनेमान् लोकानाप्नोति ॥ ३ ॥**

योऽयं वक्ष्यमाणो गर्गत्रिरात्राख्यः सोमयोगः, अयमहर्भिः क्रमेणाऽ

---

१. ताच्छब्द्यमिति ख. पु.

नुष्ठितैः अग्निष्टोमोक्थातिरात्रसंस्थैस्त्रिभिरहोभिरेव इमान् पृथिव्यादीन् लोकानाप्नोति । एष तु विश्वज्योतिर्नाम यज्ञस्त्रिभिरेव सवनैस्तानाप्नोति । तथा चाऽस्य त्रिरात्रस्य यदुत्तरमुत्तरमहस्तद्वर्षीयः वृद्धतरम्, अग्निष्टोमोक्थ्यातिरात्रसंस्थानामुत्तरोत्तरं विवृद्धस्तोमकत्वात् । एतस्यैकाहस्य उत्तरमुत्तरं सवनं वर्षीयः प्रातस्सवनात् माध्यन्दिनं सवनं वृद्धतरम्, ततोऽपि तृतीयसवनं वृद्धतरम् । एतच्चाग्रे(१) दर्शयिष्यते । तथा चैष यस्त्रिरात्रं यज्ञक्रतुमाप्नोति तद्वत्प्रशस्तो भवतीत्यर्थः । अपि चैषां पृथिव्यादिलोकानां मध्ये उत्तर उत्तरो लोको ज्यायान् वृद्धतरोऽतिशयेन विस्तीर्णः । तेनोत्तराधिकसवनेन यज्ञेन इमानेव लोकानाप्नोति ॥ ३ ॥

अथाऽस्य सवनानामुत्तरोत्तराधिक्यं दर्शयितुमाह—

**अस्थूरिर्वा एष सन्ततो यज्ञो द्वौ द्वौ हि स्तोमौ सवनं वहतः ॥ ४ ॥**

अस्थुरिरश्व(२) द्वन्द्वयुक्तो यो रथस्तत्सदृश एष सन्ततः संहितो यज्ञः । कुतः ? हि यस्मात् द्वौ द्वौ स्तोमौ संहत्य अस्यैकैकं सवनं वहतः ॥ ४ ॥

कतमौ च द्वौ द्वौ स्तोमाविति तत्राऽऽह—

**त्रिवृत्पञ्चदशौ प्रातस्सवनꣳसप्तदशपञ्चविꣳशौ माध्यन्दिनꣳ सवनं चतुर्विꣳशैकविꣳशौ तृतीयसवनम् ॥५॥**

त्रिवृद्बहिष्पवमानस्य स्तोमः, पञ्चदश आज्यानाम्, एवमेतौ संहतौ प्रातस्सवनं वहतः । (३)एवमुत्तरौ द्वौ द्वावपि द्वे सवने वहतः ॥५॥

अथैतत् स्तोमद्वययोजनं प्रशंसन् पूर्ववत्सहस्रं देयमित्याह—

**यद्वै युक्ते सन्तत आधीयते वहति तद्यथा युक्ते सन्तत आदध्यादेवमेतस्मिन् सहस्रमाधीयते ॥ ६ ॥**

---

१. स्पष्टीभविष्यतीति. ख. पु. २. द्वययुक्त इति ख. पु.

३. तथा सप्तदशो माध्यन्दिनः पवमानः, त्रीणि च पृष्ठानि सप्तदशानि, ब्रह्मणः पृष्ठं पञ्चविंशम् । एवमेतौ द्वौ स्तोमौ माध्यन्दिनं पवमानं वहतः । तथा चतुर्विंश आर्भवः पवमानः, अग्निष्टोमसामोक्थानि चैकविंशानि । एवं चतुर्विंशैकविंशौ तृतीयसवनं वहत इति ख. पु.

यद्वै यत् खलु द्रव्यं युक्ते अश्वाभ्यां योजिते सन्तते सम्बद्धे रथे आधीयते आरोप्य निधीयते स रथस्तद्द्रव्यं वहति, यथैव युक्ते सन्तते च रथे आदध्यात् वोढव्यं भारं निदध्यात् एवमेवैतस्मिन्नेकाहे प्रतिसवनं स्तोमद्वयेन युक्ते दक्षिणानां गवां सहस्रमाधीयते आरोप्यते। अस्याऽपि यज्ञस्य पूर्ववत् सहस्रं दक्षिणा दातव्येत्यर्थः ॥ ६ ॥

चोदकेन प्राप्तयोर्बृहद्रथन्तरयोः प्रकृतिवद्विकल्पे प्राप्ते समुच्चयं विधत्ते—

**उभे बृहद्रथन्तरे भवतः ॥ ७ ॥**

रथन्तरं माध्यन्दिने पवमाने कार्य्यम् , बृहद्धोतुः पृष्ठ इति उभयसामसु पूर्वमुक्तम् ॥ ७ ॥

अथैते स्तौति—

**इयं वै रथन्तरं द्यौर्बृहदेवाऽस्माल्लोकाद्गायत्येवाऽमुष्मादुभयोरनयोर्लोकयोः प्रतितिष्ठति ॥ ८ ॥**

इयं वै पृथिव्येव रथन्तरं साम, द्यौः स्वर्गो लोको बृहदेव। अस्मात् भूलोकाद्रथन्तरमागायति अमुष्मात् द्युलोकाद् बृहदागायति । तथा चाऽनयोरुभयोर्द्यावापृथिव्योर्लोकयोर्यजमानः प्रतितिष्ठति ॥ ८ ॥

अथाऽन्यत्साम विधत्ते—

**अनुष्टुभ्याथर्वणं भवति ॥ ९ ॥**

आर्भवे पवमाने (१)'पुरोजिती वो अन्धस' इत्यस्मिन्नानुष्टुभे तृचे (२)श्यावाश्वान्धीगवे गीत्वा तस्मिन्नेव तृचे पुनराथर्वणं साम गातव्यम् तथा च कल्पकृतोक्तम्—'यस्ते मदो वरेण्य इति गायत्रमौक्ष्णे आन्धीगवादुत्तरमाथर्वणमि'ति ॥ ९ ॥

अथैतत्स्तौति—

**भेषजं वै देवानामथर्वाणो भेषजायैवाऽरिष्ट्यै ॥१०॥**

आथर्वाण अथर्वणा ऋषिणा दृष्टा मन्त्राः देवानां भेषजं वै भैषज्यरूपाः । तस्मादेतत्साम भेषजाय भैषज्याय अरिष्ट्यै अहिंसायैव भवति ॥ १० ॥

---

१. तृचोऽयं ९९ पृष्ठे गतः । २. श्यावाश्वं गीत्वेति ख.-पु.

अथोक्थस्तोत्रेष्वन्तिमेऽन्यत्साम विधाय स्तौति—

**उद्वꣳशीयमुकूथानामन्ततो भवति सर्वेषां वा एतत् पृष्ठानाꣳ रूपꣳसर्वेष्वेव रूपेषु प्रतितिष्ठति ॥ ११ ॥**

उक्थानामुक्थस्तोत्राणामन्ततोऽवसाने अच्छावाकोक्थस्तोत्रे उद्वंशीयं साम भवति । यथोक्तं कल्पकारेण—'साकमश्वं सौभरं त्रैककुभञ्चोद्वंशीयमित्युक्थानी'ति । साकमश्वं होतुरुक्थं सौभरत्रैककुभयोरन्यतरद् ब्रह्मण उद्वंशीयमच्छावाकस्येति कल्पार्थः । एतदुद्वंशीयं सर्वेषां रथन्तरादीनां षण्णां पृष्ठानां रूपम् । एतच्चाऽष्टमेऽध्याये प्रपञ्चेन दर्शितम् । स्पष्टमन्यत् ॥ ११ ॥

अथाऽस्य पूर्वोक्तामुक्थसंस्थामनूद्य स्तौति—

**उक्थो भवति पशवो वा उकूथानि पशवः सहस्रं पशुष्वेव तत्पशून्दधाति ॥ १२ ॥**

अयमुक्थसंस्थो भवति । उक्थस्तोत्राणि पशुसाधनत्वात् पश्वात्मकानि । सहस्रसंख्यादक्षिणाश्च पशवः । तेन पशुष्वेव पशून् दधाति स्थापयति ॥ १२ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षोडशाध्यायस्य दशमः खण्डः ॥

---

## अथैकादशः खण्डः ॥

अथाऽग्निष्टोमसंस्थं चतुर्थं साहस्राख्यमेकाहं विधित्सुराह—

**यो वा अग्निष्टोमे त्रिरात्रं प्रोतं विद्यात्सोऽग्निष्टोमे सहस्रं दद्यात् त्रिरात्रायतनꣳ हि सहस्रम् ॥ १ ॥**

यो ह्यग्निष्टोमे अग्निष्टोमसंस्थ एकाहे त्रिरात्रं वक्ष्यमाणं गर्गत्रिरात्राख्यं यज्ञं प्रोतं प्रतिमुक्तं विद्यात् जानीयात् , सोऽस्मिन्नग्निष्टोमे सहस्रं दक्षिणां दद्यात् । त्रिरात्रायतनं त्रिरात्र एव आयतनं स्थानं यस्य तथाविधं हि सहस्रं सहस्रदक्षिणादानम् । तस्मादस्यैकाहस्य त्रिरात्रसम्बन्धं

विदुषा सहस्रगावो दक्षिणात्वेन दातव्या इत्यर्थः। एवञ्चाऽग्निष्टोमसंस्थेन सहस्रदक्षिणेन यजेतेति विधिरुन्नेतव्यः ॥ १ ॥

अथाऽस्मिंस्त्रिरात्रस्य प्रोतव्यं दर्शयितुं तदीयानां त्रयाणामह्नां याः प्रतिपदस्तासामन्यतमाऽस्य प्रतिपत्कार्य्येत्याह—

**(१)"उपास्मै गायता नरः" (२)"उपोषु जातमप्तुरं" (३)"पवस्व वाचो अग्रिय" इति प्रतिपदो भवन्त्येतस्त्रिरात्रमकः ॥ २ ॥**

'उपास्मै गायता नर' इत्यादितृचानां मध्ये अन्यतमस्तृचोऽस्मिन्नहनि बहिष्पवमानस्य प्रथमस्तृचः कार्य्यः। एतत् वै एतद्धि प्रतिपत्त्रयं त्रिरात्रं गर्गत्रिरात्रं अकः अकर्षीत् तदीयेषु त्रिष्वहस्सु एतेषां बहिष्पवमानस्य क्रमेण प्रथमतृचत्वात्। तस्मादत्राऽप्येषामन्यतमः प्रथमस्तृचः अपरौ तृचौ(४) 'दविद्युतत्या रुचा' (५)'पवमानस्य ते कव' इति कल्पकारोक्तौ द्रष्टव्यौ ॥ २ ॥

अथ त्रिरात्रसम्बन्धिष्वहस्सु यानि पृष्ठसामानि तान्यप्यत्र क्रियन्त इत्याह—

**पवमाने रथन्तरं करोति पवमानस्याऽन्त्यं वामदेव्यं बृहत् पृष्ठम् ॥ ३ ॥**

अत्र कल्पः—'उच्चा ते जातमन्धस इति गायत्रश्चामहीयवञ्च पवस्व मधुमत्तम इतीडानां सङ्कार एकस्यां प्रत्नं पीयूषं पूर्व्यं यदुक्थमिति यौधाजयं तिसृषु पुनानः सोमधारयेति रौरवमेकस्यां रथन्तरं तिसृषु शिशुञ्जज्ञानं हर्य्यतमिति वामदेव्यमन्त्यं बृहत् पृष्ठमि'ति। तस्मादेवं क्लृप्तान् माध्यन्दिने पवमाने 'पुनानः सोमे'ति तृचे रथन्तरं साम गातव्यम्। तथा 'शिशुञ्जज्ञानमि'त्यस्मिंस्तृचे गीयमानं वामदेव्यं तस्य पवमानस्याऽन्त्यं साम भवति। तथा बृहत्साम होतुः पृष्ठस्तोत्रं भवति॥३॥

अथैतेषां सङ्घातकरणं स्तौति—

**इयं वै रथन्तरमन्तरिक्षं वामदेव्यं द्यौर्बृहदिमे लो-**

---

१. सा. सं. उ. १. २. १८. २. ऋगियं १७० पृष्ठे द्रष्टव्या।
३. सा. म. उ २. १ १. ४. सा. सं उ. १. १. २.
५. सा. सं उ. १. १. ३.

**कास्त्रिरात्रो यदेतानि सामानि सध्र्यञ्चि करोतीमानेव तल्लोकान् सन्दधाति तेन त्रिरात्रमाप्नोति ॥ ४ ॥**

रथन्तरवामदेव्यबृहतां पृथिव्यन्तरिक्षद्युलोकात्मकत्वं प्रागुक्तम्। त्रिरात्रश्चेमे पृथिव्यादयो लोकाः वसुरुद्रादित्यैस्त्रिरात्रावयवानामग्निष्टोमोक्थातिरात्राणां त्रयाणामह्नां पृथिव्यादिलोकत्रयसाधनतया क्रमेण प्रयुक्तत्वात्। तथा चाऽऽम्नायते। एवञ्च यदेतानि त्रिरात्रे वियुज्य प्रयुज्यमानानि रथन्तरादीनि सामानि सध्र्यञ्चि सहाञ्चति अस्मिन्नहनि सह प्रयुक्तानि करोति। तत्तेनेमानेव पृथिव्यादिलोकान् सन्दधाति परस्परं संयोजयति। तथा लोकद्वारा त्रिरात्रं यज्ञक्रतुमाप्नोति ॥ ४ ॥

अथ सर्वप्रकृतौ ज्योतिष्टोमे तृतीयसवने 'पवस्व मधुमत्तम' इति यः काकुभः प्रगाथः सोऽत्राऽपि चोदकेन तृतीयसवन एव प्रयोज्यत्वेनाऽतिदिश्यते। तस्य माध्यन्दिनपवमान आकृष्य प्रयोगं विधत्ते—

**ककुभं प्राचीमुदूहति ॥ ५ ॥**

'पवस्व मधुमत्तम' इत्येतां ककुप्छन्दस्कां स्तोत्रीयां प्राचीं प्राग्भागे वर्त्तमानामुदूहति आर्भवात् पूर्वभागे माध्यन्दिनपवमाने तां प्रापयेत् प्रयुञ्जीतेत्यर्थः ॥ ५ ॥

अथैतत्पूर्वस्मिन् भागे आकर्षणमुपपादयति—

**पुरो ह्येतया सत्या अपशुर्वीर्यं करोति ॥ ६ ॥**

पुरः पुरस्तात् पूर्वभागे वर्त्तमानया ह्येतया ककुभा स्तोत्रीयया अपशुः पशुरहितः सोमयागः तदुत्पत्त्यर्थं वीर्यं करोति। तस्मात्तां प्राचीमुदूहेदित्यर्थः ॥ ६ ॥

अथ तत्र कर्त्रभिगेयं साम विधाय स्तौति—

**तस्यामिडानाᳫं संक्षारः पुरुषो वै ककुप् पशव इडानाᳫं संक्षार आत्मन्येव तत्पशून् प्रतिष्ठापयति ॥ ७ ॥**

तस्यां ककुभि स्तोत्रीयायामिडानां सङ्क्षाराख्यं साम गातव्यम्। तथैव पूर्वं कल्प उदाहृतः। किमतः? तदुच्यते—पुरुषो हि ककुप्छन्दः ककुद्मतो वृषभस्य पुंस्त्वात् अस्याऽपि ककुप्स्थानीयनाऽधिकेन मध्यमपादेन युक्तत्वेन तत्साम्यात् पुंस्त्वम्। योऽयामिडानां संक्षारः स पशवः गोवाचकेनेडाशब्देनाऽभिधेयत्वात्। तत्तथा च ऋक्सामयोः पुरुषपश्वात्मकत्वात् पुरुषरूपे आत्मन्येव पशून् प्रतिष्ठापयति ॥ ७ ॥

अथाऽस्मिन्नेव माध्यन्दिने पवमाने यौधाजयस्याऽऽधारभूतास्तिस्रः स्तोत्रीया विदधाति—

(१)"प्रत्नं पीयूषं पूर्व्यं यदुक्थ्य"मिति सतोबृहत्यो भवन्ति॥८॥

स्पष्टोऽर्थः ॥ ८ ॥

अथैताः स्तौति—

**सतोबृहत्या वै देवा इमान् लोकान् व्याप्नुवन्निमानेवैताभिर्लोकान् व्याप्नोति ॥ ९ ॥**

सतोबृहत्या(२) बृहतीच्छन्दस्कया खलु पुरा देवाः इमान् पृथिव्यादिलोकान् व्याप्नुवन्। स्पष्टमन्यत् ॥ ९ ॥

अथैतासां गायत्र्यादिसर्वच्छन्दोरूपत्वं प्रदर्शयन् सर्वपशुसाधनतामाह—

**ता वा एता गायत्र्यो यत्त्रिपदास्तेन गायत्र्यस्ता वा एता जगत्यो यद्द्वादशाक्षराणि पदानि तेन जगत्यस्ता वा एता बृहत्यो यत् षट्त्रिंशदक्षरास्तेन बृहत्यः सर्वेषां वा एताश्छन्दसां रूपं सर्वाणि रूपाणि पशूनामवरुन्धे ॥ १० ॥**

ता वा एताः 'प्रत्नं पीयूषमि'त्याद्याः गायत्र्यो भवन्ति। कथं सतोबृहतीनां गायत्रीत्वमिति ? अत्रोच्यते—यद्यस्मात् एतास्त्रिपदास्तेन गायत्रीसाम्यात् गायत्र्यः। तथा ता एता जगत्यो भवन्ति। एतदुपपाद्यते-यत् द्वादशाक्षराणि पदानि पादाः, प्रथमपादस्य अक्षरव्यूहेन द्वादशाक्षरत्वम्। एवं बृहतीत्वमपि योज्यम्। यस्मादेवमेताः सर्वेषां गायत्र्यादीनां छन्दसां रूपं तस्मादेताभिः सर्वाणि पशूनां रूपाण्यवरु-

---

१. प्रत्नं पीयूषं पूर्व्यं यदुक्थ्यं महो गाहाद्दिव आ निरधुक्षत।
इन्द्रमभि जायमानं समस्वरन् ॥
आदीं केचित्पश्यमानास आप्यं वसुरुचो दिव्या अभ्यनूषत।
दिवो न वारं सविता व्यूर्णुते ॥ २ ॥
अध यदिमे पवमान रोदसी इमा च विश्वा भुवनाभि मज्मना।
यूथे न निष्ठा वृषभो विराजसि ॥ सा. सं. उ. ७. १. ३.

१. बृहतीच्छन्दसेति ख. पु.

न्धे नानारूपान् सर्वान् पशून् लभत इत्यर्थः ॥ १० ॥

अथैतं यज्ञं महाव्रतात्मना रूपयन् स्तौति—

**एतद्वै प्रत्यक्षं महाव्रतं तस्य गायत्रꣳ शिरो बृहद्रथन्तरे पक्षौ वामदेव्यमात्मा यज्ञायज्ञीयं पुच्छं दक्षिणा एवार्क्यमेष वाव प्रत्यक्षं महाव्रतेन स्तुवते य एतेन यजते ॥ ११ ॥**

एतद्वै एष खलु वै यज्ञः प्रत्यक्षं मुख्यं महाव्रतम् । यद्येवं शिरःपक्षादिभिरवयवैर्भवितव्यम्, महाव्रतस्तोमस्य शिरःप्रभृति पक्षावयवात्मकत्वात् । अत्र कथं तेषां सद्भाव इति तत्राऽऽह तस्येति । तस्य प्रकृतस्य साहस्रस्य महाव्रतस्य सतः यज्ञस्य यद्गायत्रं साम प्रातस्सवनादौ प्रयुज्यते तच्छिरः । पश्चात् माध्यन्दिनपवमाने पृष्ठस्तोत्रे च प्रयुज्यमाने बृहद्रथन्तरे पक्षौ भवतः । माध्यन्दिनपवमानान्ते प्रयुज्यमानं वामदेव्यं आत्मा मध्यदेहः । अग्निष्टोमसामत्वेन प्रयुज्यमानं यज्ञायज्ञीयं पुच्छम् । याः सहस्रसंख्याका दक्षिणास्ता एवार्क्यम्महाव्रतस्तोत्रानुशंसनं बृहती सहस्राख्यं शस्त्रम् । तस्मादेतेनैवंगुणविशिष्टेन एकाहेन यो यजते एष एव प्रत्यक्षं साक्षान्महाव्रतेन महाव्रतस्तोत्रेण स्तुवते स्तौति, उक्तसामपञ्चकात्मकत्वात्तस्य ॥ ११ ॥

अथ श्रायन्तीयं ब्रह्मसाम कार्यमिति विधित्सुः पक्षान्तरमुपन्यस्य (१)तत्र दोषमुद्भावयति—

**तस्य बृहत्पृष्ठं पङ्क्तिषु ब्रह्मसाम तदाहुश्छन्दो व्याधीयते यद्बृहत्पृष्ठं भवति पङ्क्तिषु ब्रह्मसामेति॥१२॥**

अस्मिन्नहनि बृहत्साम होतुः पृष्ठमित्युक्तं तस्याऽयमनुवादः । पङ्क्तिषु 'स्वादो रित्था विषूवत' इत्याद्यासु यत् प्रथमे साहस्र एकाहे ब्रह्मसाम विहितमत्राऽपि पङ्क्तिषु तदेव ब्रह्मसाम ब्रह्मणः पृष्ठस्तोत्रम् । तत्तत्र एवं क्रियमाणे सामद्वये आहुर्ब्रह्मवादिनश्चोदयन्ति । कथमिति ? यद्यपि बृहत् बृहत्साम बृहतीषु गीयमानं पृष्ठस्तोत्रं भवति, पङ्क्तिषु गीयमानं ब्रह्मसाम भवति तदा छन्दो व्याधीयते स्पष्टं विभिद्यते तस्माऽयुक्तमिति ॥ १२ ॥

---

१. तस्येति ख. पु.

किं तर्हि कार्यं तत्राह—

**आयन्तीयमेव कार्यं न छन्दो व्याधीयते ॥ १३ ॥**

आयन्तीयमेव स्वासु ब्रह्मसाम कार्य्यम्। तथा च बृहतो ब्रह्मसाम्नश्च बार्हते तृचे गानात् न छन्दो व्याधीयते भिद्यते ॥ १३ ॥

नन्वेवं पङ्क्तिं विहाय बृहत्यां ब्रह्मसाम्नि क्रियमाणे सहस्राक्षरसम्पत्तेरभावात् पूर्वोक्ता सहस्रप्रतिष्टुतिर्न स्यादित्यत आह—

**एषो सहस्रस्य प्रतिष्टुतिः ॥ १४ ॥**

एषो एषैव आयन्तीयस्य स्वासु स्तोत्रीयासु गानमेव सहस्रस्य दक्षिणारूपस्य गवां सहस्रस्य प्रतिष्टुतिः प्रतिस्तवनम् ॥ १४ ॥

ननूक्तं ब्रह्मसाम्नोऽक्षराणां सहस्रसंख्यापूर्त्यभावात् प्रतिष्टुतिर्न स्यादिति तत्राऽऽह—

**सहस्रमन्यमभितिष्ठतीत्याहुः सहस्रमन्योऽन्वातिष्ठतीति ॥ १५ ॥**

सहस्रं स्वयं अन्यं यज्ञमभितिष्ठति तत्रत्यब्रह्मसाम्नोऽक्षरसङ्ख्यया तमधितिष्ठते। अन्यस्तु यागः सहस्रमन्वातिष्ठतीति। (१)'हीने' अनोः कर्मप्रवचनीयत्वम्। सहस्रसंख्यातो न्यूनया ब्रह्मसाम्नोऽक्षरसंख्ययैव स्वयं सहस्रमधितिष्ठतीति ब्रह्मवादिन आहुः। एवमुभयथाऽपि सहस्रसम्बन्धसम्भवात् सहस्रस्य प्रतिष्टुतिः सिध्यतीत्यर्थः ॥ १५ ॥

कथमयं यज्ञः सहस्रमन्वातिष्ठतीति तत्राऽऽह—

**ककुभं प्राचीमुदूहत्यथ यदेषा द्विपदा ककुभो लोके क्रियते सहस्रस्यैव सोऽन्वास्थायः ॥ १६ ॥**

आभवपवमाने स्थितां 'पवस्व मधुमत्तम' इत्येतां ककुभं प्राचीमुदूहति प्राग्देशं माध्यन्दिनपवमानलक्षणं नयति। अथाऽऽनन्तरं तस्याः ककुभो लोके स्थाने यत्पवस्व सोमेत्येषा द्विपदा क्रियते प्रयुज्यते स च सहस्रस्याऽन्वास्थानम् ॥ १६ ॥

अथ स्तोत्रीयासङ्घातं संहृत्य स्तौति—

**अनुष्टुभमंसम्पद्यते वागनुष्टुब्वाक् त्रिरात्रस्तेन त्रिरात्रमाप्नोति ॥ १७ ॥**

---

१. पा. सू. १. ४. ८६.

अयमेकाहः संस्तुतोऽनुष्टुभं अनुष्टुप्छन्दस्सम्पद्यते । अत्र कल्पः— 'त्रिवृद् बहिष्पवमानं, पञ्चदशानि त्रीण्याज्यानि, त्रिवृन्मैत्रावरुणस्य' सप्तदशो माध्यन्दिनः पवमानो, होतुश्च पृष्ठं पञ्चदशं, एकविंशं मैत्रावरुणस्य, एकविंशं ब्राह्मणाच्छंसिनः, सप्तदशमच्छावाकस्य, सप्तदश आर्भवः, एकविंशोऽग्निष्टोम' इति । एवञ्च स्तोमक्लृप्तौ सत्यां प्रातस्सवने त्रिषष्टि स्तोत्रीया भवन्ति । माध्यन्दिने त्वेकनवतिः । तृतीयसवनेऽष्टत्रिंशत् । मिलित्वा द्व्यधिकनवतिशतं स्तोत्रीया भवन्ति । द्वात्रिंशदक्षराऽनुष्टुप् । तथा च द्वात्रिंशत्संख्यया विभज्यमाना षडनुष्टुभो भवन्ति । एवमनुष्टुभं सम्पद्यते अयं यज्ञः प्राप्नोति । अनुष्टुप् खलु वाक्संस्तुता, त्रिरात्रोऽपि वाक्संस्तुतः । तेन (१)अनुष्टुभा वाचा च त्रिरात्रं गर्गत्रिरात्राख्यं यज्ञक्रतुमाप्नोति तत् फलं प्राप्नोतीत्यर्थः ॥ १७ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षोडशाध्यायस्यैकादशः खण्डः ॥

---

## अथ द्वादश खण्डः ।

अथ साद्यस्का नाम पञ्चैकाहाः । तेषु प्रथमद्वितीययोर्दीक्षाप्रभृत्यवभृथान्तं सर्वमेकस्मिन्नेवाऽहन्यनुष्ठेयम् । तृतीयस्य तु एकस्मिन् दिवसे दीक्षा, परस्मिन् दिवसे सोमक्रयाद्यवभृथान्तम् । चतुर्थपञ्चमयोरप्येवम् । यद्वा एका दीक्षा सोमक्रयप्रभृत्युपवसथान्तं द्वितीयेऽहनि सुत्येत्येवं सूत्रकारमतम् । पञ्चस्वपि साद्यस्कान्वयात् सद्य एव एकस्मिन्नेवाऽहनि दीक्षाद्यवभृथान्तं कर्त्तव्यमिति मतान्तरम् । एतत्सर्वं(२) 'साद्यस्केण यक्ष्यमाणो महारात्रे प्रातराहुतिं हुत्वे'त्यादिना सूत्रकारेण विस्पष्टमुक्तम् । तत्र प्रथमस्य यदुक्तं सर्वं सद्योऽनुष्ठेयमिति तद्विधित्सुराह—

**आदित्याश्चाऽङ्गिरसश्चाऽदीक्षन्त ते स्वर्गे लोकेऽस्पर्द्धन्त तेऽङ्गिरस आदित्येभ्यः श्वः सुत्यां प्राब्रुवꣳस्त आदित्या एतमपश्यꣳस्तं सद्यः परिक्रीयाऽयासयमु-**

---

१. अनुष्टुब्द्वारेति ख. पु. २. लाट्या. श्रौ. ८. २. १.

**द्गातारं वृत्वा तेन स्तुत्वा स्वर्गं लोकमायन्नहीयन्ताऽङ्गि-रसः ॥ १ ॥**

पुरा आदित्याश्चाऽङ्गिरसश्च अदीक्षन्त यज्ञाय दीक्षां कृतवन्तः। ते उभे स्वर्गे लोके स्वर्गलोकनिमित्तमस्पर्द्धन्त—वयं प्रथमं गमिष्यामो वयं प्रथमं गमिष्याम इति स्पर्द्धां कृतवन्तः। एवं स्पर्द्धमानास्तेऽङ्गिरस आदित्येभ्यस्सुत्यां श्वः परस्मिन्दीक्षानन्तरदिने करिष्यमाणं सोमयागं प्राब्रुवन् प्रोक्तवन्तः। अथ ते आदित्या एतं वक्ष्यमाणं यज्ञमपश्यन्। तं यज्ञं सद्यः एकस्मिन्नेवाऽहनि परिक्रीय सोमं क्रीत्वा अयास्यमृषिमुद्गा-तारं वृत्वा त्वमुद्गाता भवेत्युद्गातृत्वेन वृत्वा तेनाऽयास्येन सर्वैः स्तोत्रैः स्तुत्वा स्तावयित्वा समापयन् दीक्षाद्यवभृथान्तं सर्वं कर्म एकस्मिन्ने-वाऽहनि अन्वतिष्ठन्नित्यर्थः। यज्ञसमाप्त्यनन्तरमेव ते स्वर्गं लोकमा-यन् प्राप्नुवन्। अङ्गिरसस्त्वहीयन्त, दीक्षानन्तरदिवसे सुत्येति तैरुक्त-त्वात्। एकस्मिन्नेव दिने दीक्षाद्यवभृथान्तस्य सर्वस्याऽननुष्ठानेन स्व-र्गप्राप्त्यभावात् सह दीक्षितैरादित्यैः सद्योऽनुष्ठानेन स्वर्गगतैर्हीनाः भूमावेव परित्यक्ताः आसन्॥ १ ॥

एवं सद्योऽनुष्ठेये यज्ञेऽधिकारिणमाह—

**भ्रातृव्यवान्यजेत ॥ २ ॥**

भ्रातृव्यः शत्रुस्तद्वाननेन यागेन यजेत। शत्रुक्षयहेतुरयं याग इत्यर्थः॥ २ ॥

अथैतद्वेदितुः फलमाह—

**भवत्यात्मना पराऽस्य भ्रातृव्यो भवति य एवं वेद ॥३॥**

य एवं ब्राह्मणार्थञ्जानाति स आत्मना स्वयमेव भवति भवनशील-स्समृद्धो भवति। अस्य यो भ्रातृव्यः शत्रुः स परा भवति पराभूतः तिरस्कृतो भवति ॥ ३ ॥

अथाऽस्मिन् यागे दक्षिणां विधित्सुराह—

**तस्मा अमुमादित्यमश्वꣳ श्वेतं कृत्वा दक्षिणामा-नयꣳस्ते प्रतिगृह्य व्यश्रꣳशत स एतान्यायास्यान्य-पश्यत्तैरात्मानꣳ समश्रीणात् ॥ ४ ॥**

तस्मै अयास्यायोद्गात्रे अमुं दृश्यमानमादित्यं श्वेतं शुक्लवर्णमश्वं

कृत्वा दक्षिणामानयन् क्रतुदक्षिणात्वेन प्रायच्छन् । तमश्वं प्रतिगृह्य सोऽयास्यो व्यभ्रंशत विभ्रष्टवीर्योऽभूत् । ततस्स ऋषिः एतानि इदानीं समाम्नायमानान्यायास्यानि सामान्यपश्यत् । तैर्दृष्टैस्सामभिरात्मानं समश्रीणात् वीर्येण समयोजयत् । तस्मात् श्वेताश्वोऽस्य क्रतोर्दक्षिणा । स चोद्गात्रे दातव्यः । इतरेऽप्यृत्विजो यथा सन्तोषमायान्ति तथा तेभ्यो यत्किञ्चित् धनं दद्यादिति विधिरुन्नेतव्यः । तदेतत्सूत्रकृतोक्तम्—(१)'अश्वः श्वेत एतस्य दक्षिणामुद्गात्रे दद्यात् किञ्चिच्चेतरेभ्य' इति ॥

यस्मादेवं तस्मादिदानीमप्यस्मिन् यज्ञे आयास्यं साम प्रयोक्तव्यमित्याह—

तदायास्यानि भवन्ति भेषजायैव शान्त्यै ॥ ५ ॥

यदेतेषु साधकेष्वेतान्यायास्यानि सामानि भवन्ति, तद्भेषजायैव अश्वप्रतिग्रहजनितस्य दोषस्य चिकित्साया एव, शान्त्यै उपशमाय च भवति । तथा चाऽस्मिन् यज्ञे माध्यन्दिनसवने दक्षिणारूपाश्वप्रतिग्रहजन्यदोषनिर्हरणाय आर्भवे पवमाने(२) 'इन्द्रमच्छे'त्यस्यां स्तोत्रीयायां आयास्यं साम कार्यम् । तथा चाऽस्याऽह्नः स्तोमस्तोत्रीयाविधाने कल्पकारेणोक्तम्—'उपास्मै गायता नरः, पवमानो अजीजनत्, पवमानस्य ते कवे, इममूषु त्वमस्माकमिति प्रक्रम्य स्वादिष्ठया मदिष्ठयेति गायत्रञ्च स्वाशिरामर्कञ्च, पवस्वेन्द्रमच्छेति सफायास्ये, पुरोजिती वो अन्धस इति श्यावाश्वान्धीगवे कावमन्त्यं यज्ञायज्ञीयमग्निष्टोमसामे'ति ॥ ५ ॥

अथाऽधिकार्य्यन्तरमाह—

स्वर्गकामो यजेत ॥ ६ ॥

स्पष्टोऽर्थः ॥ ६ ॥

अथैतस्य स्वर्गसाधनतामुपपादयति—

बृहतीᳬ सम्पद्यते बृहत्या वै देवाः स्वर्गं लोकमायन् स्वर्गमेवैतेन लोकमाप्नोति ॥ ७ ॥

अस्य यज्ञस्याऽग्निष्टोमसंस्थत्वात् द्वादशस्तोत्राणि । तेषु च सर्वेषु त्रिवृदेव स्तोमः । तथा च प्रतिस्तोत्रं नव स्तोत्रीया इति मिलित्वा अष्टोत्तरशतं स्तोत्रीया भवन्ति । षट्त्रिंशदक्षरा च बृहती । त-

१. लाट्या. श्रौ. ८. ३. १५.  २ सा. सं. उ. १. १. १७.

त्सङ्ख्यया विभज्यमानास्ता द्वात्रिंशतो बृहत्यो भवन्ति। एवञ्चाऽयमेकाहः बृहतीं सम्पद्यते। बृहत्या बृहतीच्छन्दसा साधनेन देवाः पुरा स्वर्गं लोकमायन्नगच्छन्। अतो बृहतीसम्पन्नेनैतेन स्वर्गमेव लोकमाप्नोति॥७॥

अथाऽन्यमधिकारिणमाह—

**पशुकामो यजेत ॥ ८ ॥**

स्पष्टोऽर्थः ॥ ८ ॥

(१)तथैव तस्य पशुसाधनत्वमुपपादयति—

**पशवो वै बृहती पशुष्वेव प्रतितिष्ठति ॥ ९ ॥**

छन्दांसि पशुः 'वाजिमजयंस्तान् बृहत्यजयत् तस्माद्बार्हताः पशव उच्यन्ते' इति ब्राह्मणान्तरात् बृहत्याः पशुरूपत्वम्। अतः पशुरूपाया बृहत्यास्सम्पत्तेः पशुष्वेव यजमानः प्रतितिष्ठतीति ॥ ९ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षोडशाध्यायस्य द्वादशः खण्डः ॥

---

## अथ त्रयोदशः खण्डः।

अथ द्वितीयं साद्यस्कमेकाहं दर्शयति—

**एतस्यैवैकविंᳪशमग्निष्टोमसाम कृत्वाऽऽमयाविनं याजयेत् ॥ १ ॥**

एतस्यैव पूर्वोक्तस्य यज्ञस्याऽग्निष्टोमसाम एकविंशं एकविंशस्तोमकं कृत्वा एतेनाऽऽमयाविनं रोगिणं यजमानं याजयेत्, यथा दर्शपूर्णमासयोर्गुणविकृता दाक्षायणयज्ञादयः, यथा वा अग्निष्टोमस्य गुणविकृता उक्थादयः, एवं अयं द्वितीयः साद्यस्कः पूर्वोक्त एव गुणविकृतः ॥ १ ॥

अथाऽस्य व्याधिनिर्हरणहेतुतामाह—

**प्राणो वै त्रिवृत्प्राण आदित्यः प्राणैरेष व्यृध्यते य आमयावी प्राणैरेवैनᳪ समर्द्धयति ॥ २ ॥**

---

१. अथैतस्येति. ख. पु.

अस्मिन् हि यागे बहिष्पवमानादौ प्रथमं त्रिवृत्स्तोमः प्रयुज्यते स च प्राणसंस्तुतः। प्राणश्चाऽऽदित्यः,स हि सर्वेषां भूतानां प्राणनहेतुः। (१)'योऽसौ तपन्नुदेति स सर्वेषां भूतानां प्राणानादायोदेती'ति श्रुतेः। य आमयावी व्याधिग्रस्तः एष प्राणैः व्यृध्यते वियुज्यते। एवञ्च प्राणसंस्तुतेन त्रिवृत्स्तोमकेनाऽनेनैनं आमयाविनं पुनः प्राणैरेव समर्द्धयति॥२॥

अथ प्रकारान्तरेण आमयाव्यधिकारमुपपादयति—

**विराजꣳ सम्पद्यतेऽप वा एतस्मादन्नाद्यं क्रामति य आमयाव्यन्नं विराडन्नाद्यमेवाऽस्मिन् दधाति ॥ ३ ॥**

अयं द्वितीयः साद्यस्को विराजं छन्दः सम्पद्यते। अस्य हि अग्निष्टोमसामव्यतिरिक्तान्येकादश त्रिवृन्ति स्तोत्राणि। तेषु नवनवतिस्तोत्रीया भवन्ति। एकविंशस्तोमकमग्निष्टोमसामेति विंशतिशतं स्तोत्रीया भवन्ति। 'दशाक्षरा विराडि'ति दशसङ्ख्यया विभागे सति विराट्सम्पत्तिः। य आमयावी रोगी एतस्मात् अन्नाद्यं अन्नस्याऽदनमपक्रामति अपगच्छति। स्पष्टमन्यत् ॥ ३ ॥

अथाऽग्निष्टोमसाम्न एकविंशतिस्तोमतामनूद्य आमयाविनः प्रतिष्ठाहेतुतामाह—

**एकविꣳशोऽग्निष्टोमो भवत्यप्रतिष्ठितो वा एष य आमयावी प्रतिष्ठैकविꣳशः प्रत्येव तिष्ठति ॥ ४ ॥**

एकविंशस्तोमकमग्निष्टोमसाम भवति। य आमयावी रोगी एषोऽप्रतिष्ठितः प्रतिष्ठारहितः। गतमन्यत् ॥ ४ ॥

अथाऽपरावधिकारिणावाह—

**एतेनैवाऽन्नाद्यकामो वा प्रतिष्ठाकामो वा यजेताऽन्नं विराट् प्रतिष्ठैकविꣳशोऽस्यान्नं प्रतितिष्ठति ॥ ५ ॥**

अन्नाद्यमदनीयमन्नं कामयमानो वा प्रतिष्ठाकामो वा एतेनैव साद्यस्केण यजेत। अयं हि विराट्सम्पन्न इत्युक्तम्। सा च विराट् अन्नं अन्नात्मिका। अतोऽन्नाद्यकामोऽन्नमत्ति अत्तुं योग्यो भवति, अग्निष्टोमसाम्नः एकविंशस्तोमकत्वात् प्रतिष्ठाकामोऽपि प्रतितिष्ठति। अथैतस्य स्तोमक्लृप्तिः कल्पकारोक्ता प्रदर्श्यते—'तस्यैकविंशमग्निष्टोमसामोभौ त्रिवृतावे'ति। उभौ प्रथमद्वितीयावेतौ साद्यस्कौ त्रिवृत्स्तोमकौ, द्वितीये त्वग्निष्टोमसामैकविंशस्तोमकमिति तस्यार्थः ॥ ५ ॥

---

१. तै. आ. १. १४. १.

अथ साद्यस्क्राणां साधारणधर्मा विधास्यन्ते। यद्यप्येते प्रथमसाद्यस्क्रानन्तरमेव वक्तव्याः, तथाऽपि तस्यैवाऽयं द्वितीयः साद्यस्को गुणविकार इत्यभिप्रेत्य विकारसहितस्य तस्याऽनन्तरं धर्म्माणां प्रतिपादनम्। तथा च सूत्रकारेणोक्तम्—(१)'उर्वरा वेदिरिति प्रथम' इति। अयमर्थः—उर्वरा वेदिरित्याद्यङ्गजातं वक्ष्यमाणं प्रथमेऽपि साद्यस्के द्रष्टव्यम्, न केवलमस्मिन्नेवेति। (२)'ततो यन्नवनीतमुदियात्तदाज्येऽपि कार्यं सद्यस्त्वाये'ति आम्नास्यमानत्वात् साद्यस्कतैव धर्म्मान्वयहेतुः नाऽन्यत्। साद्यस्कता च प्रथमादीनां सर्वेषां समानेति सर्वत्र वक्ष्यमाणा धर्म्माः कर्त्तव्या इति। तत्र वेदिं विधाय स्तौति—

**उर्वरा वेदिर्भवत्येतद्वा अस्या वीर्य्यवत्तमं वीर्य्येणैव यज्ञꣳ समर्द्धयति ॥ ६ ॥**

उर्वरा सर्वसस्याढ्या। (३)'यवोर्वरा पक्वा स्याद्व्रीह्युर्वरा वे'ति सूत्रकृतोक्तत्वात् व्रीहियवयोरन्यतरेण परिपक्वेन सस्येनाऽऽढ्या भूमिर्वेदिर्भवति। एतत् खलु स्थानं अस्याः पृथिव्या वीर्य्यवत्तमं अतिशयेन वीर्य्यवत्। अतो वीर्य्येणैव यज्ञं समर्द्धयति समृद्धं करोति उर्वरां वेदिं कुर्वन् ॥

अथोत्तरवेदिस्थानं विधत्ते—

**खल उत्तरवेदिरत्र हि स रसः समवैति सरसमेव यज्ञं करोति ॥ ७ ॥**

तस्यामुर्वरायां परिपक्वा व्रीहियवा यस्मिन् स्थाने स्तम्बेभ्यो विविच्यन्ते स खल उत्तरवेदिः। अत्र हि स्थाने स प्रसिद्धः व्रीहियवानां रसः समवैति समवेतो भवति (४)धान्यसारस्याऽत्राऽवस्थानात्। तथा च सरसं रससहितमेव यज्ञं करोति ॥ ७ ॥

अथ यूपं विधत्ते—

**खलेवाली यूपो भवत्येतया हि तꣳ रसमुत्कृषन्ति ॥ ८ ॥**

खलमध्ये निखाता मेढी खलेवाली। स एव यूपो भवति। एतया हि खलेवाल्या तं खले समवेतं रसं उत्कृषन्ति उद्गमयन्ति। अयं वाक्यशेषो खलेवाली मेढीत्यस्मिन् पक्षे न सङ्गच्छत इत्यभिप्रेत्यैतद्वाक्यमनूद्य (५)'लाङ्गलेषा यूपः स्यादि'ति सूत्रकृता व्याख्यातम्। लाङ्गलसम्ब

---

१. लाट्या. श्रौ. ८. ३. ४. २. तां. ब्रा. १६. १३. १३.

३. लाट्या. ८. ३. ४. ४. धान्यराशेस्तत्रेति ख. पु.।

५. लाट्या. श्रौ. ८. ३. ६.

न्धिनी ईषा दण्डो यूपः कार्य्य इति । तस्य च कर्षणसाधनत्वात् भूगतं रसं तेनोत्कृषन्ति कर्षका इति सङ्गतिर्भवति ॥ ८ ॥

अथ सोमक्रयसाधनं द्रव्यं विधत्ते—

**त्रिवत्सः साण्डः सोमक्रयणः सेन्द्रत्वाय ॥ ९ ॥**

ईषदपरिसमाप्तत्रिवर्षस्य त्रिवत्स इति (१)योगिकी संज्ञा । यद्वा यो वत्सः तिस्रो धेनूर्धयेत् स तिसृणां वत्सत्वात् त्रिवत्सः । यद्वा वत्सरपदस्याऽन्त्यवर्णलोपः त्रिवत्सः (२)त्रिवर्ष इत्यर्थः । एतत्पक्षत्रयं सूत्रकृतोक्तम्—(३)'बहुत्रिवर्षस्य जानपदो त्रिवत्सः' 'यो वा तिस्रो धयेत्' 'त्रिवर्षो वैव स्यादि'ति । स च त्रिवत्सः साण्डः समुष्कः सोमक्रयणः सोमक्रयसाधनं द्रव्यम्, ईदृशेन गवा सोमः क्रेतव्य इत्यर्थः । स चाऽण्डसहितत्वेन वर्षणसमर्थत्वात् इन्द्रस्य च वर्षितृत्वात् सेन्द्रत्वाय इन्द्रसाहित्याय भवति ॥ ९॥

अथैतेषु साद्यस्केषु प्राच्यादिचतुर्दिगवस्थितान् महर्त्विज आनेतुं सोमप्रवाकाणां गमनं विधत्ते—

**सर्वा दिशोऽश्वरथाः सोमप्रवाका विधावन्ति ॥१०॥**

अत्र सूत्रम्-(४) 'प्राञ्चं होतारं वहेयुरुदञ्चमुद्गातारं प्रत्यञ्चमध्वर्युं दक्षिणा ब्रह्माणमि'ति । अयमर्थः–अश्वरथाः अश्वयुक्तरथसहिताः सोमप्रवाकाः सोमस्य प्रवक्तारो यजमानपुरुषाः सर्वाश्चतस्रो दिशः विधावन्ति वक्ष्यमाणप्रकारेण गच्छेयुः। गत्वा च प्राच्यां दिश्यवस्थितं होतारं रथे आरोप्य तत्रत्यः सोमप्रवाकः प्राङ्मुखं तमानयेत् । एवमन्यास्वपि दिक्षु अन्ये सोमप्रवाकाः कुर्य्युः ॥ १० ॥

किमतस्तदाह—

**सर्वाभ्य एवाऽस्मै दिग्भ्योऽन्नाद्यमवरुन्धे ॥ ११ ॥**

एवं सर्वासु दिक्षु विधावनात् सर्वाभ्य एव दिग्भ्यः सकाशात् अस्मै यजमानाय अन्नाद्यमवरुन्धे प्राप्नोति ॥ ११ ॥

कस्यां दिशि केन रथेन कियत्परिमाणं धावनमिति क्रमेण सर्वमाह-

**योजने चतुर्वाहिणा प्राच्यां दिशि प्राहैवमिव वा अध्वानो विमिता यैवाऽध्वनो मात्रा तां धावयन्ति त्रैपदे**

१. लौकिकी संज्ञेति ख. पु. २. त्रिवत्सर इति ख. पु.

३. लाट्या. श्रौ. ८. ३. ९--११. ४. लाट्या. श्रौ. ८. ३. १२.

प्रष्टिवाहिनोदीच्यां गव्यूतौ द्योगेन प्रतीच्यां क्रोशे स्थूरिणा दक्षिणैतद् वै दिशाᳬं रूपं यदेव दिशाᳬं रूपं तेन यज्ञᳬं समर्द्धयन्ति ॥ १२ ॥

चतुर्वाहिणा चत्वारो वाहा यस्मिन् युज्यन्ते स चतुर्वाही । तादृशेन रथेन प्राच्यां दिशि योजने क्रोशचतुष्टयपरिमिते दूरे धावेत् । अहेति प्रसिद्धौ । एवमिव खल्वध्वानो मार्गाः प्रकर्षेण विमिता अतिदीर्घोऽध्वा पञ्चयोजनो दशयोजनः शतयोजन इति योजनप्रमाणेनैव परिच्छिद्यत इत्यर्थः । तस्माद्योजनपरिमितं दूरं गच्छेदित्यर्थः । तथा च यैव खल्वध्वनो मार्गस्य मात्रा प्रमाणं तां धावयन्ति प्राप्नुवन्ति । उदीच्यामुत्तरदिशि त्रेपदे त्रिपाद्योजने क्रोशत्रयपरिमिते दूरे प्रष्टिवाहिना, अश्वत्रययुक्तो रथः प्रष्टिवाही, तेन रथेन धावेयुः । तथा प्रतीच्यां दिशि गव्यूतौ क्रोशद्वयपरिमिते दूरे द्योगेन अश्वद्वययुक्तेन रथेन च वहेयुः । दक्षिणा दक्षिणस्यां दिशि क्रोशपरिमिते दूरे स्थूरिणा एकाश्वयुक्तेन रथेन वहेयुः । एवं रथविशेषैः प्राच्यादिदिक्षु योजनादिदूरं गत्वा तत्रत्यानां महर्त्विजा सोमं प्रोच्य सोमप्रवाकास्तान् रथेष्वारोप्य प्रागुक्तरीत्या नयेयुरित्यर्थः । यदेतच्चतसृषु दिक्षु रथाध्वनोर्विशेषप्रतिपादनं एतत् खलु तासां दिशां रूपम् । तथा च यद्वै दिशां रूपं तेन यज्ञं समर्द्धयन्ति समृद्धं कुर्वन्ति ॥ १२ ॥

अथाऽन्यदङ्गं विधत्ते—

सक्षीरदृतयो रथा भवन्ति ततो यन्नवनीतमुदियात्तदाज्येऽपि कार्यᳬं सद्यस्त्वाय ॥ १३ ॥

ते च रथाः सक्षीरदृतयः सद्योदुग्धेन क्षीरेण पूर्णाः सक्षीरास्ता दृतयो येषु रथेषु तथाविधा भवेयुः । ततः तस्मात् क्षीरात् रथयोगसङ्घट्टनेन यन्नवनीतं फेनो वा उदियात् उद्गच्छेत् तदाज्येऽपि कार्यं संसर्जनीयम । किमर्थम् ? पूर्वसिद्धमप्याज्यं सद्यो निष्पन्नेन नवनीतेन संसर्जनात् सद्यस्सिद्धमेव भवतीत्यर्थः । तदुक्तं सूत्रकारेण–(१)'ततो यन्नवनीतमुदियात् फेनो वा तदाज्येऽपि सृजेयुरि'ति ॥ १३ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षोडशाध्यायस्य त्रयोदशः खण्डः ॥

---

१. लाट्या. श्रौ. ८. ३. १४.

## अथ चतुर्दशः खण्डः ॥

अथाऽन्यं साद्यस्क्रमेकाहं दर्शयति—

**अथैषोऽङ्गिरसामनुक्रीः ॥ १ ॥**

अथाऽनन्तरमेष वक्ष्यमाण अङ्गिरसामृषीणां सम्बन्धी अनुक्रीर्नाम साद्यस्क एकाहः ॥ १ ॥

अथाऽस्मिन्नधिकारिणमाह—

**एतेन वा अङ्गिरस आदित्यानाप्नुवन् यो हीन आनुजावर इव स्यात् स एतेन यजेताऽऽप्नोति पूर्वेषां प्रहामाप्नुवन् ह्येतेनाऽऽङ्गिरस आदित्यान् ॥ २ ॥**

एतेन खलु यज्ञेन आङ्गिरस ऋषयः आदित्यान् सह दीक्षित्वैकस्मिन्नेव दिने यागं समाप्य पूर्वमेव स्वर्गं गतान् पश्चादाप्नुवन्। अतोऽस्य यज्ञस्याऽऽङ्गिरसां सम्बन्धः। तस्माद्यो यजमानः हीनो निकृष्ट आनुजावर इव अनुजादप्यवर इव स्यात् स एतेन यजेत स यजमानः पूर्वेषां स्वस्मादधिकानां यजमानानां प्रहां प्रहाणं आप्नोति पूर्वे ये स्वस्माद्गुणैरधिकास्तेऽपि यथा प्रहीना भवन्ति तथा स्वयमुत्कृष्टो भवतीत्यर्थः। हि यस्मात् हीना अङ्गिरसः एतेन यागेन आदित्यानधिकानाप्नुवन् तत्साम्यमगच्छन्नित्यर्थः ॥ २ ॥

अथाऽस्य माध्यन्दिनार्भवयोः पवमानयोः स्तोमक्लृप्तिं विधत्ते—

**तस्य चतुर्विंशौ पवमानौ ॥ ३ ॥**

तस्याऽनुक्रीसंज्ञस्य चतुर्विंशौ चतुर्विंशस्तोमकौ पवमानौ। यद्यपि बहिष्पवमानस्य प्राथम्यात्तस्य माध्यन्दिनपवमानस्य च चतुर्विंशस्तोमविधानमिति व्याख्यानं न्याय्यम्, तथाऽपि कल्पकृता 'चतुर्विंशावुत्तरौ पवमानावि'ति कल्पितत्वात् माध्यन्दिनार्भवयोरेतत् स्तोमविधानम्॥

तदेतत् स्तौति—

**चतुर्विंꣳशत्यक्षरा गायत्री गायत्र्या वै देवा इमान् लोकान् व्याप्नुवन्निमानेवैतेन लोकान् व्याप्नोति ॥ ४ ॥**

चतुर्विंशस्तोमे चतुर्विंशतिसङ्ख्या विद्यते। गायत्री चतुर्विंशत्यक्षरा गायत्र्यैव छन्दसा साधनेन देवाः पुरा इमान् पृथिव्यादिलोकान्

व्याप्नुवन् । तत्संख्यासाम्यादेतेन चतुर्विंशस्तोमेन इमानेव लोकान् यजमानो व्याप्नोति ॥ ४ ॥

अथैतत्प्रकारान्तरेण स्तौति—

तेजो ब्रह्मवर्चसं गायत्री तेज एव ब्रह्मवर्चसमवरुन्धे प्राणो गायत्री प्रजननं प्राणादेव गायत्र्याः प्रजायते ॥ ५ ॥

येयं गायत्री सा तेजोरूपा ब्रह्मवर्चसरूपा च, प्रजापतेर्मुखादग्निना ब्राह्मणजात्या च सहोत्पत्तेः । तथा च गायात्रीसंस्तुतेन चतुर्विंशस्तोमकेन तेजश्च ब्रह्मवर्चसञ्च यजमानोऽवरुन्धे । तथा प्राणरूपा गायत्री प्रजननं प्रजासाधनञ्च । एवञ्च प्राणात् प्राणरूपाया एव गायत्र्यास्सकाशात् प्रजायते पुत्रपौत्रादिरूपेणोत्पद्यते ॥ ५ ॥

अथाऽस्य यज्ञस्य प्रकारान्तरेण प्रजासाधनतामाह—

उभये स्तोमा युग्मन्तश्चायुजश्च तन्मिथुनं तस्मान्मिथुनात्प्रजायते ॥ ६ ॥

उभये उभयविधा युग्मन्तश्च युक्संख्याकाः, अयुजश्च विषमसंख्याकाश्च स्तोमा भवन्ति । अस्य च पवमानयोश्चतुर्विंशस्तोमो विहितः । स च समसंख्याकः । एकविंशोऽग्निष्टोमसाम्नि विधास्यते, स विषमसंख्याकः । अन्येषु स्तोत्रेषु कल्पकारेण 'समानमितरत् पूर्वेण सस्तोममि'ति द्वितीयसाद्यस्कसम्बन्धिनः स्तोमस्याऽतिदिष्टत्वात् त्रिवृत्स्तोमः, एवमुभयविधा स्तोमा भवन्ति । तन्मिथुनं स्त्रीपुंसात्मकम् । तस्मान्मिथुनात् प्रजायते यजमानस्याऽपत्यपुत्रपौत्रादिरुत्पद्यते ॥ ६ ॥

अथ स्तोत्रीयासङ्ख्यासम्पत्तिद्वारेण स्तौति—

विराजꣳसम्पद्यतेऽन्नं विराडन्नाद्यमेवाऽवरुन्धे ॥७॥

अस्य यज्ञस्य स्तोत्रीयासमुदायः विराजं छन्दस्सम्पद्यते । अग्निष्टोमसंस्थो ह्ययं तत्र नवानां स्तोत्राणां त्रिवृत्स्तोमकत्वात् एकाशीतिस्तोत्रीया भवन्ति । द्वयोश्चतुर्विंशत्वात् अष्टाचत्वारिंशत्, अग्निष्टोमसाम्न एकविंशतिरिति । एवं पञ्चाशदधिकं शतं स्तोत्रीया भवन्ति । एवं दशसंख्यया विभज्यमाने साम्याद्विराट्सम्पत्तिः । शिष्टं स्पष्टम् ॥ ७ ॥

अथाऽग्निष्टोमसाम्न एकविंशस्तोमं विधाय स्तौति—

**एकविꣳशोऽग्निष्टोमो भवति प्रतिष्ठा वा एकविꣳशोऽन्तत एव यज्ञस्य प्रतितिष्ठति ॥ ८ ॥**

एकविंशः एकविंशस्तोमकोऽग्निष्टोमो भवति । गतमन्यत् ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षोडशाध्यायस्य चतुर्दशः खण्डः ॥

---

## अथ पञ्चदशः खण्डः ॥

अथ चतुर्थं साद्यस्कमेकाहं दर्शयति—

**अथैष विश्वजिच्छिल्पः ॥ १ ॥**

अथाऽनन्तरमेष वक्ष्यमाणः विश्वजिन्नामाऽन्यः साद्यस्क एकाहः । स च शिल्पश्चित्रभूतः । तस्य च शिल्पत्वं ऐकाहिकस्य विश्वजितः शिल्पत्वव्याख्यानेन पूर्वकृतेन व्याख्यातम् ॥ १ ॥

अथैतस्य वेदितुः फलमाह—

**शिल्पं वा एष स्तोमानां पश्यति गृहे शिल्पं य एवं वेद ॥ २ ॥**

स्तोमानां स्तोमसाध्यानां एषः यज्ञः शिल्पं ये सर्वपृष्ठत्वात् सर्वस्तोमकत्वात् सर्वस्वदक्षिणत्वाच्चाऽऽश्चर्यभूतः । य एवमस्य शिल्पं वेत्ति सः स्वकीये गृहे शिल्पं चित्रं पश्यति ॥ २ ॥

अथाऽस्य माध्यन्दिनार्भवयोः पवमानयोः स्तोमं विधत्ते—

**तस्याऽष्टादशौ पवमानौ ॥ ३ ॥**

तस्य साद्यस्कस्य विश्वजितः अष्टादशावष्टादशस्तोमकौ माध्यन्दिनार्भवपवमानौ कार्य्यौ ॥ ३ ॥

अथ रथसाम्येनेमं यज्ञं स्तौति—

**चक्रीवान्वा एष यज्ञः कामाय यं कामं कामयते तमेतेनाऽभ्यश्नुते यत्र हि चक्रीवता कामयते तदभ्यश्नुते ॥ ४ ॥**

चक्रीवान्वै चक्रयुक्तो रथ एवैष यज्ञः कामाय फलप्राप्त्यै। अतो यं कामं कामयते यजमानस्तमेतेन यज्ञेनाऽभिप्राप्नोति। यत्र हि यस्मिन् खलु विषये चक्रीवता रथेन पुरुषः कामयते तदभ्यश्नुते प्राप्नोति। तस्माच्चक्रीवत्संस्तुतेनाऽपि यज्ञेन फलप्राप्तिरिति ॥ ४ ॥

अथाऽस्मिन्नधिकारिणमाह—

**स्वर्गकामो यजेत ॥ ५ ॥**

स्पष्टोऽर्थः ॥ ५ ॥

अथैतत्स्वर्गफलत्वमुपपादयति—

**स्वर्गो लोकः पृष्ठानि स्वर्गमेवैतेन लोकमाप्नोति ॥६॥**

सर्वपृष्ठो हि विश्वजित् पूर्वमनुक्रान्तः। अत्राऽपि विश्वजिन्नाम्ना इतराङ्गवत्सर्वपृष्ठत्वमप्यतिदिश्यते। तस्माद्रथन्तरादीनि षट्पृष्ठसामान्यत्र प्रयोज्यानि। तानि च पृष्ठानि स्वर्गो लोकः केवलैन्द्रत्वात् स्वर्गलोकात्मकानि। तस्मादेतेन सर्वपृष्ठेन विश्वजिता स्वर्गमेवाऽऽप्नोति॥

अथ प्रकारान्तरेणाऽस्य सर्वपृष्ठतां स्तौति—

**तेजो ब्रह्मवर्चसं पृष्ठानि यदेकधा पृष्ठानि भवन्त्येकधैवाऽस्मिँस्तेजो ब्रह्मवर्चसं दधाति ॥ ७ ॥**

तेजोरूपाणि ब्रह्मवर्चसरूपाणि च पृष्ठानि, रथन्तरस्य तावत् प्रजापतिमुखात् अग्निना ब्राह्मणजात्या च सहोत्पत्तेस्तेजोरूपत्वं ब्रह्मवर्चसरूपत्वञ्च। तत्कार्यकारित्वेन तत्साम्यादितरेषामपि बृहदादीनां पृष्ठानां तेजोब्रह्मवर्चसरूपता। यद्यस्मादेकधा सह अस्मिन्रथन्तरादीनि षट् पृष्ठानि भवन्ति। एकधैव एकयज्ञेनैवाऽस्मिन् यजमाने तेजो ब्रह्मवर्चसञ्च दधाति ॥ ७ ॥

अथ प्रकारान्तरेण स्तौति—

**अन्नं पशवः पृष्ठानि यदेकधा पृष्ठानि भवन्त्येकधैवाऽस्मिन्नन्नाद्यं पशून् दधाति ॥ ८ ॥**

वैराजस्याऽन्नरूपत्वं पूर्वमुक्तम्। तथा शाक्वररैवतयोरपि पशुरूपत्वं प्रागुक्तम्। तत्सम्बन्धादितरेषामन्नपश्वात्मकता। शिष्टं पूर्ववद्योज्यम् ॥ ८ ॥

अथाऽस्य स्तोत्रद्वयं एकविंशस्तोमं विधातुमाह—

**तदाहुर्नानालोकानि पृष्ठानि यदेकस्मिन्यज्ञक्रतौ**

**समवरुध्यन्त ईश्वरो यजमानोऽप्रतिष्ठग्गोरिति ॥ ९ ॥**

तत्तस्मिन् विश्वजिद्विषये आहुश्चोदयन्ति ब्रह्मवादिनः । कथमिति ? यान्येतानि पृष्ठानि रथन्तरादीनि एतानि नानालोकानि विभिन्नस्थानानि, दशरात्रस्याऽऽदितः षट्स्वहस्सु तेषां रथन्तरादीनां विभुज्यैकैकस्य प्रत्यहं विनियुक्तत्वात् । तथा चैकस्मिन्यज्ञक्रतौ यदि एतानि सर्वाणि सामानि समवरुध्यन्ते सह प्रयुज्येरन् तर्हि यजमानोऽप्रतिष्ठातोः अप्रतिष्ठातुं अप्रतिष्ठानमनाश्रयं गन्तुं ईश्वरः शक्तस्स्यात् स्वकीयस्थानेभ्यः पृष्ठानाञ्चालितत्वादिति ॥ ९ ॥

कस्तर्ह्यस्य दोषस्य परिहार इत्यत आह—

**एकविꣳशꣳ होतुः पृष्ठं भवति प्रतिष्ठा वा एकविꣳशो मध्य एव यज्ञस्य प्रतितिष्ठत्येकविꣳशोऽग्निष्टोमो भवति प्रतिष्ठा वा एकविꣳशोऽन्तत एव यज्ञस्य प्रतितिष्ठति ॥ १० ॥**

होत्राऽनुशंसनीयं पृष्ठं होतुः पृष्ठम् । तदेकविंशस्तोमकं भवति । प्रतिष्ठारूपो ह्येकविंशस्तोमः प्रतिष्ठाहेतोः प्रजापतिपादप्रदेशादुत्पत्तेः । इदं हि स्तोत्रं यज्ञस्य मध्यम् । तथा च प्रतिष्ठाहेतुनैकविंशेन यज्ञस्य मध्यतो मध्यदेश एव प्रतितिष्ठति । अपि चाऽग्निष्टोमोऽग्निष्टोमसामाऽपि एकविंशः एकविंशस्तोमकं भवति । गतमन्यत् ॥ १० ॥

अथैतयोरेकविंशयोर्द्वित्वसंख्यामुपजीव्य स्तौति—

**द्वावेतावेकविꣳशौ भवतो द्विपाद्यजमानो यजमानमेव यज्ञे पशुषु च प्रतिष्ठापयति ॥ ११ ॥**

पूर्वोक्तावेतौ एकविंशौ द्वौ भवतः । यजमानश्च द्विपात् पादद्वययुक्तः । तथा च द्वित्वसंख्यया यज्ञे पशुषु च प्रतिष्ठापयति प्रतिष्ठितं करोति । द्वयोरेकविंशयोः प्रशंसा उद्गातेत्यर्थः ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे षोडशाध्यायस्य पञ्चदशः खण्डः ॥

---

## अथ षोडशः खण्डः ॥

अथ श्येनाख्यः पञ्चमः साद्यस्कः कल्पकारेण क्लृप्तः षड्विंशब्राह्मणे विधास्यते । अथैकत्रिकाख्यं षष्ठं साद्यस्कं दर्शयति—

**अथैष एकत्रिकः प्रजापतेरुद्भित् ॥ १ ॥**

एकया तिसृभिश्च स्तोत्रीयाभिः स्तोमक्लृप्तिर्यस्य स एकत्रिकः । एष एकत्रिकाख्यो यज्ञः प्रजापतेर्विधातुः सम्बन्धी उद्भित फलोद्भेदनसाधनम् । अयमपि शौचिवृक्षिमतेन साद्यस्कत्वात् एकस्मिन्नेव दिनेऽनुष्ठेय इति पूर्वमुक्तम् । मतान्तरमपि सूत्रकारेणोक्तम्—(१)'एकदीक्षस्त्र्युपसत्क इति गौतम' इति ॥ १ ॥

अथैतस्य प्रजापतेरुद्भित्त्वमुपपादयति—

**एतेन वै प्रजापतिरेषां लोकानामुदभिनत् ॥ २ ॥**

एतेन खलु यज्ञेन प्रजापतिः स्रष्टा एषां पृथिव्यादिलोकानां सम्बन्धीनि वस्तून्युदभिनत् उद्भिन्नवान् (२)निर्मितवान् ॥ २ ॥

अथैतं प्रकारान्तरेण स्तौति—

**कृतस्तोमो वा एष उद्भिन्नꣳ ह्येव कृतस्य ॥ ३ ॥**

एष यागः कृतस्तोमो वै कृतो निष्पन्नः स्तोमो यस्य स तथोक्तः । अस्य हि षट्सु स्तोत्रेषु एकैव स्तोत्रीया अपरेषु षट्सु तिस्रस्तिस्र इति स्तोमान्तरवत् आवृत्त्या निष्पत्त्यनपेक्षत्वात् । तथा च कृतस्य तृतीयार्थे षष्ठी कृतेन हि तेन सर्वं फलं उद्भिन्नं निष्पन्नमेव भवति ॥३॥

अथैतस्य पूर्वोक्तां स्तोमक्लृप्तिं विधाय स्तौति—

**यदेकया स्तुवन्त्येको वै प्रजापतिः प्रजापतिमेवाऽऽप्नोत्यथ यत्तिसृभिस्त्रय इमे लोका एष्वेव लोकेषु प्रतितिष्ठति ॥ ४ ॥**

बहिष्पवमानादीनां मध्ये षट्सु स्तोत्रेषु एकयैव स्तोत्रीयया स्तुवन्ति । यदेतत् स्तवनं तेन प्रजापतिमेवाऽऽप्नोति । कुतः ? एको वै एक एव खलु प्रजापतिः सर्वकारणभूतः, एकैव स्तोत्रीयेति उभयोस्साम्या-

---

१. लाट्या. श्रौ. ८. ५. १९.  २. इदं खपुस्तके नाऽस्ति ।

त् । अथ एकस्तोत्रानन्तरं यत् तिसृभिः स्तुवन्ति त्रय इमे लोका एष्वेव लोकेषु प्रतितिष्ठति यत्तिसृभिः स्तोत्रीयाभिः स्तुवन्ति इमे पृथिव्यादयस्त्रयो लोकाः तस्मात्तेन तिसृभिः स्तवनेन एष्वेव लोकेषु यजमानः प्रतिष्ठितो भवति । अयमर्थः—त्रिकस्तोमं बहिष्पवमानं एकस्तोमं तदनन्तरमाज्यम् । एवं व्यत्यासमस्य द्वादशस्तोत्राणि भवन्तीति । अत्र (१)'त्रिकं बहिष्पवमानं स्यादिति धानञ्जय्य' इत्यादिनान्येऽपि पक्षास्सूत्रकारेणोक्ताः, तेऽपि द्रष्टव्याः ॥ ४ ॥

अथैतास्संहृत्य स्तौति—

**ता उ चतस्रस्सम्पद्यन्ते चतुष्पादाः पशवः पशुष्वेव प्रतितिष्ठति ॥ ५ ॥**

ता उ ता एव पूर्वोक्तास्स्तोत्रीयाश्चतस्रस्सम्पद्यते, एका तिस्रश्च मिलित्वा चतस्र ऋचो भवन्ति । स्पष्टमन्यत् ॥ ५ ॥

अथ सर्वस्तोत्रगतस्तोत्रीयासम्पत्तिद्वारेण स्तौति—

**गायत्रीᳬ सम्पद्यते तेजो ब्रह्मवर्चसं गायत्री तेज एव ब्रह्मवर्चसमवरुन्धे ॥ ६ ॥**

एष संस्तुतो गायत्रीच्छन्दस्सम्पद्यते षण्णां स्तोत्रीयाणामेकस्तोमत्वात् षट्स्तोत्रीयाः । अवशिष्टेषु षट्सु त्रिकस्तोम इत्यष्टादशस्तोत्रीयाः । मिलित्वा चतुर्विंशतिस्तोत्रीया भवन्ति । 'चतुर्विंशत्यक्षरा गायत्री'ति सङ्ख्यासाम्याद्गायत्रीसम्पत्तिः । गतमन्यत् ॥ ६ ॥

प्रकारान्तरेण गायत्रीसम्पत्तिं स्तौति—

**प्राणो गायत्री प्रजननं प्राणादेव गायत्र्याः प्रजायते ॥ ७ ॥**

एतदपि सिद्धम् ॥ ७ ॥

अथाऽस्याऽऽर्भवपवमाने स्तोत्रीयां विधत्ते—

**(२)"अया रुचा हरिण्या पुनान" इत्यार्भवः पवमानः॥८॥**

---

१. लाट्या. श्रौ. ६. ५. २३.

२. अया रुचा हरिण्या पुनानो विश्वा द्वेषांसि तरति सयुग्वभिस्सूरो न सयुग्वभिः ।
धारा पृष्ठस्य रोचते पुनानो अरुषो हरिः ॥
विश्वा यद्रूपा परियासि ऋक्वभिस्सप्तास्येभिर्ऋक्वभिः ॥

सा. सं. उ. ६. १. १०.

'अया रुचे'त्येषाऽतिच्छन्दस्का स्तोत्रीया आर्भवः पवमानो भवति ॥
अथैनां स्तौति—

**सर्वेषां वा एषा छन्दसाꣳ रूपꣳ सर्वेष्वेव छन्दस्स्वार्भवं पवमानं प्रतिष्ठापयति ॥ ९ ॥**

अस्याऽतिच्छन्दस्त्वेन गायत्र्यादीनां सर्वेषां छन्दसामन्तर्भावात् एषा सर्वछन्दसां रूपं स्वरूपभूता। तथा चैनामार्भवपवमानस्तोत्रीयां कुर्वन् सर्वेष्वेव छन्दस्स्वार्भवं पवमानं प्रतिष्ठापयति ॥ ९ ॥
(१)अथैतस्यां गातव्यं साम विधाय स्तौति—

**तस्यां गायत्रपार्श्वं न गायत्रादेति न साम्नो न निधनात् ॥ १० ॥**

तस्यां पूर्वोक्तायां 'अया रुचा हरिण्ये' त्यस्यां गायत्रपार्श्वाख्यं साम गातव्यम्। अस्याऽपि नामैकदेशेन गायत्रशब्देनाऽभिधेयत्वात् गायत्री च्छन्दसो नेति नाऽपगच्छति। अत एव गायत्राख्यात् साम्नोऽपि नाऽपगच्छति। प्रकृतौ ह्यार्भवे(२) 'स्वादिष्ठया मदिष्ठये'ति गायत्र्यां गायत्रं साम क्रियते, तत्परित्यज्य छन्दोऽन्तरे सामान्तरे क्रियमाणे ततो गायत्र्या अपायस्स्यादित्याशङ्क्य गायत्रपार्श्वमित्यत्र गायत्रशब्दसद्भावात् उक्तदोषो न भवतीत्यर्थः। तथा गायत्रपार्श्वस्य करणान्निधनादपि नाऽपगच्छति। अस्य हि हुं इति निधनं भवति। ततो निधनवत्त्वात् आर्भवः पवमानो निधनयुक्तोऽपि भवतीत्यर्थः।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १० ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे षोडशाध्यायस्य षोडशः खण्डः ॥

षोडशाध्यायस्समाप्तिमगमत् ॥

---

१. अथ तस्यामिति ख. पु.
२. ( सा. सं. उ. १. १. १५. ) १६९ पृष्ठेऽयं तृचो द्रष्टव्यः।

# अथ सप्तदशाध्यायः ॥

## प्रथमः खण्डः ॥

यस्य निश्श्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ चत्वारो व्रात्ययज्ञा एकाहास्तेषु षोडशस्तोमं साधारण्येन विधित्सुराह—

**देवा वै स्वर्गं लोकमायꣳस्तेषां दैवा अहीयन्त व्रात्यां प्रवसन्तस्त आगच्छन् यतो देवाः स्वर्गं लोकमायꣳस्तेन तꣳ स्तोमं न छन्दोऽविन्दन्येन तानाप्स्यꣳस्ते देवा मरुतोऽब्रुवन्नेतेभ्यस्तꣳ स्तोमं तच्छन्दः प्रयच्छत येना-ऽस्मानाप्नवानिति तेभ्य एतꣳ षोडशꣳ स्तोमं प्रायच्छन् परोक्षमनुष्टुभं ततो वै ते तानाप्नुवन् ॥ १ ॥**

देवाः पुराऽस्मिन् लोकेऽवस्थाय यागानुष्ठानेन स्वर्गं लोकं प्राप्नुवन् । तेषां देवानामनुचराः अत एव देवसम्बन्धात् दैवा जनाः व्रात्यां व्रात्यतां आचारहीनतां प्राप्य प्रवसन्तः प्रवासं कुर्वन्तः बहिष्कृता-स्सन्तोऽहीयन्त हीनाः पृथिव्यामेव परित्यक्ता आसन् । अथ देवेषु स्वर्गं गतेषु ते देवजना आगच्छन् । यतः यस्मिन् स्थाने देवाः स्वर्ग-साधनयागमन्वतिष्ठन् तत्स्थानं प्रति स्वर्गसाधनदिदृक्षया समागता इत्यर्थः । आगत्य च तं स्वर्गसाधनं स्तोमं नाऽविन्दन् तथा छन्दश्च नाऽविन्दन् नाऽलभन्त स्तोमेन छन्दसा च तान् देवान् स्वर्गं गतान् आप्स्यन् । एवमेतैस्स्तोमच्छन्दसोरलब्धयोस्सतोः स्वर्गलोकस्थिता देवा इमं वृत्तान्तमवगत्य मरुतो मरुत्संज्ञकान् देवानब्रुवन् । कथमिति ? एतेभ्यो हीनेभ्यस्तं स्तोमं तच्छन्दश्च यूयं प्रयच्छत येन स्तोमेन छन्दसाऽस्मानाप्नवान् ते प्राप्नुयुरिति । एवं देवैरुक्ता मरुतः तेभ्यो हीनेभ्यः एतं षोडशं षोडशस्तोत्रीयात्मकं स्तोमं प्रायच्छन् परोक्षं परोक्षेण वर्त्तमानं अप्रत्यक्षमनुष्टुभं छन्दश्च प्रायच्छन् । व्रात्ययज्ञेषु प्रथमस्य चतुर्षु स्तोत्रेषु षोडशः स्तोमः । तथा च चत्वारः षोडशाः द्वे अनुष्टुभौ भवतः । एवमनुष्टुभः परोक्षत्वं द्रष्टव्यम् । ततोऽनन्तरं

स्तोमछन्दोरूपेण साधनेन ते हीनास्तान् देवान् आप्नुवन् । एवमेव सर्वेष्वपि व्रात्ययज्ञेषु षोडशस्तोमः प्रयोक्तव्य इत्युक्तं भवति । परोक्षमनुष्टुभमित्यनेन चतुष्षोडशी प्रथमो व्रात्ययज्ञः कार्य इति विधिरुन्नेतव्यः । चतुर्विधा हि व्रात्याः-निन्दिताः कनीयांसो ज्यायांसः, एतत्त्रितयव्यतिरिक्ता हीनाचाराश्चेति । तत्र कनीयःप्रभृतीनां व्रात्यानां उत्तरे त्रयो यज्ञाः त्रितयव्यतिरिक्तानां व्रात्यानां अयं प्रथमश्चतुष्षोडशी । तदुक्तं आपस्तम्बेन-(१)'चतुष्षोडशी सर्वेषाम्' इति ॥ १ ॥

अथैतत् प्रकृते योजयति—

**हीना वा एते हीयन्ते ये व्रात्यां प्रवसन्ति न हि ब्रह्मचर्यं चरन्ति न कृषिं वाणिज्यां षोडशो वा एतत् स्तोमः समाप्तुमर्हति ॥ २ ॥**

ये पुरुषाः व्रात्यां व्रात्यतां विहिताकरणप्रतिषिद्धनिषेवणरूपां प्राप्य प्रवसन्ति, एते हीना निकृष्टास्सन्तो हीयन्ते निकृष्टतमा भवन्ति । तत् कस्य हेतोः ? न खल्वेते ब्रह्मचर्यं ब्राह्मणोचितं कर्माऽऽचरन्ति । ततो हीनाः यस्माच्च कृषिं वणिज्यां वाणिजः क्रियां क्रयविक्रयादिरूपाञ्च न कुर्वन्ति, ततो वैश्यजातेरपि हीनाः । तस्मादेते निकृष्टतमा भवन्तीत्यर्थः । तथा (२)विधानात् एतत् यः स्तोमः समाप्तुमर्हति श्रैष्ठ्यं प्रापयितुं योग्यो भवति एष षोडशिनः स्तोमः ॥ २ ॥

कथमस्येदृशं सामर्थ्यमिति, तदाह—

**मरुत्स्तोमो वा एष यानि क्षुद्राणि छन्दांसि तानि मरुताम् ॥ ३ ॥**

एष षोडशस्तोमो मरुत्स्तोमो वै मरुतां सम्बन्धि स्तोमः । कथमस्य मरुतां सम्बन्ध इति, तदुच्यते-यानि क्षुद्राणि न्यूनाक्षराणि छन्दांसि (३)'पवस्व मधुमत्तमः' (४)'परि प्र धन्व' 'अधाहीन्द्र गिर्वण' इत्यादीनि तानि मरुतां सम्बन्धीनि सप्तगणात्मना एकोनपञ्चाशत्संख्यया च विभक्तत्वेन तेषामपि क्षुद्रत्वात् ॥ ३ ॥

---

१. आप. श्रौ. २२. ५. १४.
२. विधानेनेति ख. पु.
३. अयं तृचः २०० पृष्ठे द्रष्टव्यः ।
४. अयमपि २०२ पृष्ठे द्रष्टव्यः ।

अतः क्षुद्रत्वसाम्यात् आह—

**ककुभं प्राचीमुदूहत्यथ यदेषा द्विपदा ककुभो लोके क्रियते रूपेणैवैनाꣳस्तत् समर्द्धयति ॥ ४ ॥**

ककुप्छब्देन वृषभस्य ककुदः स्मारितत्वात् द्विपदेत्यनेन च पादद्वयस्मरणात् एतान् व्रात्यान् रूपेणैव स्वावयवेनैव समृद्धान् करोतीत्यर्थः ॥ ४ ॥

अथ ब्रह्मसाम्नः स्तोत्रीया विधाय स्तौति—

**(१)"अधाहीन्द्र गिर्वण" इति विषमं छन्दो विषम इव वै व्रातः सर्वानेवैतान् समान् करोति ॥ ५ ॥**

'अधाहीन्द्र गिर्वण' इत्याद्यास्तिस्रो ब्रह्मसाम्नः स्तोत्रीयाः । तासु च विषमं विविधं छन्दो दृश्यते । प्रथमा ककुप्, मध्यमपादस्य द्वादशाक्षरत्वात् । द्वितीया उष्णिक्, तृतीयपादस्य द्वादशाक्षरत्वात् । तृतीयायास्तु द्वौ पादौ द्वादशाक्षरौ, तृतीयोऽष्टाक्षर इति छन्दोवैषम्यम् । व्रातो व्रात्यसमुदायो विषम इव वै विविध इव भवति । विविधानाचारयुक्ता हि व्रात्याः । तथा च विषमच्छन्दसा तेषां वैषम्यं परिहरन् सर्वानेवैतान् व्रात्यान् समान् श्रेष्ठत्वापादनेन समवीर्यान् करोति ॥ ५ ॥

अथ तासु गातव्यं साम विधत्ते—

**तासु द्यौतानम् ॥ ६ ॥**

तासु पूर्वोक्तासु 'अधाहीन्द्र गिर्वण' इत्याद्यासु द्युतानेन दृष्टं साम द्यौतानं गातव्यम् । तच्च ब्रह्मसाम भवतीत्यर्थः । तथा च कल्पकारः-'अधाहीन्द्रगिर्वण इत्यैन्दुमिन्द्राय सिञ्चतेति द्यौतानमारुत' इति॥

अथैतस्य समृद्धिहेतुतामाह—

**द्युतानो मारुतस्तेषां गृहपतिरासीत्त एतेन स्तोमेनाऽयजन्त ते सर्व आर्ध्नुवन् यदेतत् साम भवत्यृद्ध्या एव ॥ ७ ॥**

मारुतो मरुतां सम्बन्धी द्युतानः । तेषां देवानां व्रात्यानां गृहपतिरासीत् बहुयजमानके कर्म्मणि यूपाञ्जनर्त्तुयाज्यावचनादीनि केवलक्रत्वर्थानि यः करोति स गृहपतिरित्युच्यते । एवं द्युतानं गृहपतिं कृत्वा ते देवा व्रात्याः द्युतानगृहपतयः एतेन स्तोमेन षोडशस्तोमकेन यज्ञेनाऽयजन्त । ततस्ते सर्व आर्ध्नुवन् समृद्धा अभवन् । यदेतत् द्यु-

---

१. सा. सं. उ. १. १. २३.

तानेन दृष्टं साम व्रात्यस्तोमे ब्रह्मसाम भवति तदेषां समृध्या एव स-म्पद्यते ॥ ७ ॥

अथैतस्य शाखान्तरीयं निधनं निषिध्य अस्माभिरधीयमानं निध-नमेव कार्य्यमिति प्रतिपादयन् स्तौति—

**यन्निरुक्तं निधनमुपेयुर्गृहपतिरेवर्ध्नुयादपेतर आर्ध्नी-ताऽथ यदनिरुक्तमुपयन्ति सर्वानेवैतानृद्धौ भूतौ प्रतिष्ठा-पयति ॥ ८ ॥**

अत्र सूत्रे शाखान्तरीयं पक्षमुक्त्वा स्वमतमप्युक्तम्—(१)'इन्द्रेति द्योताने निधनं निराहुस्तस्य प्रतिषेधः' 'यथाम्नायमेवोपेयुरि'ति । अयमर्थः—निरुक्तं इन्द्रेति निष्कृष्यैकदेवताप्रतिपादकं निधनं शाखान्त-रीयं यद्यदि उपेयुः प्राप्नुयुः प्रयुञ्जीरन् । तथा च प्रधानभूतस्यैवेन्द्रस्य निष्कृष्य कथनात् एतेषाम्मध्ये प्रधानभूतो गृहपतिरेव ऋध्नुयात् समृद्धो भवेत्, इतरे त्वपगतर्द्धयो भवेयुः । अथाऽनिरुक्तमनिर्द्धा-रितदैवतं अध्ययनसिद्धं आ औहो इत्येवं रूपं द्युतानस्य निधनं यत् यद्युपयन्ति प्रयुञ्जते तर्हि उद्गाता सर्वानेवैतान् व्रात्यान् ऋद्धौ समृ-द्धौ भूतावैश्वर्य्ये च प्रतिष्ठापयति तस्याऽनिर्द्धारितदेवतात्वेन सर्वदेव-तासाधारण्यात् सर्वेषां समृद्धिः ॥ ८ ॥

अथैतस्मिन् व्रात्ययज्ञे चतुर्षु स्तोत्रेषु षोडशः स्तोमः (२)प्रयोक्तव्य-इति तत् प्रशंसितुमाह—

**गरगिरो वा एते ये ब्रह्माद्यं जन्यमन्नमदन्त्यदुरुक्त-वाक्यं दुरुक्तमाहुरदण्ड्यं दण्डेन घ्नन्तश्चरन्त्यदीक्षिता दीक्षितवाचं वदन्ति षोडशो वा एतेषाᳬस्तोमः पाप्मा-नं निर्हन्तुमर्हति यदेते चत्वारः षोडशा भवन्ति तेन पाप्मनोऽधिनिर्मुच्यन्ते ॥ ९ ॥**

एते वक्ष्यमाणा गरगिरो वै गरस्य विषस्य भक्षयितारः, ये व्रा-त्याः ब्रह्माद्यं ब्राह्मणैर्भोज्यं जन्यञ्जनपदसम्बन्धि अन्नमदन्ति ब्राह्मणार्थं परिकल्पितमन्नं बलात्कारेण भुञ्जत इत्यर्थः । ये च अदुरुक्तवाक्यं शोभनार्थप्रतिपादकं वाक्यं दुरुक्तं दुष्टमाहुः, तथा अदण्ड्यं दण्डा-

१. लाट्या, श्रौ ८. ६. ५-६. २. प्रयोज्य इति ख. पु.

नर्हं जनं दण्डेन घ्नन्तो हिंसन्तश्चरन्ति, तथा स्वयमदीक्षिताः अकृतदीक्षा दीक्षितैः प्रयोज्यां वाचं वदन्ति, एवं ये बहुविधान् विपरीताचारानाचरन्ति एते विषभक्षकाः नरकहेतोर्भूयसः (१)पापसञ्चयस्य निष्पद्यमानत्वादित्यर्थः । तस्मादेतेषां व्रात्यानां पाप्मानं पापं निर्हन्तुं निर्हंग्धुं षोडशस्तोम एवाऽर्हति । तथा च यदेते चत्वारः षोडशाः षोडशस्तोमा भवन्ति अच्छावाकस्याऽऽज्यपृष्ठयोर्माध्यन्दिनार्भवयोश्च पवमानयोः, तेन षोडशस्तोमचतुष्टयेन पाप्मनः सकाशात् अधि उपरि निर्मुच्यन्ते प्रक्षीणपापाः शुद्धा भवन्तीत्यर्थः ॥ ९ ॥

अथाऽग्निष्टोमसाम्नः स्तोत्रीयामनूद्य स्तौति—

**(२)"देवो वो द्रविणोदा" इत्यग्निष्टोमसाम कार्यं देवतास्वेवैनान् प्रतिष्ठापयति ॥ १० ॥**

'देवो वो द्रविणोदा' इत्यस्मिन् प्रगाथे यज्ञायज्ञीयमग्निष्टोमसाम कार्यम् । तथा च देवशब्दस्य श्रूयमाणत्वात् देवतास्वेवैनान् व्रात्यान् (३)शुद्धान् कृत्वा प्रतिष्ठापयति ॥ १० ॥

अथ शाखान्तरीयं मतमुपन्यस्यति—

**अथो खल्वाहुः (४)"अदर्शि गातुवित्तम" इत्येव सतोबृहतीषु कार्यं विषम इव वै व्रातः सर्वानेवैनान् सतोबृहतः करोति ॥ ११ ॥**

---

१. पापस्य निषिध्यमानत्वादिति. ख. पु.

२. देवो वो द्रविणोदाः पूर्णां विवष्ट्वासिचम् ।
उद्वा सिञ्चध्वमुप वा पृणध्वमादिद्वो देव ओहते ॥
तं होतारमध्वरस्य प्रचेतसं वह्निं देवा अकृण्वत ।
दधाति रत्नं विधते सुवीर्यमग्निर्जनाय दाशुषे ॥ सा.सं.उ.७.१.१०. (प्रगाथः)

३. शुद्धाचारानिति. ख. पु.

४. अदर्शि गातुवित्तमो यस्मिन्व्रतान्यादधुः ।
उपो षु जातमार्यस्य वर्धनमग्निं नक्षन्तु नो गिरः ॥
यस्माद्रेजन्त कृष्टयश्चर्कृत्यानि कृण्वतः ।
सहस्रसां मेधसाताविव त्मनाऽग्निं धीभिर्नमस्यत ॥
प्र दैवोदासो अग्निः देव इन्द्रो न मज्मना ।
अनुमातरं पृथिवीं वि वावृते तस्थौ नाकस्य शर्मणि ॥
सा. सं. उ. ७. १. ११.

अथो खल्विति पक्षान्तरपरिग्रहे । अन्ये ब्रह्मवादिन आहुः कथयन्ति । किमिति ? 'अदर्शि गातुवित्तम' इत्याद्यास्वेव सतोबृहतीषु प्रग्रथननैरपेक्ष्येण स्वभावत एव बृहतीच्छन्दस्कासु ऋक्षु अग्निष्टोमसाम कार्य्यमिति । उपपत्तिश्चाऽऽहुः—व्रात्यो व्रात्यसमुदायः विषम इव वै विविधाचार एव खलु । तथा च नानाविधान् सर्वानेवैनान् सतोबृहतः स्वभावतो महतः करोति ॥ ११ ॥

अथैतन्मतं दूषयित्वा स्वपक्षं निगमयति—

**तदाहुः शिथिलमिव वा एतत् छन्दश्चराचरं यत् सतोबृहती "देवो वो द्रविणोदा" इत्येव कार्य्यम् ॥ १२ ॥**

तत्तत्र विषये अन्ये पुनर्ब्रह्मवादिन आहुः—यत् सतोबृहत्याख्यं छन्दः एतत् शिथिलमिव वै अदृढमेव, यत एतच्चराचरं सञ्चरणशीलं (१)स्थास्नु न भवति । चरतेः पचाद्यचि (२)'चरिचलिपतिवदीनां वा द्वित्वमच्याक्चाभ्यासस्येति वक्तव्यम्' इति द्विर्वचनमागागमश्च । यस्मादेवं तस्मा'द्देवो वो द्रविणोदा' इत्येतास्वेव कार्य्यम् ॥ १२ ॥

अथैतासूक्तदोषवैलक्षण्यमाह—

**एषा वै प्रतिष्ठिता बृहती या पुनःपदा तद्यत्पदं पुनरारभते तस्मात्पुत्रो मातरमध्येति ॥ १३ ॥**

या बृहती पुनःपदा सकृदाम्नातं पादं पुनरभ्यस्य या बृहती सम्पद्यते एषा पुनःपदा प्रतिष्ठिता बृहती । तत्तथा सति यद्यस्मात्सकृदाम्नातं पदं पादं अविस्मारणेन पुन: पुनरारभते तस्मात् कारणात्पुत्रः स्तनन्धयो मातरमध्येति पुनः पुनः स्मरति । इकस्मरण इति धातुः॥१३॥

'द्युतानो मारुतस्तेषां गृहपतिरासीदि'त्याम्नानात् गृहपतिप्रमुखा बहवो व्रात्या अनेन यजेरन्निति प्रतीयते । तत्र गृहपतिना सम्पाद्यानि दक्षिणाद्रव्याणि दर्शयति—

**उष्णीषञ्च प्रतोदश्च ज्याह्रोडश्च विपथश्च फलकास्तीर्णः कृष्णशं वासः कृष्णवलक्षे आजिने रजतो निष्कस्तद् गृहपतेः ॥ १४ ॥**

उष्णीषं शिरोवेष्टनं वस्त्रम् । अयश्शलाकाग्रदण्डः प्रतोदः, येन

---

१. स्थावरस्तु न भवतीति ख. पु. २. व्या. वा. ६६२.

कर्षकैर्बलीवर्दा निष्पोड्यन्ते । ह्रोडतिर्गत्यर्थः । ज्या ह्रोडा वाता यस्य चापस्य स ज्याह्रोडः, इषुरहितः केवलो धनुर्दण्ड इत्यर्थः । तदुक्तं सूत्रकारेण—(१)'धनुष्केणाऽनिषुणा व्रात्याः प्रसेधमाना यन्ति स ज्याह्रोड' इति । तथा फलकास्तीर्णः फलकाभिरास्तीर्णो विस्तारितो रथः, स च विपथः विविधं कुटिलं पथो गच्छतीति विविधगामिभ्या-मश्वाश्वतराभ्यां युक्तः कार्य्य इत्यर्थः । कृष्णशं कृष्णदशं कृष्णा दशा यस्य तादृशं वासः । दकारलोपश्छान्दसः । श्रद्धा लोमशामितिवत् मत्व-र्थीयश्शप्रत्ययः कार्ष्ण्यंयुक्तामित्यर्थः । वलक्षः शुक्लवर्णः कृष्णशुक्लवर्णे अजिने आविके चर्मणी पार्श्वतस्तन्तुभिः स्यूते भवत इत्यर्थः । रजतो रजतनिर्मितो (२)निष्कोऽलङ्कारः भूषा । एतान्युष्णीषादीनि द्रव्याणि गृहपतेः स्वभूतानि सम्पाद्यानि दक्षिणार्थं गृहपतिना आनेतव्यानीत्य-र्थः । तदुक्तं सूत्रकारेण—'(३)'एतत्सर्वं गृहपतिराहरेदि'ति । अतः स्रगुद्गातुरिव तद्गृहपतेः षष्ठ्या निर्दिष्टस्य सम्प्रदानत्वशङ्का न का-र्य्येत्यर्थः ॥ ४ ॥

अथाऽन्यैः सम्पादनीयानि द्रव्याणि दर्शयति—

**वलूकान्तानि दामतूषाणीतरेषां द्वे द्वे दामनी द्वे द्वे उपानहौ द्विषंहितान्यजिनानि ॥ १५ ॥**

वलूकेति लोहितवर्णस्याऽऽख्या, लोहितवर्णोऽन्तो येषां वाससां तानि तथोक्तानि । तूषमिति वस्त्रस्य दशोच्यते । दामतूषाणि रज्जुरूपदशा-नीत्यर्थः । प्रतिवस्त्रं द्वे द्वे दामनी उभयोरपि प्रान्तयोः एकैकं दाम रज्जुर्यथा भवति तथा कर्त्तव्यमित्यर्थः । तथा एकैकस्य व्रात्यस्य द्वे द्वे उपनाहौ वर्मसदृशे पादाङ्गुष्ठवेष्टने चर्मणी भवत इत्यर्थः । तदुक्तं सूत्रकारे-ण—(४)'द्वे द्वे उपानहाविति कृष्णाः कर्णिन्य इति शाण्डिल्यः, 'याः काश्चेति धानञ्जय्यः' इति । पूर्ववत् शुक्लकृष्णान्यजिनानि द्विषंहितानि एकैकस्य द्वे द्वे अजिने शुक्लकृष्णे पूर्ववत् सहिते भवत इत्यर्थः । एतानि द्रव्याणि गृहपतिव्यतिरिक्तैर्व्रात्यैः सम्पाद्यानि ॥ १५ ॥

अथैतस्य दानं (५)व्रात्यतानिर्हरणहेतुरित्याह—

**एतद् वै व्रात्यधनं यस्मा एतद्ददाति तस्मिन्नेव मृजाना यान्ति ॥ १६ ॥**

---

१. लाट्या. श्रौ. ८. ६. ८. २. निष्कः कर्णभूषेति ख. पु. ३. लाट्या. ८.६.१८. ४. लाट्या. श्रौ. ८. ६. २३, २४. ५. व्रात्यत्वनिर्बर्हहेतुरिति ख. पु.

एतदुष्णीषप्रतोदादिकं द्रव्यजातं खलु व्रात्यस्याऽविनाभूतं धनम्। अतो यस्मै पुरुषाय एतद्धनं ददति प्रयच्छन्ति तस्मिन्नेव पुरुषे मृजानाः व्रात्यत्वापादकं पापं निर्मृज्य शुद्धास्सन्तो गच्छन्ति त्रैविद्यवृत्तिं प्राप्नुवन्ति। अस्य च व्रात्यधनस्य प्रतिगृहीतृविशेषः सूत्रकारेणोक्तः— (१)'व्रात्येभ्यो व्रात्यधनानि ये व्रात्यचर्याया अविरताः स्युर्ब्रह्मबन्धवे वा मागधदेशीयाये'ति ॥ १६ ॥

अथैतेषां प्रत्येकं त्रयस्त्रिंशत्सङ्ख्या गावोऽपि दक्षिणार्थं सम्पाद्या इत्याह—

**त्रयस्त्रिꣳशता त्रयस्त्रिꣳशता गृहपतिमभिसमायन्ति त्रयस्त्रिꣳशद्धि देवा आर्ध्नुवन् ऋध्या एव ॥१७॥**

त्रयस्त्रिंशता त्रयस्त्रिंशत्संख्याभिर्गोभिर्गृहपतिमभिसमायन्ति समागच्छन्ति। सर्वेषां प्रत्येकं त्रयस्त्रिंशत्सम्पादनार्थं वचनम्। अतो गृहपतिरपि गवां त्रयस्त्रिंशतं सम्पादयेदित्यर्थः। इमा गावोऽपि मागधदेशीयेभ्यो व्रात्येभ्यो देयाः। यस्मा एतद्ददति तस्मिन्नेव मृजाना यन्तीति साधारणोक्तेः। कुत एतत् त्रयस्त्रिंशत्संख्यायास्सम्पादनमिति ? तत्रोच्यते—त्रयस्त्रिंशत्संख्याकाः खलु देवाः देवसम्बन्धिनो व्रात्या आर्ध्नुवन् अनेन व्रात्यस्तोमेन समृद्धा अभवन्। अतस्तत्सम्बन्धद्वारा ऋध्यै समृध्यर्थमेव त्रयस्त्रिंशता गोभिः समागमनमिति ॥ १७ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सप्तदशाध्यायस्य प्रथमः खण्डः ॥

---

## द्वितीयः खण्डः ॥

अथाऽभिशस्तैर्निन्दितैरनुष्ठेयो व्रात्यस्तोमः प्रस्तूयते—

**अथैष षट्षोडशी ये नृशꣳसा निन्दिताः सन्तो व्रात्यां प्रवसेयुस्त एतेन यजेरन् ॥ १ ॥**

अथाऽनन्तरं एष वक्ष्यमाणो यज्ञः षट्षोडशी षट्षोडशाः स्तोमा यस्य स तथोक्तः। नृशंसा निन्दिताः मनुष्यैरभिशंसनेन पापाभ्यारोपेण

---

१. लाट्या. श्रौ. ८. ६. २८,

गर्हिताः सन्तो ये पुरुषाः व्रात्यां व्रात्यत्वं प्राप्य प्रवसेयुः त एतेन षट्-षोडशिना यजेरन् ॥ १ ॥

षट्षोडशित्वं पाप्मनो निर्हरणहेतुरिति प्रतिपिपादयिषया प्रथममेषां पापसद्भावमाह—

**अभिपूर्वेण वा एते पाप्मना गृहीता ये नृशꣳसा निन्दिताः सन्तो व्रात्यां प्रवसन्ति यत् षट्षोडशानि स्तोत्राणि भवन्ति तेन पाप्मानोऽधि निर्मुच्यन्ते ॥२॥**

अभिपूर्वेण क्रमेण खल्वेते पाप्मना पापेन गृहीताः ये नृशंसा नि-न्दिताः अभिशंसनेन गर्हिताः सन्तो व्रात्यां प्रवसन्ति, तथा च यत् षट्स्तोत्राणि षोडशानि षोडशस्तोत्राणि भवन्ति तेन षोडशेन पाप्म-नोऽधि पापान्निर्मुच्यन्ते । उक्थसंस्थो ह्ययं व्रात्यस्तोमः । तत्र त्रिषु पवमानस्तोत्रेषु अच्छावाकस्याऽऽज्यपृष्ठोक्थेषु षट्स्तोत्रेषु षोडशस्तोमो भवति । तदुक्तं कल्पकारेण—'षोडशाः पवमाना अच्छावाकसामानि चे'ति ॥ २ ॥

अथाऽस्याऽग्निष्टोमसाम्नः स्तोमं विधाय स्तौति—

**यदेकविꣳशोऽग्निष्टोमो भवति प्रतिष्ठाया एकविꣳशो मध्यत एव यज्ञस्य प्रतितिष्ठति ॥ ३ ॥**

यज्ञस्योक्थसंस्थत्वादग्निष्टोमसाम्नो यज्ञमध्यत्वम् । सिद्धमन्यत् ॥३॥

तथाऽस्योक्थसंस्थां विधाय स्तौति—

**उक्थो भवति पशवो वा उक्थानि पशवो नृशꣳ-समग्रयं परिणयन्ति पशुभिरेवैनानग्रयं परिणयति ॥४॥**

पशवो गवादयो हि नृशंसं नैरभिशस्यमानं पुरुषं अग्रयं श्रैष्ठ्यं परिणयन्ति तत्पालनदानादिभिः पापक्षयात् । उक्थस्तोत्राणि च पशु-संस्तुतानि । अतः पशुभिरेवैनान् व्रत्यान् अग्रयं श्रैष्ठ्यं परिणयति प्राप-यत्युद्गाता ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे सप्तदशाध्यायस्य द्वितीयः खण्डः ॥

## तृतीयः खण्डः ॥

अथ (१)वयसा कनीयांसो ये व्रात्यास्तैरनुष्ठेयो यागो विधीयते—

**अथैष द्विषोडशो ये कनिष्ठाः सन्तो व्रात्यां प्रवसेयुस्त एतेन यजेरन् ॥ १ ॥**

अथाऽनन्तरं एष द्विषोडशी षोडशस्तोमके द्वे स्तोत्रे यस्य स तथोक्तः। ये कनिष्ठाः युवतमाः सन्तो व्रात्यतां प्राप्य प्रवसेयुः बहिष्कृताः प्रवासं कुर्य्युः त एतेन द्विषोडशिना व्रात्यस्तोमेन यजेरन् ॥१॥

अथैतस्मिन् त्रिषु पवमानस्तोत्रेषु त्रिवृत्स्तोम एव कार्य्य इति विधित्सुराह—

**हीना वा एते हीयन्ते ये कनिष्ठाः सन्तो व्रात्यां प्रवसन्ति यत्त्रिवृतः पवमाना भवन्ति मुखं वै त्रिवृत् स्तोमानां मुखत एवैनान् यज्ञस्य परिणयति ॥ २ ॥**

(२)वयसाऽतिहीनाः खलु इमे हीयन्ते पुनराचारतोऽपि हीना भवन्ति। तथा च तेषां हीनत्वपरिहाराय त्रिवृत एव पवमाना भवन्ति, बहिष्पवमानादिषु त्रिषु पवमानस्तोत्रेषु त्रिवृत्स्तोमः कार्य्य इत्यर्थः। स्तोमानां मध्ये त्रिवृत्स्तोमो मुखं वै मुख्यः प्रथमः। यदेवंविधस्य त्रिवृतः पवमानेषु करणम्, तेन यज्ञस्य मुखतः सवनत्रयप्रारम्भ एव एनान् परिणयति ब्राह्मणत्वं प्रापयति ॥ २ ॥

(३)अथाऽस्याऽच्छावाकसम्बन्धिनोराज्यपृष्ठस्तोत्रयोः षोडशस्तोमः कार्य्य इति स्तुतिमुखेन दर्शयति—

**यद् वै षोडशे स्तोत्रे भवतस्तेन पाप्मनोऽधिनिर्मुच्यन्ते ३॥**

लिङ्गप्रायमेतत् ॥ ३ ॥

अथाऽग्निष्टोमसाम्न एकविंशस्तोमं विधाय स्तौति—

**एकविंशोऽग्निष्टोमो भवति प्रतिष्ठा वा एकविंशोऽन्तत एव यज्ञस्य प्रतितिष्ठति ॥ ४ ॥**

अग्निष्टोमसंस्थत्वादेतस्य व्रात्यस्तोमस्य अग्निष्टोमसाम्नोऽन्तत्वम्॥४॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सप्तदशाध्यायस्य तृतीयः खण्डः ॥

---

१. यस्य कनीयांस इति ख. पु.।

२. वयसा हीनाः खल्वेत इति ख. पु.

३. अथैतस्येति ख. पु.

## चतुर्थः खण्डः ॥

अथ ये स्थविरा व्रात्यास्तैरनुष्ठेयं व्रात्ययज्ञं दर्शयति—

**अथैष शमनीचामेढ्राणाᳬं स्तोमो ये ज्येष्ठाः सन्तो व्रात्यां प्रवसेयुस्त एतेन यजेरन् ॥ १ ॥**

अथाऽनन्तरं एष वक्ष्यमाणो यज्ञ शमनीचामेढ्राणां स्तोमः शमेन यौवनोपरमेण नीचमनुन्नतं मेढ्रं येषां ते शमनीचामेढ्राः स्थाविर्या-च्छिनष्टवीर्या इत्यर्थः । तेषां सम्बन्धी स्तोमः । अतो ये ज्येष्ठाः वृद्ध-तमास्सन्तो व्रात्यतां प्राप्य प्रवसेयुरेतेन व्रात्यस्तोमेन यजेरन् ॥ १ ॥

अथाऽस्योर्ध्वस्तोमतां विधत्ते—

**अग्राद्ग्रᳬं रोहन्त्यूर्ध्वाःस्तोमा यन्त्यनपभ्रᳬंशाय॥२॥**

अस्मिन् यज्ञे त्रिवृदादयस्स्तोमा ऊर्ध्वाः अभिमुखा उत्तरोत्तरमाधिक-संख्याकास्सन्तो यन्ति गच्छन्ति यागं निर्वर्तयन्ति अनपभ्रंशाय अनधः पतनाय अधिकसंख्याकं स्तोमं कृत्वा यदि न्यूनसंख्याकं स्तोमं प्रयुञ्जीरन् तदा भवेदधःपातः नैवमूर्ध्वस्तोमामित्यर्थः । तथा चैवं कुर्वाणो यज-मानाः अग्रात् श्रेष्ठ्यात् अग्रं श्रैष्ठ्यं रोहन्ति आरूढा भवन्ति उत्तरो-त्तरमुन्नतं पदं प्राप्नुवन्तीत्यर्थः । एतस्योर्ध्वस्तोमत्वं कल्पकारेण दर्शितम्—'द्वे त्रिवृती स्तोत्रे द्वे पञ्चदशसप्तदशे द्वे एकविंशचतुर्विंशे' इत्यादिना । एवञ्च पूर्वस्मात् स्तोत्रादुत्तरमुत्तरं स्तोत्रमधिकस्तोमकं भवतीत्युक्तं भवति ॥ २ ॥

अथैतस्य शमनीचामेढ्राणां स्तोमत्वं दर्शयन् उदूर्ध्वस्तोमत्वव्यति-रिक्तेन प्रकारान्तरेण स्तोमकल्पने दोषं दर्शयति—

**एतेन वै शमनीचामेढ्रा अयजन्त तेषां कुषीतकः सामश्रवसो गृहपतिरासीत्तान् लुशाकपिः खार्गलि-रनुव्याहरदवाकीर्षत कनीयाᳬंसौ स्तोमावुपागुरिति तस्मात्कौषीतकानां न कश्चनाऽतीव जिहीते यज्ञाव-कीर्णा हि ॥ ३ ॥**

एतेन खलु स्तोमेन पुरा शमनीचामेढ्रा अपगतयौवनत्वेन निर्वी-र्यप्रजननाः देवसम्बन्धिनो व्रात्या अयजन्त, तस्मादेषः शमनीचामे-

द्राणां स्तोम इत्याख्यायते। तदानीन्तनानां तेषां व्रात्यानां समश्रवसः पुत्रः कुषीतको नाम ऋषिः गृहपतिर्मुख्यः आसीत्। तान् कुषीतकगृहपतिसहितान् लुशाकपिर्नामा खार्गलिः खर्गलपुत्रो अनुव्याहरदशपत्। ततस्ते अवाकीर्षत अवकीर्णिनः (१)भ्रष्टाचारा अभवन्। अनुव्याहरतोऽयमभिप्रायः—एते कुषीतकगृहपतयः कनीयांसौ अल्पसंख्यावेव द्वौ स्तोमावुपागुः प्राप्नुवन्निति। पूर्वदर्शितमुत्तराधिकसंख्यं स्तोमं परित्यज्य न्यूनसंख्यं स्तोमद्वयं प्रायुञ्जतेति। तस्मादेतस्याऽयथानुष्ठानात् (२)यथार्थदर्शिना लुशाकपिना शापः कृत इत्यर्थः। यस्मादेते कुषीतकमुखाश्शप्ता आसन् तस्मादेव कारणात् कौषीतकानां कौषीतक(३)शाखाध्येतॄणां कौषीतकिगोत्राणां वा मध्ये कश्चन कोऽपि पुरुषः नाऽतीव जिहीते अतीव श्रेयो न गच्छति। ओहाङ् गताविति धातुः। हि यस्मात् एते यज्ञावकीर्णा अन्यथाऽनुष्ठितेन यज्ञेन निमित्तेनाऽवकीर्णा अवकीर्णिनः (४) विभ्रष्टब्रह्मचर्या भवन्ति तस्मादित्यर्थः ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सप्तदशाध्यायस्य चतुर्थः खण्डः ॥

## पञ्चमः खण्डः ॥

अथ पञ्चभिः खण्डैरग्निष्टुतो विधिः। तत्र केचित् प्रथमेन खण्डेन द्वावग्निष्टुतौ विधीयेते, अपरैश्चतुर्भिश्चत्वार इति षडग्निष्टुत इति मन्यन्ते। अपरे तु (५) यत् त्रिवृद्भवत्येकस्मादेवाऽङ्गात् पाप्मानमपहन्ती'त्यादिना प्रथमस्याऽग्निष्टुतो निन्दापुरस्सरं अन्यस्यैव विधानात् प्रथमस्याऽननुष्ठेयत्वात् पञ्चैवाऽग्निष्टुत इति वर्णयन्ति। कल्पकारस्य तु चत्वारोऽग्निष्टुत इति मतम्, चतुर्णामेव स्तोमस्तोत्रीयाकल्पनात्। एतत् पक्षत्रयं सूत्रकारेणोक्तम्—(६)'षडग्निष्टुतः त्रिवृज्ज्योतिष्टोमश्चाद्यौ स्वर्ग वारवन्तीया'वित्यादिना। एतेषु त्रिषु पक्षेषु षडग्निष्टुत

---

१. भ्रष्टव्रता इति ख. पु.

२. यथार्थदर्शी लुशाकपिर्नाम खार्गलिः खर्गलिपुत्रोऽनुव्याहरत् अशपत् शापं कृतवानिति ख. पु.

३. शाखाध्यायिनामिति ख. पु. ४. विनष्टब्रह्मचर्या इति. ख. पु.

५. तां ब्रा. १७. ५. ४. ६. नि. सू. ६. १२.

इति पक्षस्साधीयान् । यथा द्वितीयादिषु खण्डेषु पृथक् पृथगग्निष्टुतो विधानं फलञ्च दृश्यते, एवं पञ्चमेऽपि खण्डे त्रिवृज्ज्योतिष्टोमयोरग्निष्टुतोरपि व्याख्यानपूर्वकं विधानं फलञ्च दृश्यते । तथा च निदानकारेणोक्तं (१)'त इमे पञ्चाऽनुवाकाश्चत्वारः कल्पाः स एष प्रथमोऽनुवाकः, सर्वेषां साष्टिस्स्यादि'त्युक्त्वा पुनरप्युक्तम्—'अपि वा प्रथमस्य द्वौ स्यातामि'ति । अथ तेषु प्रथमस्य त्रिवृदग्निष्टुतो ब्रह्महत्यानिर्हरणार्थत्वं प्रतिपादयिष्यन् तदर्थं प्रथमं तावदाख्यायिकामाह—

**इन्द्रो वै त्रिशिरसं त्वाष्ट्रमहꣳस्तमश्लीला वागभ्यवदत् सोऽग्निमुपाधावत् स एतदग्निस्तोत्रमपश्यत्तदात्मन्यधिविधाय तेनैनमयाजयत्तेनाऽस्याऽश्लीलां वाचमपाहन् ॥ १ ॥**

त्रिशिरसं त्रीणि शिरांसि यस्य तादृशं त्वाष्ट्रं त्वष्टुः पुत्रं विश्वरूपाख्यं देवानां पुरोहितं असुरहिताचरणे प्रयतमानं इन्द्रः पुरा हतवान्(२) । ततस्तमिन्द्रं अश्लीला पापरूपा वागभ्यवदत्—हे ब्रह्महन्निति । ततस्स इन्द्रोऽग्निमुपाधावदुपागच्छत् । स चाऽग्निरेतदग्निस्तोत्रं अग्नेरेव स्तोत्रं नाऽन्येषां देवानां यस्मिन् तमग्निष्टुतमपश्यत् अदर्शत् । तदग्निस्तोत्रमात्मन्यधिविधाय आत्मना धृतं कृत्वा तेनाऽग्निष्टुता एनमिन्द्रं अयाजयत् । तेन चेष्टेन यज्ञेन अस्येन्द्रस्य अश्लीलां ब्रह्महन्नित्येवं रूपां पापां वाचं अपाहन् व्यनाशयत् ॥ १ ॥

अथैतद्वेदितुः फलमाह—

**अपाऽश्लीलां वाचꣳ हते य एवं वेद ॥ २ ॥**

स्पष्टोऽर्थः ॥ २ ॥

अथैतमग्निष्टुतं विधत्ते—

**योऽपूत इव स्यादग्निष्टुता यजेताऽग्निरेवाऽस्य पाप्मानमपहत्य त्रिवृता तेजो ब्रह्मवर्चसं दधाति ॥ ३ ॥**

यस्मादेवमुक्तप्रकारेण त्रिवृदग्निष्टुता यो यजमानः अपूतोऽशुद्ध इव स्यात् ब्रह्महत्यादिदोषाशङ्कितो भवेत् सोऽग्निष्टुता त्रिवृत्स्तोमके-

---

१. नि. सू. ६. १३.

२. कथेयं विस्तरशस्तैत्तिरीयसंहितायां । "विश्वरूपो वै त्वाष्ट्रः" २. ५. १. इत्यनुवाके द्रष्टव्या ।

नाऽनेन यजेत । तथा च स्तूयमानेन कृत्स्नयज्ञभाजाऽग्निना अस्याऽऽत्मनः (१)पापं अपहत्य दग्ध्वा निष्पापे तस्मिन् त्रिवृता स्तोमेन तेजो ब्रह्मवर्चसञ्च दधाति निदधाति स्थापयति । अग्निना ब्राह्मणजात्या च सहोत्पन्नत्वात् त्रिवृत्स्तोमस्योभयहेतुता ॥ ३ ॥

एवं पूतत्वं ब्रह्मवर्चसञ्च कामयमानस्य त्रिवृदग्निष्टुद्विहितः अथ चतुष्टोमाग्निष्टुतं विधातुं कञ्चिद्दोषं दर्शयति--

**तदाहुर्यत्त्रिवृद्भवत्येकस्मादेवाऽङ्गात् पाप्मानमपहन्ति मुखादेवेति ॥ ४ ॥**

तत्र अग्निष्टुद्विषये आहुश्चोदयन्ति ब्रह्मवादिनः—यद्यदि त्रिवृदेक एव स्तोमो भवति, तर्ह्येकस्मादेवाऽङ्गात् अवयवात् पाप्मानमपहन्ति । किं तदेकमङ्गमिति तदाह—मुखादेवेति । त्रिवृत्स्तोमस्य प्रजापतेर्मुखादुत्पन्नत्वात् अग्निष्टुतः सर्वस्तोत्रेषु प्रयुज्यमानः स स्तोमः मुखादेव सकाशात् पापं निवारयति नाऽन्यस्मादवयवादिति ॥ ४ ॥

कतमस्तर्हि प्रशस्तः ? तमाह--

**ज्योतिष्टोम एव कार्यः ॥ ५ ॥**

त्रिवृत्पञ्चदशसप्तदशैकविंशाः स्तोमाः (२)ज्योतिश्शब्देनोच्यन्ते । त्रिवृदादयश्चत्वारः स्तोमा यस्य तथाविधोऽग्निष्टुत् कार्योऽनुष्ठेयः ॥५॥

एवमनुष्ठितः सर्वेभ्योऽवयवेभ्यः पाप्मनो (३)निवारणकारणमित्याह-

**यत्त्रिवृद्भवति यदेवाऽस्य मुखतोऽपूतं तत्तेनाऽपहन्ति यत् पञ्चदशो यदेवाऽस्योरस्तो बाह्वोरपूतं तत्तेनाऽपहन्ति यत् सप्तदशो यदेवाऽस्य मध्यतोऽपूतं तत्तेनाऽपहन्ति यदेकविंशो यदेवाऽस्य पदोरष्ठीवतोरपूतं तत्तेनाऽपहन्ति ॥ ६ ॥**

यत् यस्मात् अस्मिन्नग्निष्टुति त्रिवृत्स्तोमो भवति, अस्य यजमानस्य मुखत आस्यदेशे यदपूतं अशुद्धिकरं पापं तदपूतं तेन त्रिवृत्स्तोमेनाऽपहन्ति । त्रिवृतः प्रजापतिमुखादुत्पत्तेर्मुखसम्बन्धः । यद्यस्मादस्मिन्नग्निष्टुति पञ्चदशस्तोमो भवति यदेवाऽस्योरस्तः उरसि वक्षसि

---

१. पाप्मानमिति ख. पु. २. तै. ब्रा. १. ५. ११. द्रष्टव्यम् । ३. निवारणमाहेति ख.पु.

बाह्वोश्चाऽपूतं पापं तत्तेन पञ्चदशेनाऽपहन्ति, स हि प्रजापतेरुरस्तो बाहुभ्यां्चोत्पन्नः । यत् सप्तदशस्तोमोऽपि भवति यदेवाऽस्य यजमानस्य मध्यतो देहमध्ये अपूतं तत्तेन सप्तदशेनाऽपहन्ति, 'मध्यतः सप्तदशं निरममीते'ति प्रजापतेर्मध्यदेशात्तस्योत्पत्तेः प्रतिपादनात् । यदेकविंशस्तोमोऽपि भवति यदेवाऽस्य यजमानस्य पत्तोः पादतलयोरष्ठीवतोरूर्वोश्चाऽपूतं तेनैकविंशेन तदपूतमपहन्ति ॥ ६ ॥

अथाऽस्मिन् वारवन्तीयमग्निष्टोमसामत्वेन विधत्ते—

**वैश्वानरं वा एष प्रविशतीत्याहुर्योऽग्निष्टुता यजत इति वारवन्तीयमग्निष्टोमसाम कार्यं तस्य यदपूतं तदग्निः क्षापयत्यथेतरः शुचिः पूत उदेति ॥ ७ ॥**

यो यजमानोऽग्निष्टुता यजते एष वैश्वानरमग्निमेव प्रविशतीत्याहुर्ब्रह्मवादिनः । तस्याऽग्निष्टुतः केवलाग्नेयत्वात् तस्याऽनुष्ठाताऽग्निमेव प्रविशतीत्युच्यते । कः पुनरस्य प्रतीकारः ? तदाह—वारवन्तीयमिति । वारवन्तीयं स्वकीयास्वृक्षु अग्निष्टोमसामत्वेन कार्यम् । तस्य अग्निप्रविष्टस्य यजमानस्य यदपूतमपूतत्वं अशुद्धिरस्ति तदग्निः क्षापयति दहति । अथाऽनन्तरं अपां सारभूतेन वारवन्तीयेन सिक्तत्वात् इतरो यजमानः शुचिः शुद्धः पापरहितः पूतः कर्मयोग्यश्च सन् उदेति उद्गच्छति प्रकाशते ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सप्तदशाध्यायस्य पञ्चमः खण्डः ॥

## षष्ठः खण्डः ॥

अथ तृतीयमग्निष्टुतं विधत्ते—

**त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वग्निष्टोमसाम ॥ १ ॥**

अग्निष्टोमसंस्थस्त्रिवृत्स्तोमकस्तृतीयोऽग्निष्टुत् तस्य वायव्यास्वृक्षु गीयमानं वारवन्तीयमग्निष्टोमसाम कार्यम् । (१)'उप त्वा जामयो गिर' इत्याद्या वायव्या ऋचः । (२)तथा च कल्पकारः 'उप त्वा जामयो गिर इति वायव्यासु वारवन्तीयमग्निष्टोमसामे'ति ॥ १ ॥

---

१. इमा ऋचः २२४ पृष्ठे द्रष्टव्याः । २. कल्पकारोक्ताः इति मुद्रितपुस्तकपाठः ।

अथाऽस्मिन्नधिकारिणमाह—

**ब्रह्मवर्चसकामो यजेत ॥ २ ॥**

स्पष्टम् ॥ २ ॥

अथैतस्य त्रिवृत्स्तोमत्वं वायव्यासु ऋक्षु अग्निष्टोमसाम्नः करणञ्च स्तौति—

**तेजो वै त्रिवृद् ब्रह्मवर्चसं यद्वायव्यास्वग्निष्टोमसाम भवत्युपैवैनं तद्धमति ॥३॥**

त्रिवृतस्तेजोब्रह्मवर्चसरूपत्वमुक्तम् । तस्मात्तत्स्तोमद्वारेणाऽस्य ब्रह्मवर्चसहेतुत्वम् । अपि च वायव्यासु वायुदेवताकास्वृक्षु यदग्निष्टोमसाम भवति तदेनं यजमानमुपधमत्येव, यथा लोहकारो लोहगतं कीटमपनेतुमग्नौ प्रास्य द्रुतिसम्बन्धिना वायुना धमति एवं वायव्यास्वृक्षु करणं यजमानस्य (१)पापधमनाय भवतीत्यर्थः ॥ ३ ॥

एतदेवाऽऽह—

**यथा हिरण्यं निष्टपेदेवमेनमग्निष्टुन्निष्टपति ॥ ४ ॥**

यथा येन खलु प्रकारेण हिरण्यं स्वर्णकारो निष्टपेत् मालिन्यापनयनार्थम्, (२)एवमयमग्निष्टुद्यागो यजमानं निष्टपति निष्टप्तं पापहीनं करोतीत्यर्थः ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सप्तदशाध्यायस्य षष्ठः खण्डः ॥

---

## सप्तमः खण्डः ॥

अथ पशुकामस्याऽन्यमग्निष्टुतं विधत्ते—

**(३)एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो यजेत ॥ १ ॥**

---

१. पापशमनायेति ख. पु. २. एवमेवाऽग्निष्टुदिति ख. पु.

३. वाक्यमिदं पूर्वमीमांसायां द्वितीयद्वितीयोपान्ते विचारितम् ।

एतस्यैवाऽग्निष्टुतो रेवतीषु (१)'रेवतीर्न' इत्याद्यास्वृक्षु वारवन्तीयमग्निष्टोमसाम कृत्वा अनेनाऽग्निष्टुता पशुकामो यजेत ॥ १ ॥

अथाऽस्य पशुसाधनत्वमुपपादयति—

**जरत्कक्षो वा एष योऽपशुर्यथा वै जरत्कक्षे पशवो न रमन्त एवमेतस्मिन् पशवो न रमन्ते योऽपशुर्यदा वै जरत्कक्षमग्निर्दहत्यथैनमभिवर्षत्यथाऽस्मिन्नोषधयो जायन्तेऽथ वै तस्मिन् पशवो रमन्ते ॥ २ ॥**

यो यजमानोऽपशुः पशुरहितः स जरत्कक्षो वै जीर्णतृणगुल्मसदृशः । तदेव सादृश्यं दर्शयति–यथा खलु जरत्कक्षे जीर्णतृणेऽरण्ये पशवो न रमन्ते खाद्यस्य बालतृणस्याऽभावान्नोऽवतिष्ठन्ते, एवमेवैतस्मिन् पुरुषे पशवो न रमन्ते योऽपशुः पशुरहितः । तस्माज्जरत्कक्षसदृशोऽयं यजमानः यदा खलु एनं जरत्कक्षमग्निर्दहति भस्मसात्करोति, अथाऽनन्तरमेनं दग्धं जरत्कक्षं पर्जन्यो वर्षति, अथाऽनन्तरमस्मिन्नोषधयः (२)तृणादयो जायन्ते, अथाऽनन्तरमेव तस्मिन् स्थाने पशवो रमन्ते, एवमेवाऽग्निष्टुता दग्धपापाः रेवतीषु गीयमानेन वारवन्तीयेन अपां रसात्मना संस्तुतेन संसिक्ते यजमाने पशवो रमन्ते इत्यर्थः ॥२॥

अथैतद्वेदनं प्रशंसति—

**रमन्तेऽस्मिन् पशवो य एवं वेद ॥ ३ ॥**

स्पष्टोऽर्थः ॥ ३ ॥

अपशोर्यजमानस्य जरत्कक्षसाम्यमुक्तम् । अथाऽस्याऽपशुत्वदाहकः कोऽग्निः ? केन जलेन सिच्यते ? इति तद्वयमाह—

**यद्वाऽस्याऽपशव्यं तदग्निष्टुन्निर्दहति यदग्निष्टुन्निर्दहति तदग्नी रेवतीभिः शमयति ॥ ४ ॥**

रेवतीभिरभिवर्षणात् कोमलतृणयुक्तो नूतनतृणकक्ष इव यजमानः पशूनामाश्रयो भवतीत्यर्थः ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सप्तदशाध्यायस्य सप्तमः खण्डः ॥

---

१. रेवतीर्नस्सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम ॥
आ घ त्वा वां त्मना युक्तस्तोतृभ्यो धृष्णवीयानः । ऋणोरक्षं न चक्र्योः ॥
आ यद्दुवः शतक्रतवा कामं जरितॄणाम् । ऋणोरक्षं न शचीभिः ॥
सा. सं. उ. ४. १. १४.

२. खाद्यास्तृणादय इति ख. पु.

## अष्टमः खण्डः॥

यद्यग्निष्टोमादि(१) यज्ञं प्रारब्धवतो यजमानस्य कुतश्चिन्निमित्ता-त्समाप्त्यभावेन यज्ञो विच्छिन्नस्स्यात् तदा यजमानो यज्ञाद्विभ्रष्टो भवेत्। तस्य प्रायश्चित्तत्वेन ज्योतिष्टोमोऽग्निष्टुदनुष्ठेय इत्याह—

**ज्योतिष्टोमेनाऽग्निष्टुता यज्ञविभ्रष्टो यजेत ॥ १ ॥**

स्पष्टोऽर्थः ॥ १ ॥

प्रारब्धेऽसमाप्यमाने च सोमयागे अनुष्ठेयानां प्रधानयागानां ऐन्द्र-वायवादीनां बहिष्पवमानादीनां स्तोत्राणाञ्च मध्ये यदि किञ्चित्प्रमादा-द्विस्मृतं स्यात् तदाऽप्ययं प्रायश्चित्तत्वेनाऽनुष्ठेय इत्याह—

**यस्मिन् वा यज्ञक्रतौ विभ्रंशेत ॥ २ ॥**

अथ वा यस्मिन् यज्ञक्रतौ सोमयागे प्रधानैकदेशविस्मरणात् विभ्रंशेत अनुष्ठेयाद्विभ्रष्टो भवेत् तत्राऽप्यनेन यजमानो ज्योतिरग्नि-ष्टुता यजेत ॥ २ ॥

अथ केवलाग्नेयस्याऽग्निष्टुतोऽनुष्ठानं यज्ञविभ्रष्टस्योपपादयति--

**अग्निर्वा एतस्य हव्यमत्ति यो यज्ञे विभ्रंशते न देवता हव्यं गमयत्यग्निमेवैकधर्ध्नोति ॥ ३ ॥**

एतस्य यजमानस्य हव्यं हविश्च पुरोडाशसोमादिकमग्निरेवाऽत्ति भक्षयति यष्टव्या अन्या इन्द्राद्या देवता हव्यं न गमयति प्रापयति यो यजमानो यज्ञेऽनुष्ठायमाने विभ्रशंते विभ्रष्टो भवेत् एतस्येति सम्ब-न्धः। तथा चाऽग्निष्टुते एकधा एकप्रकारेण अग्निमेवर्ध्नोति हविर्भिः समर्द्धयति। (२) एवमग्नौ तृप्ते सति पश्चादन्या देवता हवींषि प्रापयतीत्यर्थः ॥ ३ ॥

अथ विभ्रष्टस्य यज्ञस्याऽसमाधाने फलप्राप्त्यभावं प्रायश्चित्तेन च समाधाने तत्सद्भावञ्च सदृष्टान्तं दर्शयति--

**यद्वै सꣳशीर्यतेऽथाऽन्यन्निष्कुर्वन्ति तेन तद्याति यदा वाव तन्निष्कुर्वन्त्यथ तद्याति येष्वेव स्तोमेषु वि-**

---

१. यागमिति ख. पु.

२. एवमग्निष्टुति कृते सतीति ख. पु.

**भ्रᳪंशते यस्मिन् यज्ञक्रतौ तैरेव यजेत येष्वेव स्तोमेषु विभ्रᳪंशते यस्मिन् यज्ञक्रतौ तेष्वेव प्रतितिष्ठति ॥ ४ ॥**

यद्वै यत् खलु रथादिकं वाहनं संशीर्यते संशीर्णं भग्नं भवेत्, अथाऽनन्तरं तस्मात् संशीर्णात् अन्यद्वाहनं निष्कुर्वन्ति संस्कुर्वन्ति तत्तदानीं तेन (१)पूर्वगामिना संशीर्णेन वाहनेन न याति न गच्छति। यदा खलु तदेव संशीर्णं निष्कुर्वन्ति समादधते तत्तदा तेनैव याति गच्छति। यस्मादेवं लोके तस्माद् यस्मिन् सोमयागे येष्वेव स्तोमेषु प्रयोज्येषु त्रिवृदादिषु विभ्रंशेत न्यूनाधिकसंख्यया स्वरूपविस्मरणा-दिना च विभ्रष्टो भवेत् तैरेव स्तोमैः साधनैः पुनर्यजेत। तथा च विलु-प्तानां प्रायश्चित्तपूर्वकं पुनःप्रयोगेन समाधानात् येष्वेव स्तोमेषु पूर्वं यजमानो विभ्रंशते यस्मिन् सोमयागे, तत्र तेष्वेव स्तोमेषु पुनः प्रति-ष्ठितो भवति सम्पूर्णावयवोऽस्य यज्ञः फलसाधनाय समर्थो भव-तीत्यर्थः ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे सप्तदशाध्यायस्याऽष्टमः खण्डः ॥

---

## नवमः खण्डः ॥

अथाऽन्यमग्निष्टुतमाह—

**सप्तदशेनाऽग्निष्टुताऽन्नाद्यकामो यजेत ॥ १ ॥**

अत्तुमर्हमन्नाद्यं तत्कामयमानः सप्तदशेन सप्तदशस्तोमकेनाऽग्नि-ष्टुता यजेत ॥ १ ॥

अथैतस्याऽन्नसाधनत्वमुपपादयति—

**अन्नं वै सप्तदशोऽग्निरन्नाद्यस्य प्रदाताऽग्निरेवाऽस्मा अन्नाद्यं प्रयच्छति ॥ २ ॥**

सप्तदशस्तोमोऽन्नं वै अन्नमेव, अन्नाधारात् प्रजापतेर्मध्यदेहा-दुत्पत्तेः। अग्निश्चाऽन्नाद्यस्य अदनीयस्याऽन्नस्य आहुतिद्वारा प्रदाता।

---

१. पूर्वभाविनेति ख, पु.

तथा च स्मर्यते—

'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा' इति ॥

एवञ्चाऽग्नेः सप्तदशस्य चाऽग्निष्टुत संहत्य प्रयुक्तत्वात् अस्मै यजमानाय अग्निरेवाऽन्नाद्यं प्रयच्छति(१) दिशति ॥ २ ॥

अथैतद्वेदितुः फलमाह—

**अन्नादो भवति य एवं वेद ॥ ३ ॥**

स्पष्टोऽर्थः ॥ ३ ॥

अथोक्तं सप्तदशस्तोमकत्वमनूद्य स्तौति—

**सर्वस्सप्तदशो भवति प्रजापतिर्वै सप्तदशः प्रजापति-मेवाऽऽप्नोति ॥ ४ ॥**

सर्वेषु स्तोत्रेषु यो यः स्तोमः स सर्वः सप्तदशो भवति । स च सप्तदशः प्रजापतिर्वै प्रजापतिरेव । द्वादशमासाः पञ्चर्त्तवः स संव-त्सरः, 'संवत्सरः प्रजापतिरि' ति श्रुतेः । संवत्सरावयवमासर्त्तुसंख्या-साम्यात् सप्तदशस्य संवत्सरात्मकत्वम् । स च संवत्सरः प्रजापत्या-त्मक इति सप्तदश एव प्रजापतिरिति व्यपदिश्यते । तथा च सप्तदश स्तोमेनाऽनेन प्रजापतिमेवाऽऽप्नोति ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे सप्तदशाध्यायस्य नवमः खण्डः ॥

---

## दशमः खण्डः ॥

( अग्निष्टुतो यज्ञाः, पञ्च षट् वा एकाहाः । ) अथ त्रयास्त्रिवृत एकाहाः—प्रजापतेरपूर्वः, बृहस्पतिसवः, सर्वस्वार इति । तत्र प्रथमं दर्शयति—

**त्रिवृदग्निष्टोमस्तस्याऽनिरुक्तं प्रातस्सवनम् ॥ १ ॥**

त्रिवृत्स्तोमकोऽग्निष्टोमसंस्थोऽयमेकाहः, तस्य प्रातस्सवनं सर्व-मनिरुक्तं बहिष्पवमानादिषु प्रातस्सवनिकेषु पञ्चसु स्तोत्रेषु गायत्रं

---

१. ददातीति ख. पु. । ( ) कुण्डलान्तर्गतो भागः खपुस्तके नाऽस्ति ।

सामाऽनिरुक्तं गेयमित्यर्थः । उद्गाता स्वभक्तिमुद्गीथमुपद्रवभक्तिञ्च म-
नसा प्रयुञ्जानः स्वरं स्वभक्तिसदृशं ओङ्कारं कृत्वा तं वाचा ब्रूयादिति
(१)अनिरुक्त इत्यस्य लक्षणम् । तथा च कल्पकारेणोक्तम्—'मनसा
तु स्वभक्तिमोङ्कारं तथा स्वरं वाचा गायेदि'ति ॥ १ ॥

अथैतदनिरुक्तं स्तोतुमाह—

प्रजापतिः प्रजा असृजत ता अस्मात्सृष्टा अपाक्रामन्
स एतदनिरुक्तं प्रातस्सवनमपश्यत्तेनाऽऽसां मध्यं व्यवै-
त्ता एनमुपावर्त्तन्त पर्य्येनमाविशन् ॥२॥

पुरा प्रजापतिः प्रजानामधिपतिः स्रष्टा प्रजा असृजत सृष्टवान् ।
ताश्च सृष्टा अस्मात्प्रजापतिसकाशात् अपाक्रामन् अपक्रान्ता अपगता
आसन् । ततः स प्रजापतिः एतदनिरुक्तं उक्तप्रकारेण प्रयोज्यं प्रात-
स्सवनमपश्यत् । तेन च प्रातस्सवनेनाऽऽसां प्रजानां मध्यदेशं व्यवैत्
विशेषेणाऽगच्छत् । ताश्च प्रजाः एनं प्रजापतिमुपावर्त्तन्त उपागच्छन् ।
उपागत्य च एनं पर्य्याविशन् परितो निषण्णा आसन् ॥ २ ॥

यस्मादेवं तस्मात् एतदनिरुक्तं प्रातस्सवनं प्रशस्तमिति दर्शयन्न-
स्मिन्नधिकारिणमाह—

ग्रामकामो यजेत यदेतदनिरुक्तं प्रातस्सवनं भवति
मध्यमेवाऽऽसां व्यवैत्युपैनमावर्त्तन्ते पर्य्येनं विशन्ति ॥३॥

ग्रामकामो यजमानोऽनेनैकाहेन यजेत । तस्य चैतत् प्रातस्सवनं
यद्यस्मादनिरुक्तं भवति तेन आसां प्रजानां मध्यमेव व्यवैति प्राप्नोति।
एनं यजमानं ताश्च प्रजा उपावर्त्तन्ते उपगच्छन्ति । उपगत्य च एनं
परितो निषीदन्ति ॥ ३ ॥

अथाऽस्य संज्ञां प्रदर्श्य तद्वेदितुः फलमाह—

स एष प्रजापतेरपूर्वो नाऽस्मात् पूर्वो भवति य
एवं वेद ॥ ४ ॥

स एष यज्ञः प्रजापतेरपूर्वो नाम प्रजापतिरनेनाऽपूर्वतां स्वस्मात्
पूर्वभाविना पुरुषान्तरेण राहित्यं प्राप्तवानिति व्युत्पत्त्या प्रजापतेरपूर्व
इत्यस्य संज्ञा जाता । अतो य एतां संज्ञां वेद जानाति, अस्मात् पूर्वः
कोऽपि न भवति सर्वेषां स्वयं ज्येष्ठो भवतीत्यर्थः ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-
प्रकाशे सप्तदशाध्यायस्य दशमः खण्डः ॥

---

१. अनिरुक्तस्य लक्षणमिति ख. पु.

## एकादशः खण्डः ॥

अथ बृहस्पतिसवाख्यमेकाहं प्रस्तौति—

**त्रिवृदग्निष्टोमः ॥ १ ॥**

त्रिवृत्स्तोमकोऽग्निष्टोमसंस्थो बृहस्पतिसवाख्य एकाहः ॥ १ ॥

अथाऽस्य त्रयस्त्रिंशद्गावश्चतुस्त्रिंश एकोऽश्व इति दक्षिणां विधित्सुस्तासां सवनत्रये विभज्य दानप्रकारमाह—

**(१)तस्य प्रातस्सवने सन्नेषु नाराशꣳसेष्वेकादश दक्षिणा व्यादिशत्यश्वद्वादशा मध्यन्दिने ता उभयीरपाकरोत्येकादश तृतीयसवने ता वशायामपाकरोति ॥ २ ॥**

तस्य सोमयागस्य प्रातस्सवने नाराशंसेषु हुतशिष्टा भक्षिता आप्यायिताश्चमसा नाराशंसाः। तत्र (२)प्रातस्सवनमाध्यन्दिनसवने द्विनाराशंसे, तृतीयसवनं त्वेकनाराशंसम्। तत्र प्रथमेषु नाराशंसेषु सन्नेषु सादितेषु सत्सु एकादशसंख्या दक्षिणा गावो व्यादिशति युष्मदर्थमेता गाव इति ऋत्विग्भ्यो निर्दिशेदित्यर्थः। तथा माध्यन्दिने सवने सन्नेषु नाराशंसेषु अश्वद्वादशाः अश्वो द्वादशसङ्ख्यापूरको यासां ता अश्वद्वादशा एकादश दक्षिणा व्यादिशति। उभयीः उभयविधाः प्रातस्सवने माध्यन्दिनसवने च व्यादिष्टास्ताः गा अपाकरोति पृथक्करोति ऋत्विग्भ्यो दद्यादित्यर्थः। एवञ्च प्रातस्सवने व्यादेशमात्रमेव, न तु दानमित्युक्तं भवति। तथा तृतीयसवने सन्नेषु नाराशंसेष्वेकादश दक्षिणा गाः व्यादिशति ऋत्विग्भ्यो युष्मदर्थं एतादिति निर्दिशेदित्यर्थः। ता एकादशसंख्याका वशायां, मैत्रावरुणी वशा ह्यनूबन्ध्या, तस्या वपायां हुतायां अपाकरोति पृथक्करोति ऋत्विग्भ्यो दद्यादित्यर्थः ॥ २ ॥

अथैतास्संहृत्य विधाय स्तौति—

**त्रयस्त्रिꣳशदेता दक्षिणा भवन्ति त्रयस्त्रिꣳशद्देवता देवता एवाऽऽप्नोत्यश्वश्चतुस्त्रिꣳशो दक्षिणानां प्रजापतिश्चतुस्त्रिꣳशो देवतानां प्रजापतिमेवाऽऽप्नोति॥३॥**

---

१. See. तै. ब्रा. २७. १३.  २. प्रातर्मध्यन्दिनसवन इति ख. पु.

एतास्त्रयस्त्रिंशद्गावो ऽस्य क्रतोर्दक्षिणा भवन्ति । त्रयस्त्रिंशत्संख्या देवता अष्टौ वसव इत्याद्याः । (१)तथा च दक्षिणार्थं त्रयस्त्रिंशत्संख्या देवता यजमानः प्राप्नोति । तथा तासां दक्षिणानां चतुस्त्रिंशः चतुस्त्रिंशत्संख्यापूरकोऽश्वो देयः । देवतानां वस्वादीनां प्रजापतिश्चतुस्त्रिंशः चतुस्त्रिंशत्संख्यापूरकः । तथा च चतुस्त्रिंशेनाऽश्वेन चतुस्त्रिंशं प्रजापतिमेवाऽऽप्नोति ॥ ३ ॥

अथैतस्य बृहस्पतिसव इति संज्ञां विधाय तं निर्वक्तुमाह—

**स एष बृहस्पतिसवो बृहस्पतिरकामयत देवानां पुरोधां गच्छेयमिति स एतेनाऽयजत स देवानां पुरोधामगच्छत् ॥ ४ ॥**

स एष एकाहो बृहस्पतिसव इत्याख्यायते । पुरा खलु बृहस्पतिरकामयत । किमिति ? देवानामिन्द्रादीनां पुरोधां पौरोहित्यं गच्छेयं प्राप्नुयामिति । एवं कामयित्वा सोऽनन्तरं एतेन यज्ञेनेष्टवान् स चैतस्य माहात्म्येन देवानां पुरोधां प्राप्नोत् । तस्मादस्य बृहस्पतिसव इति संज्ञा जाता ॥ ४ ॥

(२)अथैतद्वेदनफलमाह—

**गच्छति पुरोधां य एवं वेद ॥ ५ ॥**

स्पष्टम् ॥ ५ ॥

राज्ञा सह ब्राह्मणाः यं ब्राह्मणं धर्म्मस्थापकत्वेन वृणीरन् स स्थपतिरित्युच्यते, तेन प्राप्तस्थापत्येन पुंसा नैमित्तिकत्वेनाऽयमनुष्ठेय इत्याह—

**स एष स्थपतिसवो यंᳬस्थापत्यायाऽभिषिञ्चेरन् स एतेन यजेत ॥ ६ ॥**

स एषः यज्ञः स्थपतिसवः स्थपतिनाऽनुष्ठेयः । अतो यं ब्राह्मणं स्थापत्याय स्थपतित्वाय अभिषिञ्चेरन् राजपुरस्सरा ब्राह्मणा वृणीरन् सोऽयमेतेन बृहस्पतिसवेन यजेत । यथा लब्धहिरण्यस्य नैमित्तिकेष्टिः तद्वत्प्राप्तस्थापत्यस्याऽयं नैमित्तिको यज्ञश्चोद्यत इत्यर्थः ॥ ६ ॥

---

१. तथा च त्रयस्त्रिंशद्देवता तत्संख्या देवता इति ख. पु.

२. अथैतद्वेदिनः फलमाहेति ख. पु.

अथैतद्वेदनं प्रशंसति—

**गच्छति स्थापत्यं य एवं वेद ॥ ७ ॥**

स्पष्टोऽर्थः ॥ ७ ॥

येषु सोमयागेषु (१)यजमानोऽभिषिक्तोऽस्ति तेषां सव इत्याख्या। अस्याऽपि बृहस्पतिसव इति सवशब्दाभिधेयत्वादभिषेकः कार्य्य इत्याह—

**कृष्णाजिनेऽध्यभिषिच्यत एतद् वै प्रत्यक्षं ब्रह्मवर्च-सं ब्रह्मवर्चस एवाऽध्यभिषिच्यते ॥ ८ ॥**

कृष्णाजिनं कृष्णमृगत्वक् तस्यां समासीनो यजमानोऽभिषेक्तव्यः। एतत् खलु कृष्णाजिनं प्रत्यक्षं साक्षाद् ब्रह्मवर्चसम्। ऋक्सामे हि पुरा देवेभ्यः कुतश्चिन्निमित्तादपक्रान्ते कृष्णमृगरूपमास्थाय पर्य्यचरताम्। तथा च तैत्तिरीयके-(२)'ऋक्सामे वै देवेभ्यः' इत्यादिना कृष्णाजिनस्य ब्रह्मवर्च्चसरूपत्वं विस्पष्टमाम्नातम्। तथा तत्रैव बृहस्पतिसववाक्य-शेष एवमाम्नायते-(३)'ब्रह्मणो वा एतद्रूपं यत् कृष्णाजिनमि'ति। एवञ्च कृष्णाजिनस्य ब्रह्मवर्च्चसरूपत्वात् ब्रह्मवर्चस एवोपविष्टो-ऽभिषिच्यते ॥ ८ ॥

अथाऽभिषेकसाधनद्रव्यं दर्शयति—

**आज्येनाऽभिषिच्यते तेज आज्यं तेज आत्म-न्धत्ते ॥ ९ ॥**

आज्येन घृतेनाऽभिषिच्यते। तच्चाऽऽज्यं तेजः तेजोरूपं आग्नेयस्य तेजसः शारीरस्य च वृद्धिरूपत्वात्। तथा च आत्मन् आत्मनि तेजो धत्ते यजमानो धारयति। एवञ्च ब्रह्मवर्च्चसकामस्तेजस्कामो वा अनेन यजेतेति अधिकारविधिरूह्यः ॥ ९ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे सप्तदशाध्यायस्यैकादशः खण्डः ॥



---

१. यजमानाभिषेकोऽस्तीति. ख. पु. २. तै. सं. ६. १. ३.
३. तै. ब्रा. २. ७. १. ४.

# द्वादशः खण्डः ॥

अथाऽन्यं त्रिवृदग्निष्टुतमेकाहमाह—

**त्रिवृदग्निष्टोमः स सर्वस्वारो यः कामयेताऽनामय-ताऽमुं लोकमियामिति स एतेन यजेत ॥ १ ॥**

त्रिवृत्स्तोमकोऽग्निष्टोमसंस्थोऽपर एकाहः । स च सर्वस्वारः स्वरनिधनान्येव सर्वाणि सामानि यस्य स तथोक्तः । यो यजमानः कामयेत्, किमिति ? अनामयता आमयरहितेनैव देहेन व्याध्यादिराहित्येन सुखेनाऽवस्थितादेव देहान्निष्क्रम्य अहं स्वर्गं लोकं इयां प्राप्नुयामिति । स यजमान एतेन यज्ञेन यजेत (१)मरणकामोऽस्मिन्नधिकारीत्यर्थः ॥ १ ॥

अथ स्तोमनिधनद्वारेणाऽस्योक्तफलानुगुण्यं दर्शयति—

**प्राणो वै त्रिवृत्प्राणः स्वरः प्राणानेवाऽस्य बहिर्णिरादधाति ताजक् प्रमीयते ॥ २ ॥**

योऽयं त्रिवृत्स्तोमः स प्राणो वै प्राणात्मकः, प्राणवायुर्मुखदेशे वर्त्तते । त्रिवृच्च प्रजापतिमुखादुत्पन्न इति मुखसम्बन्धसाम्यात् तादात्म्यम् । स्वरः स्वर्यमाणो यो यः सामान्तः सोऽपि प्राणस्तुतः । एवं प्राणात्मनोस्त्रिवृत्स्वरयोः सर्वस्तोत्रेषु प्रयोगादस्य यजमानस्य प्राणान्मुख्यप्राणसहितांश्चक्षुरादीन्द्रियात्मकान् बहिर्णिरादधाति शरीरान्निष्क्रम्य बहिरेव स्थापयति । तथा च ताजक् तस्मिन्नेव काले प्रमीयते स यजमानो म्रियते ॥ २ ॥

अथैतौ स्तोमस्वरौ निरुच्य स्तौति—

**त्रिवृद् वै स्तोमानां क्षेपिष्ठो यत्त्रिवृद्भवत्याशीयः सङ्गच्छाता इत्यनन्तो वै स्वरोऽनन्तोऽसौ लोकोऽनन्तमेवैनꣳ स्वर्गं लोकं गमयति ॥ ३ ॥**

स्तोमानां मध्ये त्रिवृत्स्तोमः खलु क्षेपिष्ठः क्षेप्तृतमः, 'वज्रो वै त्रिवृदि'त्यादिश्रुत्या वज्रात्मना संस्तुतत्वात् । तथा च त्रिवृत्स्तोमः अस्मिन् यज्ञे सर्वस्तोत्रेषु भवति । ततः आशीयः आशुतरं अतिशीघ्रेण

---

१. स्वर्गकामोऽस्मिन्निति मुद्रितपुस्तकपाठः ।

सङ्गच्छाता स्वर्गं लोकं प्राप्नोतु यजमान इत्येतदर्थम् । तथा स्वरोऽनन्तो वै अन्तरहितः अवसानरहितः । असौ स्वर्गो लोक अनन्तोऽन्तरहितः । एवञ्चाऽनन्तेन स्वरेण अनन्तं स्वर्गं लोकमेव गमयति प्रापयति ॥ ३ ॥

अथाऽस्मिन् यज्ञे स्तोत्रीया विधाय स्तौति—

**अभिवत्यः प्रवत्यो भवन्त्यस्मादेवैनं लोकात् स्वर्गं लोकं गमयन्ति ॥ ४ ॥**

अभिवत्यो अभिशब्दयुक्ताः, प्रवत्यः प्रशब्दयुक्ताश्च स्तोत्रीया भवेयुः । ताश्च कल्पकारेण(१) 'प्र सोमासो अधन्विषुः' (२)'प्र स्वानासो रथा इव'(३)'उप प्रयन्तो अध्वर' '(४)प्र वो मित्राय गायत' (५)अभिद्युम्नं बृहद्यश' इत्याद्याः क्लृप्ताः । तौ चोपसर्गौ गमनप्रकर्षेण गमनाभिमुख्यं द्योतयतः । तथा चाऽस्मादेव भूलोकात् एनं यजमानं स्वर्गं लोकं गमयन्ति अभिवतीभिः प्रवतीभिश्च प्रापयन्ति ॥ ४ ॥

अथ यजमानस्य मरणार्थं सम्वेशनं विधत्ते—

**आर्भवपवमाने स्तूयमान औदुम्बर्यां दक्षिणा प्रावृतो निपद्यते तदेव सङ्गच्छते ॥ ५ ॥**

तृतीयसवन आर्भवपवमान उद्गात्रादिभिः स्तूयमाने सदोमध्ये निखाताया औदुम्बर्याः दक्षिणा दक्षिणतः दक्षिणदेशे अहतेन वाससा प्रावृतः वेष्टितसर्वदेहः दक्षिणाशिरस्को निपद्यते शयीत तदानीमेव सङ्गच्छते म्रियते ॥ ५ ॥

अथैतस्य यागस्य व्यवहारार्थं नाम दर्शयति—

**स एष शुनस्कर्णस्तोम एतेन वै शुनस्कर्णो बाष्किहोऽयजत तस्माच्छुनस्कर्णस्तोम इत्याख्यायते ॥ ६ ॥**

स एष यागः शुनस्कर्णस्तोमसंज्ञकः । एतदेव विव्रियते—एतेन वेत्यादिना । एतेन खलु यागेन बाष्किहः बाष्किहस्य पुत्रः शुनस्कर्णो नाम ऋषिः अयजत इष्टवान् । तस्मात् शुनस्कर्णसम्बन्धात् अयं यागः शुनस्कर्णस्तोम इत्याख्यायते ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सप्तदशाध्यायस्य द्वादशः खण्डः ॥

---

१. इयमृक् ४ पृष्ठे द्रष्टव्या  २. ऋगियं ७७ पृष्ठे द्रष्टव्या
३. सा. सं. उ. ६. २. १. १.  ४. ऋगियं ८१ पृष्ठे द्रष्टव्या
५. ३६ पृष्ठे द्रष्टव्येयं ऋक्

## त्रयोदशः खण्डः ॥

अथ (१)शाखान्तरोक्तानि सन्ति चातुर्मास्यानि वैश्वदेववरुण-प्रघाससाकमेधशुनासीरीयाणि चत्वारि पर्वाणि । तानि च द्विविधानि ऐष्टिकानि सौमिकानि चेति । तत्र सौमिकानामतः परं विधिः । तत्र प्रथमस्य वैश्वदेवाख्यस्य पर्वणः स्थाने कर्त्तव्यं सोमयागं दर्शयति—

**त्रिवृदग्निष्टोमो वैश्वदेवस्य लोकः ॥ १ ॥**

त्रिवृत्स्तोमकोऽग्निष्टोमसंस्थः सोमयागः वैश्वदेवस्य वसन्तेऽनुष्ठेयस्य ऐष्टिकस्य वैश्वदेवाख्यस्य प्रथमपर्वणः स्थाने कर्त्तव्यः ॥१॥

अथ (२)तत्प्रतिपदञ्च सवनीयानुबन्ध्यापश्वोर्देवताविशेषञ्च दर्शयति—

**आग्नेयी प्रतिपद् वैश्वदेवः पशुर्बार्हस्पत्याऽऽनुबन्ध्या ॥२॥**

आग्नेयी अग्निदेवत्या (३)'अग्न आयूंषि पवस' इत्येषा बहिष्पवमानस्य प्रतिपत् प्रथमा स्तोत्रीया भवति । योऽयमतिदेशतः प्राप्तः सवनीयः पशुः स वैश्वदेवः विश्वेभ्यो देवेभ्यः कार्य्यः । येयमानुबन्ध्या वशा चोदकतः प्राप्ता सा बार्हस्पत्या बृहस्पतिदेवत्या कार्य्या ॥ २ ॥

अथ चोदकप्राप्तं किञ्चिन्निषेधति—

**न यूपं मिन्वन्ति नोत्तरवेदिं निवपन्ति ॥ ३ ॥**

न यूपं मिन्वन्ति प्रक्षिपन्ति न निखनेयुः नाऽऽहर्त्तव्यो यूप इत्यर्थः । तथा उत्तरवेदिमपि न निवपन्ति (४)चात्वालपांसुभिर्वेदिकारूपेण न कार्य्येत्यर्थः ॥ ३ ॥

कथं तर्हि यूपाभावे पशुनियोजनमित्यत आह—

**परिधौ पशुं नियुञ्जन्ति ॥ ४ ॥**

पशुनियोजनक्षमं स्थूलं यज्ञीयकाष्ठं परिधित्वेन कृत्वा तस्मिन्नञ्जनादिसंस्कृते पशुर्नियोक्तव्य इत्यर्थः ॥ ४ ॥

अथ दक्षिणापरिमाणं विधत्ते—

**पञ्चाशद्दक्षिणा ॥ ५ ॥**

---

१. शाखान्तरोक्तानीति नास्ति ख. पु.

२. तत्र प्रतिपदिति ख. पु.  ३. २२७ पृष्ठे द्रष्टव्येयं ऋक् ।

४. न पांसुभिर्वेदिकारूपेण संस्कार्येत्यर्थ इति ख. पु.

पञ्चाशत्सङ्ख्याका गावोऽस्मिन्नहनि (१)दक्षिणात्वेन देया इत्यर्थः॥
अथ यजमानेनाऽनुष्ठेयं व्रतं दर्शयति—

**अहतं वसानोऽवभृथादुदेति चतुरो मासो न माꣳ-समश्नाति न स्त्रियमुपैति ॥ ६ ॥**

अहतमप्रहतं नूतनं वासो वसान आच्छादयन्नवभृथात् अवभृथ-स्नानानन्तरं जलमध्यादुदेति उद्गच्छति। तदनन्तरं चतुरो मासो मा-सचतुष्टयपर्य्यन्तं मांसाशनं न कार्य्यं, तथा स्त्रीसङ्गतिश्च वर्जनीया ॥६॥
अथ द्वितीयस्य वरुणप्रघासाख्यस्य पर्वणः स्थाने कर्त्तव्यं सोम यागमाह—

**ततश्चतुर्षु मासेषु वरुणप्रघासानां लोके द्विदिवः॥७॥**

ततो वैश्वदेवस्थानिकात् त्रिवृदग्निष्टोमादनन्तरं मासचतुष्टये स-म्पूर्णे वरुणप्रघासानां स्थाने द्विदिवः द्वयोर्दिवसयोरह्नोः समाहारः द्वि-रात्रः सोमयागोऽनुष्ठेय इत्यर्थः ॥ ७ ॥
तत्र प्रथमेऽहनि प्रतिपद्विशेषं सवनीयपशुदेवताञ्च दर्शयति—

**वारुणी प्रतिपन्मारुतः पशुः ॥ ८ ॥**

वारुणी वरुणदेवत्या (२)'इमं मे वरुण'त्येषा बहिष्पवमानस्य प्रथ-मा भवति। योऽयञ्चोदकप्राप्तः सवनीयः पशुः स मारुतो मरुद्देवत्यः कार्य्यः ॥ ८ ॥
अथ द्वितीयेऽहनि प्रतिपत्पशुदेवते दर्शयति—

**कवती प्रतिपद्वारुणः पशुः ॥ ९ ॥**

(३)'कया त्वन्न ऊत्ये'ति कशब्दवती। अन्यत् पूर्ववद्योज्यम ॥ ९ ॥
पूर्वं हि वैश्वदेवस्थानिके त्रिवृदग्निष्टोमे आनुबन्ध्यस्य पशोर्देवता-न्तरं यूपराहित्यं उत्तरवेदिनिवपनराहित्यञ्च दृष्टम्, तद्वदत्राऽपि स्या-दित्यादिशङ्कां निरसितुमाह—

**मैत्रावरुण्यनूबन्ध्या मिन्वन्ति यूपं न्युत्तरवेदिं व-**

---

१. दक्षिणा देया इति ख. पु.
२. इमं मे वरुण श्रुधी हवमद्या च मृडय। त्वामवस्युरा चके ॥
सा. सं. उ. ७. ३. ६.
३. कया त्वं न ऊत्याऽभिप्र मन्दसे वृषन्। कया स्तोतृभ्य आ भर ॥
सा. सं. उ. ७. ३. ९.

**पन्ति यूपे पशू नियुञ्जन्ति ॥१०॥**

अनूबन्ध्या वशा प्रकृतिवदेव मैत्रावरुणी मित्रावरुणदैवत्या कार्य्या। तथा प्रकृतिवदेव यूपखननमुत्तरवेदिनिवपनञ्च कार्य्यम् । अतो यूप-सद्भावात् यूप एव द्वयोरह्नोः सवनीयपशू नियोक्तव्यौ न पूर्ववत् प-रिधौ ॥ १० ॥

अथ दक्षिणासंख्या प्रागुक्तानि व्रतानि च एतदनुष्ठानानन्तरमपि कार्य्याणीति दर्शयति—

**शतं दक्षिणा अहतं वसानोऽवभृथादुदेति चतुरो मासो न माꣳसमश्नाति न स्त्रियमुपैति ॥ ११ ॥**

शतं शतसंख्या गावो दक्षिणाः प्रत्यहं पञ्चाशत् पञ्चाशदित्यर्थः । अन्यत् पूर्ववद्योज्यम् ॥ ११ ॥

अथ साकमेधाख्यस्य तृतीयस्य पर्वणः स्थानेऽनुष्ठेयं सोमयागमाह—

**ततश्चतुर्षु मासेषु साकमेधानां लोके त्रिरात्रः ॥१२॥**

ततो वरुणप्रघासात्त्रिरात्रादनन्तरं चतुर्षु मासेषु सम्पूर्णेष्वनुष्ठे-यानां साकमेधानां स्थाने त्रिरात्रस्सोमयागः कार्य्यः ॥ १२ ॥

अथ तेषु त्रिष्वहस्सु प्रतिपत्पशुदेवतादिकं दर्शयति—

**अनीकवती प्रतिपदाग्नेयः पशुर्म्मारुती प्रतिपदैन्द्रा-ग्नः पशुर्वैश्वकर्म्मणी प्रतिपदेकादशिनी पशवः सौर्य्या-नूबन्ध्या मिन्वन्ति यूपं न्युत्तरवेदिं वपन्ति यूपे पशू-न्नियुञ्जन्ति पञ्चाशच्छतं दक्षिणा ॥ १३ ॥**

अनीकवती 'वायोरनीक अस्थिरन्नि'ति अनीकशब्दयुक्ता (१)'उप त्वा जामयो गिर' इत्येषा त्रिरात्रस्य प्रथमेऽहनि बहिष्पवमानस्य प्रति-पत् प्रथमा स्तोत्रीया भवति। सवनीयः पशुः प्रकृतिवदाग्नेयोऽग्निदेव-त्य एव कार्य्यः । द्वितीयेऽहनि तु (२)'इन्द्रायेन्द्रो मरुत्वत' इति मरु-च्छब्दयुक्ता प्रतिपद्भवति । तत्रत्यस्सवनीयः पशुः ऐन्द्राग्नः इन्द्राग्नि-देवताकः कार्य्यः । तृतीयेऽहनि(३) 'विश्वकर्मन् हविषा वावृधान'

१. ऋगियं २१४ पृष्ठे द्रष्टव्या. २. इयमपि ४७ पृष्ठेऽवलोकनीया

३. विश्वकर्मन् हविषा वावृधानस्स्वयं यजस्व तन्वां स्वा हि ते ॥

सा. सं. उ. ७. ३. ९.

इत्येषा वैश्वकर्मणी विश्वकर्मदेवत्या बहिष्पवमानस्य प्रतिपत्। सवनीयपशोः स्थाने एकादशिनीपशवः कार्याः। ते च—(१)'आग्नेयः कृष्णग्रीवः सारस्वती मेषी'त्यादिना तैत्तिरीयके समाम्नाताः। अनूबन्ध्या वशा सौरी सूर्यदेवत्या कार्या। अस्मिन् त्रिरात्रे पूर्ववद् यूपकरण मुत्तरवेदिनिवपनञ्च कार्यम्। तथा च यूप एव प्रागनुक्रान्ताः पशवो नियोक्तव्याः। अस्य च त्रिरात्रस्य पञ्चाशदधिकं शतं गावो दक्षिणाः प्रत्यहं पञ्चाशत् पञ्चाशद्दक्षिणा इत्यर्थः॥ १३॥

अथ पूर्ववद्यजमानस्य व्रतानि दर्शयति—

**अहतं वसानोऽवभृथादुदेति चतुरो मासो न माꣳसमश्नाति न स्त्रियमुपैति॥ १४॥**

पूर्ववद्योज्यम्॥ १४॥

अथ शुनासीरीयाख्यस्य चतुर्थपर्वणः स्थानेऽनुष्ठेयं सोमयागमाह—

**ततश्चतुर्षु मासेषु शुनासीर्यस्य लोके ज्योतिष्टोमोऽग्निष्टोमः॥ १५॥**

ततः साकमेधस्थानीयत्रिरात्रानुष्ठानानन्तरं चतुर्षु मासेषु सम्पूर्णेषु शुनासीर्यस्य पर्वणः स्थाने ज्योतिष्टोमोऽग्निष्टोमः सोमयागः कार्यः। त्रिवृत्पञ्चदशसप्तदशैकविंशस्तोमकोऽग्निष्टोमसंस्थः प्राकृताग्निष्टोमसदृशोऽन्यः सोमयागः कार्य इत्यर्थः॥ १५॥

अत्र पूर्ववत् प्रतिपत्पशुदेवतादिकं दर्शयति—

**उपवती प्रतिपद्वायव्यः पशुराश्विन्यनूबन्ध्या मिन्वन्ति यूपं न्युत्तरवेदिं वपन्ति यूपे पशुं नियुञ्जन्ति द्वादशꣳ शतं दक्षिणा॥ १६॥**

'उपास्मै गायता नर' इत्येषा उपवती उपशब्दयुक्ता प्रतिपद् भवति। वायव्यो वायुदेवत्यः सवनीयः पशुः, आश्विदेवत्या अनूबन्ध्या। अस्य पशोर्द्वादशाधिकं शतं गावो दक्षिणा। शिष्टं पूर्ववत्॥१६॥

अथैतेन चातुर्मास्येनेष्टवतः फलमाह—

**(२)अग्निः संवत्सरः सूर्यः परिवत्सरश्चन्द्रमा इदावत्सरो वायुरनुवत्सरोऽग्निꣳ संवत्सरं वैश्वदेवेनाऽऽप्नोति**

१. तै. सं. ६. ५. २२. २. अत्र तै. ब्राह्मणं. १. ४. ११. द्रष्टव्यम्।

सूर्यं परिवत्सरं वरुणप्रघासैश्चन्द्रमसमिदावत्सरꣳ साकमेधैर्वायुमनुवत्सरꣳ शुनासीर्येण ॥ १७ ॥

अयमर्थः—प्रभवविभवेत्यारभ्य पञ्चशः पञ्चशो विभक्ता ये वत्सरास्तेषां क्रमेण संवत्सरपरिवत्सरेदावत्सरानुवत्सरोदावत्सरश-ब्दा वाचकाः । तथा चोक्तं चान्द्रायणैः-'प्रभवादीनां पञ्चकं पञ्चकं सम्परीदानूदित्येतच्छब्दपूर्वास्तु वत्सरा' इति । तत्र यः संवत्सरः प्रथमः सोऽग्निः अग्न्यात्मकः, परिवत्सराख्यो द्वितीयः सूर्यात्मकः, इदावत्सरस्तृतीयः चन्द्रात्मकः, अनुवत्सरश्चतुर्थो वाय्वात्मकः । तथा चाऽग्न्यात्मकं संवत्सरं वैश्वदेवेन वैश्वदेवस्थानीयेन सोमयागेनाऽऽप्नो-ति । सूर्यात्मकञ्च परिवत्सरं वरुणप्रघासैः वरुणप्रघासस्थानीयेन द्विरा-त्रेणाऽऽप्नोति । चन्द्रात्मकमिदावत्सरं साकमेधैः साकमेधस्थानीयेन त्रिरात्रेणाऽऽप्नोति । वाय्वात्मकमनुवत्सरं शुनासीर्येण तत्स्थानेऽनुष्ठयेन सोमयागेनाऽऽप्नोति ॥ १७ ॥

अथ लोकत्रय(१)प्राप्तिफलकतया स्तौति—

हविर्यज्ञैर्वै देवा इमं लोकमभ्यजयन्नन्तरिक्षं पशु-मद्भिः सोमैरमुमिमानेव लोकानाप्नोत्येषु लोकेषु प्रतितिष्ठति य एवं वेद ॥ १८ ॥

यज्ञास्त्रिविधाः—चरुपुरोडाशादिलक्षणेनौषधेन हविषा साध्याः, पशुसाध्याः, सोमसाध्याश्चेति । तत्र हविर्यज्ञैः केवलञ्चरुपुरोडाशादि-साध्यैर्यज्ञैः पुरा देवा इमं भूलोकमभ्यजयन् । अन्तरिक्षलोकं पशुमद्भिः पशुसाध्यैर्यागैः, तथा सोमैः सोमयागैः अमुं स्वर्गलोकमभ्यजयन् । एवञ्च उक्तत्रिविधयज्ञसङ्घातात्मकत्वादुक्तानां चातुर्म्मास्यानां तैरिमा-नेव पृथिव्यादिकान् त्रीन् लोकानाप्नोति, एषु लोकेषु प्रतिष्ठितो भव-ति । य एवं ब्राह्मणार्थं वेद जानाति ज्ञात्वा चाऽनुतिष्ठतीत्यर्थः ॥ १८ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे सप्तदशाध्यायस्य त्रयोदशः खण्डः ॥

---

१. प्राप्तिपरतयेति ख. पु.

## चतुर्दशः खण्डः ॥

अथैषां चातुर्मास्यानां निरतिशयफलसाधनत्वं वक्तुमग्निहोत्रादिकर्म्मणां सातिशयफलत्वमाह--

(१)यदाऽग्निहोत्रं जुहोत्यथ दश गृहमेधिन आप्नोत्येकया रात्र्या, यदा दश संवत्सरानग्निहोत्रं जुहोत्यथ दर्शपूर्णमासयाजिनमाप्नोति, यदा दश संवत्सरान् दर्शपूर्णमासाभ्यां यजतेऽथाऽग्निष्टोमयाजिनमाप्नोति, यदा दशभिरग्निष्टोमैर्यजतेऽथ सहस्रयाजिनमाप्नोति, यदा दशभिः सहस्रैर्यजतेऽथाऽयुतयाजिनमाप्नोति, यदा दशभिरयुतैर्यजतेऽथ प्रयुतयाजिनमाप्नोति, यदा दशभिः प्रयुतैर्यजतेऽथ नियुतयाजिनमाप्नोति, यदा दशभिर्नियुतैर्यजतेऽथाऽर्बुदयाजिनमाप्नोति, यदा दशभिरर्बुदैर्यजतेऽथ न्यर्बुदयाजिनमाप्नोति, यदा दशभिर्न्यर्बुदैर्यजतेऽथ निखर्वकयाजिनमाप्नोति, यदा दशभिर्निखर्वकैर्यजतेऽथ बद्वयाजिनमाप्नोति, यदा दशभिर्बद्वैर्यजतेऽथाऽक्षितयाजिनमाप्नोति यदा दशभिरक्षितैर्यजतेऽथ गौर्भवति, यदा गौर्भवत्यथाऽग्निर्भवति यदाऽग्निर्भवत्यथ संवत्सरस्य गृहपतिमाप्नोति ॥ १ ॥

अथाऽऽखण्डसमाप्तेः पाठो ज्ञातव्यः । यदा यस्मिन् काले अग्निहोत्रं जुहोति अग्निहोत्रहोमं करोति, अथाऽनन्तरं दश गृहमेधिनः गार्हस्थ्यकर्म्मानुष्ठायिनो ये ब्राह्मणास्तैर्दशसंख्याकैर्यत् सुकृतमुपार्ज्यते तदेकया रात्र्या एकस्मिन्दिनेऽनुष्ठितेनाऽग्निहोत्रेण प्राप्नोति लभते । यदा दशसंवत्सरपर्य्यन्तं अग्निहोत्रं जुहोति अथाऽनन्तरं दर्शपूर्णमासयाजिनं सकृद्दर्शपूर्णमासाभ्यामिष्टवतो यत् फलं तत् प्राप्नोति । यदा दशसंवत्सरपर्यन्तं दर्शपूर्णमासाभ्यां यजते अथाऽनन्तरं अग्निष्टोमयाजिनं अग्निष्टोमेन सोमयागेनेष्टवतो यत् फलं तत् प्राप्नोति । यदा खलु दशसंख्यैरग्निष्टोमैर्यजते अथाऽनन्तरं सहस्रयाजिनं सहस्रदक्षिणक्रतुनेष्टवन्तं

---

१. अस्यैव सहस्रसंवत्सरूपं. तै. ब्रा. १. ४. १०. ४. द्रष्टव्यम् ।

यजमानमाप्नोति । यदा खलु दशसंख्याकैः सहस्रदक्षिणैर्यजते अथाऽनन्तरं अयुतयाजिनं अयुतदक्षिणेन पौण्डरीकादिनेष्टवन्तं यजमानमाप्नोति । यदा पुनर्दशभिर्दशसंख्याकैरयुतदक्षिणैर्यजते अथाऽनन्तरं प्रयुतयाजिनमाप्नोति । दशगुणितमयुतं प्रयुतम् । एवं नियुतार्बुदादिषु उत्तरोत्तरं दशगुणिता संख्या द्रष्टव्या । यदा दशभिः प्रयुतदक्षिणैः क्रतुभिर्यजते अथ नियुतदक्षिणेनेष्टवन्तं प्राप्नोति । यदा खलु दशसंख्याकैर्नियुतदक्षिणैर्यजते अथाऽनन्तरं अर्बुददक्षिणेनेष्टवतः फलमाप्नोति । यदा खलु दशसंख्याकैरर्बुददक्षिणैर्यजतेऽथाऽनन्तरं न्यर्बुदयाजिनं न्यर्बुददक्षिणेनेष्टवन्तमाप्नोति । यदा पुनर्दशसंख्याकैर्न्यर्बुददक्षिणैर्यजते अथ निखर्वकयाजिनं निखर्वकदक्षिणेनेष्टवन्तं यजमानमाप्नोति । यदा खलु दशभिर्निखर्वसंख्याकदक्षिणैर्यजते अथाऽनन्तरं बद्वयाजिनं बद्वसंख्याकदक्षिणेन यागेनेष्टवन्तमाप्नोति । यदा दशभिर्बद्वसंख्याकदक्षिणैर्यजते अथाऽनन्तरं सः अक्षितयाजिनं न क्षीणः सर्वेभ्योऽधिका संख्या यस्याः परं संख्यान्तरं नाऽस्ति अक्षितशब्देन सा संख्योच्यते । अक्षितदक्षिणेन यज्ञेन इष्टवन्तं यजमानमाप्नोति । तादृशैर्दशसंख्याकैरक्षितदक्षिणैर्यजते अथाऽनन्तरं स यजमानो गौः आदित्यो भवति । गमयति रसानागच्छत्यन्तरिक्ष इति वा गोशब्दव्युत्पत्तिः । यदा चाऽयं गौर्भवति अथाऽनन्तरं अग्न्यात्मको भवति । यदा चाऽग्निर्भवति अथाऽनन्तरं संवत्सरसत्रस्य गृहपतिः गृहपतित्वमाप्नोति, 'अग्निना वै तेन गृहपतिरेव भूयादि'ति हि ब्राह्मणान्तरम् ॥ २ ॥

एवमग्निहोत्रादिकर्मणामुत्तरोत्तरं सातिशयफलसाधनत्वमुक्तम् । अथ प्रकृतानां वैश्वदेवादीनामक्षयफलसाधनत्वमाह—

**यदा संवत्सरस्य गृहपतिर्भवत्यथ वैश्वदेवस्य मात्रामाप्नोत्यतो वा इतरे परस्तरां परस्तरामेव सर्वे ॥३॥**

यदा यस्मिन् काले उक्तप्रकारेण संवत्सरसत्रस्य गृहपतिर्भवति, अथाऽनन्तरं वैश्वदेवस्य चातुर्मास्येषु प्रथमपर्वणो मात्रां एकदेशसदृशमाप्नोति । संवत्सरसत्रमपि वैश्वदेवफलस्य एकदेशसमं भवतीत्यर्थः । तस्मान्निरतिशयवैश्वदेवस्य फलमितरे सर्वे वरुणप्रघासादयः अतोऽस्माद्वैश्वदेवात्परस्तरां परस्तरामेव उत्तरोत्तरं निरतिशयफलमित्यर्थः । वैश्वदेवाद्वरुणप्रघासोऽधिकफलः ततोऽप्यधिकफलः साकमेधः, ततोऽप्यधिकः शुनासीर्यकः । अमुमर्थं द्योतयितुं परस्तरां परस्तरामिति वीप्सा । एवं चातुर्मास्यानामक्षय्यफलत्वमुक्तम् । तथा

च श्रुत्यन्तरम्-'अक्षय्यं वै चातुर्मास्ययाजिनः सुकृतं भवती'ति ॥२॥

अथैतद्वेदितुः फलमाह—

एतानेव लोकानाप्नोत्येतान् लोकाञ्जयति य एवं वेद ॥ ३ ॥

एवमुक्तं ब्राह्मणार्थं यो वेद जानाति स एतान् अग्निहोत्रादिफलत्वेनोक्तानिमान् लोकान् प्राप्नोति । प्राप्य च तान् सर्वान् लोकान् जयति स्वायत्तान् करोति ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ३ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीर-
बुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते
माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे
सप्तदशाध्यायस्य चतुर्दशः खण्डः ॥

सप्तदशाध्यायस्समाप्तिमगमत् ॥



# अथाऽष्टादशाऽध्यायः ।

## प्रथमः खण्डः ॥

यस्य निश्श्वसितं वेदा यो वेदेभ्योऽखिलं जगत्
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
अस्मिन्नष्टादशेऽध्याये उपहव्यस्ततः परम् ।
ऋतपेयश्शुनाशीर्यवैश्यस्तोमोऽथ तीव्रसुत् ॥
वाजपेयो राजसूय इति सप्त प्रकीर्त्तिताः ॥

तत्राऽऽदौ उपहव्यनामकमेकाहमाह—

**सप्तदशोऽग्निष्टोमः ॥ १ ॥**

अयमेकाहः सर्वोऽपि सप्तदशस्तोमकोऽग्निष्टोमसंस्थः ॥ १ ॥

अस्याऽह्नोऽनिरुक्तधर्मकत्वं प्रतिपादयितुमाख्यायिकामाह—

**देवाश्च वा असुराश्च प्रजापतेर्द्वयाः पुत्रा आसꣳस्तेऽसुरा भूयाꣳसो बलीयाꣳस आसन् कनीयाꣳसो देवास्ते देवाः प्रजापतिमुपाधावन् स एतमुपहव्यमपश्यत् ॥ २ ॥**

पूर्वं प्रजापतेः पुत्राणां देवासुराणाम्मध्ये देवाः (१)प्रबलतरानजय्यानसुरान्मत्वा स्वप्राबल्याय प्रजापतिमुपाधावन्। स च विचिन्त्योपायं एतमुपहव्यमपश्यत् ॥ २ ॥

इदानीं तमुपहव्यमनिरुक्तं प्रायुङ्क्त इत्याह—

**स ऐक्षत यन्निरुक्तमाहरिष्याम्यसुरा मे यज्ञꣳहनिष्यन्तीति सोऽनिरुक्तमाहरत् ॥ ३ ॥**

आहारः कार्त्स्न्येन प्रयोगः। अनिरुक्तत्वं सूत्रवचनेनैव स्पष्टीक्रियते-(२)'उपहव्ये देवतानामधेयानि परोक्षं ब्रूयुः स्वस्थानास्वि'ति । उपहव्यग्रहणमनिरुक्तोपलक्षणम्। अनिरुक्तेषु क्रतुषु स्वस्थानासु देव-

---

१. बहून् प्रचुरतरान् जघन्यानसुरान्मत्वेति मुद्रितपुस्तकपाठः ।

२, लाट्या. श्रौ. ८. ९. १.

तासु तन्नामधेयं परोक्षं ब्रूयुः पर्यायेणेत्यर्थः । परोक्षमेवाऽनिरुक्तत्वमिति । (१)'प्रत्यक्षमस्वस्थानादिव'ति । स्वस्थानात् स्थानान्तरङ्गतासु प्रत्यक्षमेव वचनम् । तत्र तावत् सर्वे पवमानाः सोमस्य स्थानम् । तेषां सोमदेवत्यत्वात् । सर्वाणि पृष्ठानीन्द्रस्य स्वस्थानम्, अग्नेरग्निष्टोमस्तोत्रमित्यादि द्रष्टव्यमिति । (२)'देवशब्दं सर्वत्र वर्जयेयुरि'ति । सर्वेष्वपि स्तोत्रेषु देवशब्दं वर्जयेयुः, देवं सोम इत्यादौ । (३)'होता देवो मही मित्रस्येत्येते होता यज्ञे महीयज्ञस्येति ब्रूयुरि'ति । प्रथमद्वितीययोराज्ययोर्देवमित्रशब्दस्थाने यज्ञमित्रशब्दं ब्रूयुरित्यर्थः । तत्र केनचित् पर्यायेण निर्देशे प्राप्ते नियममाह 'इन्दुरिति सोममि'ति । 'सुषाव सोममद्रिभिरि'त्यादौ सुषावेन्दुरिति ब्रूयुः । अत्राऽग्नेरिन्द्रस्य च स्तोत्रेषु 'सोऽनिरुक्तमाहरदि'ति ब्राह्मणानुरोधेन प्रत्यक्षनामरहिता एव स्तोत्रीयाः कल्पकारेण क्लृप्ताः । तेन तत्र प्रत्यक्षनामधेयाभावादेव तत्पर्यायो नोक्तः । उत्तमे तु स्तोत्रे 'यज्ञायज्ञा वो अग्नय' इति प्रत्यक्षनामधेयं ब्राह्मणेनाऽनुज्ञातम्—'स उत्तमे स्तोत्रे देवानभिपर्यावर्त्तते'त्यादिना । तेन किञ्चिद्स्खलनमस्ति । अत एवाऽग्निशब्दपर्यायस्सूत्रकारेणोक्तः देवशब्दोऽपि तत्र प्रयोज्य एवेति ॥ ३ ॥

(४)अथोपहव्यप्रयोगान्तरेण प्रजापतेर्देवताभिमुखं दर्शयति—

**स उत्तमे स्तोत्रे (५)"देवो वो द्रविणोदा" इति देवानभिपर्यावर्त्तत ॥ ४ ॥**

उत्तमे स्तोत्रे अग्निष्टोमसामनीत्यर्थः ॥ ४ ॥

अस्तु पर्यावृत्तिः किं ततस्स्यादित्यत आह—

**ततो देवा अभवन् परासुराः ॥ ५ ॥**

देवाः प्रबला आसन् असुराः पराभवन्नित्यर्थः ॥ ५ ॥

अथोक्तार्थवेदनं प्रशंसति—

**भवत्यात्मना पराऽस्य भ्रातृव्यो भवति य एव वेद॥६॥**

स्पष्टम् ॥ ६ ॥

---

१. लाट्या. श्रौ. ८. ९. २.　२. लाट्या. श्रौ. ८. ९. ३.
३. लाट्या. श्रौ. ८. ९. ४.　४. अथोपहव्यप्रयोगे प्रजापतेरिति. ख. पु.
५. तृचोऽयं २७३ पृष्ठे गतः ।

उत्तमस्तोत्राश्रयं पूर्वोदाहृतं 'देवो व' इति तृचमपोद्य प्राकृतं यज्ञायज्ञीयमेव कार्यमिति ब्रह्मवादिनां वचनमाह—

**अथो खल्वाहुः "यज्ञायज्ञा वो अग्नय" इत्येव कार्यम् ७॥**

अथोशब्दः पक्षान्तरद्योतनार्थः । आहुः ब्रूयुरित्थं ब्रह्मवादिनः ॥७॥

तत्रोपपत्तिरुच्यते—

**अग्निर्वै सर्वा देवतास्तेन न देवतानां काञ्चनाऽन्तरेति ॥**

(१)"ते देवा बिभ्यतोऽग्निं प्राविशन्, तस्मादाहुरग्निः सर्वा देवता" इति हि श्रुतिः । अथ तद्देवताकमन्त्रकरणेन देवतानां मध्ये न कामपि देवतामन्तरितवान् भवति ॥ ८ ॥

अथोपहव्यशब्दस्य प्रवृत्तिनिमित्तं दर्शयितुमाह—

**इन्द्रो यतीन्(२)सालावृकेयेभ्यः प्रायच्छत्तमश्लीला वागभ्यवदत् स प्रजापतिमुपाधावत्तस्मा एतमुपहव्यं प्रायच्छत्तं विश्वे देवा उपाह्वयन्त यदुपाह्वयन्त तस्मादुपहव्यः॥**

पूर्वमिन्द्रः यतीन् ज्योतिष्टोमाद्यकृत्वा प्रकारान्तरेण वर्त्तमानान् ब्राह्मणान् सालावृकेयेभ्य(३) अरण्यश्वभ्यः प्रायच्छत् । तं ब्राह्मणहन्तारं इन्द्रं अश्लीला निन्दिता वाक् अभ्यवदत् सर्व एनं निनिन्दुरित्यर्थः । स इन्द्रस्तत् प्रमार्ष्टुं प्रजापतिमुपागच्छत्तस्मै एतमुपहव्यं एकाहं प्रायच्छत् । स इन्द्रस्तमन्वतिष्ठदित्यर्थः । तेन विश्वे देवा एनमिन्द्रमुपाह्वयन्त एहि निर्दुष्टस्त्वमसीत्यब्रुवन् । यस्मादनेनोपाह्वयन्त अत उपाह्वानसाधनत्वादस्योपहव्यमिति नाम ॥ ९ ॥

अथेन्द्रस्याऽभिशंसनपरिहारप्रसङ्गेनाऽत्राऽधिकारिणमाह—

**अभिशस्यमानं याजयेत् ॥ १० ॥**

अभिशस्यमानं अन्यैर्दोषारोपणेन निन्द्यमानम् ॥ १० ॥

अभिशस्तस्याऽयमुपहव्य उचित इत्याह—

**देवता वा एतं परिव्रजन्ति यमनृतमभिशंसन्ति देवता एवाऽस्याऽन्नमादयन्ति ॥ ११ ॥**

---

१. तै. सं. ६. २. २    २. सालावृकेयेभ्य इत्येव मूले सर्वत्र पाठः ।

३. तैत्तिरीयसंहितायामिदमन्यथा व्याख्यातम्, ३५५ पृष्ठे द्रष्टव्यम् ।

यं यजमानं अनृतमभिशंसन्ति जनाः एनं देवताः परिव्रजन्ति वर्ज्ज-यन्ति न तस्य हविरादद्त इत्यर्थः। अत एतदनुष्ठानेन देवता (१)एवाऽस्याऽन्नमादयन्ति याज्ञका एनं यजमानं देवतार्हहविष्कं कारयन्ती-त्यर्थः॥ ११॥

न केवलं देवार्ह एवाऽसौ, किन्तु मनुष्यैरपि संव्यवहार्य इत्यत आह-

**तस्य पूतस्य स्वदितस्य मनुष्या अन्नमदन्ति ॥ १२ ॥**

स्वदितस्य शब्दितस्य अनिन्दित इति सर्वैर्व्यवहृतस्य। अथवा भाव्यपेक्षयाऽयं निर्देशः स्वर्गप्राप्तियोग्यस्येत्यर्थः॥ १२॥

अथाऽत्राऽधिकार्यन्तरमाह--

**ग्रामकामो यजेत ॥ १३ ॥**

स्पष्टोऽर्थः॥ १३॥

उक्तकामनावतोऽयमुचित इत्याह—

**मारुती भवति मरुतो वै देवानां विशो विशमे-वाऽस्मा अनुनियुनक्त्यनपक्रामुकाऽस्माद्विड्भवति ॥१४॥**

यतोऽत्र मारुती भवति अतोऽयमुचित इत्यर्थः। (२)'शशमानस्य वा नर' इति मारुती। मरुतां ग्रामस्य च कस्सम्बन्ध इति तत् सम-र्थनं—मरुतो वेत्यादि॥ १४॥

अथाऽधिकार्यन्तरमाह--

**पशुकामो यजेत पौषी भवति ॥ १५ ॥**

स्पष्टोऽर्थः॥ १५॥

(३)'उत नो गोविदश्वविदि'ति। पूष्णः पशोश्च कः सम्बन्ध इति, तदाह-

**पशवो वै पूषा पशूनेवाऽवरुन्धे ॥ १६ ॥**

'पूषा पशून् प्रजनयती'ति श्रुत्यन्तरम्॥ १६॥

---

१. एवाऽस्य यजमानस्याऽन्नमदनीयमिति ख. पु.।

२. शशमानस्य वा नरः स्वेदस्य सत्यशवसः। विदा कामस्य वेनतः॥

सा. सं. उ. ७. ३. १२.

३. उत नो गोविदश्ववित्पवस्व सोमान्धसा। मक्षूतमेभिरहभिः॥

सा. सं. उ. ३. २. ५.

अथाऽत्रत्यां वैश्वदेवीं प्रशंसति--

**वैश्वदेवी भवति विश्वे ह्येनं देवा उपाह्वयन्त ॥१७॥**

यत एनमदुष्टमिन्द्रं विश्वे देवा उपाह्वयन्त अतस्तद्देवत्यता युक्ता । (१)'उप नः सूनवो गिर' इत्येषा वैश्वदेवी ॥ १७ ॥

अथैतस्य होतुः पृष्ठे बृहत्सामतामाह—

**बृहत्सामा भवति ॥ १८ ॥**

एकाहापेक्षया बृहत्सामेति पुँल्लिङ्गता ॥ १८ ॥

कथमेवमिति तत्राऽऽह—

**प्रजापतिर्ह्येनमिन्द्राय प्रायच्छत् ॥ १९ ॥**

स्पष्टोऽर्थः ॥ १९ ॥

अथाऽत्र दक्षिणायां विशेषमाह—

**अश्वः श्यावो दक्षिणा ॥ २० ॥**

श्यावाश्वो दक्षिणा ॥ २० ॥

कथमनिरुक्तस्याऽश्वस्याऽन्वय इति तत्राऽऽह—

**स ह्यनिरुक्तः ॥ २१ ॥**

सोऽश्वः प्रजापतिसम्बन्धित्वात्तस्य चाऽनिरुक्तत्वादश्वोऽप्यनिरुक्तः ॥ २१ ॥

कस्याऽयमश्वः ? तमाह—

**स ब्रह्मणे देयः ॥ २२ ॥**

स्पष्टोऽर्थः ॥ २२ ॥

सत्स्वन्येषु ऋत्विक्षु कथं तस्येति, तत्राऽऽह—

**ब्रह्मा वा ऋत्विजामनिरुक्तः स्वेनैवैनं तद्रूपेण समर्द्धयति ॥ २३ ॥**

अध्वर्य्वादिवत् प्रतिनियतशाखोक्तव्यापाराभावादनिरुक्तत्वमस्य । तत्तथा सति ब्रह्मणेऽश्वदाने सत्येनमनिरुक्तमेकाहं स्वेनैवाऽनिरुक्तेन रूपेण समर्द्धयति ॥ २३ ॥

---

१. उप नस्सूनवो गिरः शृण्वन्त्वमृतस्य ये । सुमृडीका भवन्तु नः ॥
सा. सं. उ. ७. ३. १३.

अथोक्तार्थं प्रशंसति--

**यावद्ध वै कुमारे सद्यो जात एनो नाऽस्मिꣳस्तावच्च नैनो भवति य एवं वेद ॥ २४ ॥**

सद्यस्तदानीमेव जाते उत्पन्नेऽस्मिन् कुमारे कारणाभावादेनः पापं नाऽस्ति। तावत्तस्मिन्नेव काले एनो न भवति य उक्तमर्थमधिगच्छति तस्य उक्तार्थज्ञानानन्तरमेव निर्दोषो भवतीत्यर्थः। अत्र(१) 'एवस्वेन्द्रो वृषा सुत'(२) 'एते असृग्रमिन्दव'(३) 'उत नो गोषणिं धियं' (४)'शशमानस्य वा नरः' इत्यादिकः कल्पो द्रष्टव्यः। अत्र दक्षिणाविषये सूत्रकारैः(५) 'आदिष्टा दक्षिणा ब्राह्मणेनेतरेभ्यश्च किञ्चिद्दद्यादि'ति। 'अश्वः श्यावो दक्षिणा तं ब्रह्मणे दद्यादि'त्यादिष्टा। तत्र ब्रह्मव्यतिरिक्तेभ्योऽप्यानत्यर्थं किञ्चिद्दद्यादित्यर्थः। अत्र श्यावदक्षिणाविचारो बाधलक्षणस्य तृतीयपादे चिन्तितः--

श्यावाश्वो ब्रह्मभागस्य बाधको निखिलस्य वा।
आद्यः प्राकाशवत् मैवं धेनुवत्सोऽपि नाऽन्यगः॥

अस्त्युपहव्यनामक एकाहविशेषः। तत्र श्रूयते--'अश्वः श्यावो रुक्मललाटो दक्षिणा स ब्रह्मणे देय' इति। तत्र(६)प्राकाशन्यायेन ब्रह्मभागस्यैव बाधक इति पूर्वः पक्षः। दक्षिणाशब्दसंयोगात्(७) धेनुन्यायेन

---

१. ( सा. सं. उ. २. १. २. ) तृचोऽयं १८४ पृष्ठे द्रष्टव्यः।

२. ( सा. सं. उ. २. २. १ ) अयमपि १८४ पृष्ठेऽवलोकनीयः।

३. उत नो गोषणिं धियमश्वसां वाजसामुत। नृवत्कृणुह्यूतये॥

सा. सं. उ. ७. ३. ११.

४. ऋगियं ३०६ पृष्ठेऽवलोकनीया। ५. लाट्या. श्रौ. ८. ९. ५.

६. पूर्वमीमांसायां दशमतृतीयसप्तदशेऽधिकरणे 'प्राकाशावध्वर्यवे ददाती'ति वाक्यमुदाहृत्य किमत्र दर्पणापरपर्यायप्राकाशौ कृत्स्नस्य क्रतुसम्बन्धिप्राकृतदक्षिणाद्रव्यस्य निवर्तकौ? उताऽध्वर्युभागस्य निवर्तकाविति सन्दिह्य अतिदेशप्राप्तदानत्वावच्छिन्नमुद्दिश्य प्राकाशयोर्विधानात्कृत्स्नक्रतुदाक्षिण्यनिवृत्तिरिति पूर्वपक्षयित्वा चोदकप्राप्तदानोद्देशेन प्राकाशविधाने अध्वर्युशब्दस्याऽऽनर्थक्यप्रसङ्गात् चोदकप्रवृत्तेः पूर्वमेवाऽध्वर्युप्राकाशविशिष्टमपूर्वमेव दानान्तरं विधीयते, तथा च न कृत्स्नक्रतुदाक्षिण्यस्य निवृत्तिः, किन्तु अध्वर्युभागस्यैवेति सिद्धान्तितम्। तन्न्यायेनेत्यर्थः।

७. 'अथैष भूर्वैश्वदेवः' इति वाक्यविहितभूसंज्ञकैकाहप्रविधौ 'तस्य धेनुर्दक्षिणे'ति श्रुतम्। अत्र किमियं धेनुः 'गौश्चाऽश्वश्चे'ति वाक्यविहितप्राकृतगवाश्वादेस्सर्वस्य बाधि

कृत्स्नस्य बाधकः । उपरितनेन तु 'स ब्रह्मणे देय' इति वाक्यान्तरेण तस्याऽश्वस्य ब्रह्मव्यतिरिक्तपुरुषान्तरसम्बन्धो बाध्यते । तथा सति पुरुषान्तरस्याऽतिदिष्टोपदिष्टदक्षिणाद्वयबाधाल्लौकिकदानादिना केन-चिदुपायेनाऽऽनतिरिसिध्यति ॥ २४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे अष्टादशाध्यायस्य प्रथमः खण्डः ॥

---

## द्वितीयः खण्डः ॥

अथाऽन्यमेकाहमाह—

**सप्तदशोऽग्निष्टोमः ॥ १ ॥**

स्पष्टोऽर्थः ॥ १ ॥

अत्र दीक्षोपसदोर्विशेषमाह—

**तस्य द्वादश दीक्षोपसदः ॥ २ ॥**

अथाऽस्य सूत्रकार एवाऽऽह(१) 'ऋतपेये तस्य द्वादश दीक्षोपसद इति तिस्र उपसद' इति । अयमर्थः-नव दीक्षास्तिस्रश्चोपसद इत्यभि-प्रेत्य द्वादशोपसदः । कुतः? 'तिस्र एव साह्नस्योपसद' इति प्रकृतौ वचनादिहाऽपि चोदकतः प्राप्तत्वात् । अथ वा षड्दीक्षाः षडुपसदः इति

---

का ? उत गवामेव ? इति सन्देहे-प्रकृतौ 'गौश्चाऽश्वश्चे'ति वाक्यश्रुतगवादिशब्दानां जा-तिवाचित्वेन प्राधान्यात् दक्षिणायाश्च तदपेक्षया गुणभूतत्वात् 'प्रति प्रधानं गुणावृत्तिरि'ति न्यायेन प्रत्येकमेव गवादीनां दक्षिणात्वं न्याय्यम् । तद्रूपेणैव प्रकृतितो बह्वीषु दक्षिणासु विकृतौ प्राप्तासु तन्मध्ये यस्याः कस्याश्चित्स्थाने निविशमानेयं धेनुस्सामर्थ्याद्गोद्वारेणैव निविशत इति गवामेव निवर्तिका नाऽश्वादीनामिति पूर्वः पक्षः । प्रकृतौ गवादीनां प्रत्येक-दक्षिणात्वे 'गौश्चाऽश्वश्चे'ति वाक्ये चशब्दं विनैव गवादीनामेकवाक्योपादानात्समुच्चयसिद्धे-श्चशब्दस्याऽऽनर्थक्यं स्यात् । अतस्तदानर्थक्यभिया चशब्दस्येतरेतरयोगप्रत्यायकत्वं स्वीकृत्य गवादीनामेकदक्षिणासाधनत्वं वाच्यम् । तथा च गवादीनां दक्षिणाविशेषणत्वेनाऽप्राधा-न्यात् 'प्रतिप्रधानं गुणावृत्ति'रिति न्यायस्याऽप्रवृत्तेः प्रकृतौ गवाद्यात्मिकैकैव दक्षिणेति वक्तव्यं भवति । तद्रूपेण प्रकृतितो विकृतौ प्राप्ताया दक्षिणायास्स्थाने निविशमानेयं धेनुः प्राकृतगवादेस्सर्वस्य निवर्तिकेति सिद्धान्तः । तन्न्यायेन प्रकृतेऽपि कृत्स्नस्य भागस्य बाधक इत्यर्थः ।

१. लाट्या. श्रौ. ८, ३, ७.

(१)समविभागो विशेषाश्रवणादिति । भरद्वाजस्तु प्रत्येकं द्वादशेति व्याख्यातवान् ॥ २ ॥

अथाऽत्राऽधिकारिणमाह—

**स्वर्गकामो यजेत ॥ ३ ॥**

स्पष्टोऽर्थः ॥ ३ ॥

कथं द्वादशदीक्षादिमत्यस्मिन् स्वर्गार्थिनः सम्बन्ध इति तत्राऽऽह—

**द्वादश मासाः संवत्सरः संवत्सरः स्वर्गो लोकः स्वर्गमेवैतेन लोकमाप्नोति ॥ ४ ॥**

संवत्सरस्याऽऽदित्यात्मकत्वादादित्यस्य च स्वर्गस्थानत्वात् संवत्सरः स्वर्गो लोक इत्युच्यते ॥ ४ ॥

(२)अस्य दीक्षादिवसे व्रतविशेषमाह—

**घृतव्रतो भवति ॥ ५ ॥**

अत्र सूत्रकारः—(३) 'घृतव्रतो भवतीति यथोत्साहं दीक्षासु प्राश्नीयादि'ति । अयमर्थः–'घृतव्रतो भवती'ति ब्राह्मणम् । प्रकृतस्य पयोव्रतस्य प्रत्याम्नायोऽयम् । तत्र दीक्षादिवसेषु यथाबलं घृतप्राशननियम इति॥

अथोक्तं घृतव्रतं प्रशंसति—

**देवव्रतं वै घृतं देवव्रतेनैव देवता अप्येति ॥ ६ ॥**

स्पष्टोऽर्थः ॥ ६ ॥

अथोपसद्दिवसे घृतप्राशने उत्तरोत्तराङ्गुलिपर्वणा कर्त्तव्यत्वं सस्तुतिकमाह—

**उत्तरेणोत्तरेण काण्डेनोपैत्युत्तर उत्तर एषां लोकानां ज्यायान् स्वर्गस्य लोकस्य समष्ट्यै ॥ ७ ॥**

एषां भूरादीनां मध्ये पूर्वपूर्वापेक्षयोत्तरोत्तरो लोको ज्यायान् प्रशस्यः । अत्र सूत्रम्—(४) 'उत्तरोत्तरेण काण्डेनोपैतीति पृथगुपसत्स्वङ्गुलिपर्वभिः प्रतिलोमैः प्राश्नीयादि'ति । 'उत्तरेणोत्तरेण काण्डेनोपैती'ति ब्राह्मणमुपसत्सु नियमविधायकम् । अङ्गुलेः उत्तमेन काण्डेन घृतमादाय प्रथमायामुपसदि तावन्मात्रं घृतं प्राश्नीयात् ततो मध्यमेन

१. समविभागस्य श्रवणादिति मुद्रितपुस्तकपाठः ।

२. अत्र दीक्षादिवसव्रते विशेषमिति ख. पु. ।

३. लाट्या. श्रौ. ८. ९. ८.    ४. लाट्या. श्रौ. ८. ९. ९.

ततः प्रथमेनेत्येवं प्रतिलोमैः पर्वभिः प्राश्नीयादित्यर्थः । कुतः ? 'उत्तरोत्तर एषां लोकानां ज्यायानि'ति वाक्यशेषात् । प्रातिलोम्य एव पर्वणामुत्तरोत्तरभूयस्त्वादानुलोम्ये वैपरीत्याच्चेति । अत्र प्राशने अङ्गुलिपर्वविधानात् प्राकृतचमसानां निवृत्तिरिति । अथ मतान्तरमाह—(१) 'एकाङ्गुल्या पृथक्पर्वभिः सर्वान् देशांश्चमसा मिताः स्युस्तैरनुलोमैरिति शौचिवृक्षिः' 'प्रतिलोमैः प्राश्नीयादिति शाण्डिल्य' इति । अयमर्थः—प्राकृतचमसबाधो न कार्यः, अबाधेनाऽपि शास्त्रसम्भवात् कथं चमसस्यैव पृथक्परिमाणविधिरयं चमसप्रान्ते सर्वत ऊर्ध्वप्रमाणेन पृथक्पृथगङ्गुलिकाण्डदघ्नाः स्युः । तेनाऽर्थाच्चमसत्रयं सम्पद्यते । तत्र प्रथमाङ्गुलिकाण्डदघ्नचमसं घृतेन पूरयित्वा प्रथमोपसदि प्राश्नीयात् । एवमुत्तरोत्तरकाण्डदघ्नौ चमसावुत्तरयोरुपसदोः । कुतः ? उत्तरेणोत्तरेणेति वचनादानुलोम्यप्रतीतेरिति ॥ ७ ॥

अथाऽस्य बृहत्साम सार्थवादं विधत्ते—

**बृहत्साम भवति बृहता वै देवाः स्वर्गं लोकमायन् स्वर्गमेवैतेन लोकमाप्नोति ॥ ८ ॥**

स्पष्टोऽर्थः ॥ ८ ॥

ऋत्विजां सदःप्रसर्पणसमये विशेषमाह—

**ऋतमुक्त्वा प्रसर्पन्त्यृतेनैवैनꣳ स्वर्गं लोकं गमयन्ति ॥ ९ ॥**

एतत् प्रसर्पणवाक्यम्, शाखान्तरीयं 'ऋतं वदन्तो भक्षयन्ती'ति भक्षणवाक्यञ्च विषयीकृत्य ऋतवदनाविषये सूत्रकारः—(१) 'ऋतमुक्त्वा प्रसर्पन्तीति प्रसर्प्स्यन्तः सदो भक्षयिष्यन्तश्च देवसत्यानि ब्रूयुरियं भूमिरसावादित्यः, उदेता प्रातरादित्य' इति । अयमर्थः—सदःप्रसर्पणं सोमभक्षणञ्च करिष्यन्तो देवसत्यानि ब्रूयुरियं भूमिरित्येकं सत्यमसावादित्य इत्यपरम् । उदेता उदेष्यतीत्यर्थः । त्रीण्येतानि देवताश्रितानि सत्यानि परमार्थभूतानीति भक्षणसमये ऋतवदने च । धानञ्जय्यस्त्वन्यथा ब्रूते । तथा च सूत्रम्—(३) 'या देवताश्चमसैरिज्येरंस्तत्पीतवद्भक्षमन्त्रानूहेयुरिति शाण्डिल्यः, 'अविकारेण तु नाराशंसानामि'

---

१. लाट्या. श्रौ. ८. ९. १०. २. लाट्या. श्रौ. ८. ९. १२.

३. लाट्या. श्रौ. ८. ९. १३–१४.

ति। 'इन्द्रपीतस्ये'त्यन्तमुक्त्वा 'अग्निपतिस्य मित्रावरुणपीतस्येन्द्रिया-वत' इत्यादिना या देवता इज्यन्ते ता एवोहेयुरित्यर्थः ॥ ९ ॥

अथ ऋतपेयदक्षिणायां विशेषमाह—

**सोमचमसो दक्षिणा दैवतस्यैव देवता अप्येति ॥१०॥**

सोमस्याऽपि देवतात्वात् इज्यमानदेवता तु फलत्वेन प्राप्तान् देवा-नप्येति प्राप्नोति ॥ १० ॥

अस्य चमसस्योदुम्बरत्वं सार्थवादं विधत्ते—

**औदुम्बरो भवत्यूर्गुदुम्बर ऊर्जमेवाऽवरुन्धे ॥ ११ ॥**

(१)'देवा वा ऊर्जं व्यभजन्त तत उदुम्बर उदतिष्ठदि'ति श्रुतेः औ-दुम्बरस्य ऊर्ग्रूपत्वम्। सोमचमसदक्षिणाविषये सूत्रकारः—(२)'सोम-चमसो दक्षिणेत्यभिषुतः स्यादि'ति क्रत्वर्थतयाऽभिषुतस्य सोमरसस्य पूर्णः सोमचमसः, न तु लौकिकस्येत्यर्थः। कुत इत्याह—(३)'तस्मिन् हि चमसं प्रमाणमि'ति शास्त्रीये सोमरसे (४)झटिति चमसप्रतीतिः। स तु प्राकृतेभ्यो दशभ्योऽतिरिक्तः सम्पादनीय इत्यर्थः। (५)'तस्मि-न्माध्यन्दिने सवनमुखीयैः सहोन्नयेयुरि'ति सवनमुखीयानां दशचमसा-नामुन्नयनकाले तमप्युन्नयेयुरिति। 'जुहुयुश्चाऽस्य हुते देय इति हि ब्राह्मणमि'ति। होमकाले तस्य चमसस्यैकदेशं जुहुयुः। 'हुतो देय' इति शाखान्तरीयब्राह्मणादित्यर्थः। (६)'तं दक्षिणावेलायां पूर्वेणाऽऽहवनीय-मनिर्हरन्तो वेदेर्दक्षिणेन सदोहविर्धानानि हारयित्वा पूर्वया द्वारा सदः प्रविशेयुरि'ति। वेदेर्बहिरन्त इत्यर्थः ॥ ११ ॥

विहितश्चमसः कस्मै कीदृशाय देय ? इति बुभुत्सायामाह—

**सगोत्राय ब्रह्मणे देयः सोमपीथस्याऽविदोहाय॥१२॥**

अविदोहाय अविनाशाय विपरीतफलप्रशमनत्वायेत्यर्थः। अत्र दक्षिणाविषय एव सूत्रकारः—(७)'संस्थितेऽहन्यृत्विग्भ्यः किञ्चिद्दद्या-दि'ति। सोमचमस एव क्रतौ दक्षिणा, तथाऽप्यृत्विगानत्यर्थं कि-ञ्चिद्दद्यादित्यर्थः ॥ १२ ॥

---

१. तै. ब्रा. १.१.३.९. २. लाट्या. श्रौ. ८. ९. १५. ३. लाट्या. श्रौ. ८.९.१५.
४. सोमचमसप्रतीतिरिति. ख. पु. ५. लाट्या. श्रौ. ८. ९. १६.
६. लाट्या. श्रौ. ८. ९. १७. ७. लाट्या. श्रौ. ८. ९. १८.

अथ स्तोमे नियममाह—

**सर्वः सप्तदशो भवति ॥ १३ ॥**

पवमानाज्यपृष्ठादिकं सर्वमित्यर्थः ॥ १३ ॥

सप्तदशत्वं स्तौति—

**द्वादश मासाः पञ्चर्त्तवः स वै संवत्सरः संवत्सरः स्वर्गो लोकः स्वर्गमेवैतेन लोकमाप्नोति ॥ १४ ॥**

एष सोमचमसो दक्षिणा ब्रह्मभागस्यैव बाधकः ? उत कृत्स्नस्येति बाधाध्याये तृतीयपादे चिन्तितम्—

किं सोमचमसो ब्रह्मभागहायुत कृत्स्नहृत् ।
पशूनां निन्दया सर्वप्रसक्तेर्ब्रह्मभागहृत् ॥
निन्देयं न निषेधाय चमसस्तुतये त्वसौ ।
श्यावाश्ववत्सर्वदेयः पुरुषान्तरबाधकः ॥

ऋतपेये श्रूयते 'औदुम्बरस्सोमचमसो दक्षिणा सप्रियाय सगोत्राय ब्रह्मणे देय' इति । सोऽयं सोमचमसो ब्रह्मभागमेव बाधते। कुतः ? सर्वस्य दक्षिणाद्रव्यस्यात्र पुनः प्रसञ्जनात् । तथा हि—'ऋतं वै सोमोऽनृतं पशवो यः पशून् दद्यात्सोऽनृतं कुर्य्यात्' इति पशुरूपदक्षिणा भागनिषेधाय निन्द्यते । तौ च निन्दानिषेधौ सर्वदेयप्रसक्तिं गमयतः । तस्मान्न सर्वबाधक इति प्राप्ते—

ब्रूमः—नाऽत्र निषेधाय पशुनिन्दोच्यते, किन्तु विधित्सितसोमचमसस्तुत्यर्थोऽयमर्थवादः । तेन निन्दायाः सर्वप्रसञ्जकत्वं नाऽस्ति। तस्मात् सर्वप्रसक्तिरूपाया अभ्यधिकाशङ्काया निराकृतत्वात् पूर्वाधिकरणेनाऽत्र निर्णयो द्रष्टव्यः ॥ १४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशेऽष्टादशाध्यायस्य द्वितीयः खण्डः ॥

## तृतीयः खण्डः ॥

अथाऽन्यं सप्तदशस्तोमकमग्निष्टोमसंस्थमेकाहमाह—

**सप्तदशोऽग्निष्टोमः ॥ १ ॥**

स्पष्टोऽर्थः ॥ १ ॥

तत्र दीक्षणीयाप्रायणीयातिथ्योपसदाद्यनुष्ठेयमुख्यपदार्थेषु द्वादशमानप्रभृत्युत्तरोत्तरद्वैगुण्यदक्षिणाः, माध्यन्दिने(१)पवमाने होतुर्द्वात्रो रुक्मस्रग्रूपदक्षिणाश्चाऽऽह—

तस्य दीक्षणीयायामिष्टौ द्वादशमानꣳ हिरण्यं ददाति चतुर्विꣳशतिमानं प्रायणीयायां द्वे चतुर्विꣳशतिमाने आतिथ्यायां चत्वारि चतुर्विꣳशतिमानानि प्रातः प्रथमायामुपसद्यष्टौ चतुर्विꣳशतिमानान्यपराह्णे प्रथमायामुपसदि षोडशचतुर्विꣳशतिमानानि प्रातर्मध्यमायामुपसदि द्वात्रिꣳशतं चतुर्विꣳशतिमानान्यपराह्णे मध्यमायामुपसदि चतुषष्टिं चतुर्विꣳशतिमानानि प्रातरुत्तमायामुपसद्यष्टाविꣳशतिशतं चतुर्विꣳशतिमानान्यपराह्ण उत्तमायामुपसादि द्वे अष्टाविꣳशतिशतमाने अग्नीषोमीयस्य पशोर्वपायां चत्वार्यष्टाविꣳशतिशतमानानि प्रातःपशोर्वपायामष्टावष्टाविꣳशतिशतमानानि प्रातस्सवने सन्नेषु नाराशꣳसेषु षोडशाष्टाविꣳशतिशतमानानि माध्यन्दिने सवनेऽनडुच्छतञ्च रुक्मो होतुः स्रगुद्गातुर्द्वात्रिꣳशतमष्टाविꣳशतिशतमानानि तृतीयसवने सन्नेषु नाराशꣳसेषु चतुष्षष्टिमष्टाविꣳशतिशतमानान्युदयनीयायामिष्टावष्टाविꣳशतिशतमष्टाविꣳशतिशतमानानि वशाया वपायाम् ॥ २ ॥

वशा अनूबन्ध्या। अत्रोपसदन्ते अष्टाविंशतिशतं चतुर्विंशतिमानानीत्युक्तम्, ब्राह्मणे तावत्पर्य्यन्तं चतुर्विंशतिमानमारभ्योत्तरोत्तरं द्वे चतुर्विंशतिमाने इत्यादिद्वैगुण्यनिर्देशः स्पष्टः। तत ऊर्ध्वं अग्नीषोमीयप्रभृति द्वे अष्टाविंशतिशतमाने चत्वार्य्यष्टाविंशतिशतमानानीत्येवं द्विगुणाभ्यासः कृतः। तत्र मानशब्दश्चतुर्विंशतिमानं लक्षणयाऽऽह। यथा भामेत्येकदेशोक्तावपि सत्यभामा गम्यते तद्वत्। तेन द्वे अष्टाविंशतिशतमाने इत्यादौ तत्संख्याविशिष्टानि चतुर्विंशतिमानान्येव देयानी-

१. सवन इति. ख. पु.

त्यर्थः । कुत एतत् ? पूर्वेषु स्थानेषु द्विगुणाभ्यासस्य प्रकान्तत्वात् यथाश्रुतमानमात्रग्रहणे कनीयस्त्वप्रसङ्गाच्च । तेनाऽग्नीषोमीयप्रभृतिषु मानशब्दश्चतुर्विंशतिमानलक्षणार्थ इति सिद्धम । अनडुच्छृतस्य रु· क्मेण सह समुच्चयः । अधिकदानरूपरुक्मस्रगर्थमाह सूत्रकारः—(१)'रुक्मो होतुरिति निष्को नामाऽलङ्कारस्तं दद्यात्, स्रगुद्गातुरिति हिरण्मयी स्यादि'ति । तत्र दीक्षणायादौ द्वादशमानमित्यादिदक्षिणा दानं दक्षिणायामेव कालोत्कर्षादपकर्षेव न पृथगिति वेदितव्यम् ॥२॥

अथोक्तार्थज्ञानपूर्वकानुष्ठानवतः फलमाह—

**एष वा अनडुहो लोकमाप्नोति य एवं वेद ॥ ३ ॥**

अत्र वेदनमुपलक्षणम, एवं ज्ञात्वा योऽनुतिष्ठति स इत्यर्थः । अनडुह इति जात्यपेक्षयैकत्वम् । लोकशब्दः समूहवाची । अनडुहां समूहं प्राप्नोतीत्यर्थः । अनडुहो लोकप्राप्त्यर्थमादित्यलोकप्राप्त्यर्थमिति वा लङ्कल्प इत्यापस्तम्बस्मृति व्याचक्षाणेन फलत्वेनाऽनडुहो लोकस्य निर्दिष्टत्वात् केवलं वेदितुः फलश्रवणेऽपि तत्पूर्वकानुष्ठातुरेव फलत्व· कल्पनम् । यद्वा श्रुतत्वात् (२)ज्ञातुरेव तत्फलं भवेत्, किमु वक्तव्यम· नुष्ठातुरिति कैमुतिकेन सिध्यति ॥ ३ ॥

अथ फलान्तरमाह—

**एष वै ज्योतिष्मन्तं पुण्यं लोकं जयति य एवं विद्वा· नेतेन यजते ॥ ४ ॥**

ज्योतिष्मन्तमादित्यलोकमित्यर्थः । अथाऽस्य कल्पः—'एते असृग्र· मिन्दवः, उत्ते शुष्मास ईरत इति पुरस्तात्पर्यासस्य तृचपञ्चर्चे स्वासु इयेतं समानमितरत्प्रथमेन साहस्रेणे'ति ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ· प्रकाशेऽष्टादशाध्यायस्य तृतीयः खण्डः ॥

## चतुर्थः खण्डः ॥

अथ वैश्यस्तोमाख्यमाग्निष्टोमसंस्थमेकाहमाह—

**सप्तदशोऽग्निष्टोमः ॥ १ ॥**

स्पष्टोऽर्थः ॥ १ ॥

---

१. लाट्या. श्रौ. ८. १०. ३, ४. २. ज्ञातुरपीति ख. पु.

तत्र सवनत्रयगतेषु सोमेषु श्रीणने विशेषमाह—

**तस्य प्रातस्सवनीयान् सोमान् प्रतिदुहा श्रीणाति शृतेन मध्यन्दिने दध्ना तृतीयसवने ॥ २ ॥**

अस्याऽर्थमाह द्राह्यायणः—'वैश्यस्तोमे सद्यो दुग्धेन पयसा सोमं मिश्रं कुर्य्युः प्रातस्सवने, शृतेन मध्यन्दिने, दध्ना तृतीयसवन' इति । सद्यो दुग्धं पयः प्रतिधुगित्युक्तम् । शृतं पक्वं पय इत्यर्थः ॥ २ ॥

अत्राऽधिकारिणमाह—

**पशुकामो यजेत ॥ ३ ॥**

स्पष्टम् ॥ ३ ॥

अथ सवनभेदेनोक्तां श्रयणद्रव्यव्यवस्थां पक्षान्तराशङ्कानिराकरणेन स्थापयति—

**यत् सर्वाणि सवनान्याशीर्वन्ति भवन्त्यनुसवनमेवैनं पशुभिः समर्द्धयति प्रजा त्वस्य मीलितेव भवति शुक्रिये हि सवने पयसा श्रीणाति ॥ ४ ॥**

यद्यपि त्रीण्यपि सवनानि दध्याशीर्युक्तानि भवन्ति, तदा अस्य यजमानस्य प्रतिसवनं पशुसमृद्धिः कृता भवति । किन्तु अस्य प्रजा मीलितेव सङ्कुचितेव भवति । अतः शुक्रिये सवने प्रातर्मध्यन्दिने पयसा श्रीणाति, तत उक्तदोषो न भवतीत्यर्थः । यद्वा इदं वाक्यं केवलदोषपरतया व्याख्येयम् । अस्मिन् पक्षे आशीःपदेन श्रयणसाधनं पयो दधि चोच्यते । यदि सर्वाणि सवनानि उक्तप्रतिधुगादिद्रव्याशीर्वन्ति भवन्ति, तर्हि यजमानस्य पशुसमृद्धिः स्यादेव । किन्तु प्रजाहानिर्भवति । तत्र हेतुरुच्यते–हि यस्मात् शुक्रिये शुक्रः ऋजीषाभावेनाऽगतसारः सोमः । एतर्हि एतद्वती दीप्ते प्रातर्मध्यन्दिने अपि सवने अयं पयसा श्रीणाति सोमम् । अतो युक्तं प्रजामीलनं तृतीयसवने ऋजीषत्वादाशीश्श्रयणं युक्तम् । स्वत एव दीप्तयोः सवनयोराशीश्श्रयणेन सोमस्य स्वाभाविकदीप्तेः सङ्कुचितत्वादित्यभिप्रायः ॥ ४ ॥

अथोक्तश्रयणत्वेन पशव्यत्वाद्वैश्यस्याऽत्राऽधिकार इत्याह—

**वैश्यं याजयेत् ॥ ५ ॥**

स्पष्टम् ॥ ५ ॥

अत्र वैश्यस्याऽन्वयमाह—

**एतद्वै वैश्यस्य समृद्धं यत्पशवः पशुभिरेवैनꣳ समर्द्धयति ॥ ६ ॥**

समृद्धं समृद्धिरित्यर्थः ॥ ६ ॥

अत्र होतुः पृष्ठे विशेषमाह—

**तस्य कण्वरथन्तरं पृष्ठम् ॥ ७ ॥**

(१)'अभि त्वा शूरे'त्यत्र कण्वरथन्तरम् ॥ ७ ॥

अथ ब्राह्मणाच्छंसिनः पृष्ठे विशेषमाह—

**सदोविशीयं ब्रह्मसाम ॥ ८ ॥**

(२)'आ नो विश्वासिव'त्यत्र सदोविशीयम् ॥ ८ ॥

उक्तद्वययोगं प्रशंसति—

**पशवो वै कण्वरथन्तरं पशवः सदोविशीयमाभिपूर्वानेवाऽस्मिन् पशून् दधाति ॥ ९ ॥**

स्पष्टम् ॥ ९ ॥

अथाऽत्र बहिष्पवमानाज्यादेः (३)सर्वस्याऽपि सप्तदशस्तोमत्वमाह—

**सर्वः सप्तदशो भवति ॥ १० ॥**

स्पष्टम् ॥ १० ॥

अथ साप्तदश्यं प्रशंसति—

**द्वादश मासाः पञ्चर्तवः स वै संवत्सरः संवत्सरं पशवोऽनुप्रजायन्ते तानेवाऽऽप्त्वाऽवरुन्धे ॥ ११ ॥**

अथाऽस्य कल्पः—'पवमानस्य विश्ववित्' इत्युतत्या रुचैते अस्रग्रमिन्द्रवस्तन्त्वानूरुणानि बिभ्रतं पवमानस्य ते कवे दिस्त्रेभिरग्ने अग्निभि-

---

१. सा. सं. उ. १ .१. ११.

२. आ नो विश्वासु हव्यमिन्द्रं समत्सु भूषत ।
उप ब्रह्माणि सवनानि वृत्रहन्परमज्या ऋचीषम ॥ १ ॥
त्वं दाता प्रथमो राधसामस्यसि सत्यं ईशानकृत् ।
तुविद्युम्नस्य युज्या वृणीमहे पुत्रस्य शवसो महः ॥ २ ॥
सा. सं. उ. ७. १. २

३. सर्वत्राऽपीति मुद्रितपुस्तकपाठः ।

मित्रं वयं हवामह इन्द्रं वो विश्वतस्परि ता हुवे ययोरिदमाभित्वा शूर-नोनुम इति कण्वरथन्तरं पृष्ठमानो विश्वासु हव्यमिति सदोविशीयं ब्रह्मसाम जनुषैकर्चयोः सफपौष्कले परित्यं हर्यतं हरिमित्यनुष्टुप् पवित्रन्त इति काबमन्त्यमुद्धरत्युक्थानि समानमितरमायुषैकाहिकेनेति ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशेऽष्टादशाध्यायस्य चतुर्थः खण्डः ॥

## पञ्चमः खण्डः ॥

अथ तीव्रसोमाख्यं सप्तदशस्तोमकमुक्थसंस्थमेकाहमाह—

**सप्तदश उक्थ्यः ॥ १ ॥**

स्पष्टोऽर्थः ॥ १ ॥

अथ सोमातिपवितस्याऽत्राऽधिकार इति वक्तुमाह—

**इन्द्रो वृत्रमहन् स विष्वङ्वीर्येण व्यार्च्छत्तस्मै देवाः प्रायश्चित्तिमैच्छꣳस्तं न किञ्चनाऽधिनोत्तं तीव्रसोम एवाऽधिनोत् ॥ २ ॥**

पूर्वं वृत्रं हतवत इन्द्रस्य सर्वतो वीर्येऽपगते सति देवाः पुनः प्राप्त्युपायं विचिन्त्य बहून्यज्ञान् प्रायुञ्जत, किञ्चिदपि नाऽधिनोत् नाऽप्रीणयत् । तं(१) तीव्रसोमस्त्वधिनोत् ॥ २ ॥

एवं प्रशस्येदानीं तीव्रसोमे सोमातिपवितस्याऽधिकार इत्याह—

**सोमातिपवितं याजयेत् ॥ ३ ॥**

स्पष्टोऽर्थः ॥ ४ ॥

तत्कुत इति तत्राऽऽह—

**छिद्र इव वा एष यꣳ सोमोऽतिपवते यत्तीव्रसोमेन यजते पिहित्या एवाऽच्छिद्रतायै ॥ ४ ॥**

यं यजमानं सोमोऽतिपवते एष छिद्र इव वै असम्पूर्ण एव खलु । यत्तीव्रसोमेन यजते तत्पिहित्या एव सोमातिपवनविरोधायैव । सोऽप्यच्छिद्रतायै सम्पूर्णसामर्थ्यायैव । तीव्रश्चाऽसौ सोमश्चेति तीव्रसोमः ।

---

१. तीव्रसोम एवेति ख. पु.

तीव्रसोमत्वं(१)'शतमाशिरं दुहन्ति तीव्रयन्त्येवैनमि'त्यादिना स्पष्टीकरिष्यते। सोमातिपवितस्य लक्षणं सूत्रकारो मतभेदेन बहुधा दर्शयति-(२) 'तीव्रसुति सोमातिपवितं याजयेदि'ति 'य इष्ट्वा पापीयान् स्यात् स सोमातिपवित इति शाण्डिल्य' इति । यं सोमोऽतिपवते स सोमातिपवितः सोमयागोत्तरकाले यो नष्टश्रीकः स एवमुक्तः इति । (३)'यः सोमं पीत्वा छर्दयेत विरिच्येत वेति धानञ्जय्य' इति । वमनं विरेको वा अतिपवनमित्यर्थः । ज्येष्ठे चाऽनिष्टिनि कनीयसीष्टिनि सति अथवा यः कनीयसि भ्रातरि इष्टवति सति स्वयं सोमेन नेष्टवान् स सोमातिपवितः ॥ ४ ॥

अथाऽधिकार्य्यन्तरमाह--

**राजानमपरुद्धं याजयेत् ॥ ५ ॥**

स्पष्टोऽर्थः ॥ ५ ॥

अस्मिन्नधिकारनिमित्तमतिपवनं योजयति—

**विड्वा एतमतिपवते यो राजाऽपरुध्यते यस्तीव्रसोमेन यजते पिहित्या एवाऽच्छिद्रतायै ॥ ६ ॥**

यो राजाऽपरुध्यते राष्ट्रेण परित्यज्यते एनं राजानं विट् प्रजा खल्वतिपवते अत्यन्तं परित्यजति । शिष्टं पूर्ववत् ॥ ६ ॥

पुनरन्यमधिकारिणमाह—

**ग्रामकामो यजेत ॥ ७ ॥**

स्पष्टोऽर्थः ॥ ७ ॥

उक्तक्रतावस्याऽऽनुकूल्यमाह--

**ग्रामो वा एतमतिपवते योऽलं ग्रामाय सन् ग्रामं न विन्दते यस्तीव्रसोमेन यजते पिहित्या एवाऽच्छिद्रतायै ॥ ८ ॥**

जनसमूहो ग्रामः । शिष्टमुक्तप्रायम् ॥ ८ ॥

पुनरप्यधिकार्य्यन्तरमाह-

**प्रजाकामो यजेत प्रजा वा एतमतिपवते योऽलं प्र-**

---

१. तां. ब्रा. १८. ५. १२. २. लाट्या. श्रौ. ८. १०. ७, ८.

३. लाट्या. श्रौ. ८. १०. ९.

जायाः सन् प्रजां न विन्दते यत्तीव्रसोमेन यजते पि-हित्या एवाऽच्छिद्रतायै ॥ ९ ॥

स्पष्टोऽर्थः ॥ ९ ॥

पुनरप्यधिकार्य्यन्तरमाह—

पशुकामो यजेत पशवो वा एतमतिपद्यन्ते योऽलं पशुभ्यः सन् पशून्न विन्दते यत्तीव्रसोमेन यजतेऽपिहि-त्या एवाऽच्छिद्रतायै ॥ १० ॥

स्पष्टोऽर्थः ॥ १० ॥

पुनरप्यधिकार्य्यन्तरमाह—

आमयाविनं याजयेत् प्राणा वा एतमतिपद्यन्ते य आमयावी यत्तीव्रसोमेन यजते पिहित्या एवाऽच्छिद्र-तायै ॥ ११ ॥

स्पष्टोऽर्थः ॥ ११ ॥

सोमस्य तीव्रत्वप्रकारमाह—

शतमाशिरं दुहन्ति तीव्रयन्त्येवैनम् ॥ १२ ॥

अस्याऽर्थमाह सूत्रकारः-(१) 'शतमाशिरं दुहन्तीति धेनुशतं दो-हयित्वा त्रेधं विभज्य सोमाभिमिश्रं कुर्य्युर्यथा वैश्यस्तोम'इति। सोम-मिश्रणार्थं दध्यादिकमाशिरमित्युच्यते। स्पष्टमन्यत् ॥ १२ ॥

अत्र क्रतौ प्राकृतदक्षिणामपोह्याऽऽशीरार्थं(२) शतं दक्षिणेत्याह—

तस्या उ एव दक्षिणाः ॥ १३ ॥

तत्तस्य क्रतोः। उशब्दोऽवधारणे। तथैवकारः। अतोऽवधारण-द्वयेनोक्तव्यतिरिक्तदक्षिणा निवर्त्यते। तथा च सूत्रम्-(३) 'तस्य तदेव धेनुशतं दक्षिणास्ता उ एव दक्षिणा इति ह्याहे'ति। स्पष्टम् ॥ १३ ॥

प्रकारान्तरेण सोमस्य तीव्रत्वमाह—

अभ्यभिसोमानुन्नयन्ति तीव्र एनं धिनवादित्युभा-

---

१. लाट्या. ८. १०. १३. २. गोशतमेवेति ख. पु.

३, लाट्या. श्रौ. ८. १०. १४.

**अध्वर्यू सर्वे चमसाध्वर्यवोऽच्छावाकाय प्रतिगृणन्ति तीव्रयन्त्येवैनम् ॥ १४ ॥**

अस्याऽर्थं सूत्रकार एवमाह–(१) 'अध्यभिसोमानुन्नयन्तीति यानवजिघ्रेयुस्तेष्वेवाऽभ्युन्नयेयुरि'ति । यांश्चमसानवजिघ्रेयुस्तान् परित्यज्यैव तेषामुपर्य्युत्तरभागेभ्यः सोमानुन्नयेयुः, अवघ्रातोऽपि भक्षित एवेति मत्वा न त्याज्य इत्यर्थः ॥ १४ ॥

पुनः प्रकारान्तरेण तीव्रत्वमाह—

**तदभक्षयन्त ऋत्विजश्चमसानवजिघ्रन्ति तीव्रयन्त्येवैनं तस्मानच्छावाकस्य स्तोत्रे भक्षयन्ति तीव्रयन्त्येवैनम् ॥ १५ ॥**

अस्याऽर्थं सूत्रकार एवाऽऽह–(२)'तत्र भक्षावृताश्चमसानवजिघ्रेयुरि'ति । तत्र तीव्रसुति भक्षणस्याऽऽवृता धर्म्मेणाऽवघ्राणं कुर्य्युः । कुत इत्याह—'अभक्षयन्त ऋत्विजश्चमसानवजिघ्रन्ती'ति । अभक्षयन्तोऽवजिघ्रेयुरिति भक्षणप्रत्याम्नायत्वेनाऽवघ्राणविधानात् तद्धर्म्मतापत्तिरिति । अथ घ्रातान् सोमशेषानाज्यस्तोत्रेषु भक्षयन्ति, तदपि सोमस्य तीव्रकरणमित्याह–तस्मानच्छावकस्येति । अत्र सूत्रम्–(३)'तानच्छावाकस्य स्तोत्रे भक्षयन्तीति ह्याहैवं सर्वेषु सवनेष्वि'ति ॥ १५ ॥

अथ सवनान्तेष्वेव यद्भक्षणमुक्तं(४) तदेतद्व्यतिरेकेण निन्दासंकीर्त्तनेन द्रढयति—

**तद्यत् सवनानि व्यवभक्षयेयुरपक्रामुका यजमानाच्छ्रीः स्यात् सकृत्सकृत्सवनानामन्ततो भक्षयन्ति सवनानामसंभेदाय ॥ १६ ॥**

यद्यदि सवनानि सवनगतान् हुतशिष्टान् ग्रहचमसगतान् सोमान् व्यवभक्षयेयुः विभज्य विभज्य तत्तद्धोमावसाने भक्षयेयुः, तदा सवनत्रयेष्वपि मध्ये मध्ये विच्छेदेन यज्ञविच्छेदादस्माच्छ्रीरपक्रमणशीला स्यात् । तदकृत्वा सवनान्तेष्वेव यदि सकृत् सकृद्भक्षयेयुः तत्सवनेषु त्रिष्वपि मध्ये अविच्छेदाय भवति ॥ १६ ॥

---

१. लाट्या. श्रौ. ८. १०. १२. २. लाट्या. श्रौ. ८. १०. १०.
३ लाट्या. श्रौ. ८. १०. ११. ४. तदेतद्व्यतिरिक्तानिन्देति ख. पु.

होतुः पृष्ठस्य रथन्तरत्वमाह--

**रथन्तरꣳ साम भवति ॥ १७ ॥**

स्पष्टोऽर्थः ॥ १७ ॥

अथ सोमातिपवितं रथन्तरं युक्तमिति प्रशंसति--

**इयं वै रथन्तरमस्यां वा एष न प्रतितिष्ठति यो न प्रतितिष्ठत्यस्यामेवैनं प्रतिष्ठापयति ॥ १८ ॥**

स्पष्टम् ॥ १८ ॥

अथ ब्राह्मणाच्छंसिपृष्ठे आयन्तीयं विधत्ते—

**आयन्तीयं ब्रह्मसाम भवत्येतदेवाऽस्मिञ्छ्रीणाति॥१९॥**

अस्मिन् सोमातिपवितादौ । एतदेव आयन्तीयं सामैव श्रीणाति मिश्रयति । अस्य श्रीणनसामर्थ्यम्--'इन्द्रो वृत्रमहन् स विश्वं वीर्य्येण व्यभ्रंशत स एतच्छ्रायन्तीयमपश्यत्तेनाऽऽत्मानं समश्रीणादि'त्युक्तम् ॥

अथाऽऽर्भवपवमाने अनुष्टुभि तृचे अन्त्यस्य यज्ञायज्ञीयस्याऽऽपकर्षमाह--

**यज्ञायज्ञीमनुष्टुभि भवति ॥ २० ॥**

स्पष्टोऽर्थः ॥ २० ॥

एतत् प्रशंसति--

**वागनुष्टुप् वाचो रसो यज्ञायज्ञीयं वाच्येवाऽस्य रसं दधाति ॥ २१ ॥**

वाचोऽनुष्टुप्त्वमितरेषां छन्दसामनुष्टुभ्यनुप्रवेशात् सिद्धम् । (१)'देवा वै ब्रह्म व्यभजन्त तस्य यो रसोऽत्यरिच्यत तत् यज्ञायज्ञीयमभव'दिति श्रुतेः वाग्रसत्वम् । अस्य वागात्मकयज्ञायज्ञीयस्य रसं सारमनुष्टुबात्मिकायां वाच्येव दधाति, तथा कुर्वन्नुद्गाता ॥ २१ ॥

अस्याऽग्निष्टोमसामनि यज्ञायज्ञीयस्थानीयं सामान्तरमाह--

**विशोविशीयमग्निष्टोमसाम भवत्येतदेवाऽस्मिन् सर्वं प्रतिष्ठापयति ॥ २२ ॥**

---

१. तां. ब्रा. ८. ६. १.

विशोविशीयमग्निष्टोमं कुर्वन्नुद्गाता अग्निष्टोमस्य सर्वस्तोमान्तत्वात् एतत्सर्वमेव सकलस्तोमसाध्यं कृत्स्नफलमेवाऽस्मिन् सोमातिपवितादौ प्रतिष्ठापयति स्थापयति ॥ २२ ॥
अथ तृतीयोक्थे उद्वंशीयमनूद्य प्रशंसति—

**उद्वꣳशीयमुक्थानामन्ततो भवति सर्वेषां वा एतत्पृष्ठानाꣳ रूपꣳ सर्वेष्वेव रूपेषु प्रतितिष्ठति ॥ २३ ॥**

सर्वाणि वै रूपाण्युद्वंशीयम् । (१)'गायन्ति त्वा गायत्रिण इति रथन्तरस्य रूपमि'त्यादिना सर्वपृष्ठत्वरूपत्वप्रतिपादनात् सर्वपृष्ठत्वरूपत्वमस्य॥
अस्य तीव्रसोमस्य उक्थसंस्थतां सार्थवादमाह—

**उक्थ्यो भवति पशवो वा उक्थानि पशुष्वेव प्रतितिष्ठति ॥ २४ ॥**

अथाऽस्य कल्पः—'एते असृग्रमिन्दवस्तिरस्त्वा नृम्णानि बिभ्रतमिति पुरस्तात्पर्यासस्य तृचं पञ्चर्चे आयन्तीयं ब्रह्मसाम संहितस्य लोके मौक्षं पौष्कलस्य लोके श्रुद्ध्यं श्यावाश्वस्य यज्ञायज्ञीयं यज्ञायज्ञीयस्यर्क्षु विशोविशीयमग्निष्टोमसाम समानमितरमायुषैकाहिकेने'ति ॥ २४ ॥
इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे अष्टादशाध्यायस्य पञ्चमः खण्डः ॥

---

## षष्ठः खण्डः ॥

वाजपेयाख्यमेकाहमाह—

**सप्तदश उक्थ्यष्षोडशिमान् सप्तदशी ॥ १ ॥**

अयं सप्तदशस्तोमकः उक्थ्यसंस्थः । स चोक्थ्यः षोडशिमान् षोडशिस्तोत्रयुक्तः । एवं सति स षोडशिक उक्थ्यः षोडशस्तोत्रवान् अतिरिक्तोक्थ्येन सह सप्तदशी सप्तदशस्तोत्रवान् कर्त्तव्यः ॥ १ ॥
अथाऽस्य प्रतिस्तोत्रं सप्तदस्तोमत्वं स्तोत्राणां साप्तदश्यञ्च प्रजापत्यात्मना (२)प्रतिपादयति—

**यावान्वै प्रजापतिरूर्ध्वस्तावाꣳस्तिर्यङ् ॥ २ ॥**

---

१. तां. ब्रा. ८, ९, १०.　　२. प्रशंसतीति ख. पु.

यावत्प्रमाणः प्रजापतिरूर्ध्वः उपर्युपर्युच्छ्रितः तावान् तावत्प्रमाणमेव तिर्यङ् । अत उच्छ्रितेन स्तोत्रसप्तदशकेन आवृत्त्यात्मकत्वेन तिर्यग्भूतेन सप्तदशेन स्तोमेन चोपेतो वाजपेयः प्रजापत्यात्मकः, उभयत्राऽऽयामविस्तारसाम्यात् ॥ २ ॥

प्रजापतेरायामविस्तारसाम्यं लोकसाम्येन समर्थ्यते—

**यावन्त इमे लोका ऊर्ध्वास्तावन्तस्तिर्यञ्चः ॥ ३ ॥**

यथेमे दृश्यमाना भूरादयो लोका यावन्तः यावत्प्रमाणाः ऊर्ध्वाः स्युस्तावन्तस्तिर्यञ्चः । तद्वत् प्रजापतिरपीति ॥ ३ ॥

अस्त्वेवं किमत इत्यत आह—

**वाजपेययाजी वाव प्रजापतिमाप्नोति ॥ ४ ॥**

वाजपेयस्योक्तप्रकारेण प्रजापतिसाम्यादनुष्ठाताऽपि (१)प्रजापतिमेवाऽऽप्नोति ॥ ४ ॥

(२)प्राजापत्यस्तोममेव विभज्य दर्शयति—

**यत् सप्तदश स्तोत्राणि तेनोर्ध्वमाप्नोति यत्सर्वः सप्तदशस्तेन तिर्यञ्चम् ॥ ५ ॥**

स्तोत्राणां मध्ये एकद्व्यादिक्रमेणोपर्युपर्यनुष्ठानात् प्रजापतेरूर्ध्वाकारप्राप्तिः, सप्तदशस्तोमस्याऽऽवृत्तिसाध्यत्वेन तिर्यक्त्वात् (३)प्रजापतेस्तिर्यग्रूपावाप्तिः ॥ ५ ॥

अस्य सवनानां वैचित्र्यं प्रशंसितुमनुभाषते—

**तस्य नानावीर्याणि सवनानि ॥ ६ ॥**

स्पष्टोऽर्थः ॥ ६ ॥

कथं नानावीर्यत्वमिति तद्दर्शयति—

**अनिरुक्तं प्रातस्सवनं वाजवन्माध्यन्दिनँ सवनं चित्रवत् तृतीयसवनम् ॥ ७ ॥**

प्रातस्सवनस्य गायत्रत्वात् तस्य च विकल्पेनाऽनिरुक्तगानात् प्रातस्सवनमनिरुक्तम् । माध्यन्दिने सवने होतुः पृष्ठे रथन्तरविधानात्, तत्र 'मघवन्निन्द्र वाजिन' इति वाजशब्दश्रवणात् माध्यन्दिनस्य

---

१. तमेवाप्नोति. ख. पु. २. प्रजापत्याप्तिमेवेति ख. पु.

३. प्रजापतेस्तिर्यक्त्वावाप्तिरिति ख. पु.

वाजवत्त्वम् । तृतीयसवने अग्निष्टोमसाम्नि वारवन्तीये(१) 'त्वमग्निश्चित्र ऊत्ये'ति चित्रशब्दश्रवणात् चित्रवत्त्वम् ॥ ७ ॥

अस्तु नानावीर्यत्वं किं तत इत्यत आह—

**यदनिरुक्तं प्रातस्सवनं भवत्यनिरुक्तो वै प्रजापतिः प्रजापतिमेवाऽऽप्नोति यद्वाजवन्माध्यन्दिनꣳसवनं अन्नं वै वाजोऽन्नाद्यस्याऽवरुध्यै यच्चित्रवत् तृतीयसवनꣳ स्वर्गस्य लोकस्य समष्ट्यै ॥ ८ ॥**

स्वर्गस्याऽपि क्षित्याद्यपेक्षया तृतीयत्वात् तृतीयसवनं स्वर्गः । स च नानाविधभोगसाधनत्वाच्चित्रः । अतश्चित्रवत् तृतीयसवनानुष्ठानं स्वर्गस्य सम्प्राप्त्यै कल्पते । स्पष्टमन्यत् ॥ ८ ॥

अथोक्तस्य प्रातस्सवनस्याऽनिरुक्तत्वं कृत्स्नयज्ञस्याऽनिरुक्तत्वानीयमिति प्रशंसति—

**वियोनिर्वाजपेय इत्याहुः प्राजापत्यस्सन्निरुक्तसामेति यदनिरुक्तं प्रातस्सवनं तेन सयोनिः ॥ ९ ॥**

यस्मात्स वाजपेयः पूर्वोक्तरीत्या प्राजापत्योऽपि निरुक्तसामा अस्य सामानि निरुक्तानि । अतोऽनिरुक्तप्रजापतिरूपस्य वाजपेयस्य साम्नामनिरुक्तत्वाभावात् वाजपेयो वियोनिर्विलक्षणाश्रय इत्याहुरभिज्ञाः । तत्रेदमुत्तरम्–यत् प्रातस्सवनमनिरुक्तम्, अतोऽयं सयोनिः प्राजापत्यानुकूलः । प्रातस्सवनस्य प्राथम्येन मुख्यत्वात्तदनिरुक्तकरणेन सर्वो यज्ञोऽनिरुक्तः कृतो भवतीत्यभिप्रायः ॥ ९ ॥

अथाऽस्य होतुः पृष्ठस्य रथन्तरत्वं विदधाति—

**रथन्तरꣳ साम भवत्याशीय उज्जित्यै ॥ १० ॥**

'इयं वै रथन्तरमि'ति श्रुतेः रथन्तरकरणं अस्य लोकस्याऽऽशीय आशुतरं क्षिप्रतरं उज्जित्यै भवति ॥ १० ॥

अथ विहितरथन्तरमेव तद्गानकालाभिषेकस्तुतिद्वारा प्रशंसति—

**इयं वै रथन्तरमस्यामेवाऽध्यभिषिच्यते ॥ ११ ॥**

अस्यां पृथिव्यामधीश्वरभावेनाऽभिषिच्यते । अतः पृथिवीस्थानीयं

---

१. छा. सं. उ. ८. १. ३.

रथन्तरं (१)प्रसिद्धमित्यर्थः। अर्थात्तत्राऽभिषेकः कर्त्तव्य इत्युक्तं भवति। यस्मिन्नासीनोऽभिषिच्येत तत्सरुक्मं होत्रे दद्यात्, अभिषिक्तश्च यामासन्दीमास्थितस्तामुद्गात्रे। तथा च सूत्रम्-(२)'बस्तचर्म्म सरुक्मं होत्रे यस्मिन्नासीनोऽभिषिच्येते'ति। तथोद्गात्र इति प्रकृत्य (३)'आसन्दीं च सास्तरणां यामभिषिक्त आरोहेदि'ति ॥ ११॥

अथाऽभिषेकप्रसङ्गाद्वाजपेययाजिनः किञ्चिद्व्रतमाह—

**तस्माद्वाजपेययाज्यप्रत्यवरोही ॥ १२ ॥**

तस्मादधिकमपि नान्दोलिकादिभ्योऽवरोहेदित्यर्थः। अपूर्वत्वाद्विधिरयम् ॥ १२॥

तस्मादित्युक्तं विवृणोति--

**अस्याᳪं हि सोऽध्यभिषिच्यते ॥ १३ ॥**

यथाऽभिषिक्तो राजा राजान्तरं न प्रत्यवरोहति तथाऽसावप्यत्रैवाऽभिषिक्तत्वादित्यर्थः। एतद्व्रतं यावज्जीविकमित्येके। यावत्प्रत्यवरोहणीययागमित्यपरे। प्रत्यवरोहणीयश्च ज्योतिष्टोम इत्यार्षेयकल्पेनोक्तम्। बृहस्पतिसवः प्रत्यवरोहणीय इति बह्वृचाः। वाजपेययाजिनो व्रतान्याह सूत्रकारः—(४)'तस्य व्रतानि क्षत्रवृत्तिं वर्त्तयेदि'ति। तामेव दर्शयति—(५)'प्रत्यवरोहणाभिवादने जघन्यव्रज्यां समानशय्यतामिति वर्जयेदवाजपेययाजिभि'रिति। आत्मन (६)उत्कृष्टैरप्यवाजपेययाजिभिस्सह प्रत्यवरोहणादिकं न कुर्य्यात्। पृष्ठतोऽनुगमनं जघन्यव्रज्या। स्पष्टमन्यत् ॥ १३ ॥

अथ ब्राह्मणाच्छंसिपृष्ठे विशेषमाह—

**अभीवर्त्तो ब्रह्मसाम भवति ब्रह्मणो वा एष ऋषभ ऋषभतामेवैनं गमयति ॥ १४ ॥**

ऋषभः श्रेष्ठः। स्पष्टमन्यत् ॥ १४ ॥

---

१. प्रशस्तमिति ख. पु. २. लाट्या. श्रौ. ८. ११. २२.
३. लाट्या. श्रौ. ८. ११. २१. ४. लाट्या. श्रौ. ८. १२. १.
५. लाट्या. श्रौ. ८. १२. २.
६. आत्मन उत्कृष्टोऽप्यवाजपेययाजी तेन सहेति ख. पु.

अथाऽग्निष्टोमसामगीतं यज्ञायज्ञीयमार्भवेऽपकर्षति--

**यज्ञायज्ञीयमनुष्टुभि भवति वागनुष्टुप् वाचो रसो यज्ञायज्ञीयं वाच्येवाऽस्य रसं दधाति ॥ १५ ॥**

गतमिदम् ॥ १५ ॥

अथाऽग्निष्टोमसाम्नि किं सामेति तद्दर्शयति--

**वारवन्तीयमग्निष्टोमसाम भवतीन्द्रियस्य वीर्यस्य परिगृहीत्यै ॥ १६ ॥**

इन्द्रियस्येत्यस्य व्याख्यानं वीर्यस्येति । 'स्वश्वश्चित्र ऊत्ये'ति वारवन्तीयमग्निष्टोमसाम कार्यम् , 'अग्निर्वा इदं वैश्वानरो दहन्नैदि'त्यत्र रक्षाहेतुत्वेन श्रुतत्वात् । सुज्ञानमन्यत् ॥ १६ ॥

अथाऽन्त्यस्योक्थस्योद्वंशीयतां सार्थवादमाह--

**उद्वंशीयमुक्थानामन्ततो भवति सर्वेषां वा एतत् पृष्ठानां रूपं सर्वेष्वेव रूपेषु प्रतितिष्ठति ॥ १७ ॥**

एतदपि पूर्वखण्डे गतम् ॥ १७ ॥

अथाऽस्य षोडशिसामाऽऽह--

**गौरीवितं षोडशिसाम भवति ॥ १८ ॥**

स्पष्टोऽर्थः ॥ १८ ॥

एतत्स्तौति--

**अतिरिक्तं गौरीवितमतिरिक्तः षोडश्यतिरिक्त एवाऽतिरिक्तं दधाति ॥ १९ ॥**

(१)'देवा वै वाचं व्यभजन्त तस्य यो रसोऽत्यरिच्यत तद्गौरीवितमभवदि'ति श्रुतेरतिरिक्तं गौरीवितम्। षोडशी च 'नाऽह्नो न रात्रेरि'ति श्रुतेरतिरिक्तः । अतस्तयोः सम्बन्धः समृद्धिहेतुः ॥ १९ ॥

अथोक्तयोरुद्वंशीयगौरीवितयोरुभयोरपि स्वारत्वाज्जामित्वमाशङ्कते--

**तदाहुर्जामि वा एतद्यज्ञे क्रियते यदुद्वंशीयाद् गौरीवितेन स्तुवते स्वारात् स्वारेणेति ॥ २० ॥**

---

१. तां॰ ब्रा. ५. ७. १.

स्पष्टम् ॥ २० ॥

तस्य परिहारमाह--

**न जाम्यस्मिन् सवनꣳसन्तिष्ठते ॥ २१ ॥**

उक्थस्य समाप्तेर्न जामि ॥ २१ ॥

परिहारान्तरमाह--

**उक्थꣳशस्यते वषट्कारोऽन्तरा तेनाऽजामि ॥२२॥**

(१)'स्तुतमनुशंसती'ति वचनादुक्थस्तोत्रानन्तरमुक्थं शस्यते । उक्थ्यग्रहहोमवषट्कारः, सोऽन्तरा मध्ये मध्ये भवति । तेनाऽपि न जामिदोषः ॥ २२ ॥

अथाऽन्यथा परिहरति--

**अपच्छिदिव वा एतद्यज्ञकाण्डं यत् षोडशी तेनाऽजामि ॥ २३ ॥**

यज्ञपर्वाऽपच्छिदिव वै अपच्छिन्नमिव खलु । अयमेवाऽपच्छेदो यद्धो त्रकाणामभावः । होतृसाम हि षोडशी । नाऽतः परं होत्रकाणां सामानि सन्ति । अतः क्षुद्रमिदं पर्व । विजातीयानां हि तत्कृतकरणे जामिता स्यात् ॥ २३ ॥

अथ षोडशिन ऊर्ध्वं वाजपेयस्तोत्रं सप्तदशं भवति । तच्च कॢप्तयज्ञकाण्डेष्वनन्तर्भूतम् । अत एव यज्ञारण्येऽखिले स्वस्थाने सन्तिष्ठत इति दोषमाशङ्कते--

**यज्ञारण्ये सन्तिष्ठत इत्याहुरत्युक्थान्येत्याति षोडशिनं न रात्रिं प्राप्नोतीति ॥ २४ ॥**

उक्थानि षोडशिनञ्चाऽतिक्रम्यैतदेति रात्रिपर्यायान्न प्राप्नोतीति । अतो यज्ञारण्ये सन्तिष्ठते समाप्यते । इतिशब्दो वचनसमाप्तिद्योतनार्थः ॥ २४ ॥

उक्तदोषं परिहरति--

**विष्णोः शिपिविष्टवतीषु बृहदुत्तमं भवति ॥ २५ ॥**

---

स्पष्टोऽर्थः ॥ २५ ॥

१. तां. ब्रा. ९. ८. १०.

कथं तेन परिहृतो भवतीति तदाह--

**एषा वै प्रजापतेः पशुष्ठा तनूर्यच्छिपिविष्टः प्राणो वै बृहत् प्राण एव पशुषु प्रतितिष्ठन्ति ॥ २६ ॥**

(१) 'यज्ञो वै विष्णुः पशवः शिपिरि'ति श्रुत्यन्तरात् विष्णोः प्रजापतित्वात् शिपिविष्ट इति यत् एषा प्रजापतेर्यज्ञात्मकस्य विष्णोः पशुष्ठा तनूः । किञ्च प्राणबृहत्साम्नो रुभयोरपि बृहत्त्वात् बृहत्साम प्राणः । अतः वाजपेयस्तोत्रेण यज्ञसमापकः प्राणः पशुषु च यज्ञं प्रतिष्ठापयति ॥ २६ ॥

अथ पृथक् बृहत्साम्ना यज्ञसमापनद्वारेऽपि परिहरति--

**बृहता स्तुवन्ति बृहदमुं लोकमाप्तुमर्हति तमेवाऽऽप्नोति ॥ २७ ॥**

(२)'असौ बृहदि'ति श्रुतेः बृहत्साम स्वर्गं लोकमाप्तुमर्हति । अतस्तेन समापयिताऽपि (३)स्वर्गमवाऽऽप्नोति । अत ऐहिकपशुलाभादामुष्मिकस्वर्गलाभाच्च न यज्ञारण्यसंस्थापनदोषोऽस्ति ॥ २७ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे अष्टादशाध्यायस्य षष्ठः खण्डः ॥

---

## सप्तमः खण्डः ॥

उक्तो वाजपेयः । अथाऽस्योक्तानामनुक्तानाञ्च केषाञ्चिदङ्गानां विधिपूर्विका स्तुतिः क्रियते । तत्राऽऽदौ वाजपेयशब्दनिर्वचनप्रदर्शनप्रसङ्गेनाऽस्याऽधिकारिणं दर्शयति--

**प्रजापतिरकामयत वाजमाप्नुयाᳬ स्वर्गं लोकमिति स एतं वाजपेयमपश्यद्वाजपेयो वा एष वाजमेवैतेन स्वर्गं लोकमाप्नोति ॥ १ ॥**

पूर्वं स्वर्गं कामयमानः प्रजापतिः तत्साधनत्वेन वाजपेयमनुष्ठाय तल्लब्धवान् । एष यज्ञो वाजपेयः खलु । वाजोऽन्नं पेयद्रव्यात्मकं यस्मिन् स वाजपेयः, सुराग्रहस्याऽत्र सम्भवात्तदाप्तिहेतुत्वाच्च वाजपेयः । अत एतदनुष्ठाताऽपि तत्फलमाप्नोति । वाजपेय-

---

१, तै. सं. २.५.५.२. २. तै. सं. ३.१.७.२. ३. स्वर्गं लोकमाप्त ख, पु.

शब्दो गुणविधायकः कर्म्म वेति विचार्य्य प्रमाणाध्याये नामधेयपादे एतत्समानार्थं 'वाजपेयेन स्वाराज्यकामो यजेते'त्येतद्वाक्यं विषयीकृत्य गुणविधित्वं पूर्वपक्षीकृत्याऽग्निहोत्रशब्दवत् कर्मनामधेयमिति (१)सिद्धान्तितम् ॥ १ ॥

अथाऽस्य प्रातस्सवनगत(२)स्तोत्रीयाणां शुक्रवतीत्वमनूद्य प्रशंसति–

**शुक्रवत्यो ज्योतिष्मत्यः प्रातस्सवने भवन्ति तेजो ब्रह्मवर्चसं ताभिरवरुन्धे ॥ २ ॥**

'सोमाः शुक्रा गवाशिर' इति शुक्रवत्यः । ता एव ज्योतिष्मत्यः । ताभिः स्तोत्रीयाभिस्तेजोविशेषं ब्रह्मवर्चसमवरुन्धेऽनुष्ठाता । पूर्वत्राऽविहितत्वाच्छुक्रवत्यः कर्त्तव्या इति विधिः ॥ २ ॥

अथ माध्यन्दिने विहितं वाजवत्त्वमनूद्य प्रशंसति--

**वाजवत्यो माध्यँन्दिने भवन्ति स्वर्गस्य लोकस्य समष्ट्यै ॥ ३ ॥**

(३)स्पष्टम् ॥ ३ ॥

अथ तृतीयसवनेनाऽऽदितस्स्तोत्रीयोपेतत्वमनूद्य प्रशंसति--

**अन्नवत्यो गणवत्यः पशुमत्यस्तृतीयसवने भवन्ति भूमानं ताभिरवरुन्धे ॥ ४ ॥**

'पुरोजिती व' इत्यत्राऽन्धश्शब्दादन्नवत्यः । 'भरन्तो वस्यवः' 'एभिर्वद्धास इन्दुभिः' 'गायन्ति त्वा गायत्रिण' इति बहुकीर्त्तनैर्गणवत्यः । 'गोषातिरश्वसा असी'ति गोमत्यः । ताभिस्तृतीयसवनगताभिर्भूमानं बहुभावं यजमानः अवरुन्धे । एतदन्नादेरुपलक्षणम् ॥ ४ ॥

अथाऽस्य पवमानादीनां सर्वेषां सप्तदशस्तोमत्वमनूद्य प्रशंसति--

**सर्वः सप्तदशो भवति प्रजापतिर्वै सप्तदशः प्रजापतिमेवाऽऽप्नोति ॥ ५ ॥**

(४)'आ श्रावयेति चतुरक्षर'मित्युपक्रम्य 'एष वै सप्तदशः प्रजापति'रिति श्रुतेः तस्य सप्तदशत्वम् ॥ ५ ॥

---

१. राद्धान्तितामिति ख. पु. २. स्तोत्रीयां शुक्रवतीमनूद्येति. ख. पु.

३. प्रदर्शिता वाजवत्यः, वाजस्य सुखविशेषात्मकत्वात्स्वर्गत्वमिति ख. पु.

४. तै. सं. १. ६. ११.

अथ ऋत्विजां हिरण्यमालित्वमाह--

**हिरण्यस्रज ऋत्विजो भवन्ति महस एव तद्रूपं क्रियते ॥ ६ ॥**

ऋत्विजामपि हिरण्यस्रक्त्वं महसो महत्त्वस्य रूपं क्रियते ॥ ६ ॥

केनाऽभिप्रायेण क्रियते ? (१)तदाह--

**एष मेऽमुष्मिन् लोके प्रकाशोऽसदिति ॥ ७ ॥**

एष मे मह्यं अमुष्मिन् लोके महसो रूपकरणात् प्रकाशोऽसद्भूयादिति बुध्या देवसन्निधौ प्रकाशं करोति ॥ ७ ॥

किं पुनर्हिरण्यमालित्वम् ? हिरण्यद्वारा प्रशंसति--

**ज्योतिर्वै हिरण्यं ज्योतिरेवाऽस्मिन् दधाति ॥ ८ ॥**

स्पष्टम् ॥ ८ ॥

अथाऽत्र सर्वेषामाजिधावनं तत्र यजमानस्यैव यजनञ्च विधाय प्रशंसति--

**आजिं धावन्ति यजमानमुज्जापयन्ति स्वर्गमेवैनं तल्लोकमुज्जापयन्ति ॥ ९ ॥**

(२)सुगमम् । आजिधावनसाधनं रथमुद्गात्रे दद्यात् । तथा च सूत्रम्-(३)'येन रथेनाऽऽजिं धावेत्तमुद्गात्रे दद्यादि'ति ॥ ९ ॥

अथ स्वर्गप्रतिनिधिरूर्ध्वे काष्ठाग्रे रथचक्रादिना कृतं तत्र यजमानारोहणमाह--

**नाकꣳरोहति स्वर्गमेव तल्लोकꣳरोहति ॥ १० ॥**

स्पष्टम् ॥ १० ॥

अथाऽस्य नाकस्य रजोवत्प्रदेशं कृत्वाऽऽरोहणमाह--

**सरजसे रोहति मनुष्यलोकादेवैनमन्तर्दधाति ॥ ११ ॥**

स्पष्टम् ॥ ११ ॥

अथ रथचक्रावस्थितस्य ब्रह्मणो वाजिनां सामगानमाह—

**वाजिनाꣳसाम ब्रह्मा रथचक्रेऽभिगायति वाजो वै स्वर्गो लोकः स्वर्गमेवैनं तल्लोकमुज्जापयति ॥ १२ ॥**

---

१. तत्राऽऽहेति. ख. पु. २. स्पष्टमिति ख. पु. ३. लाट्या. श्रौ. ८. ११. २९.

( ब्रह्माणं प्रति गानमुक्तं वाजिनां साम। आर्षेयकल्पे उक्तम्–'वाजिनाञ्चैव सामादित्यानांञ्च पवित्रं आविमर्ग्यां इति अनुहित्वा स्तुतं इदमपि वाजिनां साम' ॥ १२ ॥ )

शिपिविष्टवतीषु बृहद्गानं प्रशंसति—

विष्णोः शिपिविष्टवतीषु बृहदुत्तमं भवति स्वर्गमेव तल्लोकंरुद्ध्वा ब्रध्नस्य विष्टपमभ्यतिक्रामति ॥ १३ ॥

(१)'किमित्ते विष्णो' इति शिपिविष्टवतीषु बृहदुत्तमं षोडशिनः परं भवति, 'क्षयं तमस्य रजसः पराके' इति विष्णोर्हि उपरि निवासस्य श्रूयमाणत्वात् स्वर्गं लोकं रुद्ध्वा ब्रध्नस्याऽऽदित्यस्य विष्णुरूपस्य विष्टपं स्थानं अभि उद्दिश्याऽतिक्रामति । अथाऽस्य कल्पः–'पूर्वस्य बार्हत्पवमानं व्रात्यानि त्रीण्याज्यानि वैश्वजितमुत्तरं बार्हदुक्थस्य लोके वैवस्थानं रथन्तरं पृष्ठमभीवर्त्तो ब्रह्मसाम मांक्षस्य लोके स्वाशिरामर्कः श्यावाश्वस्य यज्ञायज्ञीयं त्वष्ट्राश्चित्र ऊत्येति वारवन्तीयमाग्निष्टोमसाम समानमितरद्धैकाहिकेन उक्थानामन्नत उद्वंशीयं गौरीवितं षोडशिसाम विष्णोः शिपिविष्टवतीषु बृहत्सर्वं स्तसदशा' इति। पूर्वस्य तीव्रसुतस्येत्यर्थः। महाव्रतसम्बन्धीन्यन्यानि त्रीणि 'होता देवो अमर्त्यः, सा नः शक्तं पार्थिवस्ये'त्याद्युक्तानि ॥ १३ ॥

**इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे अष्टादशाध्यायस्य सप्तमः खण्डः ॥**

---

( ) कुण्डलान्तर्गतं भाष्यं खपुस्तके नाऽस्ति ।

१. किमित्ते विष्णो परिचक्षि नाम प्र यद्ववक्षे शिपिविष्टो अस्मि ।
मा वर्पो अस्मदप गूह एतद्यदन्यरूपः समिथे बभूथ ॥ १ ॥
प्र तत्ते अद्य शिपिविष्ट हव्यमर्यः शंसामि वयुनानि विद्वान् ।
तं त्वा गृणामि तवसमतव्यान्क्षयन्तमस्य रजसः पराके ॥ २ ॥
वषट्ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् ।
वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिस्सदा नः ॥ ३ ॥
सा. सं. ड. ८. १. ४.

## अष्टमः खण्डः ॥

अथ राजसूयोऽभिधीयते—तत्स्वरूपं बौधायनापस्तम्बाभ्यां आश्वलायनसूत्रद्वयाभ्यामुदीरितम्। तत्र बौधायनः (१)'राजसूयेन यक्ष्यमाणो भवति पुरस्तात् फाल्गुन्यै पूर्णमास्यै चैत्र्यै वा पूर्णमास्या आमावस्येन हविषेष्ट्वा दीक्षते, तस्य तिस्रो दीक्षास्तिस्र उपसदः सुत्यां प्रसुतः सन्तिष्ठत एष प्रायणीयोऽग्निष्टोमः चतुष्टोमः सहस्रदक्षिण उद्वसानीयान्त' इति। आपस्तम्बोऽपि (२)'राजा स्वर्गकामो राजसूयेन यजेत शतसहस्रं दक्षिणाऽग्निष्टोमः पञ्चापवर्गः प्रथममहः पञ्चसहस्राणि पवित्रे ददाति त्रिंशतमभिषेचनीये त्रिंशतं दशपेये दश केशवपनीये विंशतिं व्युष्टिद्विरात्रे पञ्च क्षत्रस्य धृताविति। आश्वलायनोऽपि होतृसूत्रं सूत्रयन्नित्थमाह—(३)'अथ राजसूयाः' पुरस्तात् फाल्गुन्याः पौर्णमास्याः पवित्रेणाऽग्निष्टोमेनाऽभ्यारोहणीयेन यजेत, पौर्णमास्यां चातुर्मास्यानि प्रयुङ्क्त' इति। ब्राह्मणभाष्यकृद्भिरपि पूर्वाचार्यैरित्थं संगृहीतम्—

> वक्ष्यते राजयज्ञोऽयं राजसूयाह्वयोऽस्य च।
> प्रयोगसंग्रहः पूर्वं फाल्गुन्याः सोममाहरेत् ॥
> अग्निष्टोमः पवित्राख्यः सोऽभ्यारोहणसाधनः।
> फाल्गुन्यां पूर्णमास्यान्तु चातुर्मास्यान्युपक्रमेत् ॥
> तानि संवत्सरे कृत्वा द्वौ सोमौ तत आहरेत्।
> आद्योऽभिषेचनीयः स्याद्दशपेयस्ततःपरम् ॥
> पश्चिष्टयस्तु बहवः कर्त्तव्यास्तु तदा तदा।
> स्यात्केशवपनीयोक्थस्सोऽतिरात्रस्ततः परम् ॥
> व्युष्टिद्विरात्रः कर्त्तव्यस्तत्राऽग्निष्टोम आदिमः।
> अहः स्यादतिरात्रोऽन्त्यं क्षत्रस्य धृतिरन्तिमः ॥
> अग्निष्टोमो भवेदित्थं राजसूयाह्वयः क्रतुः।
> सोमेष्टिपशुबन्धानां समाहारो भवत्ययम् ॥
> तत्रेष्टिपशुबन्धेषु सतः साम्नामनन्वयात्।
> सोमा एवाऽत्र कीर्त्यन्त इत्येवमवगम्यतामि'ति ॥

---

१. बौ. श्रौ. १२. १.   २. आप. श्रौ. १८. ८. १–४.
३. आश्व. श्रौ. उ. ३. ३. १–३

तत्राऽऽदौ पवित्राख्यमग्निष्टोमं विधत्ते—

**अग्निष्टोमं प्रथममाहरति यज्ञमुखं वा अग्निष्टोमो यज्ञमुखमेवाऽऽरभ्य सवमाक्रमते ॥ १ ॥**

द्वादशस्तोत्रयुक्तो योऽग्निष्टोमस्तमेतं राजसूयोपक्रमे सम्पादयेत्। सोमयागानाम्मध्ये ज्योतिष्टोम आद्यः, 'एष वाव प्रथमो यज्ञो यज्ञानां यत् ज्योतिष्टोम'इति श्रुतेः । तस्य ज्योतिष्टोमस्य सम्बन्धिन्यो याः सप्त संस्थाः सन्ति तासाम्मध्येऽग्निष्टोमसंस्थायाः प्रकृतित्वेन यज्ञमुखत्वम्। तस्मादादावग्निष्टोमेऽनुष्ठिते सति यज्ञस्य राजसूयाख्यस्य महाक्रतोर्मुखमेवाऽऽरभ्य सवमाक्रमते महाक्रतुमनुतिष्ठति । सूयतेऽभिषिच्यते यजमानो यस्मिन् महाक्रतौ सोऽयमभिषेकयुक्तो महाक्रतुः सव इत्युच्यते। यथोक्तविधिं तैत्तिरीया अप्येवमामनन्ति-(१)'अग्निष्टोममग्र आहरति । यज्ञमुखं वा अग्निष्टोमः।यज्ञमुखमेवाऽऽरभ्य सवमाक्रमत' इति॥१॥

राजसूयगतेषु सप्तसु सोमयागेषु प्रथमो विहितः, द्वितीयं विधत्ते-

**अथैषोऽभिषेचनीयः ॥ २ ॥**

अथशब्दो नाऽनन्तर्यार्थः, चातुर्मास्यादिभिर्व्यवहितत्वेनाऽग्निष्टोमाभिषेचनीययोरानन्तर्यस्य दुस्सम्पादनीयत्वात् । अधिकारार्थस्तु भवेत् । एष वक्तुमिष्टोऽभिषेचनीयोऽधिकृतः प्रारब्ध इत्यर्थः ॥ २ ॥

बहिष्पवमानमाध्यन्दिनपवमानार्भवपवमानाख्येषु त्रिषु स्तोत्रेषु स्तोमविशेषं विधत्ते—

**तस्य द्वात्रिंशाः पवमाना द्वात्रिंशदक्षराऽनुष्टुब्वागनुष्टुब्यावत्येव वाक्तयैव सूयते ॥ ३ ॥**

प्रसिद्धैवाऽनुष्टुभोऽक्षरसंख्या । सा चाऽनुष्टुप् वाग्रूपा वाग्देवतायाः प्रियत्वात् , तच्चाऽविसम्वादेन सर्ववेदेषु तथा व्यवहारादवगम्यते । ततो द्वात्रिंशस्तोमे पवमानेषु प्रयुक्ते सति संख्याद्वाराऽयं यजमानः कृत्स्नमन्त्ररूपया वाचाऽभिषिक्तो भवति, यद्यपि विष्टुत्यध्याययोरयं स्तोमो नाऽऽम्नातः, तथापि शाखान्तरानुसारिसूत्रकाराद्युपदेशादवगन्तव्यः । तैत्तिरीयास्तु स्तोमान्तरमामनन्ति(२) 'अथैषोऽभिषेचनीयश्चतुस्त्रिंशः पवमानो भवति । त्रयस्त्रिंशद्वै देवताः। ता एवाऽऽप्नोति । प्रजापतिश्चतुस्त्रिंशः । तमेवाऽऽप्नोति' ॥ ३ ॥

१. तै. ब्रा. १. ८. ७. १. २. तै. ब्रा. १. ८. ७. १.

अथ ब्रह्मवादिभिर्यो दोष उद्भाव्यते तं दर्शयति—

**सꣳशार इव वा एष छन्दसां यद्विषमास्तोमा अयथापूर्वमिति ॥ ४ ॥**

अभिषेचनीयस्योक्थ्यसंस्थारूपत्वात्तत्र पञ्चदशस्तोत्राणि। तेषु प्रथमषष्ठैकादशानि सवनत्रयगतानि पवमानस्तोत्राणि। तेष्वधिकसंख्योपेतो द्वात्रिंशस्तोमः प्रयुज्यते। तेभ्यः उपरितनेषु सवनत्रयगतेषु(१) स्तोत्रेषु क्रमेण पञ्चदशसप्तदशैकविंशस्तोमा न्यूनसंख्योपेताः प्रयुज्यन्ते, तदेतदयथापूर्वं भवेत्, अल्पेनोपक्रम्याऽधिकेन समाप्तौ तु यथापूर्वं भवति। तच्चाऽत्र नाऽस्ति, तदेतद्वैषम्यम्। तच्च प्रयुज्यमानमन्त्रगतच्छन्दसामवकाशरूपत्वात् संशर इव सम्यग्वध इव भवति ॥ ४ ॥

तमेतं दोषं ब्रह्मवादी कश्चिदभिज्ञः समाधत्ते—

**यत्समाः पवमानास्तेनाऽसꣳशारस्तेन यथापूर्वम् ॥५॥**

यदा पवमानस्तोत्राण्यन्यस्तोत्राणि चैकीकृत्य परीक्ष्यन्ते, तदानीं अर्वाचीनसंख्याया उपरितनत्वे सत्ययथापूर्वत्वरूपेण स्तोमवैषम्येण छन्दोवधः शङ्क्यते। (२)पृथक् परीक्षायान्तु नाऽसौ शङ्काऽस्ति, न तावत्(३) परस्तोत्रेषु अयथापूर्वत्वमस्ति; पञ्चदशसप्तदशैकविंशानामनुक्रमेणैवाऽनुष्ठितत्वात्। नाऽपि पवमानेष्वसौ शङ्का, यद्यस्मात् कारणात् पवमानत्रयेऽपि द्वात्रिंशस्तोमवत्वात् समानेन कारणेन वैषम्यप्रयुक्तः संशरो नास्ति। तेनोभयविधेषु स्तोत्रेषु यथापूर्वत्वमेव, न तु वैपरीत्यम्। अत्रोक्तदोषोद्भावनं तत्परिहारश्च तैत्तिरीया अप्येवमामनन्ति(४) 'संशर एष स्तोमानामयथापूर्वम्। यद्विषमाः स्तोमाः। एतावान्वै यज्ञः। यावान् पवमानाः। अन्तःश्लेषणं वा अन्यत्। यत्समाः पवमानाः। तेनाऽसंशरः। तेन यथा पूर्वमि'ति। त्रयः पवमाना इति यावानस्ति एतावानेव मुख्यो यज्ञभागः। अन्यत्तु सर्वमन्तःश्लेषणं वै यज्ञमवधेः सम्बन्धमित्येतावदेव यस्मात् पवमानसाम्येन सर्वो दोषः परिहृत इत्यर्थः ॥ ५ ॥

अभिषेचनीयस्योक्थ्यसंस्थारूपत्वं विधत्ते—

**आत्मना वा अग्निष्टोमेनर्ध्नोत्यात्मना पुण्यो भव-**

---

१. क्रमेण इति नाऽस्ति मुद्रितपुस्तके. २. पृथक्कृत्वेति ख. पु.

३. अतिरात्रेष्विति ख, पु. ४. तै. ब्रा. १. ८. ७. १.

**त्यथ यदुक्थानि पशवो वा उक्थानि विडुक्थानि यदु कथानि भवन्त्यनुसन्तत्या एव ॥ ६ ॥**

अभिषेचनीयस्य यः पूर्वो भागोऽग्निष्टोमाख्यो द्वादशस्तोत्रयुक्तः, सोऽयं सर्वेषां सोमयागानां प्रकृतित्वादात्मा देहस्थानीयः। तेनैवेह लोके यजमानः समृद्धो भवति, परलोके पुण्यफलोपेतो भवति। अथ द्वादशस्तोत्रानन्तरं यदुक्थानि यानि त्रीण्युक्थाख्यस्तोत्राणि सन्ति तान्युक्थानि यज्ञशरीरस्थानीयादग्निष्टोमात् बाह्यत्वेन गवाश्वादिपशु स्थानीयानि, तथा त्विट्प्रजापुत्रभृत्यादि प्रजास्थानीयानि च। अत-स्तानि स्तोत्राणि पशूनां प्रजाया अवच्छेदायैव। तस्मादभिषेचनीयः उक्थ संस्थः कार्य इत्यभिप्रायः। शाखान्तरे चाऽयमर्थो विस्पष्टमाम्नायते-(१) 'आत्मनैवाऽग्निष्टोमेनर्ध्नोति। आत्मनः पुण्यो भवति। प्रजा वा उक्थानि। पशव उक्थानि। यदुक्थ्यो भवत्यनुसन्तत्यै' इति ॥ ६ ॥

बहिष्पवमानस्तोत्रस्याऽऽदावतिदेशप्राप्तप्राकृतमन्त्रबाधनाय मन्त्रा-न्तरं विधत्ते--

**(२)"वायो शुक्रो अयामित" इति वायव्या प्रतिप-द्भवति वाग्वै वायुर्वाचमेवाऽस्य यज्ञमुखे युनक्ति तया-भिषिच्यते सर्वस्या एव वाचः सूयते सर्वा एनं वाचो राजेति वदन्ति ॥ ७ ॥**

'वायो शुक्र' इत्यादि पादस्तृचस्य प्रतीकभूतः, सोऽयं तृचो बहि ष्पवमानस्य प्रतिपत् प्रारम्भसाधनं, प्रतिपद्यते प्रारभ्यते अनया तृचरू-पया चेति व्युत्पत्तेः। वायुर्देवता यस्याः प्रतिपदः सा वायव्या, कौष्ठ्येन वायुना वागुच्चार्यत इति वायोर्वाग्रूपत्वोपचारः। तथा सति वाय

---

१. तै. ब्रा. १. ८. ७. २.

२. वायो शुक्रो अयामि ते मध्वो अग्रं दिविष्टिषु।
आ याहि सोमपीतये स्पार्हो देव नियुत्वता ॥ १ ॥
इन्द्रश्च वायवेषां सोमानां पीतमर्हथः।
युवां हि यन्तीन्दवो निम्नमापो न सध्र्यक् ॥ २ ॥
वायविन्द्रश्च शुष्मिणा सरथं शवसस्पती।
नियुत्वन्ता न ऊतय आ यातं सोमपीतये ॥ ३ ॥
सा. सं. उ. ८. १. ५.

ण्यमन्त्रेण प्रारभमाण उद्गाता यजमानस्य यज्ञारम्भे वाग्देवतामेव संयोजयति । तत्संयोजने तया वाग्देवतया अस्मिन्नभिषेचनीयक्रतावभिषिक्तो भवति, तद्देवतानुग्रहात् सर्वप्राण्युच्चारितायाः सर्वस्याः मन्त्ररूपाया वाचः सम्बन्धी सन्नेवाऽयं सूयतेऽभिषिच्यते। अयमर्थः प्रत्यक्ष एव, यतः सर्वप्राणिमुखोद्गताः सर्वा वाचः एनं राजेत्येव व्यवहरन्ति। शाखान्तरे त्वन्य एव तृचो वायुदेवताक एवमाम्नायते-(१)'उप त्वा जामयो गिर इति प्रतिपद्भवति'। वाग्वै वायुः। वाच एवैषोऽभिषेकः। सर्वासामेव प्रजानां सूयते । सर्वा एनं प्रजा राजेति वदन्ती'ति ॥ ७ ॥

'वायो शुक्र' इत्येतस्मात् तृचादूर्ध्वं सम्भार्य्याख्या एकैकश आम्नाता ऋचो विधत्ते--

**सम्भार्या भवन्ति पृष्ठान्येव ताभिर्युनक्ति यन्नानादेवत्यास्तेन युनक्ति वीर्यं वै पृष्ठानि वीर्य एवाऽध्यभिषिच्यते ॥ ८ ॥**

सम्भ्रियन्ते स्वयमेकैकाः (२)सत्यस्तृचस्थाने सम्यक्प्रयुज्यन्ते ताः सम्भार्याः(३)'उप त्वा जामयो गिर' इत्याद्या 'अग्न आयूंषी'त्यन्ताः षट्संख्याका ऋचः। ताभिः षड्भिर्ऋग्भिरनुष्ठिताभिरयमुद्गाता पृष्ठस्तोत्रसामान्येव योजितवान् भवति । षट्संख्यासामान्यात् रथन्तरबृहद्वैरूपवैराजशाक्वररैवताख्यानि षट् पृष्ठसामानि । यद्येन कारणेन सम्भार्य्या नानादेवताकाः पृष्ठानि च तथाविधानि, तेन कारणेन पृष्ठत्वयोजनं सम्भवति । पृष्ठानाञ्च सामर्थ्यहेतुत्वात् वीर्य्यत्वम् । अतः सम्भार्यापाठेन यजमानो वीर्येऽधिश्रित्याऽभिषिच्यते ॥ ८ ॥

ब्रह्मवादिनां दोषोद्भावनं दर्शयति--

**यन्ति वा एते यज्ञमुखादित्याहुर्ये सम्भार्याः कुर्वत इति ॥ ९ ॥**

य उद्गातारः सम्भार्याः स्तोत्रमध्ये कुर्वते एते यज्ञमुखरूपाद् बहिष्पवमानाद्यन्ति विभ्रष्टा भवन्ति । एकैकामृचमाश्रित्य तृचपरित्याग एव भ्रंशः । इतिशब्दो दोषसमाप्त्यर्थः ॥ ९ ॥

---

१ तै. ब्रा. १. ८. ८. १. २. यास्तृचस्थान इति ख. पु.

३. इमा ऋचः २२४ पृष्ठे द्रष्टव्याः ।

तं दोषं परिहरति--

**यत् (१)"पवस्व वाचो अग्रिय" इति तेन यज्ञमुखान्न यन्ति ॥ १० ॥**

यद्येन कारणेन सम्भार्यर्शभ्य ऊर्द्ध्वं 'पवस्वे'त्येतं तृचं पठन्ति तेन कारणेन यज्ञमुखादूभ्रंशो नाऽस्ति । तस्मादयं तृचः पठ्यत इत्यर्थः । एतौ दोषपरिहारौ शाखान्तरेऽप्युक्तौ-(२)'यन्ति वा एते यज्ञमुखात् । ये सम्भार्या अब्रुवन । यदाह । पवस्व वाचो अग्रिय इति । तेनैव यज्ञमुखान्न यन्ती'ति ॥ २० ॥

अन्यं तृचं विधत्ते--

**(४) "दविद्युतत्या रुचे"ति छन्दसाꣳरूपं छन्दाꣳस्येवाऽस्य यज्ञमुखे युनक्ति तैरभिषिच्यते ॥ ११ ॥**

'दवी'त्यस्य मन्त्रस्य छन्दोरूपत्वं षष्ठाध्यायस्य नवमखण्ड एव पठितम्-(४)'दविद्युतत्या रुचेति वै गायत्र्या रूपं परिष्टोभन्त्येति त्रिष्टुभः, कृपेत्यनुष्टुभः, सोमाः शुक्रा गवाशिर इति जगत्याः सर्वेषां वा एषां छन्दसां रूपमि'ति । स्पष्टमन्यत् ॥ ११ ॥

तृचान्तरं विधत्ते--

**(५)'एतमुत्यं दश क्षिप" इत्यादित्या आदित्या वा इमाः प्रजास्तासामेव मध्यतः सूयते ॥ १२ ॥**

तासु ऋक्षु 'स नो भगाय वायवे पूष्णे पवस्वे'त्येवमादित्यनाम्नः श्रवणादादित्या आदित्यदेवताका एताः । तथा प्रजा अप्यदितेरुत्पन्नत्वादादित्याः । तत आदित्यदेवताकस्य तृचस्य पाठादादित्यरूपाणां प्रजानां मध्य एवाऽभिषिच्यते । एतदपि शाखान्तरेऽभिहितम्-(६)'एतमुत्यं दश क्षिप इत्याह । आदित्या वै प्रजाः । प्रजानामेवैतेन सूयत' इति ॥ १२ ॥

---

१. सा. सं. उ. २. १. १.    २. तै, ब्रा. १. ८. ८. १.

३. दविद्युतत्या रुचा परिष्टोभन्त्या कृपा । सोमाश्शुक्रा गवा शिरः ॥ १ ॥
हिन्वानो हेतृभिर्हित आ वाजं वाज्यक्रमीत् । सीदन्तो वनुषो यथा ॥ २ ॥
अधुक्सोम स्वस्तये सञ्जग्मानो दिवा कवे । पवस्व सूर्यो दृशे ॥ ३ ॥
सा. सं. उ. १. १. २.

४. तां. ब्रा. ६. ९. २५.    ५. अयं तृचः ४८ पृष्ठे गतः ।

६. तै. ब्रा. १. ८. ८. २.

तृचान्तरं विधत्ते--

(१)"पवस्वेन्दो वृषा सुत" इति वृषण्वत्यो भवन्ति त्रिष्टुभो रूपं वीर्यं वै त्रिष्टुप् वीर्यं एवाऽस्याभिषिच्यते ॥

वृषन्शब्दस्य विद्यमानत्वादेता ऋचो वृषण्वत्यः। यद्यप्येता गायत्र्यः तथाऽपि वीर्यसम्पादकत्वात् फलतस्त्रिष्टुभो रूपं भवन्ति । त्रिष्टुभश्चेन्द्रियवीर्यहेतुत्वं सर्ववेदप्रसिद्धम् ॥ १३ ॥

पञ्चर्चं सूक्तं विधत्ते--

(२)"उत्ते शुष्मास ईरत" इत्युद्वत्यो भवन्त्युद्वद्वा अनुष्टुभो रूपमानुष्टुभो राजन्यस्तस्मादुद्वत्यो भवन्ति ॥

आदावुच्छब्दश्रवणात्ता उद्वत्यः । अनुष्टुभ्यप्यन्यत्र क्वचिदुच्छब्दः श्रुतः 'उद्यन्नद्य मित्रमह' इति । तत्सामान्यादेतासामनुष्टुब्रूपत्वं 'अनुष्टुप् छन्दसां प्रतिष्ठे'ति श्रुतेः । यथा छन्दसां मध्येऽनुष्टुभ उत्तमत्वं तथा राज्ञः सर्वपालकत्वेनोत्तमत्वादानुष्टुभत्वम् । तस्मादनुष्टुप्द्वारकात् सम्बन्धाद्राजयज्ञ उद्वत्यः कार्याः । शाखान्तरेऽप्येतदाम्नातम्-- (३)'उद्वतीर्भवन्ति । उद्वद्वा अनुष्टुभो रूपम् । आनुष्टुभो राजन्यः । तस्मादुद्वतीर्भवन्ती'ति ॥ १४ ॥

तृचान्तरं विधत्ते--

(४)"पवमानस्य ते कव" इति प्राणानां क्लृप्त्यै ॥१५॥

मन्त्रे पवमानस्येति शुद्धिहेतुत्वं प्रतीयते । प्राणाश्च शरीरे शुद्धिहेतवः, तदभावे शरीरस्याऽशुचित्वात् । अनेन साम्येनाऽयं तृचः शरीरे प्राणानां सम्पादनाय भवति ॥ १५ ॥

तृचान्तरं विधत्ते--

(५)"अध क्षपा परिष्कृत" इत्यनुष्टुप् प्रथमाऽनुष्टु-

---

१. तृचोऽयं १८४ पृष्ठेऽवलोकनीयः । २. सूक्तमिदं ११४ पृष्ठे द्रष्टव्यम् ।

३. तै. ब्रा. १. ८. ८. २.

४. पवमानस्य ते कवे वाजिन्त्सर्गा असृक्षत । अर्वन्तो न श्रवस्यवः ॥ १ ॥
अच्छा कोशं मधुश्चुतमसृग्रं वारे अव्यये । अवावशन्त धीतयः ॥ २ ॥
अच्छा समुद्रमिन्दवोऽस्तं गावो न धेनवः । अग्मन्नृतस्य योनिमा ॥ ३ ॥
सा. सं. उ. १. १. ३.

५. अध क्षपा परिष्कृतो वाजाँ अभि प्र गाहसे ।

**वुत्तमा वाग्वा अनुष्टुब्वाचैव प्रयन्ति वाचमभ्युद्यन्ति॥१६॥**

'अध क्षपे'त्यस्मिन् तृचे क्रियमाणे बहिष्पवमानस्याऽऽदावन्ते चाऽनुष्टुप् सम्पद्यते। 'वायो शुक्र'इत्यादि 'अध क्षपे'त्यन्तः तयोरुभयोरप्यनुष्टुबेव छन्दः। वाचोऽनुष्टुप्त्वं पूर्वमेव प्रतिपादितम्। तस्मादाद्यन्तयोरीदृशौ तृचौ कुर्वाणा उद्गातारो वाचैव प्रयन्ति प्रारभन्ते वाचमभिलक्ष्य उद्यन्ति समापयन्तीत्यर्थः। अयमर्थः शाखान्तरेऽप्याम्नातः—(१) वाग्वा अनुष्टुप् वाचैव प्रयन्ति वाचोद्यन्ती'ति ॥ १६ ॥

तावेतौ तृचौ प्रकारान्तरेण प्रशंसति--

**छिन्नमिव वा एतद्यदेकर्च्चा यदेतावानुष्टुभौ तृचावभितो भवतो बहवः पुर एतारो भवन्ति बहवः पश्चापिनः ॥ १७ ॥**

बहिष्पवमानस्य मध्ये सम्भार्य्या एकर्चा इति यदस्ति, तदेतेन स्तोत्रं विच्छिन्नमिव भवत्येव, पूर्वोत्तरभाविनां तृचानां मध्ये व्यवधानात्। तद्विच्छेदपरिहारार्थं स्तोत्रस्याऽभित आद्यन्तयोरेतावनुष्टुभौ तृचौ यदि भवतः, तदा विच्छेददोषस्य परिहृतत्वाद्यजमानस्य पुर एतारः पुरतो गन्तारः सेवका भृत्या बहवः सम्पद्यन्ते। पश्चापिनः पृष्ठत आप्नुवन्तो भृत्या अपि बहवो भवन्ति ॥ १७ ॥

अन्तिमं तृचं प्रकारान्तरेण प्रशंसति—

**सौर्य्यानुष्टुबुत्तमा भवति स्वर्गस्य लोकस्य समष्ट्यै॥**

उत्तमा 'अध क्षपे'त्येषा सौरी सूर्य्यदेवताका, 'विवस्वतो धिय'इति तत्र श्रुतत्वात्। सूर्य्यश्च स्वर्गे तिष्ठति, तस्मादयं तृचः स्वर्गप्राप्त्यै संपद्यते। शाखान्तरेऽप्य०दुक्तम्-(२)'सौर्यनुष्टुबुत्तमा भवति। सुवर्गस्य लोकस्य सन्तत्या' इति ॥ १८ ॥

**इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऽष्टादशाध्यायस्याऽष्टमः खण्डः ॥**

---

यदी विवस्वतो धियो हरिं हिन्वन्ति यातवे ॥ १ ॥
तमस्य मर्जयामसि मदो य इन्द्रपातमः।
यं गाव आसभिर्दधुः पुरा नूनं च सूरयः ॥ २ ॥
तं गाथया पुराण्या पुनानमभ्यनूषत।
उतो कृपन्त धीतयो देवानां नाम बिभ्रतीः ॥ ३ ॥

सा. सं. उ. ८. १. ६.

१. तै. ब्रा. १. ८. ८. २. २. तै. ब्रा. १. ८. ८. ३.

## नवमः खण्डः ।

(१)अभिषेचनीये वक्तव्या विशेषा उक्ताः । अथ दशपेये वक्तव्यान् विशेषान् विधातुं तद्विधि(२)स्तावकमर्थवादमाह--

**वरुणस्य वै सुषुवाणस्य भर्गोऽपाक्रामत्स त्रेधाऽप तद्भृगुस्तृतीयमभवच्छ्रायन्तीयं तृतीयमपस्तृतीयं प्राविशत् ॥ १ ॥**

सुषुवाणस्याऽभिषेचनीयक्रतावभिषिक्तस्य वरुणस्य भर्गः इन्द्रियसामर्थ्यं तस्माद्वरुणादपगतं त्रेधा पतितमभूत् । तस्य पतितस्य भर्गस्य यत्तृतीयमंशरूपं तद्भृगुनामकः ऋषिरभवत् । अत एव भृगोर्वरुणपुत्रत्वमन्यत्र श्रूयते-(३)'भृगुर्वै वारुणिः वरुणं पितरमुपससारे'ति । अन्यत्तृतीयमंशस्वरूपं श्रायन्तीयनामकं सामाऽभवत् । (४)'श्रायन्त इव सूर्यमि'त्यस्यामृच्युत्पन्नं साम श्रायन्तीयम् । (५)अतःपरं तृतीयमंशरूपमपः प्राविशत् ॥ १ ॥

अथ विवक्षितान् विशेषान् विधत्ते--

**यद्भार्गवो होता भवति तेनैव तदिन्द्रियं वीर्यमाप्त्वाऽवरुन्धे यत् श्रायन्तीयं ब्रह्मसाम भवति तेनैव तदिन्द्रियं वीर्यमाप्त्वाऽवरुन्धे यत् पुष्करस्रजं प्रतिमुञ्चते तेनैव तदिन्द्रियं वीर्यमाप्त्वाऽवरुन्धे ॥ २ ॥**

भृगुगोत्रे समुत्पन्नः पुरुषो दशपेयक्रतौ होता भवेदिति यदस्ति तेनैव भृगुगोत्रसम्बन्धेनैव तत्पतितं वरुणस्येन्द्रियं तत्सामर्थ्यञ्च प्राप्य अवरुन्धे स्वाधीनं कुरुते । ब्रह्माणमभिलक्ष्य गातव्यं साम ब्रह्मसाम, तच्चाऽत्र श्रायन्तीयं भवेत् । पुष्करस्रजं तामरसपुष्पाणां मालां यजमानः प्रतिमुञ्चते । एतेन त्रितयेन कृत्स्नमपीन्द्रियसामर्थ्यं अवरुद्धं भव-

---

१. अभिषेचनीयस्य विशेषा इति ख. पु. २. सावकमर्थवादमिति ख. पु.

३. तै. आ. ९. १. १. ४. श्रायन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत ।
वसूनि जातो जनिमान्योजसा प्रति भागं न दीधिमः ॥
सा. सं. पू. ३. २. ३. ५.

५. इदं तृतीयमंशरूपमिति ख. पु.

ति। अत्राऽध्वर्युब्राह्मणमेवमाम्नायते-(१)'जामि वा एतत् कुर्वन्ति । यत्सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ति । पुण्डरिस्रजां प्रयच्छन्त्यजामित्वाय । अङ्गिरसः सुवर्गं लोकं यन्तः । अप्सु दीक्षातपसी प्रावेशयन् । तत् पुण्डरीकमभवत् । यत्पुण्डरिस्रजां प्रयच्छति । साक्षादेव दीक्षातपसी अवरुन्ध' इति । अध्वर्युसूत्रमप्येवं पठ्यते (२)'दीक्षायास्स्थाने द्वादशपुण्डरीकां स्रजं प्रतिमुञ्चत' इति ॥ २ ॥

तस्याः स्रजः कालविशेषं विधत्ते—

**दशमी भवति ॥ ३ ॥**

अभिषेचनीयादुत्तरमारभ्य दशसु दिनेषु क्रमेण दशसंख्याकानि संसृपसंज्ञकानि हवींषि दशसु दिनेष्वनुष्ठेयानि। तस्मिन् दशमेऽहन्यपराह्णे पुष्करस्रजः (३)प्रातिमोकः । ततः स्रगेषा दिनगताया दशसंख्यायाः पूरकत्वात् दशमीत्युच्यते । उक्तं हि सूत्रकृता (४)'तद्दीक्षित एव दशाहं ततो दशपेयेन यजेते'ति ॥ ३ ॥

अपरं विशेषं विधत्ते—

**दश चमसा दश चमसाध्वर्यवो दश दश चमसमभिषन्त्यादशमात् पुरुषादन्वाख्याय प्रसर्पन्ति दश समृद्धो ह्येष यज्ञ एनं वाव ते तद्यज्ञमन्वैच्छन्य एतेन यजत एतदेवेन्द्रियं वीर्यमात्त्वाऽस्मिन् दधाति ॥ ४ ॥**

यजमानचमसव्यतिरिक्ताः दशसङ्ख्याका अत्र सोमचमसाः स्युः । तेषाञ्च (५)सोमचमसानां हर्त्तारो दशसंख्याकाश्चमसाध्वर्यवो भवन्ति। एकैकं चमसं दश दश ब्राह्मणाः पानार्थमभियन्ति । तत्रैकैकः पुरुषः स्वकीयान् पित्रादीन् दशपुरुषपर्य्यन्तानन्वाख्याय पानार्थं प्रसर्पेत् । तदुक्तं सूत्रकृता (६)'ते दश मातृर्दश पितॄनित्यन्वाख्याय प्रसर्पेयुरि'ति । अध्वर्युसूत्रमपि (७)'श्वो भूते पात्रसादनकाले दश चमसानधिकान् प्रयुनक्ति, तानुन्नयनकाले उन्नयति, भक्षणकाले दश दशैकैस्मिंश्चमसे ब्राह्मणाः सोमपाः सोमं भक्षयन्त्या दशमात् पुरुषादविच्छिन्नसोमपीथाः'

---

१. तै. ब्रा. १.८.२.१. २. आप. श्रौ. १८.१०.१४. ३. प्रतिमोक्ष इति. ख. पु.
४. लाट्या. श्रौ ९. २. १. ५. दशानां कर्तार इति ख. पु. ६. लाट्या. ९. २. ५.
७. आप. श्रौ. १८. २१. १-३.

इति। तैत्तिरीयब्राह्मणमपि (१)'दशपेयो भवति शतं ब्राह्मणाः पिबन्ती'ति। तदीयमनुब्राह्मणमप्येवमाम्नातम्(२)-'दशपेयो भवति। अन्नाद्यस्याऽव-रुध्यै। शतं ब्राह्मणाः पिबन्ति। शतायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठती'ति। हि यस्मादेष दशपेयाख्यो यज्ञो दशसमृद्धः दशभिश्च मसैर्युक्तत्वात् समृद्धो भवति। तत्तस्मात् कारणाद्धि समृद्धिकामा एतमेव यज्ञमन्वैच्छन् अन्विष्याऽनुष्ठितवन्त इत्यर्थः। यः पुमानेतेन दशपेयेन यजते अस्मिन् यजमाने स उद्गाता एतदेव लोकप्रसिद्धं चक्षुरादीन्द्रियं तद्गतवीर्यञ्च प्राप्य स्थापयति ॥ ४ ॥

विशेषान्तरं विधत्ते—

**सर्वस्सप्तदशो भवति द्वादश मासाः पञ्चर्त्तवः स वै संवत्सरः संवत्सरादेवेन्द्रियं वीर्य्यमाप्त्वाऽवरुन्धे ॥ ५ ॥**

अस्मिन्दशपेयक्रतौ यानि स्तोत्राणि सन्ति, तेषु सर्वेषु स्तोत्रेषु सर्वोऽपि स्तोमः सप्तदशसंख्यो भवेत्। लोके चैत्राद्याः द्वादश मासाः वसन्ताद्याः पञ्चर्त्तवः। 'हेमन्तशिशिरयोः समासेने'ति श्रुत्यन्तरादृतुषु पञ्चसंख्या। स वै स एव द्वादशमासात्मकः पञ्चर्त्तुरूपः सप्तदशसं-ख्योपेतः संवत्सरो भवति। अतः संख्यासाम्येनाऽस्मात् संवत्सररूपात् सप्तदशस्तोमादेव इन्द्रियं तद्गतवीर्य्यञ्च प्राप्य स्वाधीनं करोति ॥ ५ ॥

पूर्वोक्तां यजमानेन स्व कण्ठे प्रतिमुक्तां पुष्करस्रजमर्थवादेन स्तौति—

**इन्द्रो वृत्रमहंस्तस्येयं चित्राण्युपैद्रूपाण्यसौ नक्षत्रा-णामवकाशेन पुण्डरीकं जायते यत् पुष्करस्रजं प्रति-मुञ्चते वृत्रस्यैव तद्रूपं क्षत्रं प्रतिमुञ्चते ॥ ६ ॥**

त्वाष्ट्रनामकेन केनचिद्विशिष्टब्राह्मणेनोत्पादित इन्द्रस्य शत्रुः कश्चि-द्वृत्रनामकः तं कदाचिदिन्द्रो हतवान्। तस्य मृतस्य वृत्रस्य शरीर-गतानि यानि नीलपीतस्थूलसूक्ष्माद्यवयवरूपाणि सन्ति, इयं पृथिवी तानि सर्वाणि रूपाणि उपैत् प्राप्नोत्। असौ द्यौर्नक्षत्राणां सम्बन्धीनि दृश्यमानानि वृत्रस्य चित्ररूपाण्याप्नोत्। अवकाशेन द्यावापृथिव्योर्मध्य-स्थेनाऽन्तरिक्षेण वृत्ररूपात्मकमेव पुण्डरीकं जायते। एवं सति यद्यदा यजमानः पुष्करस्रजं प्रतिमुञ्चते तदानीं वृत्रस्यैव सम्बन्धि तत्सर्वं रूपं क्षत्रियजातिर्यजमानः प्रतिमुञ्चते ॥ ६ ॥

---

१ तै. सं. १. ८. १८. १. २. तै. ब्र. १. ८. २. २.

तस्यां स्रजि पुष्कराणां संख्यां विधत्ते—

**द्वादश पुष्करा भवंति द्वादश मासाः संवत्सरः संवत्सरेऽन्तर्भूतश्च भव्यश्च भूतेन चैवैनं भव्येन च समर्द्धयति ॥ ७ ॥**

द्वादशभिः पुष्करैः स्रगियं निष्पाद्या। तथा सति संवत्सरगतया माससंख्यया साम्यं भवति। संवत्सरमध्ये वर्त्तमानादस्माद्दिवसात् अतीतकालसम्बन्धि भविष्यत्कालसम्बन्धि च वस्तुजातञ्च भूतेन तेन चोभयेन वस्तुजातेन यजमानं समृद्धं करोति ॥ ७ ॥

अथ सर्वेषामृत्विजां सम्बन्धीनि द्रव्याणि विधित्सुरादौ सुवर्णमयीं स्रजं विधत्ते—

**स्रगुद्गातुस्सौर्य्य उद्गाता न वै तस्मै व्यौच्छदथोव्येवाऽस्मै वासयति ॥ ८ ॥**

सौवर्णी स्रगुद्गातुर्देया। यथा सूर्य्यः सर्वञ्जगद्व्यनक्ति तथा सामवेदार्थं सर्वमुद्गाता व्यनक्ति, तस्मात्सौर्य्य उद्गाता। सौवर्णस्रजोधारणात्पूर्वं तस्मादुद्गात्रे न वै व्यौच्छत् प्रकाशाभावादुषःकालो नाऽभूत्। अथ सौवर्णस्रग्धारणानन्तरं अस्मा उद्गात्रे विवासयत्येव प्रकाशसङ्गादुषःकालं सूर्य्यो विशेषेणास्मा उद्गात्रे सम्पादयत्येव ॥ ८ ॥

सुवर्णफलकरूपं रुक्मनामकमाभरणं विधत्ते—

**रुक्मो होतुराग्नेयो होताऽथो अमुमेवाऽस्मा आदित्यमुन्नयति ॥ ९ ॥**

होतुरुपरिधारणयोग्यो रुक्मो भवेत(१) 'अग्निर्वै देवानां होते'ति श्रुत्यन्तरादाग्नेयो होता भवति। अतः प्रकाशरूपो रुक्मस्तस्य योग्यः। अथो अपि च अस्मै होत्रर्थममुमेव रुक्मरूपमादित्यमुन्नयति ऊर्ध्वदेशं प्रापयति ॥ ९ ॥

अथ द्रव्यान्तरं विधत्ते—

**प्राकाशावध्वर्य्योर्य्यमाविव ह्यध्वर्य्यू अथो चक्षुषी एवाऽस्मिन् दधाति ॥ १० ॥**

प्राकाशौ आभरणविशेषाविति केचित्। सौवर्णदर्पणावित्यन्ये। अध्वर्य्युप्रतिप्रस्थात्रोस्तावुभौ भवताम्। एकस्मिन्नुदरे युगपदुत्पन्नौ भ्रात-

१. तै. सं. २. ६. ९. ५.

रौ यमौ तद्देवतावुभावध्वर्युविशेषौ । तस्मात्तयोः साम्येन प्राकाशदानं युक्तम् । प्राकाशयोर्दानेनाऽस्मिन् यजमाने प्रतिग्रहीतरि वा दृष्टिपाटवं भवति ॥ १० ॥

अश्वदानं विधत्ते—

**अश्वः प्रस्तोतुः प्राजापत्योऽश्वः प्राजापत्यः प्रस्तोताऽथो प्रेव ह्यश्वः प्रोथति प्रेव प्रस्तोता स्तौति ॥ ११ ॥**

प्रजापतिसम्बन्धिचक्षुर्जन्यत्वादश्वः प्राजापत्यः । तथा च श्रुत्यन्तरम्(१)–'प्रजापतेरक्ष्यश्वयत्तत्परापतत्तदश्वोऽभवदि'ति । प्रस्तोता प्रथमतो गायति, प्रजापतिश्च प्रथमतः सृजति । ततः प्रस्तोता प्राजापत्यः । अथो अपि च भूमौ विलुठन्नश्वः सहसाऽभ्युत्थाय प्रेव प्रकर्षेणैव प्रोथति गात्रचालनं करोति । प्रस्तोताऽपि प्रकर्षेणव स्तुतिं करोति, तत्तस्याऽश्वो योग्यः ॥ ११ ॥

धेनुदानं विधत्ते—

**धेनुः प्रतिहर्तुः पय एवाऽस्मिन् दधाति ॥ १२ ॥**

धेनोर्हि क्षीरसम्पादनं प्रसिद्धम् ॥ १२ ॥

वन्ध्याया गोर्दानं विधत्ते—

**वशा मैत्रावरुणस्य वशं मा नयादिति ॥ १३ ॥**

मां यजमानं प्रति समस्तं वस्तुजातं वशं स्वाधीनं नयात् नयतु इत्यनेनाऽभिप्रायेण वन्ध्या देया । देयवस्तुफलयोर्वशशब्दसाम्यं द्रष्टव्यम्॥

ऋषभदानं विधत्ते—

**ऋषभो ब्राह्मणाच्छंसिनो वीर्य्यं वा ऋषभो वीर्य्यमेवाऽस्मिन् दधाति ॥ १४ ॥**

सेचनसमर्थः पुङ्गवः ऋषभः । तस्य शक्त्याधिक्येन वीर्य्यरूपत्वम् ॥

वस्त्रदानं विधत्ते—

**वासः पोतुः पवित्रत्वाय ॥ १५ ॥**

वस्त्रेण हि जलादीनि पूयन्त इति तस्य पवित्रत्वम् ॥ १५ ॥

स्थूलशाटीदानं विधत्ते—

**वरासी नेष्टुरनुलम्बेव ह्येषा होत्रा ॥ १६ ॥**

---

१. तै. सं. ५. ३. १२. १.

कार्पासापेक्षया हीना वृक्षत्वचा निर्मिता या सेयं वरासी । प्रस्थितयाज्याप्रभृतिषु प्रयोगविशेषेषु नेष्टुरनुलम्बेव पश्चाल्लम्बत इव भासते । हि यस्मादेषा वरासी होत्रा होतुर्नेष्टुः सम्बन्धिनी । अत्र सूत्रकारः—(१)'वासः पोतुरिति कार्पासं स्याद्वरासी नेष्टुरिति क्षौमी स्यादि'ति ॥ १६ ॥

स्थूलस्य यवपूर्णस्य शकटस्य दानं विधत्ते—

**स्थूरि यवाचितमच्छावाकस्य स्थूरिरिव ह्येषा होत्राऽथो निर्वरुणत्वायैव यवा न वै तर्हि यदस्यां दक्षिणा अभ्यभवन्नथो अस्य त एव तेनाऽभीष्टाः प्रीता भवन्ति॥१७॥**

होत्रा होमहेतोरच्छावाकस्य सम्बन्धिनी एषा शकटप्रतिग्रहक्रिया स्थूरिरिव हि पूर्वोक्तवस्त्रप्रतिग्रहाद्यपेक्षया स्थूलेव दृश्यते हि, शकटस्य प्रौढत्वात् । अथो अपि च शकटास्थिता यवाः निर्वरुणत्वाय वरुणकृतबाधपरिहाराय सम्पद्यन्ते । कथमिति चेत्तदुच्यते—तर्हि तस्मिन् काले दशपेयक्रतुप्रवृत्तेः पुरा तत्ते यवाः अस्यामच्छावाकस्य प्रतिग्रहक्रियायां दक्षिणा अभिलक्ष्य न वै अभवन् क्रत्वन्तरेषु यवानां दक्षिणायोग्यत्वं नाऽस्तीत्यर्थः । अथो अनन्तरमेतत्क्रत्वनुष्ठानवेलायामस्य यजमानस्य त एव यवाः तेन दानेन अभीष्टाः अभिगताः । इषुगताविति धातुः । प्रीताः वरुणस्य प्रीतिहेतवो भवन्ति । यवानां वरुणप्रियत्वं मन्त्रब्राह्मणयोरवगम्यते—(२)'यवोऽसि धान्यराजस्त्वं वारुणो मधुसंयुतः' इति मन्त्रः । (३)'वारुणं यवमयञ्चरुमि'ति ब्राह्मणम् । तस्माद्यवदानेन वरुणकृतोपद्रवपरिहारो युक्तः ॥ १७ ॥

बलीवर्द्दानं विधत्ते—

**अनड्वानग्नीधो युक्त्यै ॥ १८ ॥**

बलीवर्दो ह्यनः शकटं वहतीत्यनड्वान् । अग्नीत् इत्येवंनामक ऋत्विगपि यज्ञं वहति । अतः सादृश्याद्यज्ञस्य युक्त्यै योगायाऽनडुहो दानम् ॥ १८ ॥

अजदानं विधत्ते—

**अजः सुब्रह्मण्यायै ॥ १९ ॥**

---

१. लाट्या. श्रौ. ९. २. १४, १५. २. सौत्रोऽयं मन्त्रः, बौ. ध. ३. ६. ६. ३. तै. ब्रा. १. ७. २. ६.

सुब्रह्मण्यायै सुब्रह्मण्यस्य छागो योग्यः ॥ १९. ॥

स्त्रीपुरुषयोगयोर्गवोर्दानं विधत्ते—

**वत्सतर्युन्नेतुः साण्डस्त्रिवत्सो ग्रावस्तुतो मिथुनत्वाय ॥ २० ॥**

(१)अत्यन्ततरुणी गौर्वत्सतरी । साण्डो लम्बमानाण्डयुक्तः । त्रिवत्सः संवत्सरत्रयवयोयुक्तः ॥ २० ॥

गर्भिणीनां गवां दानं विधत्ते—

**द्वादश पष्ठौह्यो गर्भिण्यो ब्रह्मणो द्वादश मासाः संवत्सरः संवत्सर एव प्रतितिष्ठत्यथ यद्गर्भिण्यो वाग्वै धेनुर्म्मन्त्रो गर्भो वाच्येवाऽस्य मन्त्रं दधात्यामन्त्रणीयो भवत्यथ यद्धेनुभव्या द्वादश पयाᳬसि तान्येवाऽस्मिन् दधाति तस्मादाहुः पयस्वी राजा पुण्य इति ॥ २१ ॥**

पष्ठौह्यः प्रथमगर्भोपेताः। तस्यैवाऽर्थस्य वैशद्याय गर्भिण्य इत्यनुवादः । द्वादशसंख्यया कृत्स्नेऽपि संवत्सरे यजमानः प्रतितिष्ठति । अथाऽनन्तरं यदपि गर्भिणीत्वमस्ति तद्दानेन यजमानस्य प्रतिगृहीतुर्वा वाचि मन्त्रं स्थापयति । धेनोर्वाग्रूपत्वाद्गर्भस्य मन्त्ररूपत्वाच्चाऽऽमन्त्रणीयः पूजार्थं सर्वैरन्वेषणीयो भवति । अथाऽनन्तरं यद्धेनुभव्या या एता धेनुश्रेष्ठाः द्वादशसंख्याकाः सन्ति, ताभिर्द्वादशविधानि तान्येव पयांसि तत्तन्मांसभेदादीषदन्नरसानि क्षीराण्येव यजमानेन सम्पादितानि भवन्ति । तस्मादेवंविधफलोपेतत्वाद्यजमानं प्रति लौकिका एवमाहुः–राजसूययाजी राजा पयस्वी प्रशस्तपयाः पुण्यः पावन इति । तदेतद्दानजातं शाखान्तरेऽप्याम्नातम्–(२)'प्राकाशावध्वर्य्यवे ददाति । स्रजमुद्गात्रे । रुक्मं होत्रे । अश्वं प्रस्तोतृप्रतिहर्तृभ्याम् । द्वादश पष्ठौहीर्ब्रह्मणे। वशां मैत्रावरुणाय । ऋषभं ब्राह्मणाच्छंसिने । वाससी नेष्टापोतृभ्याम् । स्थूरियवाचितमच्छावाकाय । अनड्वाहमग्नीध' इति ॥२१॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशेऽष्टादशाध्यायस्य नवमः खण्डः ॥

---

१. अत्यन्तं या बाला गौस्सेति ख. पु. २. तै. ब्रा. १. ८. २. ३–५.

## दशमः खण्डः ॥

उक्तावभिषेचनीयदशपेयौ । तत ऊर्द्ध्वं केशवपनीयः कर्त्तव्यः । तथाचोक्तं सूत्रकारैः—(१)'यस्मिन् कालेऽभिषेचनीयेन यजेत तस्य पौर्णमास्यामतिरात्रेण दशपेयेनेष्ट्वा य उत्तरः पूर्वपक्षस्तस्मिन्नेव केशवपनीयेन यजेते'ति । अभिषेचनीयदशपेयकेशवपनीयानां केचिद्धर्म्मा अस्मिन् खण्डे स्तूयन्ते । तत्राऽभिषेचनीयगतानां सम्भार्य्याणां साम्नाञ्च स्तुतिं (२)वक्तुमादौ तावद्दोषमुपन्यस्यति—

**यो वै सवादेति नैनꣳ सव उपनमत्यथ यः सामभ्य एति पापीयान् सुषुवाणो भवति ॥ १ ॥**

सवशब्दोऽभिषेकं तद्युक्तं च क्रतुमाचष्टे, सवनमभिषेचनं सवः सूयते अभिषिच्यते यत्र स सव इति द्वेधा व्युत्पन्नत्वात् । यो वै यस्तु पुमान् सवादेति अभिषेकादपगच्छति एनमभिषेकरहितं पुमांसं सवोऽभिषेकयुक्तः क्रतुर्नोपनमति न प्राप्नोति । अथ पूर्ववैपरीत्येन सत्यभिषेके यद्यपि सामभ्योऽपगच्छति तदा सुषुवाणोऽभिषेकं कुर्वन्नपि सामराहित्येन शास्त्रीयानुष्ठानाभावादसौ पापीयान् भवति ॥ १ ॥

उपन्यस्तदोषं परिहर्तुं पूर्वोक्तं सम्भार्य्याणां विधिमनुवदति—

**सम्भार्य्या भवन्ति पृष्ठान्येव ताभिर्युनक्ति ॥ २ ॥**

पूर्ववद्व्याख्येयम् ॥ २ ॥

सम्भार्य्याणां पृष्ठरूपत्वे सम्पादिते सति पृष्ठस्तोत्रेषु सामसद्भावात् सामान्यपि सम्पादितानि स्युरित्येतदाह—

**एतानि वाव सामानि यत् पृष्ठानि ॥ ३ ॥**

स्पष्टोऽर्थः ॥ ३ ॥

दोषपरिहारं दर्शयति—

**यत् संभार्य्या भवन्ति तद्देव सामभ्यो नैति ॥ ४ ॥**

सम्भार्य्याणामनुष्ठानं यदस्ति तद्देव तेनैवाऽयं सामभ्यो नाऽपगच्छति, साम्नां सम्पादितत्वात् । ततः शास्त्रीय एवाऽभिषेक इत्यर्थः ॥४॥

---

१. लाट्या. श्रौ. ९. ३. १–२.        २. कर्तुमिति ख. पु.

सामविशेषं प्रशंसति—

**यानि देवराज्ञाᳬं सामानि तैरमुष्मिन् लोक ऋध्नो-ति यानि मनुष्यराज्ञां तैरस्मिन्नुभयोरनयोर्लोकयो-र्ऋध्नोति देवलोके च मनुष्यलोके च ॥ ५ ॥**

देवेषु मध्ये ये राजसूयेनेष्टवन्तस्ते देवराजानः। तैर्यानि दृष्टानि तानि देवराज्ञां सामानि—सैन्धुक्षितं, दैर्घश्रवसं, पार्थं, काक्षीवतमित्यादीनि। तैः स्वर्गसमृद्धिर्भवति। मनुष्येषु मध्ये ये राजसूयेनेष्टवन्तः क्षत्रियर्षयस्ते मनुष्यराजानः। तैर्दृष्टानि मनुष्यराज्ञां सामानि—दैवोदासं, वाध्र्यूश्वं 'वैतहव्यमित्यादीनि। तैर्मनुष्यलोके समृद्धिः। उभयोरित्यादिरुक्तस्यैवोपसंहारः। (१)'यो वै सवादेती'त्यादिकं शाखान्तरेऽप्येवमेवाऽऽम्नातम् ॥ ५ ॥

साम्नां संख्यां वक्तुं तदुपयुक्तमुपोद्घातमाह—

**सामत्रिष्टुभ्यध्यभिषिच्यते वीर्यं वै साम त्रिष्टुप् वीर्य एवाऽध्यभिषिच्यते ॥ ६ ॥**

सामरूपा त्रिष्टुप् सामत्रिष्टुप्। तत्राऽधिश्रितो राजाऽभिषिच्यते सामत्रिष्टुभः प्रयोगे सत्यभिषिञ्चेदित्यर्थः। त्रिष्टुभो वीर्यत्वं सर्ववेदप्रसिद्धम्। अतो वीर्य एवाऽभिषिक्तो भवति ॥ ६ ॥

(२)संख्यासामान्येन साम्नां त्रिष्टुप्त्वोपचारं दर्शयति—

**एकादश राजसामानि भवन्त्येकादशाक्षरा त्रिष्टु-बोजो वीर्यं त्रिष्टुबोजस्येव वीर्येऽध्यभिषिच्यते ॥ ७ ॥**

वीर्यशब्दस्यैवौज इति व्याख्यानम्। स्पष्टमन्यत् ॥ ७ ॥

अभिषेचनीये त्रिवृत्स्तोमराहित्यं प्रशंसति—

**यत् त्रिवृतमभिषेचनीये कुर्युर्ब्रह्म क्षत्रायाऽपिदध्यु-र्यत्त्रिवृतमुद्धरन्ति ब्रह्म तत् क्षत्रादुद्धरन्ति तस्माद्धरतां प्रतिदण्डा ब्राह्मणा न हि ते त्रिवृतमभिषेचनीये कु-र्वन्ति ॥ ८ ॥**

यत् यदि त्रिवृतं त्रिवृत्स्तोममुद्गातारोऽभिषेचनीये क्रतौ कुर्युः,

---

१. तै. ब्रा. १. ८. ८. ३. २. संख्यासाम्येनेति ख. पु.

तदानीं क्षत्राय राज्ञोत्कर्षार्थं ब्रह्म ब्राह्मणजातिं अपिदध्युः आच्छादयेयुः । त्रिवृत्स्तोमो ब्राह्मणजातिस्वरूपः, तयोरुभयोः प्रजापतिमुखजत्वसाम्यात् । तथा सति राजक्रतौ प्रधानभूते त्रिवृत्स्तोमस्याऽङ्गत्वेन ब्राह्मणजातेरवज्ञा स्यात् । यद्यपि त्रिवृत्स्तोममभिषेचनीयादुद्धरन्ति तत्र न प्रयुञ्जते तत्तेन प्रयोगाभावेन ब्रह्म ब्राह्मणजातिं क्षत्रादुद्धरन्ति क्षत्रियजातावनन्तर्भाव्य तदवज्ञां परिहरन्ति । यस्माद्ब्राह्मणजातेर्नीचत्वं परिहृतम्, तस्माल्लोके भरतां भरणं कुर्वतां क्षत्रियाणां मध्ये ब्राह्मणाः प्रतिदण्डा भवन्ति धनापहारादिना राजभिर्दण्ड्यमाना निन्दाशापादिना राजसु प्रतिकूलदण्डयुक्ता भवन्ति, न खलु ते राजभ्यो बिभ्यति । हि यस्मात्कारणात्ते ब्राह्मणा अभिषेचनीये त्रिवृत्स्तोमं न कुर्वन्ति, तस्माद्भयराहित्यमुपपन्नम् ॥ ८ ॥

त्रिषु क्रतुषु स्तोमव्यवस्थां दर्शयति—

एकविꣳशोऽभिषेचनीयस्योत्तमः सप्तदशो दशपेय एकविꣳशः केशवपनीयस्य प्रथमः क्षत्रं वा एकविꣳशो विट् सप्तदशः क्षत्रेणैवाऽस्मै विशमुभयतः परिगृह्णात्यनपक्रामुकाऽस्माद्विट् भवति ॥ ९ ॥

अभिषेचनीयस्य द्वात्रिंशाः पवमानाः, पञ्चदशान्याज्यानि, सप्तदशानि पृष्ठान्येकविंशोऽग्निष्टोमः सोक्थः । एवं सत्येकविंशस्तोम उत्तमो भवति । दशपेये तु स्तोमाः सर्वेऽपि सप्तदशा एव । केशवपनीये त्वेकविंशं प्रातस्सवनम्, सप्तदशं माध्यन्दिनं सवनं, पञ्चदशं तृतीयसवनम्, सोक्थं सरात्रिकं त्रिवृत्सन्धिकम् । एवं सत्येकविंशः प्रथमो भवति । सोऽयमकविंशस्तोमः क्षत्रं वै वीर्याधिक्येन क्षत्रियजातिस्वरूप एव । सप्तदशस्तोमस्तु विट्स्वरूपः क्षत्रियेण रक्षणीयायाः प्रजायाः स्वरूपम् । तत्र पूर्वोत्तरभाविनोरभिषेचनीयकेशवपनीययोः क्रमेणाऽवसान उपक्रमे चैकविंशस्तोमो योऽस्ति,यश्च मध्यभाविनि दशपेये सप्तदशस्तोमोऽस्ति तेषामेकविंशद्वयसप्तविंशस्तोमानुष्ठानेनाऽस्मै यजमानार्थं मध्यवर्त्तिनीं सप्तदशस्तोमरूपां विशं प्रजां उभयतः पूर्वोत्तरक्रत्वोरवस्थितेनैकविंशस्तोमरूपेण क्षत्रेणैव परिगृह्णाति परिपालयतीत्यर्थः । तथा सति विट् प्रजा अस्माद्यजमानादनपक्रामुका कदाचिदप्यपक्रमणशीला न भवति ॥ ९ ॥

इदानीं केशवपनीयं विधत्ते—

**यद्वै राजसूयेनाऽभिषिच्यते तत् स्वर्गं लोकमारोहति स यदिमं लोकं नोपावरोहेदति जनं वा गच्छेत्तुद्वा माद्येद्यदेषोऽर्वाचीनस्तोमः केशवपनीयो भवत्यस्य लोकस्याऽनुद्धानाय यथा शाखायाः शाखामालम्भमुपावरोहेदेवमेतेनेमं लोकमुपावरोहति प्रतिष्ठायै ॥ १० ॥**

यद्वै यस्मिन्नेव काले यजमानो राजसूयगतेनाऽभिषेचनीय(१)क्रतोरभिषेकेण युक्तो भवति तत्तस्मिन्नेव काले स्वर्गं लोकमारोहति प्राप्त इव भवति । स यजमानो यद्यदि इमं भूलोकं प्रति स्वर्गादवरोहणं न कुर्यात् तदानीं जनं वाऽतिगच्छेत् स्वकीयं बन्धुवर्गं परित्यज्य यत्र काऽपि पलायितो वा भवेत् उन्माद्येद्वा बन्धुवर्गे स्थित एव सन् भ्रान्तिं वा प्राप्नुयात् । तस्मात् स दोषः परिहर्त्तव्यः । कथं (२) परिहारः ? इति चेत् तदुच्यते—यद्यदि एषोऽनन्तरं करिष्यमाणः केशवपनीयः क्रतुरर्वाचीनस्तोमो भवति एकविंशमारभ्य त्रिवृति समाप्यमानत्वादर्वाचीनस्तोमस्त्वं एतदीयानुष्ठानं स्वर्गात् प्रत्यवरोहणमिव वर्त्तत इति भूलोकस्याऽनुद्धानाय अत्यन्तं परित्याग उद्धानं तद्राहित्यार्थं भवति । यथा लोके वृक्षमारुह्योपरितनवर्त्तिन्याः शाखायाः काञ्चिदधोवर्त्तिनीं शाखामालम्भमाधारं कृत्वा, अथ वा णमुलन्तोऽयं शब्दः । आलम्भं आलम्ब्य भूमावुपावरोहेत् । एवमेतेन केशवपनीयेन प्रतिकूलस्तोमयुक्तेन भूलोकमुपारूढो भवति । अतोऽयं केशवपनीयः प्रतिष्ठार्थं सम्पद्यते ॥ १० ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे अष्टादशाध्यायस्य दशमः खण्डः ॥

## एकादशः खण्डः ॥

अथ पूर्वोक्तक्रतुगतसामविशेषस्तुतिर्व्युष्टिद्विरात्रविधिश्चोच्यते । तत्राऽऽदौ (३) आयन्तीयं साम स्तौति—

**इन्द्रो वृत्रमहन् स विष्वङ्वीर्य्येण व्यभ्रंशत स**

---

१. क्रतावभिषेकयुक्तो भवतीति ख. पु. २. परिहर्तव्य इति ख. पु.

३. आयन्तीयनामकमिति ख. पु.

एतच्छ्रायन्तीयमपश्यत्तेनाऽऽत्मानꣳसमश्रीणादिन्द्रियेण वा एष वीर्येण व्यृध्यते यो राजसूयेनाऽभिषिच्यते वृत्रꣳ हि हन्ति यच्छ्रायन्तीयं ब्रह्मसाम भवति पुनरेवाऽऽत्मानꣳ सꣳश्रीणाति ॥ १ ॥

इन्द्रः (१) त्वाष्ट्रं वृत्रं हत्वा भ्रष्टवीर्य्यमात्मानं श्रायन्तीयेन साम्ना समश्रीणात् समकरोत् सर्वतो भ्रष्टं वीर्य्यं समाहितवान्। तद्वदन्योऽपि राजसूययाजी पुमानिन्द्रियगतसामर्थ्येन वियुज्यते, हि यस्मात् कारणात् वृत्रस्वरूपभूतं पापं हन्ति, तस्माद्वीर्य्यवियोगस्सम्भावितः। यदि ब्रह्माणमुद्दिश्य श्रायन्तीयनामकं साम भवेत् तदानीं पुनरेवाऽऽत्मानं स राजसूययाजी सश्रीणाति समादधाति इन्द्रियं वीर्य्यसमृद्धिं लभत इत्यर्थः ॥ १ ॥

यज्ञायज्ञीयं साम स्तौति—

यज्ञायज्ञीयमनुष्टुभि भवति वाचा वा एष व्यृध्यते यो राजसूयेनाऽभिषिच्यते वृत्रꣳहि हन्ति वागनुष्टुब्वाचो रसो यज्ञायज्ञीयं वाच्येवाऽस्य रसं दधाति॥२॥

अनुष्टुभि 'पुरोजिती व' इत्यस्यामृचि यज्ञायज्ञीयाख्यं साम गातव्यम्। कुत इति चेत्तदुच्यते—राजसूयेनाऽभिषिक्तः पुमान्मन्त्ररूपया वाचा वियुज्यते, वृत्रवधस्य सद्भावात्तस्य पापस्याऽयं परिहारः। अनुष्टुभो वाग्विशेषत्वाद्वाग्रूपत्वम्। तस्या वाचो यज्ञायज्ञीयाख्यं साम रसः सारं, तेनाऽधिकफलजननात्। तस्मादेतत्सामगानेनाऽस्य यजमानस्य वाचि सारं स्थापयत्येव ॥ २ ॥

(२) वारवन्तीयं साम प्रशंसति—

वारवन्तीयमग्निष्टोम साम भवतीन्द्रियेण वा एष वीर्येण व्यृध्यते यो राजसूयेनाऽभिषिच्यते वृत्रꣳहि हन्ति यद्वारवन्तीयमाग्निष्टोम साम भवतीन्द्रियस्य वीर्यस्य परिगृहीत्यै ॥ ३ ॥

१. त्वष्टृसंज्ञस्योत्तमब्राह्मणस्य पुत्रं वृत्रमिति ख. पु.
२. वारवन्तीयाख्यमिति ख. पु.

(१)'अश्वं न त्वा वारवन्तमि'त्यस्यामृच्युत्पन्नं साम वारवन्तीयम्। तत्सामगानेन वियुक्तस्येन्द्रियसामर्थ्यस्य परिग्रहो भवति ॥ ३ ॥

सामस्तुतिमुपसंहरति—

**अश्रयन्वाव आयन्तीयेनाऽवारयन्त वारवन्तीयेनेन्द्रियस्य वा एषा वीर्य्यस्य परिगृहीतिः ॥ ४ ॥**

आयन्तीयेन साम्ना नष्टं वीर्य्यं पुनरश्रयन् प्राप्नुवन्। वीर्य्यवियोगं वारवन्तीयसाम्ना निवारितवन्तः। तस्मादेषा सामद्वयस्याऽनुष्ठितिरेवेन्द्रियसामर्थ्यस्य परिगृहीतिर्भवति। एतदेवाऽभिप्रेत्य शाखान्तरे शब्दद्वयनिर्वचनं कृतम्—'यदश्रयन् तच्छ्रायन्तीयस्य आयन्तीयत्वम्, यदवारयन् तद्वारवन्तीयस्य वारवन्तीयत्वमि'ति ॥ ४ ॥

अथ व्युष्टिद्विरात्रं विधत्ते—

**अप्रतिष्ठितो वा एष यो राजसूयेनाऽभिषिच्यते यदा वा एतेन द्विरात्रेण यजतेऽथैव प्रतिष्ठा ॥ ५ ॥**

अभिषेकेण केवलं पाप्मानं हन्ति, न पुनः प्रतिष्ठां लभते। कदाऽस्य प्रतिष्ठेति चेत्? उच्यते—यदा वै यस्मिन्नेव काले एतेन पुरतो वक्ष्यमाणेन द्विरात्राख्येन क्रतुना यजते, अथैव तदानीमेव प्रतिष्ठा भवति। यथा पादद्वयेन पुरुषस्य प्रतिष्ठा तथा द्विरात्रेणेत्यर्थः ॥ ५ ॥

तामेतां प्रतिष्ठामुपपादयति—

**यावन्ति संवत्सरस्याऽहोरात्राणि तावत्य एताः स्तोत्रीयास्संवत्सर एव प्रतितिष्ठति ॥ ६ ॥**

एकस्य संवत्सरस्य षष्ठ्यधिकशतत्रयमहानि, रात्रयश्च तावत्यः। तदुभयं मिलित्वा विंशत्यधिकसप्तशतानि भवन्ति। द्विरात्रक्रतौ स्तोत्रीया ऋचोऽपि संख्यया तावत्य एव सम्पद्यन्ते। अतस्संवत्सरसाम्यात् द्विरात्रानुष्ठानेन संवत्सररूपे काले प्रतितिष्ठत्येव। स्तोत्रीयाणामृचां संख्या कथमिति चेत्—सेयं द्विरात्रकल्पे पर्य्यालोच्या। प्रथमेऽहन्यग्निष्टोमरूपे यानि द्वादश स्तोत्राणि, द्वितीयेऽहन्यतिरात्ररूपे यान्येकोनत्रिंशत्स्तोत्राणि तेषु सर्वेषु विहितान् स्तोमविशेषानालोच्य द्रष्ट-

---

१. अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः। सम्राजं तमध्वराणाम् ॥
सा. सं. पू. १. १. २. ७.

ष्या। शाखान्तरेऽप्ययमर्थः सर्वोऽप्येवमेवाऽऽम्नातः—(१)'अप्रतिष्ठितो वा एष इत्याहुः। यो राजसूयेन यजत इति। यदा वा एष एतेन द्विरात्रेण यजते। अथ प्रतिष्ठा। अथ संवत्सरमाप्नोति। यावन्ति संवत्सरस्याऽहोरात्राणि। तावतीरेताः स्तोत्रीयाः। अहोरात्रेष्वेव प्रतितिष्ठती'ति॥६॥

द्विरात्रावयवाहर्विशेषौ विधत्ते—

**अग्निष्टोमः पूर्वमहरतिरात्र उत्तरं नानैवाऽहोरात्रयोः प्रतितिष्ठति ॥ ७ ॥**

एकेनाऽह्ना निष्पाद्यः सोमयागोऽहश्शब्देनोपलक्ष्यते। तत्र प्रथममहरग्निष्टोमरूपम्, उत्तरन्त्वहरतिरात्ररूपम्। एतयोर्द्विविधयोरह्नोरनुष्ठितत्वादहनि रात्रौ च तत्तदुचितभागेन विविधप्रतिष्ठोपपद्यते ॥ ७ ॥

अस्य द्विरात्रस्य विकल्पेन त्रीन् कालान् विधत्ते—

**अमावास्यायां पूर्वमहरुद्दिष्ट उत्तरं नानैवाऽर्द्धमासयोः प्रतितिष्ठति पौर्णमास्यां पूर्वमहर्व्यष्टकायामुत्तरं नानैव मासोः प्रतितिष्ठति तदाहुर्य एव समानपक्षे पुण्याहनी स्यातां तयोरेव कार्य्यᳬ समृध्यै ॥ ८ ॥**

उद्दिष्टशब्देन शुक्लप्रतिपदुच्यते, उत्तरोत्तरोत्कर्षेण चन्द्रदर्शनस्य तत्रोपक्रमात्। अमावास्यायामग्निष्टोमः, अनन्तरभाविन्यां शुक्लप्रतिपद्यतिरात्रः सोऽयमेककालः। अत्र पौर्णमास्यन्तो मास इत्यमुं पक्षमाश्रित्याऽभिधीयमानत्वादमावास्याशुक्लप्रतिपदोर्भिन्नयोरर्द्धमासयोर्वर्त्तमानौ द्वौ दिवसौ तयोरनुष्ठायाऽर्द्धमासद्वये प्रतितिष्ठति। व्यष्टका कृष्णप्रतिपत्। तदाह सूत्रकारः—(२)'व्यष्टकायामुत्तरमिति तामिस्रप्रथमाऽस्तिस्रो व्यष्टका' इति। पौर्णमासीकृष्णप्रतिपदौ भिन्नमासगतौ दिवसौ तयोरनुष्ठाय मासद्वये प्रतितिष्ठति, सोऽयं द्वितीयः कालः। तत्र व्युष्टिद्विरात्रविषये(३)किञ्चिद्ब्रह्मवादिन आहुः-एकस्मिन्नेव शुक्लपक्षे ये द्वे निरन्तरे ज्योतिश्शास्त्रप्रसिद्धे पुण्यदिने स्यातां तयोरेव द्विरात्राख्यं कर्म कार्य्यम्, एकस्य कर्मण एकस्मिन्नेव मासे एकस्मिन्नेव पक्षेऽनुष्ठानमुचितम्। अतस्तत्समृध्यै सम्पद्यते, सोऽयं तृतीयः कालः॥

---

१. तै. ब्रा. १. ८. १०. १. २. लाट्या. श्रौ. ९. ३. ८.

३. केचिद्ब्रह्मवादिन इति ख. पु.

अथाऽस्मिन् कर्मणि शङ्कितदोषपरिहाराय सामद्वयं विधातुमादौ दोषशङ्कामुद्भावयति—

**अपशव्यो द्विरात्र इत्याहुर्द्वे ह्येते छन्दसी गायत्रञ्च त्रैष्टुभञ्च जगतीमन्तर्यन्तीति न तेन जगती कृता यत्तृतीयसवने क्रियते ॥ ९ ॥**

अहर्गणेषु प्रथममहर्गायत्रं, द्वितीयं त्रैष्टुभं, तृतीयञ्जागतमिति(१) स्थितिः। तथा च (२) तैत्तिरीयाः सप्तमकाण्डे 'गायत्रो वा ऐन्द्रवायव' इत्यस्मिन्ननुवाके समामनन्ति-(३)'गायत्रं प्रायणीयमहः, त्रैष्टुभं द्वितीयमहः, जागतं तृतीयमहरि'ति। एवञ्च सति द्विरात्रक्रतौ तृतीयस्याऽह्नोऽसम्भवाद्दिनद्वये गायत्रञ्च त्रैष्टुभञ्चेति एते द्वे एव छन्दसी सम्पन्ने। जगतीमन्तर्यन्ति अन्तरितां परित्यक्तां कुर्वन्ति। सा च जगती पशुसाधनभूता। अत एव शाखान्तरे सोमहरणविषय उपाख्याने जगत्याः पशव्यत्वमामनन्ति-(४)'सा पशुभिश्च दीक्षया चाऽऽगच्छत्। तस्माज्जगती छन्दसां पशव्यतमे'ति। ईदृश्याः जगत्या राहित्येन द्विरात्रोऽयमपशव्य इत्येवं दोषं ब्रह्मवादिन आहुः। ननु तृतीयसवने जगती विद्यते, आर्भवास्त्यस्य जागतत्वादिति चेत्—मैवम्; यद्यप्यह्न एकदेशे तृतीयसवने जगती क्रियते, तथाऽपि तेन तावन्मात्रेण कृत्स्नेऽप्यहनि जगती कृता न भवेत्, तृतीयस्याऽह्न एव कार्त्स्न्येन जागतत्वम्। तच्चाऽहर्द्विरात्रे नाऽस्ति। तस्माज्जगत्या अन्तरायस्तदवस्थ एव ॥ ८ ॥

अस्य दोषस्य परिहारं दर्शयति—

**यदा वा एषाऽहीनस्याऽहर्भजते साह्नस्य वा सवनमथैव जगती कृता त्रैशोकमुत्तरस्याऽह्नो ब्रह्मसाम भवति वैखानसमच्छावाकसाम यच्छुक्रिये सवने क्रियते तेनैव जगती कृता तेन पशव्यः ॥ १० ॥**

यदा वै यस्मिन्नेव काले एषा जगती अहीनसंज्ञकस्य द्विरात्रादेः सम्बन्धि कृत्स्नमहर्भजते, तदानीमहीने जगती कृतेति वक्तुं शक्यते नाऽन्यथा। एकेनाऽह्ना सह वर्त्तत इति साह्न एकाहः। तस्य वा प्रातस्सवनमाध्यन्दिनसवनयोरन्यतरत्सवनं जगती भजते, तदाऽपि ज-

---

१. श्रुतिरिति ख. पु. २. तैत्तिरीयके सप्तम इति ख. पु.
३. तै. सं. ७. ४. ८. १. ४. तै. सं. ६. १. ६. २.

गती कृतेति वक्तुं शक्यते। साह्नत्वन्तु द्विरात्रस्य नाऽस्ति। तस्मात् केनचित् प्रतिनिधिना जगतीकरणं सम्पादनीयम्। कोऽसौ प्रतिनिधिरिति चेदुच्यते—द्विरात्रगतस्योत्तरस्याऽह्नो ब्रह्मसाम त्रैशोकं भवति। (१)ब्राह्मणमुद्दिश्य गीयमानं ब्रह्मसाम। (२)'विश्वाः पृतना' इत्यस्यां जगत्यामुत्पन्नं साम त्रैशोकम्। तथैवाऽच्छावाकमुद्दिश्य गीयमानमच्छावकसाम वैखानसनामकं भवति। (३)'नकिष्टं कर्मणा नशद्'इत्यस्यां बृहत्यामुत्पन्नं साम वैखानसम्। सा च बृहती प्रथमपादव्यतिरिक्तेषु पादेषु चतुर्णामक्षराणामभ्यासाज्जगती सम्पद्यते। एते उभे सामनी यदि शुक्रिये सवने ऋजीषव्यतिरिक्तैः सोमांशुभिरभिनिष्पन्ने शुक्रशब्दवाच्यसोमरसोपेते माध्यन्दिने सवने क्रियेते, तेनैव सामद्वयकरणेन द्विरात्रे जगती कृता स्यात्। तेन जगतीकरणेन द्विरात्रः पशव्यो भवति। सोऽयं दोषपरिहारः ॥ १० ॥

अथाऽस्य द्विरात्रस्य संज्ञानुगुणं फलं दर्शयति—

**व्युष्टिर्वा एष द्विरात्रो व्येवाऽस्मै वासयति ॥ ११ ॥**

अस्य द्विरात्रस्य व्युष्टिरित्येव संज्ञा। ततोऽस्मै यजमानायाऽयं द्विरात्रः स्वकीयसंज्ञानुसारेण विवासयति तमसः पाप्मनोऽपनयनेन प्रकाशं करोति। व्युष्टिद्विरात्रादूर्ध्वं क्षत्रस्य धृतिरग्निष्टोमः कार्य्यः। तत्र सूत्रम्—(४) 'तस्मिन्नेव पूर्वपक्षे क्षत्रस्य धृतिना यजेते'ति ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ११ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे अष्टादशाध्यायस्यैकादशः खण्डः ॥

अष्टादशाध्यायस्समाप्तिमगमत् ॥

---

१. ब्राह्मणाच्छंसिनमिति ख. पु.

२. विश्वाः पृतना अभिभूतरं नरस्सजूस्ततक्षुरिन्द्रं जजनुश्च राजसे।
क्रत्वे वरे स्थेमन्यामुरीमुतोग्रमोजिष्ठं तरसं तरस्विनम् ॥ सा. सं. पू. ४. २. ४. १.

३. ( सा. सं पू. ३. २. १. १. ) इयमृक् २४ पृष्ठे द्रष्टव्या।

४. लाट्या. श्रौ. ९. ३. ११.

# अथैकोनविंशोऽध्यायः ॥

## प्रथमः खण्डः ॥

यस्य निश्श्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

उक्ता राजसूयसम्बन्धिनः सर्वे यज्ञाः पवित्राख्याग्निष्टोमाभिषेचनीयदशपेयकेशवपनीयव्युष्टिद्विरात्रक्षत्रस्यधृत्यादयः ।

एकोनविंशे द्वन्द्वानां (१) क्रतूनां रूपदर्शनम् ।
द्वन्द्वाश्च केचिद्द्वानां न द्वन्द्वाः सकला अपि ॥

अत्र निदानम्—'अथैते द्वन्द्वा इत्याचक्षते । न ते सर्वे द्वन्द्वाः द्वन्द्वमिश्रास्तु भवन्ति । यौ यावेषां (२)समानकर्त्तृत्वमुपक्रतौ तौ द्वन्द्वौ भवत' इति । आदौ तावद्राडित्येतन्नामकं क्रतुमाह—

**अथैष राट् ॥ १ ॥**

उच्यत इति शेषः । राज्यहेतुत्वाद्राडित्येतत्तस्य नाम भवति ॥ १ ॥

तस्य फलमाह—

**यो राज्य आशꣳसमानो राज्यं न प्राप्नुयात् स एतेन यजेत राजैवैनꣳराजानं करोति तं तु वैराजेति वदेयुर्यꣳ राजा राजानꣳ कुर्य्याद्राजैवैनꣳ राजानꣳ करोति ॥ २ ॥**

यः पुमान् राज्ये विषयभूते सत्याशंसमानोऽभिलाषं कुर्वन् केनचित् प्रतिबन्धेन राज्यं न प्राप्नुयात् स पुमान् राज्यप्राप्त्यर्थमेतेन राट्शब्दाभिधेन क्रतुना यजेत । तदानीं राजैव क्रत्वन्तराणां राजभूत एवायं क्रतुरेनं (३) राजानं करोति । यद्वा राजैव राडित्येतन्नामकेन क्रतुनैवैनमृत्विक्संघः राजानं करोति । यं क्रतुना राजानं कुर्य्यात् तमेवैनमविवादेन सर्वे जना राजेति वदेयुः । इतरेषु राज्यं कुर्वत्स्वपि राजत्वव्यवहारं न कुर्वन्ति तेषामेतदीयभृत्यत्वात् । युक्तञ्चैतत् क्रतुनैव राजत्वस्य प्राप्तत्वात् ॥ २ ॥

---

१. क्रतूनामुपदर्शिता इति मुद्रितपुस्तकपाठः ।

२. समानमर्थमिति ख. पु.

३. यजमानमिति ख. पु.

इतरक्रतुभ्योऽस्मिन् राजि क्रतौ को विशेष इत्याशङ्क्याऽऽह—

**छन्दोऽन्ये यज्ञास्सम्पद्यन्ते स्तोममेष वीर्यं वै स्तोमो वीर्य एवाऽध्यभिषिच्यते ॥ ३ ॥**

अन्ये यज्ञाः सहस्राद्यः छन्दोमात्रं बृहत्यादिकं प्राप्नुवन्ति । एष तु राट् स्तोमं छन्दसां सङ्घं प्राप्नोति । सङ्घस्य चैकैकस्मादधिकं वीर्यं प्रसिद्धम् ॥ ३ ॥

अस्य राजक्रतोः स्तोमप्राप्तिं दर्शयति—

**अष्टावेकविंशाः सꣳस्तुतो भवत्यष्टौ वै वीरा राष्ट्रꣳसमुद्यच्छन्ति राजभ्राता च राजपुत्रश्च पुरोहितश्च महिषी च सूतश्च ग्रामणी च क्षत्ता च सङ्ग्रहीता चैते वै वीरा राष्ट्रꣳसमुद्यच्छन्त्येतेष्वेवाऽध्यभिषिच्यते ॥**

एकविंशतिसंख्याकाभिः स्तोत्रीयाभिर्निष्पन्नाः स्तोमा एकविंशाः । ते चाऽष्टसंख्याका अस्मिन्राजि विद्यन्ते । तैरष्टभिरेव राट् सम्यक् स्तुतो भवति । तथा हि त्रयः पवमानाः सप्तदशस्तोमोपेताः।तत्रैकपञ्चाशत् स्तोत्रीया भवन्ति । आज्यस्तोत्राणि चत्वारि त्रिवृत् स्तोमयुक्तानि । त्रिवृत्स्तोमस्य चैकस्य नवस्तोत्रीयाः।तस्मादाज्येषु षट्त्रिंशत्संख्याकाः स्तोत्रीया भवन्ति । चत्वारि पृष्ठस्तोत्राणि पञ्चदशस्तोमयुक्तानि, तस्य स्तोमस्य चैकस्य पञ्चदशस्तोत्रीयाः । (१) तस्मात् पृष्ठेषु षष्टिसंख्याकाः स्तोत्रीया भवन्ति । तास्सर्वा मिलित्वा सप्तचत्वारिंशदधिकं शतं स्तोत्रीयास्सम्पद्यन्ते । ताश्चैकविंशतिसंख्यया विच्छेदिताः सप्तसंख्याका एकविंशस्तोमाः सम्पद्यन्ते । चरमस्तोत्रे स्वत एवैकविंशः स्तोमो विहितः । एवमस्मिन्राजि सर्वेऽप्यष्टसंख्याका एकविंशस्तोमा भवन्ति । यथा लोके वीराः पुरुषाः अष्टसंख्याका राष्ट्रं सम्यक् निर्वहन्ति, एवमेतेऽष्टसंख्याका एकविंशस्तोमा राडित्येतन्नामकं क्रतुं सम्यक् निर्वहन्ति । राजभ्रात्रादयस्तेऽष्टौ वीरपुरुषाः अष्टसंख्याकाः। तत्र भ्रातृपुत्रपुरोहितमाहिष्याख्याश्चत्वारः प्रसिद्धाः । सूतो(२)रथपालः, ग्रामणी ग्रामेषु योगक्षेमविचारकः,क्षत्ता याष्टीको द्वारपालकः, संग्रहीता भाण्डागारस्य पालकः । एतेषां राष्ट्रनिर्वाहकत्वं प्रसिद्धम् । अष्टसंख्याकैरेकविंशस्तोमैर्युक्तं राजक्रतुमनुतिष्ठन् तेष्वष्टसु वीरपुरुषेष्वभिषिक्तो भवति ॥ ४ ॥

---

१. तत इति ख. पु. २. रथवाहक इति ख. पु.

एकविंशस्तोमप्रयुक्तं फलमाह—

**क्षत्रं वा एकविँशः प्रतिष्ठा क्षत्रस्यैवाऽस्य प्रकाशो भवति प्रतितिष्ठति य एवं वेद ॥ ५ ॥**

योऽयमेकविंशस्तोमः सोऽयं प्रतिष्ठा, प्रकृतस्य क्रतोस्समाप्तिस्थानम् । अतोऽयमन्येषु स्तोमेषु क्षत्रं वै क्षत्रियजातिवत् स्तोमराज एव । तस्माद्यथा लोके क्षत्रस्य विप्रवैश्यजातिषु प्रकाशः शौर्यप्रसिद्धिरधिका एवमेवाऽस्यैकविंशस्तोमस्याऽन्येषु त्रिवृदादिस्तोमेषु प्रकाशः प्रतिष्ठात्वप्रसिद्धिरस्ति । यः पुमानेवं वेद सोऽयं धनधान्यादिभिः प्रतिष्ठां लभते ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकोनविंशाध्यायस्य प्रथमः खण्डः ॥

---

## द्वितीयः खण्डः ॥

विराट्संज्ञकं क्रत्वन्तरं विधत्ते—

**अथैष विराडन्नाद्यकामो यजेत ॥ १ ॥**

राट्संज्ञस्य क्रतोः कथनादनन्तरमेष वक्ष्यमाणविशेषो विराट्संज्ञकः क्रतुरुच्यते दशाक्षरोपेतेन विराट्छन्दसा सह संख्यासाम्यादेष क्रतुर्विराट्संज्ञकः । तच्च साम्यमुत्तरत्र स्पष्टीभविष्यति । तस्मिन् अन्नाद्यकामोऽधिकारी ॥ १ ॥

ननु सोमयागेषु प्रकृतिभूतस्य ज्योतिष्टोमस्याऽपि संख्यासाम्याद्विराट्छन्दोरूपत्वमस्ति । तथा च तैत्तिरीया आमनन्ति-(१)'विराजमभिसम्पद्यते । तस्मात्तज्ज्योतिरुच्यते' इति । एवमन्येष्वपि यज्ञेषु विराट्सम्पत्तिस्तत्र तत्र श्रूयते । न च तेषां यज्ञानां विराडिति संज्ञाऽस्ति । अस्य तु यज्ञस्य तेभ्योऽन्यः को विशेषो विद्यते ? येन विराडिति संज्ञा स्यादित्याशङ्क्याऽऽह—

**परोक्षमन्ये यज्ञा विराजँ सम्पद्यन्ते प्रत्यक्षमेष विराजँ सम्पन्नः ॥ २ ॥**

ज्योतिष्टोमे द्वादश स्तोत्राणि । तेष्वाद्यस्य बहिष्पवमानस्तोत्रस्य

---

१. तै. सं. ७. १. ९. १.

त्रिवृदाख्यस्तोमो भवति। तस्मिंश्च स्तोमे नव स्तोत्रीयास्सन्ति। चत्वार्याज्यस्तोत्राणि, माध्यन्दिनपवमानस्तोत्रमेकम्, तेषु पञ्चसु प्रत्येकं पञ्चदशस्तोमार्थमावर्त्यमानेषु पञ्चसप्ततिसंख्याकास्स्तोत्रीया भवन्ति। चत्वारि पृष्ठस्तोत्राणि, आर्भवपवमानस्तोत्रमेकम्। तेषु पञ्चसु प्रत्येकं सप्तदशस्तोमार्थमावर्त्यमानेषु पञ्चाशीतिसंख्याः स्तोत्रीया भवन्ति। एकस्मिन् यज्ञायज्ञीयस्तोत्रे एकविंशस्तोमार्थमावर्त्यमाने सत्येकविंशतिसंख्याकाः स्तोत्रीया भवन्ति। ताः सर्वा मिलित्वा नवत्यधिकं शतं सम्पद्यते। तासु दशभिर्दशभिरेकैकसङ्घे सम्पादिते सति दशसंख्यया विराट्छन्दस्सारूप्यं भवेत्। तत्र साम्यं बुद्धिविशेषेण सम्पादनीयत्वात् परोक्षम्। अस्मिंस्तु क्रतौ प्रतिस्तोत्रमाम्नातानामेव दशानां स्तोत्रीयाणां व्यवस्थितत्वाद्विराट्सम्पत्तिः प्रत्यक्षा। सोऽयमन्येभ्यो यज्ञेभ्योऽस्य विशेषः ॥ २ ॥

एतद्वेदनं प्रशंसति—

**प्रत्यक्षमेतेनाऽन्नाद्यमवरुन्धेऽन्नादो भवति य एवं वेद॥**

एतेन स्वतस्सिद्धायाः विराट्सम्पत्तेर्वेदनेन प्रत्यक्षं यथा भवति तथाऽस्मिन्नेव जन्मनि फलं भवति ॥ ३ ॥

प्रत्यक्षविराट्सम्पत्त्यर्थं प्रतिस्तोत्रं दशसंख्यां विधत्ते—

**सर्वो दशदशी भवति दशाक्षरा विराड् वैराजमन्नमन्नाद्यस्याऽवरुध्यै ॥ ४ ॥**

तत्तदीयेषु स्तोत्रेषु यो यः स्तोमो विद्यते स सर्वो दशदशी भवति, प्रतिस्तोत्रं विवक्षितत्वाद्दशदशेति सा प्रयुज्यते। तादृशी दशसंख्या यस्मिन् सर्वस्मिन् स्तोमे विद्यते स सर्वो दशदशीत्युच्यते। स प्रकारः सूत्रे द्रष्टव्यः। विराडाख्ये छन्दसि दशाक्षरत्वं प्रसिद्धम्। तेन छन्दसा साध्यत्वादन्नं वैराजम्। तस्मादियं संख्या भक्षितुं योग्यस्याऽन्नस्य प्राप्त्यै भवति ॥ ४ ॥

तामेतां दशसंख्यां समभागेन विभज्य प्रशंसति—

**ता उ पञ्च पञ्च भवन्ति पाङ्क्तो यज्ञः पाङ्क्ताः पशवो यज्ञ एव पशुषु प्रतितिष्ठति ॥ ५ ॥**

दशत्वसंख्यायां साम्येन विभक्तायां पञ्चकद्वयं भवतीत्यभिप्रेत्य ता उ ता एव स्तोत्रीयाः पञ्च पञ्चेत्युच्यते। पङ्क्तिछन्दसः पञ्चपादोपेत-

त्वाद्यश्चस्य यजमानपञ्चमैश्चतुर्भिर्ऋत्विग्भिरुपेतत्वात् पशूनाञ्च पुच्छस-हितैश्चतुर्भिः पादैरुपेतत्वात्संख्यया पङ्क्तिसम्बन्धे सति तादृशे यज्ञे तादृ-शेषु पशुषु चायं यजमानः प्रतितिष्ठति । अस्मिन् क्रतावन्नाद्यकामो-ऽधिकारी वर्णितः ॥ ५ ॥

इदानीं प्रतिष्ठाकाममधिकारिणमाह—

**एतेनैव प्रतिष्ठाकामो यजेत दशभिर्वा इदं पुरुषः प्रतिष्ठितोऽस्यामेव प्रतितिष्ठति ॥ ६ ॥**

इदमस्मत्प्रत्यक्षं भवति, यथा दशभिरेवाऽङ्गुलीभिः प्रतिष्ठितः पुरुषो-ऽस्मिन्नेव लोके धनधान्यादिभिः प्रतिष्ठितो भवति ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे एकोनविंशाध्यायस्य द्वितीयः खण्डः ॥

## तृतीयः खण्डः ॥

औपशदाख्यं क्रतुं विधत्ते—

**अथैष औपशदः ॥ १ ॥**

शदिधातुर्विनाशार्थे वर्त्तते । उपसम्प्राप्तस्य प्रजोत्पत्तिप्रतिबन्धस्य शदः विनाश उपशदः । स यस्मिन् क्रतावस्ति सोऽयमौपशदः ॥ १ ॥

तस्य प्रजोत्पत्तिप्रतिबन्धविनाशात्तेन प्रजोत्पादनलक्षणं फलं दर्शयति—

**गन्धर्वाप्सरसाᳬं स्तोमः प्रजाकामो यजेत गन्ध-र्वाप्सरसो वै मनुष्यस्य प्रजाया वाऽप्रजस्ताया वेशते तेषामत्र सोमपीथस्तान् स्वेन भागधेयेन प्रीणाति तेऽस्मै तृप्ताः प्रीताः प्रजां प्रयच्छन्ति ॥ २ ॥**

ये गन्धर्वा देवानां गायका याश्चाऽप्सरसो देवानां नर्त्तक्यस्तेषां तासाञ्च स्तोमः सङ्घोऽयमौपशदाख्यः क्रतुः । तेन सङ्घेन दृष्टत्वात्तद्रूप-त्वोपचारः । एतेन क्रतुना प्रजाकामो यजेत । अन्तरिक्षायतना गन्धर्वा-प्सरस एव मनुष्यसम्बन्धिन्या उत्पाद्यायाः पुत्रपौत्रादिरूपायाः प्रजाया ईशते स्वामित्वेन वर्त्तन्ते । या च मनुष्याणामप्रजस्ता प्रजोत्पादनसा-

मर्थ्यराहित्यं तस्या अपोह्यते। वा शब्दौ (१)समुच्चयार्थौ। तेषां गन्धर्वाप्सरसरूपाणां देवानामत्राऽस्मिन्नौपशदाख्ये क्रतौ सोमपीथः सोमपानं भवति, ते हि (२)तदृष्टे क्रतौ सोमं पिबन्ति। ततो यजमान-स्तान् देवान् स्वोचितेन भागेन तोषयति। ते च देवाः सोमपाने तृप्ताः प्रीतिमापन्नाः प्रतिबन्धान्निवार्य अस्मै यजमानाय पुत्रपौत्रादिरूपां प्रजां प्रयच्छन्ति ॥ २ ॥

तस्मिन् क्रतौ कञ्चिद्विशेषं विधत्ते—

**एकैका स्तोत्रीयोपजायते प्रजामेवाऽस्मा उपजन-यति ॥ ३ ॥**

विकृतिरूपेऽस्मिन् क्रतौ यानि द्वादश स्तोत्राणि अतिदेशेन प्रकृतितः प्राप्तानि तेषु सर्वेषु स्तोत्रेषु एकैका नूतनस्तोत्रीया कर्त्तव्या। सा चो-पजाता स्तोत्रीया, प्रजामेव यजमानार्थमुत्पादयति ॥ ३ ॥

विशेषान्तरं विधत्ते—

**ककुभं प्राचीमुदूहति पुरुषो वै ककुब्गर्भ एव स मध्यतो धीयते ॥ ४ ॥**

माध्यन्दिने पवमाने स्वतः प्राप्ताया गायत्र्याः प्राचीमुपरि वर्त्तिनीं (३)'पवस्व मधुमत्तम' इत्येतां ककुभमुदूहति प्रयुञ्जीत। ककुभः पुरुषो-त्पादकत्वेन पुरुषरूपत्वात्। स एव पुरुषात्मकः ककुब्रूपो गर्भो मध्यतो धीयते माध्यन्दिनसवनाख्ये क्रतोरुदरस्थानीये मध्यभागे स्थाप्यते ॥४॥

अन्यं विशेषं विधत्ते—

**अथ यदेषा द्विपदा ककुभो लोके क्रियते गर्भ एव तद्धि तं प्रजनयति ॥ ५ ॥**

तृतीयसवने आर्भवपवमाने स्वतः प्राप्तायाः पादत्रयोपेतायाः ककु-भो लोके स्थाने द्विपदा क्रियते (४)'परि प्रधन्व' इत्येषा द्विपदा ककुप् कर्त्तव्या। तद्धि ककुप्करणं गर्भ एव परिपक्वरूपो भवति। तञ्च गर्भम-नेन (५)द्विपदाकरणेन प्रजनयत्युत्पादयति ॥ ५ ॥

---

१. समुच्चयार्थाविति ख. पु.
२. स्वदृष्ट इति ख. पु.
३. ऋगियं २०० पृष्ठे द्रष्टव्या।
४. इयमपि २०२ द्रष्टव्या।
५. ककुप्करणेनेति ख. पु.

तस्यां द्विपदायां ककुभि च्यावनं नाम विधत्ते—

**च्यावनं भवति प्रजातिर्वै च्यावनम् ॥ ६ ॥**

पक्वो हि गर्भः उदरात् च्यवते बहिः पतति । अतश्च्यावनाख्यं साम प्रसवहेतुत्वात् प्रजातिः प्रजोत्पादनरूपं भवति ॥ ६ ॥

एतद्वेदनं प्रशंसति—

**प्रजायते बहुर्भवति य एवं वेद ॥ ७ ॥**

पुरा स्वयमेकोऽपि प्रकर्षेण पुत्रादिस्वरूपेण जातस्सन् स्वयं बहुविधो भवति ॥ ७ ॥

अन्यत्सामद्वयं विधत्ते—

**वसिष्ठस्य जनित्रे भवतो वसिष्ठो वा एते पुत्रहतः सामनी अपश्यत् स प्रजया पशुभिः प्राजायत यदेते सामनी भवतः प्रजात्यै ॥ ८ ॥**

जनित्रनामके द्वे सामनी वसिष्ठसम्बन्धिनी विधेते । ते उभे अत्र भवतः प्रयोक्तव्ये इत्यर्थः । नौधसस्यर्क्षु जनित्रमेकं ब्रह्मसाम भवति, 'पुरोजिती वो अन्धस' इत्यस्मिन्नार्भवे द्वितीयं जनित्रम्, इत्येते द्वे जनित्रे वसिष्ठस्य सम्बन्धिनी । पुरा कदाचित् पुत्रहतो मृतपुत्रो वसिष्ठो वै प्रजार्थी सन् तत्साधनभूते एते द्वे सामनी अपश्यत् । ततः स वसिष्ठः ताभ्यां सामभ्यां प्रजापशुयुक्तः प्रकृष्टोऽभवत् । अन्यस्याऽप्येते सामनी प्रजोत्पादनाय सम्पद्येते ॥ ८ ॥

अथ स्तोत्रीयाणां संख्यां प्रशंसति—

**द्वे सꣳस्तुतानां विराजमतिरिच्येते द्वे स्त्रिया ऊने प्रजननाय प्रजननमेव तत्क्रियते प्रजात्यै ॥ ९ ॥**

प्रकृतौ द्वादशसु स्तोत्रेषु नवत्यधिकं स्तोत्रीयाणां शतमिति पूर्वमेव परिगणितम् । अत्र तु ततोऽप्यधिका द्वादश स्तोत्रीयाः । एवं सति प्रकृतिगताः स्तोत्रीयाः प्रत्येकं दशसंख्यया विभक्ताः संख्यासाम्यादेकोनविंशतिसंख्याका विराजस्सम्पद्यन्ते । अधिकास्वपि द्वादशसु स्तोत्रीयासु दशसंख्याया विराडेका सम्पन्ना । ततोऽत्र संस्तुतानां स्तोत्रीयाणां मध्ये द्वे स्तोत्रीये विराड्रूपत्वमतिक्रम्याऽधिके सम्पन्ने । ते च पुरुषावयवभूताण्डलिङ्गस्थानीये । लोकेऽपि स्त्रियास्ते द्वे अण्डलिङ्गे ऊने ।

तस्योनत्वं प्रजननाय प्रजोत्पादनाय, अन्यथा ताभ्यां पिहिते छिद्रे कथं प्रजोत्पद्यते। तस्मात्त्वेनाऽतिरिक्तकरणेन प्रजोत्पादनमेव कृतं भवति। ततोऽयमतिरेकः प्रजात्यै भवति ॥ ९ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे एकोनविंशाध्यायस्य तृतीयः खण्डः ॥

## चतुर्थः खण्डः ॥

पुनस्स्तोमाख्यं क्रतुं विधत्ते—

**अथैष पुनस्स्तोमः ॥ १ ॥**

स्तोमोपलक्षितात्सोमयागात् केनाऽपि निमित्तेन प्रच्युतस्य पुनर-प्यधिकारं सम्पादयतीत्यसौ क्रतुः पुनस्स्तोमनामकः ॥ १ ॥

तत्राऽधिकारिणं दर्शयति—

**यो बहु प्रतिगृह्य गरगीरिव मन्येत स एतेन यजेत॥**

यागस्योपनयनस्य वा योग्यतारहितान्याजयित्वोपनीय वा प्रकारा-न्तरेण वा निषिद्धं द्रव्यं बहु प्रतिगृह्य नरकाद्भीतो विषभक्षीव (१)न-ष्टोऽस्मीति यश्चिन्तयति स एतेन पुनस्स्तोमेन यजेत। अत्र सवनत्रय-स्तोमप्रकारः कल्पे दर्शितः—'द्वादशं माध्यन्दिनं सवनं त्रिवृतोरभि-वहती'ति ॥ २ ॥

माध्यन्दिनसवनगते द्वादशस्तोमे विद्यमानासु स्तोत्रीयासु येयमे-कादशी स्तोत्रीया तस्याः फलं दर्शयति—

**यैकादशी यदेव पूर्ववयसे बहु प्रतिगृह्णाति यद्गरं गिरति यदनन्नमत्ति प्रातस्सवनाय तन्निहरति ॥ ३ ॥**

येयं स्तोममध्य एकादशी स्तोत्रीयाऽस्ति सा तत्सर्वं दोषजातं निहरति नितरां नाशयति। किमर्थम्? प्रातस्सवनानुष्ठाने मुख्याधि-कारसिध्यर्थम्। किं किं नाशयतीति चेत्? तदुच्यते—पूर्ववयसे पूर्व-स्मिन्वयसि स्वकीयस्याऽऽयुषः पूर्वभागे यदेव निषिद्धं द्रव्यं बहु प्रति-गृह्णाति, तथा क्षेत्रादिविषयविवादेषु कोपेन मर्त्तुं गरं विषं गिरति भक्ष-यति, अनन्नं निषिद्धमन्नमत्तीति यदस्ति तत्सर्वं नाशयति ॥ ३ ॥

---

१. निर्विण्णो नष्टोऽस्मीति ख, पु.

उत्तरस्याः द्वादश्याः स्तोत्रीयायाः फलमाह—

**अथ या द्वादशी यदेवोत्तरवयसे बहु प्रतिगृह्णाति यद्गरं गिरति यदन्नमत्ति तृतीयसवनाय तन्निर्हरति ॥४॥**

पूर्ववद्व्याख्येयम् ॥ ४ ॥

यास्तु दशसङ्ख्याकाः स्तोत्रीया अवशिष्टास्तासां फलमाह—

**वैराजो वै पुरुषः स मध्यतोऽशुद्धो मध्यत एवैनं पाप्मनो मुञ्चति ॥ ५ ॥**

पुरुषस्य हस्ताङ्गुलीषु पादाङ्गुलीषु च विराट्छन्दस्स्विव दशसंख्यासद्भावाद्वैराजत्वम् । स पुरुषो मध्यतः मध्यमे वयस्यशुद्धः पूर्वोत्तरयोर्वयसोरुक्तप्रकारेण प्रतिग्रहाद्यशुद्धिपरिहारेऽपि मध्यगताशुद्धेरपरिहृतत्वात् एनं शुद्धिरहितं पुरुषमयं दशसंख्यायुक्तः स्तोत्रीयासङ्घो मध्यमे वयसि पापान्मोचयति ॥ ५ ॥

अथ सामद्वयं विधत्ते—

**शुद्धाशुद्धीये भवतः ॥ ६ ॥**

नौधसस्यर्क्षु पदेत्यनेन निधनेनोपेतं यच्छुद्धाशुद्धीयनामकं साम तद्ब्रह्मसाम भवेत् । ऊर्क्षोष्विडेत्यनेन निधनेनोपेतं यदपरं शुद्धाशुद्धीयनामकं साम तत् स्वकीयास्वृक्षु भवेत् । तदेतदुभयं कल्पकारेणोक्तम्—'नौधसस्यर्क्षु शुद्धाशुद्धीयं ब्रह्मसाम पदनिधनमिति तथा शुद्धाशुद्धीयं स्वासु यदेडमि'ति ॥ ६ ॥

सामद्वयं प्रशंसितुमाख्यायिकामाह—

**इन्द्रो यतीन् सालावृकेयेभ्यः प्रायच्छत्तमश्लीला वागभ्यवदत्सोऽशुद्धोऽमन्यत स एते शुद्धाशुद्धीये अपश्यत्ताभ्यामशुध्यत् ॥ ७ ॥**

केचन यतयः सर्वकर्मसंन्यासं कृत्वा कदाचिदपि स्वमुखे वेदान्तशब्दोच्चारणरहिताः काषायदण्डमात्रधारिणो विवेकज्ञानरहिताः यत्र तत्राऽन्नं भक्षयन्तो नरकयोग्या वर्त्तन्ते । तथा चाऽन्यत्र श्रूयते—

(१)'ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते ।
काष्ठदण्डो धृतो येन संन्यासी ज्ञानवर्जितः ।
स याति नरकान् घोरान् महारौरवसंज्ञकानि'ति ॥

---

१. परमहंसोपनिषत् खं. ३.

सालावृका अरण्यश्वानः । तेषामपत्यभूता बालकाः श्वानः सालावृकेयाः । तेभ्यस्तान्यतीनिन्द्रो मारणार्थं प्रायच्छत् । ते च यतयो वेदान्तशब्दरहिता इत्येवमर्थमिन्द्रवाक्यरूपेण कौषीतिकिन आमनन्ति—(१)'अरुन्मुखान् यतीन् सालावृकेयेभ्यः प्रायच्छमि'ति । तथा कृतवन्तं तमिन्द्रं अश्लीला निन्दारूपा काचिद्वागभ्यवदत्–इन्द्रो ब्रह्महत्यां कृतवानित्येवं निन्दा लोके सर्वत्र प्रसृता । ततः स इन्द्रः स्वयमशुद्धोऽस्मीत्यमन्यत । सोऽशुद्धिपरिहारोपायं वेदेष्वन्विष्यैते शुद्धाशुद्धीयनामके द्वे सामनी अपश्यत् । ताभ्यां सामभ्यां स्वयं शुद्धोऽभूत् ॥ ७ ॥

प्रकारान्तरेण सामद्वयं प्रशंसति—

**यदेव बहु प्रतिगृह्णाति यद्गरं गिरति यदनन्नमत्ति यदशुद्धो मन्यते तदेताभ्याꣳ शुध्यति ॥ ८ ॥**

प्रतिग्रहेण वा निषिद्धान्नभक्षणनिमित्तान्तरेण वा यदशुध्यापादकं पापमस्ति तत्सर्वमेताभ्यां शुध्यति विनश्यति ॥ ८ ॥

अन्यत् सामद्वयं विधत्ते—

**गौषूक्तश्चाऽऽश्वसूक्तञ्च भवतः ॥ ९ ॥**

'स्वादिष्ठये'त्यत्र गौषूक्तनामकं साम भवति । 'इन्द्रमच्छे'त्यत्राऽऽश्वसूक्तनामकं साम भवति ॥ ९ ॥

तदेतत्सामद्वयं प्रशंसितुमाख्यायिकामाह—

**गौषूक्तिश्चाऽऽश्वसूक्तिश्च बहु प्रतिगृह्य गरगिरावमन्येतां तावेते सामनी अपश्यतां ताभ्यां गरं निरघ्नाताम् ॥ १० ॥**

गोषूक्तस्याऽपत्यं गोषूक्तिः, अश्वसूक्तस्याऽपत्यमाश्वसूक्तिः । तावुभौ बहु प्रतिग्रहरूपं विषं भक्षितवन्तावावामिति तत्परिहारोपायं वेदेष्वन्विष्यैते उभे सामनी दृष्ट्वा ताभ्यां सामभ्यां प्रतिग्रहरूपं पापं निरघ्नातां निश्शेषेण हतवन्तौ ॥ १० ॥

प्रकारान्तरेण सामद्वयं प्रशंसति—

**यदेव बहु प्रतिगृह्णाति यद्गरं गिरति यदनन्नमत्ति तदेताभ्यां निर्हते ॥ ११ ॥**

---

१. कौ. उ. ३. १.

निर्हते नाशयतीत्यर्थः ॥ ११ ॥

पुनस्तोमाख्यक्रतोरुक्थसंस्थारूपं विधत्ते—

**पञ्चदश स्तोत्राणि भवन्त्योजो वीर्यं पञ्चदशः पाप्मन एवैनं मुक्त्वौजसा वीर्येण समर्द्धयति ॥ १२ ॥**

यद्यप्यस्मिन् पुनस्तोमे माध्यन्दिनसवनस्य द्वादशस्तोमोपेतत्वात्प्रातस्सवनतृतीयसवनयोश्च त्रिवृत्स्तोमोपेतत्वान्नाऽस्त्यत्र पञ्चदशस्तोमस्य प्रसङ्गः, तथाऽपि स्तोत्रगतसंख्यया तं स्तोमं सम्पाद्य वीर्यरूपेण प्रशंसा क्रियते । पञ्चदशस्तोमस्य प्रजापतिबाहुभ्यामुत्पन्नत्वात् (१) क्षत्रियवीर्यहेतुत्वम् । वीर्यस्यैव व्याख्यानमोज इति । तेन वीर्येण यजमानं पापान्मोचयित्वा सेयं स्तोत्रसंख्या धनधान्यादिसमृद्धं करोति ॥ १२ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकोनविंशाध्यायस्य चतुर्थः खण्डः ॥

---

## पञ्चमः खण्डः ॥

चतुष्टोमाख्यं क्रतुं विधत्ते—

**अथैष चतुष्टोमः ॥ १ ॥**

पूर्वस्मात्पूर्वस्मादुत्तर उत्तरस्स्तोमश्चतसृभिश्चतसृभिः स्तोत्रीयाभिरस्मिन् क्रतावधिको भवति । अतोऽयं क्रतुश्चतुष्टोमः ॥ १ ॥

अत्राऽधिकारिणमाह—

**पशुकामो यजेत ॥ २ ॥**

स्पष्टोऽर्थः ॥ २ ॥

प्रथमस्तोत्रगतां(२) स्तोमसंख्यां प्रशंसति—

**यच्चतसृभिर्बहिष्पवमानं भवति चतुष्पादाः पशवः पशूनेवाऽवरुन्धे ॥ ३ ॥**

---

१. क्षत्रियवद्वीर्यबहुत्वमिति ख, पु. २. चतुस्संख्यामिति ख. पु.

(१)"अयं पूषा रयिर्भग" इत्येतास्तिस्रोऽनुष्टुभः। तास्वक्षरसंख्यया चतस्रो गायत्रीस्संपाद्य ताभिर्निष्पन्ने बहिष्पवमाने स्तोत्रे चतुस्संख्यया पशुप्राप्तिरुच्यते ॥ ३ ॥

आज्यस्तोत्रगते स्तोमे पूर्वस्मादधिकत्वेन वर्द्धमानया चतुस्संख्यया सम्पन्नामष्टसंख्यां प्रशंसति--

**यदष्टाभिराज्यान्यष्टाशफाः पशवः शफशस्तत् पशूनाप्नोति ॥ ४ ॥**

अष्टाभिः स्तोत्रीयाभिराज्यानि निष्पाद्यन्त इति यदस्ति तेन पशूनाप्नोति। पशुषु शफानामष्टत्वात् शफशः शफद्वारा साम्यलम्भवात् ॥४॥

तत ऊर्द्ध्वं चतुस्संख्यया वर्द्धमानां स्तोमसंख्यां प्रशंसति—

**यत् द्वादशो माध्यन्दिनः पवमानो द्वादश मासाः संवत्सरः संवत्सरं पशवोऽनु प्रजायन्ते तानेवाऽवरुन्धे ॥५॥**

संवत्सरमनु प्रतिसंवत्सरं गवादिपशूनां वत्सोत्पादकत्वं प्रसिद्धम्॥

ततोऽपि चतुस्संख्ययाऽधिकं स्तोमान्तरं प्रशंसति—

**यत् षोडशानि पृष्ठानि षोडश कलाः पशवः कलाशस्तत्पशूनाप्नोति ॥ ६ ॥**

गोमहिष्यादीनां पशूनां शिरो, ग्रीवा, मध्यदेहः, पुच्छमिति चत्वार्यङ्गानि, चत्वारः पादाः अष्टौ शफाः इत्येवं षोडशसंख्याका अवयवाः कला इत्युच्यन्ते। कलाशः कलाद्वारा संख्यासामान्यात् षोडशस्तोमः पशुप्राप्तिहेतुर्भवति ॥ ६ ॥

ततोऽपि चतुस्संख्ययाऽधिकं स्तोमान्तरं प्रशंसति—

**यद्विंशं आर्भवः पाङ्क्तत्वमेषां तदाप्नोति ॥ ७ ॥**

---

१. अयं पूषा रयिर्भगः सोमः पुनानो अर्षति।
पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे ॥ १ ॥
समु प्रिया अनूषत गावो मदाय घृष्वयः।
सोमासः कृण्वते पथः पवमानास इन्दवः ॥ २ ॥
य ओजिष्ठस्तमा भर पवमान श्रवाय्यम्।
यः पञ्च चर्षणीरभि रयिं येन वनामहे ॥ ३ ॥

सा. सं. उ. २. १. १६.

आर्भवपवमाने विंशः स्तोम इति यदस्ति तस्तेनैवैषां पशूनां यत् पाङ्क्त्वमस्ति तदाप्नोति, विंशतिसंख्याकावयवेषु चतुर्षु भागेषु प्रत्येकं पञ्चसंख्योपेतत्वात् पाङ्क्त्वमस्ति, पशूनां पाङ्क्त्वं पुरैवोक्तम् । अतः तत्प्राप्तिर्युक्ता ॥ ७ ॥

ततोऽपि चतुस्संख्याधिकं स्तोमान्तरं प्रशंसति—

**यच्चतुर्विंशोऽग्निष्टोमश्चतुर्विंशत्यक्षरा गायत्री तेजो ब्रह्मवर्चसं गायत्री तेज एव ब्रह्मवर्चसमव-रुन्धे ॥ ८ ॥**

अग्निष्टोमे द्वादशस्तोत्रम् । स्पष्टमन्यत् ॥ ८ ॥

चतुर्विंशसंख्याद्वारा स्तोमस्य यद्गायत्रीत्वं तत्प्रकारान्तरेण प्रशं-सति—

**प्राणो गायत्री प्रजननं प्राणादेव गायत्र्याः प्रजायते ॥९॥**

रेचकपूरककुम्भकैः प्राणस्त्रिधा भिद्यते । गायत्री च त्रिभिः पादै-रुपेता । तस्मात्प्राणो गायत्री । (१)प्राणबलेन हि गर्भाधानकाले वीर्य-माधीयते । तस्मात्प्राणः प्रजननं तथाविधप्राणरूपाया गायत्र्याः प्रजो-त्पादकत्वं यजमानस्य भवति ॥ ९ ॥

तदेतदुक्तमग्निष्टोमसाम प्रकारान्तरेण प्रशंसति—

**एकꣳ साम बहूनि छन्दाꣳसि तस्मादेको बहून् पोषान् पुष्यति ॥ १० ॥**

अत्र वारवन्तीयाख्यमेकमग्निष्टोमसाम । तस्य वारवन्तीयस्य(२) आधारभूतान्यृग्गतानि छन्दांसि बहूनि भवन्ति । तद्यथा—यज्ञायज्ञीयस्य-र्चः साकमश्वस्यर्चो हारिवर्णस्यर्चस्तैरश्वस्यर्च इति । तस्मात्कारणा-द्वारवन्तीयसामस्थानीय एकः पुरुषो बहून् पोषान् पुत्रपौत्रादिरूपान् पोषणीयान् प्राणिनो बहून् पुष्यति ॥ १० ॥

पुनरपि प्रकारान्तरेण प्रशंसति—

**आत्मा वा अग्निष्टोमः पशवश्छन्दाꣳस्यात्मन्येव तत्पशून् प्रतिष्ठापयति नोक्थो नाऽग्निष्टोमो न हि ग्राम्याः पशवो नाऽऽरण्याः ॥ ११ ॥**

१. प्राणवत्त्वेनेति ख. पु.
२. आश्रयभूतानीति ख. पु.

योऽयमग्निष्टोमान्तो द्वादशस्तोत्रयुक्तः क्रतुभागः सोऽयं सर्वेषु सोमयागेष्वनुवृत्तत्वादात्मा सोमयागदेहः । यान्यतिरिक्तान्युक्थस्तोत्रगतानि छन्दांसि तानि पशवो गवादिपशुस्थानीयानि । तत्तेनोक्थच्छन्दोऽनुष्ठानेन पशून् प्रतिष्ठापयति । सोऽयमुक्तश्चतुष्टोमः क्रतुर्न तावदुक्थ्य इति वक्तुं शक्यते, अग्निष्टोमसाम्ना समाप्तत्वात् । नाऽप्यग्निष्टोम इति वक्तुं शक्यते, उक्थस्तोत्राणामप्यनुष्ठानात् । पशवोऽपि गोमहिष्यादयो न तावद्ग्राम्या इति वक्तुं शक्याः, अहन्यरण्ये सञ्चरमाणत्वात् । तथाऽऽरण्या इति वक्तुं न शक्यते, रात्रौ ग्रामे तन्निवासदर्शनात् । तस्मादीदृशानां पशूनामीदृशेन क्रतुना प्राप्तिर्युक्तेत्यर्थः ॥१॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकोनविंशाध्यायस्य पञ्चमः खण्डः ॥

---

## षष्ठः खण्डः ॥

द्वितीयं चतुष्टोममाह—

**अथ यस्य चत्वारि स्तोत्राणि चतसृभिश्चत्वार्यष्टाभिश्चत्वारि द्वादशभिश्चत्वारि षोडशभिस्स गां नाऽतिवदति ॥ १ ॥**

पूर्वोक्तश्चतुष्टोमोऽग्निष्टोमरूपत्वात् द्वादशस्तोत्रैरुपेतः । तत्रैकेन प्रकारेणोत्तरोत्तरं चतुस्संख्यावृद्धिर्युक्ता । अयं चतुष्टोमः षोडशरूपत्वात् षोडश स्तोत्रैरुपेतः । अत्राऽन्येन प्रकारेणोत्तरोत्तरं चतुस्संख्याधिक्यमुच्यते—बहिष्पवमानं त्रीण्याज्यानि चेत्येतानि चत्वारि स्तोत्राणि चतसृभिः स्तोत्रीयाभिर्निष्पाद्यन्ते । अच्छावाकाख्यं माध्यन्दिनपवमानो द्वे पृष्ठे चेत्येतानि चत्वारि स्तोत्राणि अष्टभिस्स्तोत्रीयाभिर्निष्पाद्यन्ते । उत्तरे द्वे पृष्ठे आर्भवपवमानाग्निष्टोमसाम चेत्येतानि चत्वारि स्तोत्राणि द्वादशभिः स्तोत्रीयाभिर्निष्पाद्यन्ते । एवं त्रीण्युक्थानि षोडशिसाम चेत्येतानि चत्वारि स्तोत्राणि षोडशभिः स्तोत्रीयाभिर्निष्पाद्यन्ते । एवं स्तोमेषु चतुस्संख्यावृद्धियुक्तत्वाच्चतुष्टोम इत्युच्यते । यस्य चतुष्टोमाख्यस्य क्रतोरीदृशी चतुस्संख्यावृद्धिः स गां नाऽतिवदति ज्योतिर्गौ

रायुरित्युक्थेषु क्रतुषु यो गोनामकः क्रतुस्तमतिक्रम्य अधिकं न भवति तत्समफल इत्यर्थः । यद्वा गां गोजातिं नाऽतिवदति नाऽतिवर्तते गोप्राप्तिरूपं फलं प्रयच्छतीत्यर्थः॥ तस्मादनेन पशुकामो यजेतेत्युक्तं भवति । एतदेव निदानेऽभिहितम्--'पशुकामयज्ञ एवोत्तर' इति ॥ १ ॥

स्तोत्रगतां षोडशसंख्यां प्रशंसति--

**षोडशकलाः पशवः कलाशस्तत्पशूनाप्नोति ॥ २ ॥**

पूर्ववद्व्याख्येयम् ॥ २ ॥

अग्निष्टोमसाम्न उपरितनानि स्तोत्राणि प्रशंसति--

**उक्थ्यः षोडशिमान् भवति पशवो वा उक्थानि वज्रः षोडशी वज्रेणैवाऽस्मै पशून् परिगृह्णात्यनपक्रामुका अस्मात्पशवो भवन्ति नोक्थो नाऽतिरात्रो न हि ग्राम्याः पशवो नाऽऽरण्याः ॥ ३ ॥**

त्रिभिरुक्थस्तोत्रैरुपेतत्वादयं क्रतुः उक्थ्यः । षोडशिस्तोत्रेणोपेतत्वात् षोडशिमान् । उक्थानां पशुप्राप्तिहेतुत्वात्पशुरूपत्वम् । षोडशिनः पशुविरोधिचौरव्याघ्रादिनिवारकत्वाद्वज्रत्वम् । तत्रोक्थे परिगृहीताः पशवश्चौराद्यपहरणाद्वज्रेण रक्षितास्सन्तः कदाचिदप्यस्माद्यजमानादनपक्रामुका अनपक्रमणशीला भवन्ति । अयं क्रतुरुक्थसंस्थो न भवति उक्थस्तोत्रयोरसमाप्तत्वात् । अतिरात्रोऽपि न भवति षोडशिनैव समाप्तत्वात् । रात्रिपर्य्यायाणां सन्धेश्चाऽप्रयोगात् । न हि ग्राम्या इति पूर्ववद्व्याख्येयम् ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकोनविंशाध्यायस्य षष्ठः खण्डः ॥

---

## सप्तमः खण्डः ॥

उद्भिद्वलभिन्नामकौ द्वौ क्रतू विवक्षुस्तत्प्रशंसार्थमाख्यायिकामाह—

**असुराणां वै वलस्तमसा प्रावृतोऽश्मापिधानश्चाऽऽसीत्तस्मिन् गव्यं वस्वन्तरासीत्तं देवा नाऽशक्नुवन्**

**भेत्तुं ते बृहस्पतिमब्रुवन्निमान्न उत्सृजेति स उद्भिदैव बलं व्यच्यावयद्वलभिदाऽभिनत्तानुत्सेधेनैवोदसृजन्निषेधेन पर्यगृह्णात् ॥ १ ॥**

असुराणामेव मध्ये बलनामकः कश्चिदसुरो यथा देवैर्ज्ञातुं न शक्यते तथाऽन्धकारेण प्रावृतः परितोऽश्मापिधानः प्राकाररूपेण स्थापितैः पाषाणैराच्छादितः कस्मिंश्चिद्विलेऽतिष्ठत् । तस्मिन्बिले अन्तर्मध्ये गव्यं गोसमूहरूपं वसुचाऽऽसीत् । देवानां सम्बन्धि गोजातमपहृत्य बिले गोपितत्वात् तं बलनामानमसुरं भेत्तुं शस्त्रैर्विदारयितुं देवाः शक्ता नाऽभवन् । ततो बृहस्पतिं प्रार्थितवन्तः–हे बृहस्पते नः अस्मदर्थं इमान् पशूनुत्सृज बिलान्निस्सारयेति । ततो बृहस्पतिरुद्भिद्यागमनुष्ठाय तत्सामर्थ्येनैव बलनामानमसुरं बिलाद्वियुज्य प्रच्यावितवान् । बलभिन्नामानं क्रतुमनुष्ठाय तत्सामर्थ्येन (१)बलनामानमसुरं अभिनत् शस्त्रैर्विदारयत् । तान् बिलस्थितानपि पशूनुत्सेधाख्येन साम्नैवोदसृजत् बिलात् उद्गतानकरोत् । ततो निषेधाख्येन साम्ना पशूनां पलायनं निषिध्य पर्य्यगृह्णात् परितः स्वाधीनानकरोत् ॥ १ ॥

तयोः क्रत्वोरधिकारिणमाह––

**पशुकामो यजेत ॥ २ ॥**

उद्भिद्वलभिद्भ्यामिति शेषः । तयोस्सहाऽनुष्ठानं सूत्रकारो दर्शयति–(२)'उद्भिद्वलभिद्भ्यामविप्रयोगेण यजेते'ति ॥ २ ॥

पशुफलप्राप्त्यर्थमुभयोरुपयोगमाह—

**यदुद्भिदा यजेत बलमेवाऽस्मै विच्यावयति यद्वलभिदा बलमेवाऽस्मै भिनत्ति ॥ ३ ॥**

स्पष्टोऽर्थः ॥ ३ ॥

अस्मै पशुलाभाय सामद्वयं विधत्ते—

**उत्सेधनिषेधौ ब्रह्मसामनी भवत उत्सेधेनैवाऽस्मै पशूनुत्सिध्य निषेधेन परिगृह्णाति ॥ ४ ॥**

---

१. बलाख्यमसुरमिति ख. पु. २. लाट्या. श्रौ. ९. ४. ९.

(१)'पिबा सुतस्य रसिन' इत्यस्यामृचि उत्सेधनिषेधाख्ये द्वे सामनी । तयोरुत्सेध उद्भिदि ब्रह्मसाम, निषेधो बलभिदि ब्रह्मसाम । तत्रोत्सेधेन पशुप्राप्तिप्रतिबन्धकात्पशूनुत्सिध्य निस्सार्य निषेधेन पलायनं निषिध्य स्वाधीनान् करोति ॥ ४ ॥

अस्मै यजमानार्थमन्यत्सामद्वयं विधत्ते—

**(२)"यज्ञ इन्द्रमवर्द्धयदि"ति ब्रह्मण आज्यᳪरूपेण समृद्धम् ॥ ५ ॥**

पूर्वोक्तावुत्सेधनिषेधौ माध्यन्दिनसवने ब्रह्मसाम 'यज्ञ इन्द्रमि'त्यस्यामृचि सम्पन्नं साम । तयोः क्रत्वोः प्रातस्सवने ब्रह्माणं प्रति प्रयोक्तव्यमाज्यस्तोत्रम्। तस्यामृची'न्द्रो यदभिनद्वलमि'ति वलभेदनलिङ्गसद्भावादिदमाज्यस्तोत्रमनुकूलेन रूपेण समृद्धम् ॥ ५ ॥

अथ कञ्चित्सङ्ख्याविशेषमुपायेन सम्पाद्य तमुपजीव्य प्रशंसति—

**सप्तिसप्तदशौ भवतो यत्सप्तभिः स्तुवन्ति सप्त ग्राम्याः पशवः पशूनेवाऽवरुन्धे सप्तपदा शक्करी पशवः शक्करी पशूनेवाऽवरुन्धेऽथ यत्सप्तदशभिः प्रजापतिर्वै सप्तदशः प्रजापतिमेवाऽऽप्नोति ॥ ६ ॥**

अत्रैवं कल्पे दर्शितम्—'एकविंशं बहिष्पवमानं तिसृभिर्होतुराज्यं सप्तिसप्तदशमि'ति । अत्रैकविंशतिसंख्या त्रिसंख्या च मिलित्वा चतुर्विंशतिस्सम्पद्यत' इति संख्यासम्पत्तिः । तस्याश्च विच्छेदविशेषणैका सप्तसंख्या । अपरा तु सप्तदशसंख्या तयोर्मध्ये सप्तदशसंख्या यासां स्तोत्रीयाणां सङ्घे विद्यते सोऽयं सप्ती । अवशिष्टस्सप्तदशः तत्र सप्तिना सङ्घेन संख्यासाम्याद्गवादीन् ग्राम्यपशून् प्राप्नोति । तथा शक्करीच्छन्दसः सप्तभिः पादैरुपेतत्वात् पशुसाधनत्वाच्च सप्तसंख्यया पशुप्राप्तिः । अथाऽवशिष्टाभिः सप्तदशभिः स्तुवन्तीति यदस्ति तेन प्रजापतिं प्राप्नोति । प्रजापतेः सप्तदशाक्षररूपत्वं तैत्तिरीया आमनन्ति—(३)'आ·

---

१. पिबा सुतस्य रसिनो मत्स्वा न इन्द्र गोमतः ।
आपिर्नो बोधि सधमाद्ये वृधेऽस्माँ अवन्तु ते धियः ॥
सा. सं. पू. ३. १. ५. ७.

२. यज्ञ इन्द्रमवर्धयद्यद्भूमिं व्यवर्तयत् । चक्राण ओपशं दिवि ॥
सा. सं. पू. २. ३. ३. ७.

३. तै. सं. १. ६. ११. १.

आश्रवयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कारः एष वै सप्तदशः प्रजापतिरि'ति ॥

पुनरपि संख्याद्वयं मिलित्वा प्रशंसति—

**गायत्रीᳲसम्पद्यते तेजो ब्रह्मवर्चसं गायत्री तेज एव ब्रह्मवर्चसमवरुन्धे प्राणो गायत्री प्रजननं प्राणादेव गायत्र्याः प्रजायते ॥ ७ ॥**

या सप्तसंख्याऽस्ति या चाऽन्या सप्तदशसंख्या ते उभे मिलित्वा चतुर्विंशतित्वेन गायत्रीं प्राप्नुतः। तेजो ब्रह्मवर्चसमित्यादि पूर्ववद्व्याख्येयम् ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकोनविंशाध्यायस्य सप्तमः खण्डः ॥

## अष्टमः खण्डः ॥

अपचित्याख्यं क्रतुं विधत्ते—

**अथैषोऽपचितिरपचितिकामो यजेताऽपचित्यैवाऽस्मा अपचितिं विन्दाति ॥ १ ॥**

अपचितिः पूजा, तद्धेतुत्वात्क्रतुरप्यपचितिनामकः। अपचित्यैव अपचितिना क्रतुनैवाऽस्मै यजमानार्थमुद्गाता पूजां लभते ॥ १ ॥

तत्र बहिष्पवमानमाध्यन्दिनपवमानयोः स्तोमविशेषं विधत्ते—

**तस्य चतुर्विᳲशौ पवमानौ चतुर्विᳲशत्यक्षरा गायत्री तेजो ब्रह्मवर्चसं गायत्री तेजसैवाऽस्मै ब्रह्मवर्चसेनाऽपचितिं विन्दाति ॥ २ ॥**

स्पष्टोऽर्थः ॥ २ ॥

पृष्ठस्तोत्रे सामद्वयं विधत्ते—

**उभे बृहद्रथन्तरे भवत उभाभ्यामेवाऽस्मै बृहद्रथन्तराभ्यामपचितिं विन्दाति ॥ ३ ॥**

स्पष्टोऽर्थः ॥ ३ ॥

अपरं सामद्वयं विधत्ते—

**भर्गयशसी भवतो भर्गेणैवाऽस्मै भर्गो दधाति यशसा यशः ॥ ४ ॥**

'पुरोजिती वो अन्धस' इत्यस्यामृचि यथा श्यावाश्वान्धीगवे सामनी, तथा भर्गाख्यं साम 'त्वमिन्द्र यशसा असी'त्यस्यामृचि यशो नामकं साम भवति । तत्र भर्गाख्येनैव साम्ना अस्मै यजमानार्थं भर्गो दधाति तेजस्सम्पादयति, यशोनामकेन साम्ना कीर्त्तिं सम्पादयति॥४॥

अत्र विद्यमानान् स्तोमान् प्रशंसति—

**उभये स्तोमा युग्मन्तश्चाऽयुजश्चोभयैरेवाऽस्मै स्तोमैरपाचितिं विन्दति ॥ ५ ॥**

युग्मन्तो युग्मसंख्यया समसंख्ययोपेताः चतुर्विंशस्तोमाः । यद्यप्येक एव चतुर्विंशस्तथाऽपि जात्यभिप्रायेण बहुवचनम् । अयुजो विषमसङ्ख्योपेताः त्रिवृत्पञ्चदशादयः । स्पष्टम् ॥ ५ ॥

अत्र ब्रह्मवादिनामाक्षेपं दर्शयति—

**तदाहुर्विलोमानस्तोमा ईश्वरा यजमानं विक्षेतोर्विव्यातियन्तीति ॥ ६ ॥**

तत्र त्रिवृदादिक्रमेण ह्यनुष्ठाने सत्यानुलोम्यं स्यात् । अत्र चतुर्विंशतिमारभ्य तत ऊर्ध्वं अर्वाचीनानां पञ्चदशादीनामनुष्ठानाद्विलोमत्वं प्रातिलोम्येन प्रवृत्ताः स्तोमा यजमानं विक्षेतोर्विक्षेपयितुमीश्वराः समर्थाः । हि यस्मादेते स्तोमा व्यातियन्ति विपरीतक्रमास्सन्तः स्वोचितं क्रममतिलङ्घ्य प्रवर्त्तन्ते । इतिशब्दो ब्रह्मवाद्याक्षेपसमाप्त्यर्थः ॥ ६ ॥

समाधानं दर्शयति—

**एकविंशोऽग्निष्टोमो भवति प्रतिष्ठा वा एकविंशोऽन्तत एव यज्ञस्य प्रतितिष्ठति ॥ ७ ॥**

(१)स्पष्टोऽर्थः ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकोनविंशाध्यायस्याऽष्टमः खण्डः ॥

---

१. अग्निष्टोमाख्ये द्वादशस्तोत्रे एकविंशाख्यस्स्तोमः क्रियते । तस्य च प्रतिष्ठाहेतुत्वाद्यज्ञस्याऽन्ततोऽवसाने यजमानः प्रतितिष्ठत्येवेति ख. पु.

## नवमः खण्डः ॥

द्वितीयमपचितिनामकं क्रतुं विधत्ते—

**अथैष सर्वस्तोमोऽपचितिरपचितिकामो यजेत स-र्वैरेवाऽस्मै स्तोमैरपचितिं विन्दति ॥ १ ॥**

अतीतयोर्द्वितीयतृतीययोरध्याययोर्निरूपितास्त्रिवृदादिस्तोमा ये-ऽष्टाचत्वारिंशान्ताः नवसंख्याकास्स्तोमास्ते सर्वेऽप्यत्र विद्यन्ते । अ-तोऽयं सर्वस्तोमः । तैस्सर्वैरुद्गाता यजमानार्थं पूजां लभते ॥ १ ॥

स्तोमगतस्तोत्रीयाणां सङ्ख्यामुपजीव्य प्रशंसति—

**विराजꣳ सम्पद्यत एष वा अपचितो योऽन्नादोऽन्नं विराडन्नाद्यमेवाऽस्मिन्दधाति ॥ २ ॥**

अयमपचितिक्रतुर्दशसंख्यया स्तोत्रीयासु विच्छेदितासु संख्यासा-मान्याद्विराट्छन्दोरूपत्वं सम्पद्यते । तथा हि—त्रिवृद्बहिष्पवमानम्, पञ्चदशं होतुराज्यम्, सप्तदशे द्वे आज्ये, एकविंशमच्छावाकस्याऽऽ-ज्यम्, त्रिणवो माध्यन्दिनः पवमानः, त्रीणि पृष्ठानि चतुर्विंशचतुश्च-त्वारिंशाष्टाचत्वारिंशरूपाणि, चतुर्थं पृष्ठञ्च चतुर्विंशम्, आर्भवस्त्रयस्त्रिं-शः, अग्निष्टोम एकविंशः । अत्र स्थिताः सर्वाः स्तोत्रीयास्त्रीणि शतानि भवन्ति । ताश्च दशकत्वेन विच्छिन्नास्सत्यस्त्रयस्त्रिंशाद्विराजस्सम्पद्य-न्ते । विराजश्चाऽन्नहेतुत्वादन्नरूपत्वम् । अन्नहेतुत्वात् लोके यः पुमानन्ना-दो भवति सोऽपचितो दारिद्र्यरोगरहितत्वात् पूजितो भवति । तस्मा-दुद्गाताऽस्मिन् यजमाने विराट्रूपेणाऽन्नाद्यं सम्पादयति ॥ २ ॥

द्वे सामयुग्मे द्विविधांश्च स्तोमान् विधाय प्रशंसति—

**उभे बृहद्रथन्तरे भवतो भर्गयशसी भवत उभये स्तोमाश्छन्दोमाश्च पृष्ठ्याश्चोभयैरेवाऽस्मै स्तोमैरपचि-तिं विन्दति ॥ ३ ॥**

चतुर्विंशचतुश्चत्वारिंशाष्टाचत्वारिंशाख्यास्स्तोमा गायत्रीत्रिष्टुब्ज-गत्याख्यैश्छन्दोभिर्मीयन्त इति छन्दोमाः । त्रिवृत्पञ्चदशसप्तदशैकविं-शत्रिणवत्रयस्त्रिंशाख्यास्स्तोमाः षडहे पृष्ठस्तोत्रसम्बद्धाः पृष्ठ्या इत्यु-च्यन्ते । तैश्चतुर्भिः सामभिर्नवभिः स्तोमैश्च यजमानाय पूजां लभते ॥३॥

पुनरपि स्तोमान् प्रशंसति—

तस्य छन्दोमाः पृष्ठानि पशवो वै छन्दोमा अन्नं पृष्ठान्यभिपूर्वमेवाऽस्मिन्नन्नाद्यं पशून्दधाति यच्छन्दोमवाᳪँस्तेन द्वादशाहयाजिनमाप्नोति ॥ ४ ॥

तस्याऽप्यचितेः क्रतोर्यच्छन्दोमा विद्यन्ते यानि च त्रिवृदादीनि पृष्ठानि तेषां मध्ये छन्दोमानां पशुसाधनत्वात् पशुत्वम्, पृष्ठानामन्नहेतुत्वादन्नत्वम् । एवं सत्यन्नस्य प्रथममपेक्षितत्वादभिपूर्वमनुक्रमेणैवाऽन्नमुत्कृष्टं सम्पाद्य ततः पशून् सम्पादयति । किञ्च द्वादशाहे छन्दोमसद्भावात् द्वादशाहयाजिनमाप्नोति, तस्य यत् फलं तदस्याऽपि भवतीत्यर्थः ॥ ४ ॥

अत्र ब्रह्मवादिनामाक्षेपं दर्शयति—

तदाहुर्नानालोकाः स्तोमाश्छन्दोमाश्च पृष्ठ्याश्च यदेकस्मिन् यज्ञक्रतौ समवरुध्यन्त ईश्वरा यजमानोऽप्रतिष्ठातोरिति ॥ ५ ॥

उक्ताः स्तोमा लोका भिन्नाश्रया न त्वेकक्रतुवर्त्तिनः । तथा सति यद्येकस्मिन्नेव क्रतौ स्वीक्रियेरन्, तदा यजमानोऽप्रतिष्ठातोरप्रतिष्ठातुमीश्वरो भवति प्रतिष्ठां न लभत इत्यर्थः ॥ ५ ॥

उक्ताक्षेपं परिहरति—

एकविᳪँशोऽग्निष्टोमो भवति प्रतिष्ठा वा एकविᳪँशः प्रतिष्ठामेव तदभ्यायन्ति ॥ ६ ॥

तत्त्रैकविंशानुष्ठानेन यजमानस्य प्रतिष्ठामभिलक्ष्य सर्वे स्तोमा आयन्ति आगच्छन्ति ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकोनविंशाध्यायस्य नवमः खण्डः ॥



## दशमः खण्डः ॥

पक्ष्याख्यं क्रतुं विधत्ते--

**पक्षी वा एष स्तोमः ॥ १ ॥**

स्तोमशब्देन तद्वान् क्रतुरुपलक्ष्यते । स च पक्षिसादृश्यात् पक्षिनामकः । तस्य पूर्वभागे त्रिवृदादित्रयस्त्रिंशान्तः स्तोमसङ्घः एकः पक्षः, उत्तरभागे त्रयस्त्रिंशादित्रिवृदन्तः स्तोमसङ्घोऽपरः पक्षः ॥ १ ॥

अस्य क्रतोः पक्षिनामानुकूलं सामविशेषं दर्शयति--

**पक्ष्येष निधीयते ॥ २ ॥**

सुपर्णेन दृष्टः सौपर्णाख्यः सामविशेषो नामसाम्यात्पक्षीत्युच्यते । सोऽस्मिन् क्रतौ निधीयते । तथा च कल्पेऽभिहितम्-'स्वारञ्च सौपर्णमग्नेश्च व्रतं यौधाजयात् पूर्वमि'ति । सामविशेषस्य क्रतोश्चोभयोरपि पक्षित्वात् परस्परं सम्बन्धो युक्त इत्यर्थः ॥ २ ॥

तमेव सम्बन्धमन्वयव्यतिरेकाभ्यामुपपादयति--

**न वा अपक्षः पक्षिणमाप्नोत्यथ यदेष पक्ष्यपक्षिणि निधीयते तस्मात्पक्षिणः पक्षैः पतन्ति ॥ ३ ॥**

लोके पक्षरहितो मनुष्यः पशुर्वा कश्चिदप्याकाशे गच्छन्तं पक्षिणमाप्तुं नैव शक्नोति । अथ तद्विपर्ययेणाऽन्वय उच्यते-अपक्षिणि पक्षरहिते साम्नि सौपर्ण(१)नामवशादेष सामविशेषः पक्षी पक्षवान् भवति, तथा भूत्वा क्रतौ निधीयते । यद्यस्मादेवं तस्माल्लोके पक्षिणः पक्षैराकाशे पतन्ति । यद्वा क्रतावपक्षिणि पक्षरहिते पक्षसाहित्यासिद्ध्यर्थमेव पक्षी पक्षकल्पनायुक्तस्सामविशेषो निधीयत इति क्रतोः पक्षित्वं सम्पन्नम् । यस्मादेवं तस्माल्लोके पक्षिणो वायसटिट्टिभादयः पक्षैराकाशे पतन्ति ॥ ३ ॥

एतद्वेदनं प्रशंसति—

**पक्षी ज्योतिष्मान् पुण्यान् लोकान् सञ्चरति य एवं वेद ॥ ४ ॥**

अस्य क्रतोर्वेदिता पक्षी स्वयं पक्षवानिव भूत्वाऽग्निसम्बन्धिनः क्रतोर्वेदनेन ज्योतिष्मान् भूत्वा स्वर्गादीनुत्तमलोकान् प्राप्नोति ॥ ४ ॥

---

१. नामसादृश्यादिति ख. पु.

अस्य क्रतोः स्तोमान् विधत्ते—

**त्रिवृतावभितो भवतस्तेजो ब्रह्मवर्चसं त्रिवृत्तेज एव ब्रह्मवर्चसमवरुन्धे ॥ ५ ॥**

अभितः क्रतोराद्यन्तयोर्बहिष्पवमानाग्निष्टोमाख्ययोः प्रथमद्वादशयोस्स्तोत्रयोस्त्रिवृत्स्तोमौ कर्त्तव्यौ । तस्य स्तोमस्य शरीरकान्तिश्रुताध्ययनसम्पत्तिहेतुत्वात्तेजस्त्वं ब्रह्मवर्चसत्वञ्च । अतस्तेनोभयप्राप्तिः ॥५॥

द्वितीयैकादशयोः स्तोमविशेषं विधत्ते—

**अथ पञ्चदशौ वीर्यं वै पञ्चदशो वीर्यमेवाऽवरुन्धे ॥ ६ ॥**

स्पष्टम् ॥ ६ ॥

तृतीयदशमयोः स्तोमविशेषं विधत्ते—

**अथ सप्तदशौ पशवो वै सप्तदशः पशूनेवाऽवरुन्धे ॥७॥**

स्तोमस्य पशुप्राप्ति(१)साधनत्वात् पशुत्वम् ॥ ७ ॥

चतुर्थनवमयोः स्तोत्रयोः स्तोमविशेषं विधत्ते—

**अथैकविंशौ प्रतिष्ठा वा एकविंशो मध्यत एव यज्ञस्य प्रतितिष्ठति ॥ ८ ॥**

उक्तस्तोत्रयोर्यज्ञमध्यवर्त्तित्वात् यजमानोऽपि यज्ञमध्य एव प्रतितिष्ठति तदनुष्ठानेन स्थिरो भवति ॥ ८ ॥

पञ्चमाष्टमयोः स्तोत्रयोः स्तोमविशेषं विधत्ते—

**अथ त्रिणवाविमे वै लोकास्त्रिणव एष्वेव लोकेषु प्रतितिष्ठति ॥ ९ ॥**

त्रिणवस्तोमेन त्रयाणां भागानां लोकत्रयप्राप्तिहेतुत्वात्तद्रूपत्वम् ॥९॥

षष्ठसप्तमयोः स्तोमविशेषं विधत्ते—

**अथ त्रयस्त्रिंशौ वर्म वै त्रयस्त्रिंशः ॥ १० ॥**

उक्तेषु स्तोमेषु त्रयस्त्रिंशस्य प्रौढत्वादयं यज्ञस्य वर्म शरीरमेव, इतरे त्ववयवसदृशाः ॥ १० ॥

---

१. हेतुत्वादिति ख. पु.

एतद्वेदनं प्रशंसति--

**वर्ष्म स्वानां भवति य एवं वेद ॥ ११ ॥**

स्वानां ज्ञातीनां वर्ष्म शरीरमिव मुख्यो भवति ॥ ११ ॥

उक्तौ त्रयस्त्रिंशौ प्रशंसति--

**एष वाव ब्रध्नस्य विष्टपो यदेतौ त्रयस्त्रिंशौ मध्यतः सन्धीयेते तेन ब्रध्नस्य विष्टपमारोहति ॥ १२ ॥**

क्रतोर्मध्यभागे क्रतुषु षष्ठसप्तमयोः स्तोत्रयोः त्रयस्त्रिंशाख्यौ स्तोमौ सन्धीयेते अनुष्ठीयेते इति यदस्ति एष एवाऽनुष्ठानप्रकारो ब्रध्नस्याऽऽदित्यस्य विष्टपः स्थानविशेषः। ब्रध्नशब्दार्थोऽन्यत्र श्रूयते—'असौ वा आदित्यो ब्रध्न' इति। आदित्यस्य च मध्यदेशवर्त्तित्वं मध्याह्नकाले प्रत्यक्षम्। अतस्तेन त्रयस्त्रिंशानुष्ठानेनाऽऽदित्यस्य स्थानमारोहति ॥१२॥

प्रकारान्तरेण स्तोमान् प्रशंसति—

**मध्यतो वा अग्निर्वरिष्ठस्तस्मादेते स्तोमा मध्यतो वरिष्ठाः क्रियन्ते ॥ १३ ॥**

अग्निर्हि ज्वलनात् पूर्वोत्तरयोरवस्थयोरल्पत्वान्न श्रेष्ठः, ज्वलनदशायां तु प्रौढत्वात् श्रेष्ठः। अग्निसम्बन्धी चाऽयं क्रतुः, अस्य च वक्ष्यमाणक्रतोश्च सूत्रकारेणाऽग्नेस्तोमाविति संज्ञाया उक्तत्वात्। (१)'ऐकाहिकेन व्रतेनोक्त उपायोऽग्नेः स्तोमयोरि'ति हि सूत्रम्। अतोऽग्निसादृश्यादस्य क्रतोर्मध्ये प्रौढाः स्तोमाः क्रियन्ते ॥ १३ ॥

मध्यवर्त्तिनः स्तोमान् प्रशस्याऽऽद्यन्तौ स्तोमौ प्रशंसति—

**त्रिवृता प्रैति त्रिवृतोदेति प्राणो वै त्रिवृत्प्राणेनैव प्रैति प्राणमभ्युदेति ॥ १४ ॥**

प्राणस्य पूरककुम्भकरेचकरूपेण वा प्राणापानव्यानवृत्तिरूपेण वा त्रिवृत्त्वम्। अयञ्च क्रतुस्त्रिवृता प्रैति समाप्यते, त्रिवृतोदेति प्रारभ्यते। तद्वदेव लोकेऽपि जीवत्पुरुषः प्राणेनैव देहान्निर्गतेन प्रैति म्रियते। प्राणमेवाऽभिलक्ष्य तद्युक्तस्सन् उदेत्युत्पद्यते ॥ १४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकोनविंशाध्यायस्य दशमः खण्डः ॥

---

१. लाट्या. श्रौ. ९ ४. १८.

## एकादशः खण्डः ॥

सूत्रकारेण अग्नेः स्तोमाविति नाम्ना यौ क्रतू व्यवहृतौ तयोर्मध्ये पक्षिनामकः प्रथमः क्रतुरुक्तः । ज्योतिर्नामकं द्वितीयं क्रतुं विधत्ते—

**अथैष ज्योतिः ॥ १ ॥**

स्पष्टोऽर्थः ॥ १ ॥

स्तोमान्विधत्ते—

**तस्य त्रिवृद्बहिष्पवमानं पञ्चदशान्याज्यानि चतुर्विंशो माध्यन्दिनः पवमानः सप्तदशानि पृष्ठानि ॥ २ ॥**

स्पष्टोऽर्थः ॥ २ ॥

तत्राऽऽद्यौ द्वौ स्तोमौ प्रशंसति—

**प्राणो वै त्रिवृदात्मा पञ्चदशः ॥ ३ ॥**

पूर्वोक्तरीत्या प्राणस्य त्रिवृत्त्वम् । आत्मा देहः । स च पञ्चदशभिरवयवैरुपेतः, श्रुत्यन्तरे 'सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ नाभिर्दशमी'त्युक्तत्वात् दश प्राणाः, द्वौ हस्तौ, द्वौ पादौ, मध्यभागश्चेत्येते पञ्चावयवाः । अतस्संख्यासाम्यात् पञ्चदशस्तोमस्य देहरूपत्वम् । तस्मादेताभ्यां स्तोमाभ्यां देहे प्राणः स्थिरो भवतीत्यर्थः ॥ ३ ॥

उत्तरौ द्वौ स्तोमौ प्रशंसति—

**मुखं गायत्र्यन्नं वै सप्तदशो मुखत एव तदन्नं धत्ते ॥**

चतुर्विंशस्तोमस्य संख्यासाम्याद्गायत्रीत्वम्, छन्दसाम्मध्ये प्रथमत्वाद्गायत्र्या मुख्यत्वम् । सप्तदशस्तोमस्य प्रजापतिशरीरमध्यगतादन्नधारणस्थानादुदरादुत्पन्नत्वादन्नरूपत्वम् । तत्तेन स्तोमद्वयेन मुखेऽन्नं धत्त एव कदाचिदपि दरिद्रो न भवतीत्यर्थः ॥ ४ ॥

वेदनं प्रशंसति—

**अन्नमत्त्यन्नादो भवति य एवं वेद ॥ ५ ॥**

अन्नादो रोगरहितः ॥ ५ ॥

(१)माध्यन्दिनपवमानस्तोमप्रशंसां प्रपञ्चयति—

**माध्यन्दिनेन वै पवमानेन देवाः स्वर्गं लोकमायन्न्य-**

---

1. तद्गतस्तोमप्रशंसामिति ख. पु.

देष चतुर्विंशो माध्यन्दिनः पवमानो भवति स्वर्गस्य लोकस्याऽऽक्रान्त्यै चतुर्विंशत्यक्षरा गायत्री तेजो ब्रह्मवर्चसं गायत्री तेज एव ब्रह्मवर्चसमवरुन्धे प्राणो गायत्री प्रजननं प्राणादेव गायत्र्याः प्रजायते ॥ ६ ॥

व्याख्यातप्रायमेतद् । अत्राऽऽर्भवपवमानाग्निष्टोमसाम्नोर्विशेषानभिधानात्तदुभयं प्रकृताविवाऽनुष्ठेयम् ॥ ६ ॥

सर्वान् स्तोमान् मेलयित्वा प्रशंसति—

उभये स्तोमा युग्मन्तश्चाऽयुजश्च तन्मिथुनं तस्मान्मिथुनात् प्रजायते ॥ ७ ॥

एकस्मिन्नपि चतुर्विंशस्तोमे युग्मत्वजात्यभिप्रायेण (१)मान्यत्वाभिप्रायेण वा युग्मन्त इति बहुवचनम् । अथ वाऽत्र वचनव्यत्ययः । स्त्रीपुरुषवदुभयविधत्वेन स्तोमानां मिथुनत्वम् ॥ ७ ॥

पूर्वत्र सौपर्णाख्यसामसम्बन्धात् पक्षित्वमुक्तं क्रतोः । अत्राऽपि तदेवाऽभिप्रेत्य प्रशंसति—

पक्षि वा एतच्छन्दः पक्षी ज्योतिष्मान् पुण्यान् लोकान् सञ्चरति य एवं वेद ॥ ८ ॥

छन्दश्शब्देनाऽत्र तदाश्रितं सौपर्णाख्यं साम विवक्षितम् । ॥ ८ ॥

माध्यन्दिने यश्चतुर्विंशस्तोमोऽस्ति सोऽयमितरौ पवमानगतौ त्रिवृत्सप्तदशस्तोमावपेक्ष्य प्रौढ इत्यभिप्रेत्य प्रशंसति--

मध्यतो वा अग्निर्वरिष्ठस्तस्मादेते स्तोमा मध्यतो वरिष्ठाः क्रियन्ते ॥ ९ ॥

अत्राऽपि स्तोमा इति वचनव्यत्ययः । अन्यत् पूर्ववत् ॥ ९ ॥

अत्रैकस्यास्स्तोत्रीयायाः प्रकृतिगताभ्य आधिक्यात्तां प्रशंसति--

एका सꣳस्तुतानां विराजमतिरिच्यत एकाकिनमेवैनमन्नाद्यस्याऽध्यक्षं करोति ॥ १० ॥

संस्तुतानां स्तोत्रीयाणां दशसंख्याविच्छेदेन प्रकृताविव विराजं प्राप्तानां मध्ये एका स्तोत्रीया विराजमतिरिच्यते । तद्यथा—प्रकृतौ ताव-

१. पूज्यत्वाभिप्रायेण वेति ख. पु.

अवत्यधिकं शतं स्तोत्रीयाः याः सन्ति, तास्वेकोनविंशतिसंख्याका वि· राजः । अत्राऽपि तत्तत्प्राप्तौ सत्यां मैत्रावरुणस्याऽऽज्यपृष्ठयोः पञ्चदश· सप्तदशावपोद्य त्रिवृच्चतुर्विंशौ कर्त्तव्यौ । तथा च निदानेऽभिहितम्— 'त्रिवृच्चतुर्विंशावाज्यपृष्ठेषु सम्पद्वशेन क्रम' इति । 'एकाऽतिरिच्यत' इति श्रुतेरर्थवत्त्वसम्पादनवशेनेत्यर्थः । एकयाऽतिरिक्तया स्तोत्रीयया य· जमानमेकमेव कृत्स्नस्याऽन्नाद्यस्याऽध्यक्षं स्वामिनमुद्गाता करोति ॥१०॥

अस्य क्रतोरग्निसम्बन्धिरूपत्वेन ज्योतिरिति नामाऽस्ति, तत्प्रशंसति—

**ज्योतिर्वा एषोऽग्निष्टोमो ज्योतिष्मन्तं पुण्यं लोकं जयति य एवं विद्वानेतेन यजते ॥ ११ ॥**

स्पष्टोऽर्थः ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ· प्रकाशे एकोनविंशाध्यायस्यैकादशः खण्डः ॥

---

## द्वादशः खण्डः ॥

ऋषभाख्यं क्रतुं विधत्ते--

**अथैष ऋषभः ॥ १ ॥**

स्पष्टोऽर्थः ॥ १ ॥

तदेतन्नाम प्रशंसति—

**ऋषभो वा एष स्तोमानामृषभतां गच्छति य एवं वेद ॥ २ ॥**

एषः क्रतुः स्तोमानामितरक्रतूनां मध्ये ऋषभः श्रेष्ठः । ऋषभतां श्रेष्ठतां गच्छति ॥ २ ॥

(१)अत्राऽधिकारिणमाह—

**राजन्यं याजयेदृषभो वै पशूनामधिपती राजन्यो मनुष्याणाम् ॥ ३ ॥**

ऋषभो वत्सोत्पादनसमर्थः पुङ्गवः । स यथा पशूनामधिपतिः

---

१. अस्मिन् क्रताविति ख. पु.

(१)तद्वृषभाख्यो यज्ञः क्षत्त्रियाणामधिपतिरित्यभिप्रायः। राजन्यस्याऽ-त्यधिपतित्वोक्तेः यज्ञेन सम्बन्धो युक्तः ॥ ३ ॥

उत्तमवर्णं विप्रं परित्यज्य राजन्ये कुतः पक्षपात इत्यत आह—

**यो वा अस्ति सोऽधिपतिः ॥ ४ ॥**

य एव पुमान् धनधान्यादिसमृद्धोऽस्तीति सर्वैर्व्यपदिश्यते स एवाऽधिपतिरिति। तस्मादादर उचितः। दरिद्रस्त्वविद्यमानसमो नाऽऽदरयोग्यः ॥ ४ ॥

तद्वेदनं प्रशंसति—

**अधिपतिः समानानां भवति य एवं वेद ॥५॥**

स्पष्टम् ॥ ५ ॥

सामविशेषं विधत्ते—

**तस्य सदोविशीयं माध्यन्दिने पवमाने भवति विशमेवाऽस्मै सवनाभ्यां परिगृह्णात्यनपक्रामुकाऽस्माद्विड्-भवति ॥ ६ ॥**

'पुनानः सोम धारये'त्यस्यामृचि सदोविशीयनामकं साम भवति। नाध्नि विशीत्येतस्य शब्दस्य श्रुतत्वात्तन्नामकसामोपेतो माध्यन्दिनपवमानो विड्रूपतां विशमस्मै यजमानाय पार्श्वद्वयवर्त्तिभ्यां प्रातस्सवनतृतीयसवनाभ्यां स्वाधीनां करोति। सा च विडस्मान्नाऽपक्रामति॥६॥

अन्यत्साम विधत्ते—

**समन्तं भवति समन्तामेवाऽस्मै विशं करोत्यनपक्रामुकाऽस्माद्विड्भवति ॥ ७ ॥**

'दुहान ऊध' रित्यस्यां विष्टारपङ्क्तौ समन्तनामकं साम भवति। विशं परिजनरूपां प्रजां समन्तां परितोऽवस्थितां करोति ॥ ७ ॥

अपरं सामद्वयं विधत्ते—

**उभे बृहद्रथन्तरे भवत इयं वै रथन्तरं द्यौर्बृहदेवाऽस्माल्लोकाद्रायत्यैवाऽमुष्मादुभयोरनयोर्लोकयोः प्रतितिष्ठति ॥ ८ ॥**

---

१. तद्वृषभनामक इति ख. पु.

पृष्ठस्तोत्रे रथन्तरं साम कुर्यात्, बृहत्साम त्वनुष्टुभीति वक्ष्यते। अनयोः साम्नोरधरोत्तरस्थानसाम्याद् भूलोकद्युलोकरूपत्वम्। एवमस्माल्लोकात् भूलोकनिमित्तमेव रथन्तरं गायति। तद्वदितरत्राऽपि योज्यम्॥ ८॥

बृहत्साम्न आश्रयं विधत्ते—

**अनुष्टुभि बृहद्भवत्यन्तो वा अनुष्टुप् छन्दसामन्तो बृहत् साम्नामन्तो राजन्यो मनुष्याणामन्त एव तदन्तं प्रतिष्ठापयति तस्माद्यो राजन्यानाꣳ ह्रियते न स पुनरग्रं पर्य्येति॥ ९॥**

इहाऽनुष्टुभि बृहत्साम भवति, अनुष्टुप्बृहतोरन्तत्वसाम्यात्। उक्थे षोडशिनि च सवनच्छन्दसामन्तेऽनुष्टुप् क्रियते। वाजपेयस्याऽन्ते बृहत्साम क्रियते। ऐश्वर्य्यवतां मनुष्याणाम्मध्ये राजन्योऽन्तः ऐश्वर्य्यसमाप्तिस्थानम्। अतस्तमन्तं राजन्यवत्तेनाऽनुष्टुभि बृहतः करणेनाऽन्ते एवोभयविधे प्रतिष्ठापयति। यस्माद्राजन्य ऐश्वर्य्यस्य सीमा तस्माद्राजन्यानां मध्ये यः पुमान् ह्रियते ऐश्वर्य्याद्भ्रष्टो भवति स पुनः कदाचिदपि अग्रं राज्ञां मध्ये श्रेष्ठत्वं न प्राप्नोति॥ ९॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकोनविंशाध्यायस्य द्वादशः खण्डः॥

---

## त्रयोदशः खण्डः॥

गोसवाख्यं क्रतुं विधत्ते—

**यो वै वाजपेयः स राजसूयो यो राजसूयः स वरुणसवोऽथैष गोसवः स्वाराज्यो वा एष यज्ञः॥ १॥**

य एव वाजपेयः पूर्वाध्यायोक्तः स एव राजसूयः, तयोरुभयोः स्वाराज्यप्राप्तिहेतुत्वसाम्यात्। तथैव राजसूयवरुणसवयोरैक्यं योज्यम्—सूयतेऽभिषूयते सोमो यस्मिन्निति सवः सोमयागः। स च पश्चाद्वरुणकर्त्तृकः (१)'वरुणस्य वै सुषुवाणस्ये'ति श्रुतत्वात्। अथाऽनन्तरमेष

---

१. तै. ब्रा. १८. ९. १.

पुरतो वक्ष्यमाणः गोसवाख्यो यज्ञः सोऽपि यज्ञः स्वाराज्याय वाजपेय-राजसूयवरुणसवा इव स्वाराज्यफलोपेतः ॥ १ ॥

एतद्वेदनं प्रशंसति—

**स्वाराज्यं गच्छति य एवं वेद ॥ २ ॥**

स्पष्टोऽर्थः ॥ २ ॥

स्वाराज्यशब्दस्याऽर्थमाह—

**प्रजापतिर्हि स्वाराज्यं परमेष्ठी स्वाराज्यम् ॥ ३ ॥**

प्रजापतिर्हिरण्यगर्भो न तु कश्यपादिर्विवक्षितः । तदेव विशदी-कर्त्तुं परमेष्ठीत्युक्तम्, तदीयमैश्वर्यं स्वाराज्यमिति ॥ ३ ॥

तयोरभेदोपचारवेदनं प्रशंसति—

**परमेष्ठितां गच्छति य एवं वेद ॥ ४ ॥**

स्पष्टम् ॥ ४ ॥

पृष्ठस्तोत्रे सामद्वयं तद्वेदनप्रशंसाञ्च दर्शयति—

**उभे बृहद्रथन्तरे भवतस्तद्धि स्वाराज्यꣳ स्वाराज्यं गच्छति य एवं वेद ॥ ५ ॥**

सामद्वयस्य स्वाराज्यहेतुतया तद्रूपत्वोपचारः ॥ ५ ॥

दक्षिणाविशेषं तद्वेदनप्रशंसाञ्च दर्शयति—

**अयुतं दक्षिणास्तद्धि स्वाराज्यꣳ स्वाराज्यं गच्छति य एवं वेद ॥ ६ ॥**

अयुतं सहस्रदशकम् । तत्संख्याका गावोऽत्र दक्षिणाः ॥ ६ ॥

अभिषेकसाधनं द्रव्यं तद्वेदनप्रशंसाञ्च दर्शयति—

**प्रतिदुहाऽभिषिच्यते तद्धि स्वाराज्यꣳ स्वाराज्यं गच्छति य एवं वेद ॥ ७ ॥**

सद्यो दुग्धं पयः प्रतिधुगित्युच्यते । तेन प्रतिदुहा पयसाऽत्राऽभि-षेकः । स्पष्टमन्यत् ॥ ७ ॥

तस्य कालं तद्वेदनप्रशंसाञ्च दर्शयति—

**बृहतः स्तोत्रं प्रत्यभिषिच्यते तद्धि स्वाराज्यꣳ स्वाराज्यं गच्छति य एवं वेद ॥ ८ ॥**

पृष्ठेषु बृहत्साम्नस्सम्बन्धि यत् स्तोत्रमस्ति तत्प्रति ततः पूर्वं तद्यो-ग्यत्वायेत्यर्थः ॥ ८ ॥

अभिषेकस्य देशविशेषं विधत्ते—

**अनुद्धुते दक्षिणत आहवनीयस्याऽभिषिच्यतेऽस्यामेवाऽनन्तर्हितेऽध्यभिषिच्यते ॥ ९ ॥**

आहवनीयस्य दक्षिणभागे भूमावनुद्धते कम्बलपीठादिभिरनन्त-र्हिते देशेऽभिषेकः । तथा सति कृत्स्नायामपि भूमावन्तर्हितैरपि शत्रु-भिरनवरुद्धे देशेऽभिषिक्तो भवति ॥ ९ ॥

स्तोमविशेषं विधत्ते—

**सर्वः षट्त्रिंशस्तेन गोसवः ॥ १० ॥**

अस्यैव क्रतोः स्तोत्रेषु यः स्तोमोऽस्ति स सर्वोऽपि षट्त्रिंश एव कर्त्तव्यः,(१) 'षट्त्रिंशदक्षरा बृहती बार्हताः पशव' इति श्रुत्यन्तरात् । संख्याद्वारा यः पशुसम्बन्धोऽस्ति तेन सम्बन्धेनाऽयं क्रतुः गोसवना-मको भवति । तैत्तिरीया अपि तथैवाऽऽमनन्ति-(२)'पशुस्तोमो वा एषः। तेन गोसव' इति । अन्यदपि सर्वं तैस्संगृह्याऽऽम्नातम्-(३)'एष गोसवः। षट्त्रिंश उक्थ्यो बृहत्सामा पवमाने कण्वरथन्तरं भवति । यो वै वाजपेयः। स सम्राट्सवः । यो राजसूयः । स वरुणसवः । प्रजापतिस्स्वाराज्यं'''अयुतं दक्षिणाः । तद्धि स्वाराज्यम् । प्रतिधुषाऽभिषिञ्चति । तद्धि स्वाराज्यम् । अनुद्धते वेद्यै दक्षिणत आहवनीयस्य बृहतस्स्तोत्रं प्रत्यभिषिञ्चती'ति॥१०॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे एकोनविंशाध्यायस्य त्रयोदशः खण्डः ॥

---

## चतुर्दशः खण्डः ॥

मरुत्स्तोमाख्यं क्रतुं विधत्ते—

**अथैष मरुत्स्तोम एतेन वै मरुतोऽपरिमितां पुष्टिमपुष्यन्नपरिमितां पुष्टिं पुष्यति य एवं वेद ॥ १ ॥**

मरुद्भिर्दृष्टत्वादनुष्ठितत्वाच्चाऽयं मरुत्स्तोमः । अपरिमितामति-बहुलां धनधान्यादिपुष्टिमकुर्वन् ॥ १ ॥

---

१. तै. सं. ५. ३. २. ३.    २. तै. ब्रा. २. ७. ६. ३.
३. तै. ब्रा. २. ७. ६. १, २.

स्तोमेषु किञ्चिद्विशेषं विधत्ते—

**यद्गणशः स्तोमास्तेन मरुत्स्तोमो गणशो हि मरुतः ॥**

गणशः सङ्घरूपेणाऽत्र स्तोमाः प्रवर्त्तन्ते, त्रिवृतां सङ्घः, पञ्चदशानां सङ्घः, सप्तदशानां सङ्घः, एकविंशानां सङ्घ इति तत्प्रवृत्तिः । एकोनपञ्चाशन्मरुतो विभक्ता अपि गणरूपेणैव वर्त्तन्ते,(१) 'सप्तगणा वै मरुत' इति श्रुत्यन्तरात् । यद्यस्मान्मरुत इव स्तोमा अत्र गणशो वर्त्तन्ते तेनाऽयं क्रतुर्मरुत्स्तोमनामकः ॥ २ ॥

अत्र यजमानसङ्ख्याऽधिकारिणमाह—

**एतेनैव त्रीन् याजयेत् ॥ ३ ॥**

त्रीनेव न त्वेकमित्यर्थः । तथा च सूत्रम्–(२)'सखायो भ्रातरो वा ये सम्पादयेयुस्ते मरुत्स्तोमेन यजेरन्नि'ति ॥ ३ ॥

प्रथमं स्तोमसङ्घं विधत्ते—

**यत् त्रीणि त्रिवृन्ति स्तोत्राणि भवन्ति नाना ब्रह्मवर्चसे प्रतितिष्ठन्ति ॥ ४ ॥**

बहिष्पवमानं होतुराज्यं मैत्रावरुणस्याऽऽज्यमित्येतानि त्रीणि स्तोत्राणि त्रिवृत्स्तोमयुक्तानि भवन्तीति यत् यस्मादेवं तस्मान्नाना बहुविधवेदशास्त्ररूपे ब्रह्मवर्चसे यजमानास्त्रयः प्रतितिष्ठन्ति ॥ ४ ॥

द्वितीयं स्तोमसङ्घं विधत्ते—

**यत् त्रीणि पञ्चदशानि नाना वीर्ये ॥ ५ ॥**

ब्रह्मण आज्यमच्छावाकस्याऽऽज्यं माध्यन्दिनः पवमान इत्येतानि पञ्चदशस्तोमोपेतानि तत्साध्यश्च वीर्यं शारीरं वाचिकं मानसञ्चेति नानाविधानि । तस्मिन् प्रतितिष्ठन्ति ॥ ५ ॥

तृतीयं स्तोमसङ्घं विधत्ते—

**यत् त्रीणि सप्तदशानि नाना पशुषु ॥ ६ ॥**

होतुः पृष्ठं, मैत्रावरुणस्य पृष्ठं, ब्रह्मणः पृष्ठमित्येतानि त्रीणि सप्तदशस्तोमोपेतानि तत्साध्याः पशवो गवाश्वमाहिष्यादिरूपेण नानाविधाः॥६॥

चतुर्थं स्तोमसङ्घं विधत्ते—

**यत् त्रीण्येकविंशानि नाना प्रतितिष्ठन्ति ॥ ७ ॥**

---

१. तै. सं. ५. ४. ७. ७. २. लाट्या. श्रौ. ९. ४. २४.

अच्छावाकस्य पृष्ठम्, आर्भवः पवमानोऽग्निष्टोमसामेत्येतानि त्रीण्येकविंशस्तोमोपेतानि। तत्साध्याः प्रतिष्ठाः धनधान्यपुत्रभृत्यादिरूपेण नानाविधाः ॥ ७ ॥

वेदनं प्रशंसति--

**प्रतितिष्ठति य एवं वेद ॥ ८ ॥**

स्पष्टम् ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकोनविंशाध्यायस्य चतुर्दशः खण्डः ॥

## पञ्चदशः खण्डः ॥

कुलायाख्यं क्रतुं विधत्ते—

**अथैष इन्द्राग्न्योः कुलायः प्रजाकामो वा पशुकामो वा यजेत प्रजा वै कुलायं पशवः कुलायं गृहाः कुलायं कुलायमेव भवति ॥ १ ॥**

इन्द्राग्निभ्यां इष्टत्वात्तदीयोऽयं क्रतुः स च कुलायप्राप्तिहेतुः। प्रजापशुगृहाणां निवासनिमित्तत्वात् कुलायत्वम् ॥ १ ॥

अत्र सङ्ख्याऽधिकारिणमाह—

**एतेनैव द्वौ याजयेत् ॥ २ ॥**

द्वावेव न त्वेकमित्यर्थः ॥ २ ॥

अथ स्तोमसङ्ख्यां विधत्ते—

**यत् षट् त्रिवृन्ति स्तोत्राणि भवन्ति नाना ब्रह्मवर्चसे प्रतितिष्ठतो यत् द्वे पञ्चदशे नाना वीर्ये यत् द्वे सप्तदशे नाना पशुषु यत् द्वे एकविंशे नाना प्रतितिष्ठतः प्रतितिष्ठति य एवं वेद ॥ ३ ॥**

पूर्ववद्व्याख्येयम् ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकोनविंशाध्यायस्य पञ्चदशः खण्डः ॥

## षोडशः खण्डः ॥

इन्द्रस्तोमाख्यं क्रतुं विधत्ते—

**अथैष पञ्चदश इन्द्रस्तोम उक्थ्यः ॥ १ ॥**

सोऽयं क्रतुः सर्वेष्वपि स्तोत्रेषु पञ्चदश पञ्चदशस्तोमयुक्तः उक्थस्तोत्रैरुपेतत्वादुक्थ्यसंस्थारूपः । (१)इन्द्रस्येष्टत्वादिन्द्रस्तोम नामकः ॥ १ ॥

तद्वेदनं प्रशंसति—

**एतेन वा इन्द्रोऽत्यन्या देवता अभवदत्यन्याः प्रजा भवति य एवं वेद ॥ २ ॥**

एतेनैव क्रतुना इन्द्रः स्वयमन्या अग्निवरुणाद्या देवता अत्यभवत् अतिक्रम्य समर्थोऽभवत् । वेदितुरपि तथैव फलम् ॥ २ ॥

अत्राऽधिकारिणमाह—

**राजन्यं याजयेत् ॥ ३ ॥**

इन्द्रस्य क्षत्रियाभिमानिदेवतात्वात्तदीये यज्ञे क्षत्रियस्याऽधिकारः॥३॥

सर्वेषु स्तोत्रेषु विहितं पञ्चदशस्तोममनूद्य प्रशंसति—

**सर्वः पञ्चदशो भवत्योजो वीर्य्यं पञ्चदश ओजसैवैनं वीर्य्येण समर्द्धयति ॥ ४ ॥**

स्पष्टोऽर्थः ॥ ४ ॥

ऋग्विशेषान्विधत्ते—

**ऐन्द्रीषु भवन्तीन्द्रियेणैवैनं वीर्य्येण समर्द्धयति ॥**

इन्द्रो देवता यासामृचां ता ऐन्द्र्यः । ताश्च द्विविधाः—प्रत्यक्षाः परोक्षाश्च । 'इन्द्रायेन्दो मरुत्वत' इत्याद्यास्विन्द्रशब्दश्रवणात् एताः प्रत्यक्षा ऐन्द्र्यः । 'वृषा सोम द्युमां असी'त्याद्यासु वृषण्वत्वलिङ्गेन ऐन्द्रत्वानुमानादेताः परोक्षा ऐन्द्र्यः । तासु सर्वासु पञ्चदशस्तोमे सति इन्द्रियेण वीर्य्यसमृद्धिर्भवति ॥ ५ ॥

उक्थसंस्थारूपत्वं प्रशंसति—

**उक्थ्यो भवति पशवो वा उक्थानि विदुक्थानि**

---

१. इन्द्रजुष्टत्वादिति ख. पु.

विशामेवाऽस्मै पशूननुनियुनक्त्यनपक्रामुकाऽस्माद्विड् भवति ॥ ६ ॥

उक्थस्तोत्राणां पशुसाधनत्वेन पशुत्वम् , बहुत्वसाम्येन प्रजारूपत्वम् । अस्मै यजमानाय प्रजां पशूननुकूलान् कृत्वा सम्पादयति । सा च पुत्रादिप्रजा कदाचिदप्यस्मान्नाऽपक्रामति ॥ ६ ॥

स्तोत्रगतां स्तोमगताञ्च पञ्चदशसंख्यां प्रशंसति—

पञ्चदश स्तोत्राणि पञ्चदशानि भवन्त्योजो वीर्यं पञ्चदशोऽभिपूर्वमेवाऽस्मिन्नोजो वीर्यं दधाति ॥ ७ ॥

अस्मिन् यजमाने अभिपूर्वं शरीरं वाङ्मनश्चेत् तेनाऽनुपूर्वेण प्रबलं सामर्थ्यं तेषु सम्पादयति ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकोनविंशाध्यायस्य षोडशः खण्डः ॥

---

## सप्तदशः खण्डः ॥

इन्द्राग्निस्तोमनामकं क्रतुं विधत्ते—

अथैष इन्द्राग्न्योः स्तोम एतेन वा इन्द्राग्नी अत्यन्या देवता अभवतामत्यन्याः प्रजा भवति य एवं वेद ॥ १ ॥

पूर्ववद्व्याख्येयम् ॥ १ ॥

सर्वेषु स्तोत्रेषु पर्यायेण स्तोमद्वयं विधत्ते—

त्रिवृत् पञ्चदशो भवति ॥ २ ॥

प्रथमतृतीयपञ्चमसप्तमनवमैकादशस्तोत्रेषु त्रिवृत्स्तोमः, द्वितीयचतुर्थषष्ठाष्टमदशमद्वादशस्तोत्रेषु पञ्चदशस्तोमो भवति । एतदेवाऽभिप्रेत्य कल्पेऽभिहितम्—'त्रिवृत्पञ्चदशौ स्तोमौ विपर्यासमि'ति ॥ २ ॥

उक्तं स्तोमद्वयं तद्वेदनञ्च प्रशंसति—

ब्रह्म वै त्रिवृत् क्षत्रं पञ्चदशो ब्रह्मण इव चाऽस्य क्षत्रस्येव च प्रकाशो भवति य एवं वेद ॥ ३ ॥

त्रिवृत्स्तोमस्य ब्राह्मणस्य च प्रजापतिमुखजन्यत्वसाम्यादेकत्वोपचारः । पञ्चदशस्तोमस्य क्षत्रियस्य प्रजापतिबाहुजन्यत्वसाम्यादे-

कत्वोपचारः। यथा ब्राह्मणस्य वेदशास्त्रविद्याप्रयुक्तः प्रकाशः प्रसिद्धः, यथा क्षत्रियस्य शौर्यस्य प्रसिद्धिः, तथा वेदितुः प्रसिद्धिद्वयं भवति ॥

तयोरुभयोर्ह्यधिकारिणमाह--

**राजा च पुरोहितश्च यजेयाताम् ॥ ४ ॥**

स्पष्टोऽर्थः ॥ ४ ॥

अत्रोभयोर्ब्रह्मक्षत्रिययोराभिरूप्यं दर्शयति--

**गायत्रीश्च जगतीश्च सम्पद्यते ॥ ५ ॥**

अत्र स्तोत्रीयाणाञ्च संख्या गायत्रीं सम्पद्यते, तेन ब्राह्मणस्य सारूप्यम्। तथा जगतीं सम्पद्यते तेन क्षत्रियस्य सारूप्यम्। कथं तत्स्कन्धद्वयमिति चेत्? तदुच्यते-षट्त्रिवृन्ति स्तोत्राणि तैश्चतुःपञ्चाशत् स्तोत्रीयाः षट्पञ्चदशानि स्तोत्राणि तैर्नवति स्तोत्रीयाः। वर्गद्वयं मिलित्वा चतुश्चत्वारिंशदधिकं शतं स्तोत्रीया भवन्ति। तास्तु चतुर्विंशतिशो विभज्यमानाः षट् गायत्र्यो भवन्ति। द्वाभ्यां गायत्रीभ्यामेका जगतीति तिस्रो जगत्यः। तथा चोपग्रन्थेऽभिहितम्—'उद्भिद्बलभित ऐन्द्राग्नीषु चतुश्चत्वरिंशदधिकं शतं ताः षट् गायत्र्यस्तिस्रो जगत्य' इति ॥ ५ ॥

उभयविधसम्पत्तियुक्तं फलं दर्शयति--

**तेजो ब्रह्मवर्चसं गायत्र्या ब्राह्मणोऽवरुन्धे विशꣳ राजा जगत्या प्रविशति ॥ ६ ॥**

गायत्रीसम्पत्तिनिमित्तं ब्राह्मणस्य तेजोब्रह्मवर्चसप्राप्तिफलम्, जगतीसम्पत्तिनिमित्तं राज्ञः प्रजाप्राप्तिफलम् ॥ ६ ॥

अस्मिन् क्रतावन्यमप्यधिकारिणमाह--

**पुरोधाकामो यजेत ॥ ७ ॥**

पुरोधा राजपौरोहित्यम् ॥ ७ ॥

तमेतमधिकारिणं तद्वेदनञ्च प्रशंसति--

**बृहस्पतिरकामयत देवानां पुरोधां गच्छेयमिति स एतेनाऽयजत स देवानां पुरोधामगच्छद्गच्छति पुरोधां य एवं वेद ॥ ८ ॥**

स्पष्टोऽर्थः ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकोनविंशाध्यायस्य सप्तदशः खण्डः ॥

## अष्टादशः खण्डः ॥

विघनाख्यं क्रतुं विधत्ते--

**अथैष विघनः ॥ १ ॥**

स्पष्टोऽर्थः ॥ १ ॥

एतस्य नाम्नो निमित्तं सूचयति--

**इन्द्रोऽकामयत पाप्मानं भ्रातृव्यं विहन्यामिति स एतं विघनमपश्यत्तेन पाप्मानं भ्रातृव्यं व्यहन् वि पाप्मानं भ्रातृव्यं हते य एवं वेद ॥ २ ॥**

पुरा कदाचिदिन्द्रं राजानं मरुदादिगणदेवताः प्रजा उद्दण्डा भूत्वा नाऽपूजयन्। तदानीं पूजाप्रतिबन्धहेतुं पापरूपं शत्रुमेतेन क्रतुना विशेषेण हतवान्। अतो विहननहेतुत्वादस्य विघननामकत्वम्। सोऽयमर्थस्तैत्तिरीयैर्विशदीकृत्याऽऽम्नायते-(१) 'इन्द्रं वै स्वा विशो मरुतो नाऽपाचायन्। सोऽनपचाय्यमान एतं विघनमपश्यत्। तमाहरत्। तेनाऽयजत। तेनैवाऽऽसां तं स्तम्भं व्यहन्। यद्व्यहन्। तद्विघनस्य विघनत्वम्। वि पाप्मानं भ्रातृव्यं हते। य एतेन यजते। य उ चैनमेवं वेदे'ति॥

अस्मिन् क्रतौ विधित्सितान् स्तोमविशेषान् क्रमेण प्रशंसति--

**यत् त्रिवृद्भवति प्राणांस्तेनाऽवरुन्धे यत् द्वादशः संवत्सरं तेन यत् पञ्चदशो वीर्यं तेन यत् सप्तदशो ऽन्नाद्यं तेन यदेकविंशः प्रतिष्ठा तेन यन्नवदशः प्रजननं तेन यच्चतुर्विंशो ब्रह्मवर्चसं तेन यत्त्रिणवो वज्रं भ्रातृव्याय प्रहरति ॥ ३ ॥**

प्राणापानव्यानरूपेण प्राणानां त्रित्वात् त्रिवृता तत्प्राप्तिर्युक्ता। संवत्सरस्य द्वादशमासात्मकत्वात् द्वादशस्तोमेन संवत्सरप्राप्तिः। वीर्यहेतुना पञ्चदशेन वीर्यप्राप्तिः। अन्नाद्यहेतुना सप्तदशेनाऽन्नाद्यप्राप्तिः। प्रतिष्ठाहेतुनैकविंशेन प्रतिष्ठाप्राप्तिः। अस्मिन्नेकविंशस्तोमे द्वयोः स्तोत्रीययोरुपरितनयोः सतोस्ताभ्यां न्यूनो नवदशसंख्यः स्तोमः सम्पद्यते। तेन च न्यूनेन प्रजोत्पत्तिर्लभ्यते। तथा च श्रुत्यन्तरम्-(२)'न्यू

---

१. तै. ब्रा. २. ७. १८. १.                 २. तै ब्रा. १. २. १. २.

नाद्धि प्रजापतिः प्रजा असृजते'ति । चतुर्विंशस्तोमस्य गायत्रीसाम्यात्तेन ब्रह्मवर्चसप्राप्तिः । त्रिणवस्तोमस्य खड्गधारासमानत्वात् बहुधारोपेतवज्रत्वोपचारः । तेन च वज्रेण वैरी प्रहियते ॥ ३ ॥

अस्मिन् क्रतावधिकारिणमाह--

**पशुकामो यजेत बृहतीᳬसम्पद्यते पशवो वै बृहती पशूनेवाऽवरुन्धे ॥ ४ ॥**

अयं क्रतुः स्तोत्रीयासङ्ख्यायां पर्य्यालोच्यमानायां बृहतीं सम्पद्यते। कथमिति चेत् ? उच्यते-द्वाभ्यां त्रिवृद्भ्यामष्टादश स्तोत्रीयाः, द्वाभ्यां द्वादशाभ्यां चतुर्विंशतिः,द्वाभ्यां पञ्चदशसप्तदशाभ्यां द्वात्रिंशत्, द्वाभ्यां एकविंशनवदशाभ्यां चत्वारिंशत्, द्वाभ्यां चतुर्विंशाभ्यामष्टाचत्वारिंशत् द्वाभ्यां त्रिणवाभ्यां चतुःपञ्चाशत् इत्येवं द्वे शते षोडशाधिके स्तोत्रीयाणां भवतः । तासु षट्त्रिंशदक्षरा बृहत्यः षट् सम्पद्यन्ते । पशवश्च बृहतीसम्बद्धाः । छन्दसां पशुविषये मात्सर्य्ये सति मर्य्यादाधावनं प्रतिज्ञाय बृहती विजयं प्राप्य पशून् स्वकीयानकरोत् । तथा च तैत्तिरीया आमनन्ति(१)-"छन्दांसि पशुष्वाजिमयुस्तान् बृहत्युदजयत्तस्माद्बार्हताः पशव उच्यन्त' इति । तस्मात् बृहतीसम्पत्तिद्वारा पशुप्राप्तिर्युक्ता ॥ ४ ॥

बृहतीगतषट्संख्याद्वाराऽपि पशुप्राप्तिमाह--

**षडेता बृहत्यो भवन्ति षडृतवः संवत्सरः संवत्सरं पशवोऽनु प्रजायन्ते तानेवाऽऽप्त्वाऽवरुन्धे ॥ ५ ॥**

षट्संख्यानामृतूनां संवत्सरवर्त्तित्वात्प्रतिसंवत्सरं गवादिपशूनां वत्सोत्पादनाच्च तद्द्वारा पशुप्राप्तिश्च स्वाधीनताकरणञ्च सम्भवत्येव॥५॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकोनविंशाध्यायस्याऽष्टादशः खण्डः ॥



---

१. तै. सं. ५. ३. २.

## ऊनविंशः खण्डः ॥

द्वितीयं विघनाख्यं क्रतुं विधत्ते—

**इन्द्रमदेभ्यो माया असचन्त स प्रजापतिमुपाधाव-त्तस्मा एतं विघनं प्रायच्छत्तेन सर्वा मृधो व्यहत यद्व्य-हत तद्विघनस्य विघनत्वम् ॥१॥**

अदेवा असुरास्तेषां सम्बन्धिन्यो यास्ता अदेभ्यः, माया वञ्चनाः, ताश्चाऽसुरैः प्रयुक्ता इन्द्रमसचन्त इन्द्रेण संयुक्ता अभवन्। स चेन्द्रो मायापरिहारोपायार्थं प्रजापतिं सेवित्वा विघनाख्यं क्रतुं लब्ध्वा, तेन क्रतुना सर्वा मृधः सर्वाञ्छत्रून् व्यहत विशेषेण हतवान्। यस्मात् व्यहत तस्मादनया व्युत्पत्त्या क्रतोर्विघननामकत्वं सम्पन्नम् ॥ १ ॥

वेदनपूर्वकयोर्यजनयाजनयोः फलसामान्यमाह—

**सर्वा मृधो विहते य एवं विद्वान्विघनेन यजते यमेवं विद्वान्विघनेन याजयति ॥ २ ॥**

स्पष्टोऽर्थः ॥ २ ॥

यथाऽत्र शत्रुविघातः फलं तथा पशुषु प्रतिष्ठाऽप्यस्य फलमित्याह—

**पशुकामो यजेत पशवो वै बृहती पशुष्वेव प्रति-तिष्ठति ॥ ३ ॥**

अत्राऽपि पूर्ववत् स्तोत्रेषु बृहतीसम्पत्त्या पशुषु प्रतिष्ठामुपपाद-येत्। स्तोत्रेषु स्तोमविशेषप्रवृत्तिप्रकारः कल्पे दर्शितः—'द्वे त्रि-वृती स्तोत्रे द्वे द्वादशे द्वे पञ्चदशसप्तदशे द्वे चतुर्विंशे द्वे त्रिणवे' इति। पूर्वोत्तरयोर्विघनयोः स्तोमक्लृप्तिसाम्येऽपि ऋग्विशेषसामविशेषा-भ्यामवान्तरभेदः कल्पादिषु द्रष्टव्यः। एकैकस्य स्तोमस्य स्तोत्रद्वये प्रवृत्तिस्तैत्तिरीयब्राह्मणेऽपि सूचिता-(१)'तस्य द्वे द्वादशे स्तोत्रे भवतः द्वे चतुर्विंशे' इति। अस्मिन्नध्याये विहितानामेकाहानां क्रतूनां आनु-

---

१. तै. ब्रा. २. ७. १८. ३.

पूर्वी संगृह्य पूर्वाचार्यैरेवमुक्तम्—

राट् विराजाख्यौपशदाः पुनस्स्तोमस्ततः परः ।
ततः प्रोक्तौ चतुष्टोमौ षट्स्तोमः प्रथमस्तयोः ॥
उत्तरस्तु चतुष्टोम उद्भिद्वलभिदौ ततः ।
अथाऽपचितिपक्ष्याख्यौ ज्योतिराख्यस्ततः परः ॥
ऋषभो गोसवः पश्चान्मरुत्स्तोमस्ततः परः ।
कुलाय इन्द्रस्तोमः स्यादिन्द्राग्निस्तोम इत्यपि ॥
विघनौ द्वाविहाध्याये यागा एकोनविंशतिः ॥ ३ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीर-
बुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते
माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे
एकोनविंशाध्यायस्यैकोनविंशः खण्डः ॥

एकोनविंशोऽध्यायस्समाप्तिमगमत् ॥



# अथ विंशोऽध्यायः ॥

## प्रथमः खण्डः ॥

यस्य निश्श्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
विंशाद्यैस्त्रिभिरध्यायैरहीनानां प्रकल्पनम् ।
द्व्यहःप्रभृतयोऽहीना द्वादशाहान्तिमाः सवाः ॥
अहान्ता अतिरात्रान्ता द्वितीयेऽह्नि समापनात् ।
त्रयोदशाऽतिरात्रास्तु विंशाध्याये प्रकल्पिताः ॥
त्र्यहास्त्रयस्तथा गर्गत्रिरात्रस्याऽपि किञ्चन ।
ज्योतिष्टोमोऽतिरात्रोऽथ सर्वस्तोम उदीरितः ॥
अप्तोर्यामस्तृतीयोऽत्र नवसप्तदशस्ततः ।
पञ्चमो विषुवान् स्तोमो गोष्टोमश्च ततः परः ॥
आयुष्टोमस्ततः पश्चादभिजिद्विश्वजित्ततः ।
चत्वारस्त्रिवृदाद्या येऽत्यतिरात्रास्त्रयोदश ॥
द्व्यहेष्वाङ्गिरसः पूर्वमुक्तश्चैत्ररथस्ततः ।
ततः कपिवनो गर्गत्रिरात्रं किञ्चिदीर्य्यते ॥

आदौ तावत् ज्योतिष्टोमस्याऽतिरात्रस्य स्तोमक्लृप्तिमाह—

**त्रिवृद्बहिष्पवमानं पञ्चदशान्याज्यानि पञ्चदशो माध्यन्दिनः पवमानः सप्तदशानि पृष्ठानि सप्तदश आर्भव एकविꣳशोऽग्निष्टोमः सोक्थ्यः पञ्चदशी रात्रिस्त्रिवृत्सन्धिः ॥ १ ॥**

अत्राऽग्निष्टोमान्तेषु स्तोमेषु प्रकृतिवदेव स्तोमक्लृप्तिः । त्रिषूत्तरस्तोत्रेष्वपि अग्निष्टोमवदेकविंशः स्तोमः । त्रिषु पर्य्यायेषु यानि द्वादश स्तोत्राणि तैर्युक्ता रात्रिः पञ्चदशस्तोमोपेता । सन्धिस्तोत्रे त्रिवृत्स्तोमः। एतैर्युक्ते ज्योतिष्टोमेऽवान्तरभेदः ॥ १ ॥

तत्रेत्थमतिरात्रं विधत्ते—

**ज्योतिष्टोमेनाऽतिरात्रेणर्द्धिकामो यजेताऽभिक्र-**

मो वा एष स्तोमानामभिक्रान्त्या अभिक्रान्तेन हि यज्ञ-स्यर्ध्नोति ॥ २ ॥

एषोऽतिरात्रः स्तोमानां यज्ञानां मध्ये अभिक्रमो वै अभितः क्रमणस्य फलप्राप्तेर्हेतुः। तस्मादेतदनुष्ठानमभिक्रान्त्यै फलप्राप्त्यै भवति। तस्मादनुष्ठाताऽभिक्रान्तेन फलप्राप्तियुक्तेन यज्ञस्याऽनुष्ठानेन ऋध्नोति सर्वसमृद्धिं प्राप्नोति ॥ २ ॥

अस्य क्रतोरवयवद्वारकांस्त्रीन् प्रकारान् प्रशंसति—

एषोऽग्निष्टोम एष उक्थ्य एषोऽतिरात्रोऽग्निष्टोमेन वै देवा इमं लोकमभ्यजयन्नुक्थ्यैरन्तरिक्षꣳरात्र्याऽमुं लोकमजयन्नहोरात्राभ्यामभ्यवर्त्तन्त ॥ ३ ॥

आद्यो द्वादशस्तोत्रगतो योऽग्निष्टोमरूपस्तेन भूलोकजयः। मध्यम उक्थस्तोत्रभागः उक्थ्यक्रतुरूपः। तेनाऽन्तरिक्षलोकजयः। तृतीयोऽतिरात्रस्तोत्रभागोऽतिरात्रः। तेन स्वर्गलोकजयः। एवमनुष्ठातारोऽहोरात्राभ्यां लोकत्रयमभिप्राप्याऽवस्थिताः ॥ ३ ॥

सन्धिस्तोत्रं प्रशंसति—

पराच्यो वा अन्या व्युच्छन्ति प्रतीच्योऽन्या एषा वाव प्रतीची व्युच्छति याऽऽश्विनेन व्युच्छति प्रतीचीरेवाऽस्मा उषसो विवासयति ॥ ४ ॥

अन्याः काश्चिदुषसः सूर्य्योदयप्राचीनकालावस्थाः पराच्यः पुनरागमनरहितेन पराङ्मुखत्वेन युक्ता वर्त्तन्ते। पुनरावृत्तेरादित्यादायुःक्षयहेतवो भवन्ति। ताभ्योऽन्याः काश्चिदुषसः प्रतीच्यः पुनरावृत्तिरूपेण प्रत्यङ्मुखत्वेन युक्ता आयुषः क्षयं न कुर्वन्ति। तादृगुषा केति चेत्? उच्यते—येयमुषा आश्विनशस्त्रेण सह व्युच्छति विशेषेणाऽऽविर्भवति एषा वाव एषैवोषा प्रतीची संमुखेत्युच्यते। तस्मादाश्विनशस्त्रेण दिनद्वयसन्धिवर्त्तिना सर्वा उषसो यजमानार्थं प्रतीचीरेव प्रत्यङ्मुखा एव कृत्वा विवासयति प्रकटीकरोति ॥ ४ ॥

अत्र स्तोत्रीयाणां सङ्ख्यां प्रशंसति—

द्वे सꣳस्तुतानां विराजमतिरिच्येते एषा वै स्तनवती विराड् यं कामं कामयते तमेतां दुग्धे ॥ ५ ॥

अस्मिन् क्रतौ संस्तुतानां स्तोत्रियाणां मध्ये द्वे स्तोत्रीये विराज-मतिक्रम्य वर्त्तेते । तद्यथा द्वादशस्तोत्रेषु प्रकृतिवन्नवत्यधिकशतमित्येकोनविंशतिविराजः । त्रिषूकथस्तोत्रेष्वेकविंशस्तोमे सति त्रिषष्टिस्तोत्रीयाः । तत्र षड्विराजः । तिस्रस्स्तोत्रीया अतिरिच्यन्ते । द्वादशस्तोत्रेषु पञ्चदशस्तोमे सति अशीत्यधिकं शतं स्तोत्रीयाः । तत्राऽष्टादश विराजः । सन्धिस्तोत्रे त्रिवृत्स्तोमे सति नव स्तोत्रीयाः । तत्र पूर्वोक्तानां तिसृणामध्ये एकया स्तोत्रीयया सह विराट् भवति । ततो द्वे स्तोत्रीये अवशिष्येते । ते विराड्रूपाया योषितस्स्तनस्थानीये । तस्मादेषा विराट् स्तनवती सम्पन्ना । एतां विराजं कामधेनुसदृशीं यजमानस्याऽपेक्षितं सर्वं कामं दुग्धे ॥ ५ ॥

बहिष्पवमानस्य सन्धिस्तोत्रगतौ स्तोमौ प्रशंसति—

**त्रिवृता प्रैति त्रिवृतोदेति प्राणो वै त्रिवृत्प्राणेनैव प्रैति प्राणमभ्युदेति ॥ ६ ॥**

त्रिवृत्स्तोमेनेमं क्रतुं प्रैति प्रारभते । उदेति समापयति । प्राणवृत्तित्रयसाम्यात् त्रिवृतः प्राणरूपता त्रिवृता प्राणमेवाभिलक्ष्य प्रारम्भसमाप्ती सम्पद्येते ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे विंशाध्यायस्य प्रथमः खण्डः ॥

## द्वितीयः खण्डः ॥

सर्वस्तोमाख्यस्याऽतिरात्रस्य स्तोमक्लृप्तिं दर्शयति—

**त्रिवृद्बहिष्पवमानं पञ्चदशान्याज्यानि सप्तदशो माध्यन्दिनः पवमान एकविꣳशानि पृष्ठानि त्रिणव आर्भवस्त्रयस्त्रिꣳशोऽग्निष्टोमः प्रत्यवरोहीण्युक्थानि त्रिणवं प्रथमं द्वे एकविꣳशे सषोडशिके पञ्चदशी रात्रिस्त्रिवृत्सन्धिः ॥ १ ॥**

अत्र त्रीण्युक्थानि प्रत्यवरोहीणि विपरीतक्रमोपेतानि । स एव क्रमास्त्रिणवमित्यादिना स्पष्टीक्रियते—त्रिषु प्रथमं स्तोत्रमधिकसंख्यायुक्तेन त्रिणवस्तोमेनोपेतम् । उत्तरे द्वे स्तोत्रे न्यूनसंख्यायुक्तेनैकविंशस्तो-

मसोपेते । ते च द्वे स्तोत्रे सषोडशिके । अतः षोडशिस्तोत्रेऽप्येकविंशस्तोमः । पूर्वोक्तक्रतुः षोडशिरहितः, अयं त्वतिरात्रः सषोडशिकः । स्पष्टमन्यत् ॥ १ ॥

अत्राऽधिकारिणमाह—

सर्वस्तोमेनाऽतिरात्रेण बुभूषन्यजेत सर्वस्याऽऽप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाऽऽप्नोति सर्वं जयति ॥ २ ॥

यः पुमानैश्वर्यमिच्छति सोऽत्राऽधिकारी । अयञ्च क्रतुरैहिकस्याऽऽमुष्मिकस्य प्रापणीयस्य सर्वस्य प्राप्त्यै समर्थः । तथा जेतव्यस्य च सर्वस्य शत्रुसमूहस्य जयाय पर्याप्तः । तस्मादेतेन क्रतुना प्राप्तव्यं सर्वमपि प्राप्नोति, जेतव्यं सर्वं जयति ॥ २ ॥

अस्मिन् क्रतौ विद्यमानान् स्तोमान् विद्यमानानि छन्दांसि च प्रशंसति—

यत्त्रिवृद्बहिष्पवमानं भवति तत्त्रिवृतꣳ स्तोममाप्नोति गायत्रीं छन्दो यत् पञ्चदशान्याज्यानि तत् पञ्चदशꣳस्तोममाप्नोति त्रिष्टुभं छन्दो यत्सप्तदशो माध्यन्दिनः पवमानस्तत्सप्तदशꣳ स्तोममाप्नोति जगतीं छन्दो यदेकविꣳशानि पृष्ठानि तदेकविꣳशꣳ स्तोममाप्नोत्यनुष्टुभं छन्दो यत्त्रिणव आर्भवस्तत्त्रिणवꣳ स्तोममाप्नोति पङ्क्तिं छन्दो यत्त्रयस्त्रिꣳशोऽग्निष्टोमस्तत्त्रयस्त्रिꣳशꣳ स्तोममाप्नोति विराजं छन्दो यदुष्णिक्ककुभौ क्रियेते तदुष्णिक्ककुभावाप्नोति यद्बृहतीषु सन्धिना स्तुवन्ति तद्बृहतीमाप्नोति यदाश्विनꣳशस्यते तत्सर्वमेवैतेनाऽऽप्नोति सर्वं जयति ॥ ३ ॥

पृष्ठ्ये षडहे षट्सु दिनेषु क्रमेण त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशाख्याः सर्वे स्तोमा विद्यन्ते । तथा गायत्र्यादीनि छन्दांसि भवन्ति । गायत्रं प्रथममहः, त्रैष्टुभं द्वितीयम्, जागतं तृतीयमानुष्टुभं चतुर्थं, पाङ्क्तं पञ्चमं, सर्वच्छन्दस्कं षष्ठम् । तथा चाऽतिरात्रबहिष्पवमानादिस्तोत्रैस्तद्गतत्रिवृदादिस्तोमाभिमानिदेवताः स्तोमसहभाविगायत्र्यादिच्छन्दोऽभिमानिदेवताश्च प्राप्नोति । अत्र सर्वच्छन्दस्समष्टिरूपत्वेन

विराजोऽभिप्रेत्य तत्प्राप्तिरुच्यते । विशेषेण राजमानत्वात्तद्रूपत्वोपचारः ॥ ३ ॥

अथाऽस्मिन् सर्वस्तोमेऽतिरात्रे पश्वैकादशिनीं विधत्ते—

**प्राञ्चं वै त्रयस्त्रिंᳬशो यज्ञं प्रभुजति तमध्वर्युरेकादशिन्या पुरस्तात्प्रत्युद्यच्छत्येकादश रशना एकादश पशव एकादश यूपा भवन्ति तत्त्रयस्त्रिंᳬशो त्रयस्त्रिंᳬशां प्रतिष्ठापयति ॥ ४ ॥**

योऽयं त्रयस्त्रिंशः स्तोमः सोऽन्त्यस्सर्वेषां स्तोमानां समाप्तिस्थानीयः, 'त्रयस्त्रिंशो वै स्तोमानां प्रतिष्ठे'ति श्रुतेः । स चाऽस्य क्रतोर्मध्येऽग्निष्टोमसाम्नि प्रयुक्तस्सन् प्राञ्चमृजुत्वेन गच्छन्तमेतं यज्ञं प्रभुजति प्रकर्षेण कुटिलं करोति । तमध्वर्युः पुरस्तात् प्रातःकाले कृतया पश्वेकादशिन्या प्रत्युद्यच्छति पुनः कौटिल्यपरिहारेणोद्यतं करोति । एकोत्तराणां दशानां समाहार एकादशिनी । यूपस्तम्भवेष्टनहेतवो रज्जवो रशनाः । तासां रशनानाञ्च प्रत्येकमेकादशसंख्योपेतत्वान्मिलित्वा त्रयस्त्रिंशत्संख्या सम्पद्यते । तथाऽस्मिंस्त्रयस्त्रिंशत्सङ्घे यज्ञकौटिल्यहारिणं त्रयस्त्रिंशस्तोमं प्रतिष्ठापयति ॥ ४ ॥

उक्तक्रत्वनुष्ठायितद्वेदिनोः समानफलमाह—

**तया समुद्यतया रात्र्या यं यं कामं कामयते तं तमभ्यश्नुते यं यं कामं कामयते तं तमभ्यश्नुते य एवं वेद ॥**

समुद्यतया सम्यगनुष्ठितेनाऽनेनाऽतिरात्रक्रतुना । स्पष्टमन्यत् ॥५॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे विंशाध्यायस्य द्वितीयः खण्डः ॥

## तृतीयः खण्डः ॥

अप्तोर्यामाख्यं क्रतुं विवक्षुस्तत्र स्तोमक्लृप्तिं दर्शयति—

**त्रिवृद्बहिष्पवमानं पञ्चदशान्याज्यानि सप्तदशो माध्यन्दिनः पवमान एकविंᳬशᳬं होतुः पृष्ठं छन्दोमा इतराणि त्रिणव आर्भवस्त्रयस्त्रिंᳬशोऽग्निष्टोमः प्रत्यव-**

रोहीण्युक्थानि त्रिणवं प्रथममथैकविंशमथ सप्तदश-मेकविंशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिस्त्रिवृत् प्रथममतिरिक्तस्तोत्रमथ पञ्चदशमथ सप्तदशमथैकविंशम् ॥ १ ॥

इयञ्च स्तोमक्लृप्तिः पूर्वाचार्यैरित्थं संगृहीता—

> आद्यस्तु त्रिवृतः पञ्चदशस्तोत्रचतुष्टयम् ।
> ततः सप्तदशञ्चैकविंशं तस्मात्परस्त्रयः ॥
> छन्दोमास्त्रिणवश्चाऽपि त्रयस्त्रिंशं ततः परम् ।
> त्रिणवश्चैकविंशश्च तथा सप्तदशः परः ॥
> एकविंशं पञ्चदशस्तोत्रेषु द्वादशास्त्रयः ।
> द्वयोस्त्रिवृत् ततः पञ्चदशः सप्तदशस्ततः ॥
> एकविंश इति प्रोक्तमप्तोर्यामे प्रकल्पनमि'ति ॥

पूर्वस्मिन् सर्वस्तोमातिरात्रे एतस्मिन्नप्तोर्यामे च त्रयाणां प्रत्यवरोहीये साम्नि सत्यपि तत्र तृतीयस्योक्थस्यैकविंशस्तोमः, अत्र तु सप्तदश इति विशेषः। सन्धेरुपरि चत्वार्यतिरिक्तानि, ततोऽत्र त्रयस्त्रिंशस्तोत्राणि ॥ १ ॥

यथोक्तकल्पनोपेतस्य क्रतोरप्तोर्यामनामनिर्वचनस्याऽनुकूलामाख्यायिकामाह—

प्रजापतिः पशूनसृजत तेऽस्मात् सृष्टा अपाक्रामꣳस्तानग्निष्टोमेन नाऽऽप्नोत्तानुक्थैर्नाऽऽप्नोत्तान् षोडशिना नाऽऽप्नोत्तान्रात्र्या नाऽऽप्नोत्तान् सन्धिना नाऽऽप्नोत्तानाश्विनेन नाऽऽप्नोत्तानग्निमब्रवीदिमान्म ईप्सेति तानग्निस्त्रिवृता स्तोमेन जराबोधीयेन साम्ना नाऽऽप्नोत्तानिन्द्रमब्रवीदिमान्म ईप्सेति तानिन्द्रः पञ्चदशेन स्तोमेन सत्रासाहीयेन साम्ना नाऽऽप्नोत्तान् विश्वान् देवानब्रवीदिमान्म ईप्सतेति तान्विश्वे देवाः सप्तदशेन स्तोमेन मार्गीयवेण साम्ना नाऽऽप्नुवꣳस्तान्विष्णुमब्रवीदिमान्म ईप्सेति तान् विष्णुरेकविꣳशेन स्तोमेना-

ऽऽप्नोद्वारवन्तीयेनाऽवारयते'दं विष्णुर्विचक्रम' इति व्यक्रमत ॥ २ ॥

अग्निष्टोमस्तोत्रादिकैराश्विनशस्त्रान्तैः प्रयोगविशेषैः पशुप्राप्त्यभावात्प्रजापतिरग्निमब्रवीत्—हे अग्ने तानिमान् पशून् केनाऽप्युपायेन त्वं मदर्थमीप्स प्राप्तुमिच्छ । एवमुक्तस्सोऽग्निः (१)'जराबोध तद्विविड्ढी'त्येतस्यामृच्युत्पन्नं जराबोधीयनामकं साम त्रिवृत्स्तोमयुक्तं प्रयुज्य पशून्प्राप्नोत् । तथैवेन्द्रो विश्वे देवाश्च नाऽऽप्नुवन् । (२)'त्यमु वः सत्रासाहमि'त्यस्यामृच्युत्पन्नं साम सत्रासाहीयम् । (३)'तद्वो गाये'त्यस्यामृच्युत्पन्नं साम मार्गीयवम् । (४)'अश्वन्न त्वा' इत्यस्यामृच्युत्पन्नं साम वारवन्तीयम् । तेनैकविंशस्तोमयुक्तेन विष्णुः पशून् प्राप्याऽपक्रमणान्निवारितवान् । प्राप्तौ स्तोमस्साधनम् । निवारणे साम साधनम् । (५)'इदं विष्णुरि'त्येतया स्तोत्रीयया यथोचितसामोपेतया विष्णुर्व्यक्रमत विशेषेण पशूनामन्तः प्रविवेश ॥ २ ॥

उक्तक्रतावधिकारिणमाह—

यस्मात्प्रप्रेव पशवो भ्रंशेरन् स एतेन यजेत ॥३॥

पशवो गवाश्वादयो यस्मात् पुरुषात् प्रप्रेवाऽत्यन्तप्रकर्षेणैव भ्रष्टा अभवन्, स एतेन क्रतुनेष्ट्वा भ्रंशान्निवार्य्य पशुसमृद्धिं प्राप्नोति ॥ ३ ॥

अस्य क्रतोः सर्वकामप्राप्तिहेतुत्वमाह—

(६)एतेन वै देवा जैत्वानि जित्वा यं यं काममकामयन्त तं तमाप्नुवन् यं कामं कामयते तमेतेनाऽऽप्नोति ॥४॥

---

१. जराबोध तद्विविड्ढि विशेविशे यज्ञियाय । स्तोमं रुद्राय दृशीकम् ॥
सा. सं. पू. १. १. २. ५.

२. त्यमु वः सत्रासाहं विश्वासु गीर्ष्वायतम् । आ च्यावयस्यूतये ॥
सा. सं. पू. २. २. ३. ६.

३. तद्वो गाय सुते सचा पुरुहूताय सत्वने । शं यद्गवे न शाकिने ॥
सा. सं. पू. २. १. ३. १.

४. ( सा. सं. पू. १. १. २. ७. ) पृष्ठे २५३ ऋगियं द्रष्टव्या ।

५. इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समूढमस्य पांसुरे ॥
सा. सं. उ. ८. २. ५.

६. तै. ब्रा. २. ७. १४. ३. द्रष्टव्यम् ।

जेतव्यानि जेतव्यान्यसुरसैन्यानि । देववदन्योऽपि कामितं फलमाप्नोति ॥ ४ ॥

क्रतुनाम्नो निर्वचनं दर्शयति—

**तदाप्तोर्यामाप्तोर्यामत्वम् ॥ ५ ॥**

तत्तस्मादेतेन सर्वमाप्नोतीति व्युत्पत्तेः सद्भावादित्यर्थः । तैत्तिरीयाश्च—'(१)प्रजापतिः पशूनसृजत' इत्याख्यानं सर्वमाम्नायन्ते । निर्वचनमेवमामनन्ति—'यदाप्नोत् तदाप्तोर्यामस्याप्तोर्यामत्वमि'ति । यामन्-शब्दो यामशब्दश्च नियमनार्थः । अयं क्रतुराप्तव्यानां फलानां नियामक इत्यर्थः ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे विंशाध्यायस्य तृतीयः खण्डः ॥

## चतुर्थः खण्डः ॥

नवसप्तदशाख्येऽतिरात्रक्रतौ स्तोमक्लृप्तिमाह—

**त्रिवृद्बहिष्पवमानं पञ्चदशꣳ होतुराज्यं नवसप्तदशानि स्तोत्राण्येकविꣳशोऽग्निष्टोमः सोक्थः पञ्चदशी रात्रिस्त्रिवृत्सन्धिः ॥ १ ॥**

अत्र मैत्रावरुणस्याऽऽज्यमारभ्याऽऽर्भवपवमानपर्यन्तं नवसंख्याकानि स्तोत्राणि सप्तदशस्तोमोपेतानि । अत एवाऽयं क्रतुर्नवसप्तदशाख्यः॥१॥

तस्मिन्नधिकारिणमाह—

**नवसप्तदशेनाऽतिरात्रेण प्रजाकामो यजेत नव वै प्राणाः प्रजापतिः सप्तदशः, प्राणेभ्य एव तदधि प्रजापतेः प्रजाः प्रजायन्ते ॥ २ ॥**

नवच्छिद्रवर्त्तित्वान्नवसङ्ख्याकाः प्राणाः । द्वादशमासपञ्चर्तु(द्वाद-

---

१. तै. ब्रा. ( २. ७. १४. ३. ) अनुवाकस्समग्रो द्रष्टव्यः ।

शसंवत्सर)सप्तदशावयवोपेतः। स एव कालात्मकः प्रजापतिः। तेन नवसप्तदशाख्यक्रत्वनुष्ठानेन प्राणेभ्य एव निमित्तभूतेभ्यः प्रजापतेः कालात्मकादधि बाहुल्येन पुत्रपौत्रादिरूपाः प्रजा उत्पद्यन्ते ॥ २ ॥

कस्याश्चित् स्तोत्रीयायाः स्थाने विशेषं विधत्ते—

**ककुभं प्राचीमुदूहति पुरुषो वै ककुप् गर्भो वा एष मध्यतो धीयते ॥ ३ ॥**

तृतीयसवने योऽयमार्भवः पवमानस्तत्र (१)'पवस्व मधुमत्तम' इति ककुबस्ति, तां प्राचीमुदूहति स्वस्थानादुद्धृत्य ततः पूर्वभाविनीं माध्यन्दिनसवनगतां कृत्वा प्रयुञ्जीत। ककुभः पुत्रोत्पत्तिहेतुत्वात् पुरुषत्वम्। स च ककुब्रूपः पुरुषो वै गर्भ एव भूत्वा यज्ञस्योदरस्थाने माध्यन्दिनसवनेऽवस्थाप्यते ॥ ३ ॥

ककुप्छन्दस्कायामुक्तायामृचि साकमश्वनामकं सामविशेषं विधत्ते—

**तस्याᳬं साकमश्वम् ॥ ४ ॥**

भवतीति शेषः ॥ ४ ॥

तत्साम प्रशंसति—

**प्रजापतिः प्रजा असृजत ता न प्राजायन्त स एतत् सामाऽपश्यत्ता अश्वो भूत्वाऽभ्यजिघ्रत्ताः प्राजायन्त प्रजननं वा एतत् साम ॥ ५ ॥**

प्रजापतिना सृष्टाः प्रजाः पुत्रपौत्रादिप्रकर्षं न प्राप्ताः। प्रजापतिरिदं साम दृष्ट्वा तेन साम्ना स्वयमश्वो भूत्वा ताः प्रजास्तेनेष्ट्वा अभ्यजिघ्रत् सर्वत आघ्राणं तदा कृतवान्। तेन प्रतिबन्धापाये सति ताः प्रजाः प्रकर्षेण पुत्रपौत्रादिरूपेणाऽभिवृद्धिं प्राप्ताः। तस्मात् साकमश्वनामकं साम प्रजोत्पत्तिसाधनं भवत्येव। अश्वरूपेण प्रजापतिना सह वर्तत इति साम्नः साकमश्वनाम सम्पन्नम् ॥ ५ ॥

एतद्वेदनं प्रशंसति—

**प्रजायते बहुर्भवति य एवं वेद ॥ ६ ॥**

पुत्रपौत्रादिरूपेण प्रजननाद्बहुभावः ॥ ६ ॥

---

१. ऋगियं २०० पृष्ठे द्रष्टव्या।

(१)'परि प्र धन्वे'त्येतां द्विपदामृचं विधत्ते—

द्विपदां ककुभो लोके करोति गर्भमेव तद्धितं मध्यतः प्रजनयति ॥ ७ ॥

आर्भवपवमानाद्या ककुबुद्धृता, तस्या लोके स्थाने द्विपदां कुर्यात् । तत्तेन द्विपदायाः करणेन यज्ञस्य मध्यतो हितमुदरे स्थापितं पुरुषरूपं गर्भमुत्पादयत्येव ॥ ७ ॥

अस्य क्रतोरतिरात्रत्वं प्रशंसति —

अतिरात्रो भवत्यहोरात्रे वा अनु प्रजाः प्रजायन्तेऽहोरात्रे एवाऽनु प्रजया पशुभिः प्रजायते ॥ ८ ॥

रात्रिमप्यतीत्य परदिनपर्य्यन्तं वर्त्तत इत्ययं क्रतुरतिरात्रः । लोके हि जायमानाः प्रजाः अहश्च रात्रिश्चाऽनुसृत्यैवोत्पद्यन्ते, उभयातिरिक्तस्य कालस्याऽभावात् । कालद्वयव्यापिक्रतोरनुष्ठाने सत्यहनि रात्रौ च सर्वदा पशुप्रजासमृद्धो भवति ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे विंशाध्यायस्य चतुर्थः खण्डः ॥

---

## पञ्चमः खण्डः ॥

विषुवदतिरात्राख्यक्रतोः स्तोमक्लृप्तिमाह—

त्रिवृत् बहिष्पवमानं पञ्चदशान्याज्यानि पञ्चदशो माध्यन्दिनः पवमानः सप्तदशानि पृष्ठानि सप्तदश आर्भव एकविंशोऽग्निष्टोमः सप्तदशान्युकथानि पञ्चदशी रात्रिस्त्रिवृत्सन्धिः ॥ १ ॥

स्पष्टोर्थः ॥ १ ॥

अस्मिन् क्रतावधिकारिणमाह—

विषुवताऽतिरात्रेण ज्येष्ठं ज्यैष्ठिनेयं याजयेद्विषुवान् वा एष स्तोमानां विषुवानेव भवति ॥ २ ॥

---

१. पृष्ठे २०२ द्रष्टव्येयमृक् ।

विष्लृ व्याप्ताविति धातोरुत्पन्नो विषुशब्दः । स च्यन्तः मध्यवर्त्तिन-मेकविंशमग्निष्टोममाचष्टे । तस्यैकविंशस्योभयत आरोहावरोहरूपाभ्या-मवस्थितैः स्तोमैर्व्याप्तत्वात् । पूर्वत्र त्रिवृत्पञ्चदशानामनुक्रमादारोहः । उत्तरत्र सप्तदशत्रिवृतां व्युत्क्रमेणाऽवस्थानादवरोहः । एवमुभयतो व्याप्तत्वाद्विषुनामक एकविंशो यस्मिन् क्रतावस्ति सोऽयं विषुवान् । यस्या योषितो ज्येष्ठो भ्राता विद्यते सा ज्यैष्ठिनी । तस्याः पुत्रो ज्यैष्ठि-नेयः । यः पुमान् भ्रातृणां मध्ये ज्येष्ठः सोऽत्राऽधिकारी । एष क्रतुः स्तोमानां यज्ञानां मध्ये पूर्वोक्तरीत्या विषुवानेव । तदनुष्ठाताऽपि विषु-वानेव भवति । अत्र पुरस्तात् पश्चाच्च बहुभिः सेवकैः व्याप्तः प्रभुः पुरुषो विषुरित्युच्यते । तादृशस्य पुरुषस्य स्वामी विषुवान् प्रभुः पुरुष-स्सेव्यो भवतीत्यर्थः ॥ २ ॥

मध्यवर्त्तिनमेकविंशस्तोमं प्रशंसति—

**यदेक एकविꣳशो भवत्येकविꣳशो वा इतोऽसा-वादित्यो द्वादश मासाः पञ्चर्त्तवस्त्रय इमे लोका असा-वादित्य एकविꣳश आदित्यस्यैवैनं मात्रां गमयति ॥ ३ ॥**

त्रिवृदादयः स्तोमाः आरोहावरोहाभ्यामावर्त्तितत्वात् प्रत्येकं द्वित्वमापन्नाः । एकविंशस्त्वनावर्त्तित एक एवाऽऽदित्यवदवतिष्ठत इति यदस्ति तेनैनं यजमानं आदित्यस्यैव मात्रां गमयति, यावानादि-त्यस्य महिमाऽस्ति तावन्तं महिमानमाप्नोति । कथमादित्यवदवस्थान-मिति चेत् ? संख्यासाम्यादिति ब्रूमः । मासर्तुलोकादित्यरूपेणाऽव-स्थिते जगति तदवयवेषु मासादिक्रमेण परिगणितेष्वादित्य एकविंशो भवति ॥ ३ ॥

तदिदं संख्यासाम्यं आदित्यस्य महिमानं दर्शयति—

**एष वा उदेति न वा एनमन्यत् ज्योतिषां ज्योतिः प्रत्युदेति ॥ ४ ॥**

एष एवाऽऽदित्योऽन्धकारं निवर्त्तयन् प्रतिदिनं प्राच्यां दिश्युदयं गच्छति । ज्योतिषामग्निचन्द्रनक्षत्रादीनां मध्ये यत्किमप्यन्यदादित्यव्य-तिरिक्तं ज्योतिरेनं प्रत्येतस्याऽऽदित्यस्य प्रतिनिधिरूपेण न वा उदेति सर्वथा नोदेति ॥ ४ ॥

ईदृगादित्यमहिम्नो वेदनं प्रशंसति—

**नैनमन्यः स्वेषु प्रत्युदेति य एवं वेद ॥ ५ ॥**

एनं वेदितारं स्वेषु ज्ञातिषु मध्येऽन्यः पुरुषो न प्रत्युदेति प्रतिकूलो भूत्वा नोद्गच्छति, किन्तु सर्वोऽप्येनमनुवर्त्तत एव ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे विंशाध्यायस्य पञ्चमः खण्डः ॥

---

## षष्ठः खण्डः ॥

गोष्टोमातिरात्राख्यस्य क्रतोः स्तोमक्लृप्तिमधिकारिणं फलञ्चाऽऽह—

**पञ्चदशं बहिष्पवमानं त्रिवृन्त्याज्यानि सप्तदशं माध्यन्दिनꣳसवनमेकविꣳशं तृतीयसवनꣳ सोक्थं पञ्चदशी रात्रिस्त्रिवृत्सन्धिर्गोष्टोमेनाऽतिरात्रेण भ्रातृव्यवान्यजेत गवा वै देवा असुरानेभ्यो लोकेभ्योऽनुदन्त रात्र्याऽनपजय्यमजयन्नेभ्यो लोकेभ्यो भ्रातृव्यं प्रणुद्य रात्र्याऽनपजय्यं जयति ॥ १ ॥**

अस्य क्रतोरहनि प्रयुज्यमानो गोष्टोमभागोऽत्र गोशब्देनाऽभिधीयते। तेन गोष्टोमेनाऽसुरापनोदनं सम्पन्नम्। यदप्यन्यदनपजय्यं जेतुमशक्यमसुरसम्बन्धिनगरधनादिकमस्ति तत्सर्वं रात्रौ प्रयुज्यमानेनाऽतिरात्रभागेन देवानामिवाऽनुष्ठातुरप्युभयं सिध्यति ॥ १ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे विंशाध्यायस्य षष्ठः खण्डः ॥

---

## सप्तमः खण्डः ॥

आयुष्टोमातिरात्राख्यस्य क्रतोः स्तोमक्लृप्तिमधिकारिणं पूर्वोत्तर-भागयोर्विभज्य फलञ्चाऽऽह—

त्रिवृत् बहिष्पवमानं पञ्चदशान्याज्यानि सप्तदशं माध्यन्दिनँ सवनमेकविँशं तृतीयसवनं सोक्थं पञ्चदशी रात्रिस्त्रिवृत्सन्धिरायुष्टोमेनाऽतिरात्रेण स्वर्गकामो यजेतोर्ध्वाः स्तोमा यन्त्यनपभ्रँशाय यदतिरात्रो भवत्यहोरात्राभ्यामेव स्वर्गं लोकमेति ॥ १ ॥

पूर्वभागेन त्रिवृदाद्या एकविंशान्ताः स्तोमा ऊर्ध्वाः अनुक्रमेण प्रवृत्ता इति नाऽस्त्यपभ्रंशः । उत्तरभागेन सहाऽहोरात्रानुष्ठानं स्वर्गसाधनम् ॥ १ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे विंशाध्यायस्य सप्तमः खण्डः ॥

## अष्टमः खण्डः ॥

अभिजिदतिरात्राख्यस्य क्रतोः स्तोमक्लृप्तिमधिकारिणं भागद्वय-फलञ्चाऽऽह—

त्रिवृत् बहिष्पवमानं पञ्चदशँ होतुराज्यँ सप्तदशं मैत्रावरुणस्य पञ्चदशं ब्राह्मणाच्छँसिनः सप्तदशमच्छावाकस्यैकविँशो माध्यन्दिनः पवमानः सप्तदशं होतुःपृष्ठमेकविँशं मैत्रावरुणस्य त्रिणवं ब्राह्मणाच्छँसिन एकविँशमच्छावकस्य त्रिणव आर्भवस्त्रयस्त्रिँशोऽग्निष्टोमः प्रत्यवरोहिण्युक्थानि त्रिणवं प्रथमं द्वे एकविंशे सषोडशिके पञ्चदशी रात्रिस्त्रिवृत्सन्धिरभिजिताऽतिरात्रेण भ्रातृव्यवान्यजेताऽभिजिता वै देवा असुरानिमान् लोकानभ्यजयन्त्रात्याऽनपजय्यम-

जयन्नभिजितैव भ्रातृव्यमिमान् लोकानभिजित्य राध्या-ऽनपजय्यं जयति ॥ १ ॥

इमान् लोकान् पृथिव्यन्तरिक्षद्युलोकानभिलक्ष्याऽसुरानजयन् लोके-भ्योऽसुरान्निरसारितवन्तः । स्पष्टमन्यत् ॥ १ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे विंशाध्यायस्याऽष्टमः खण्डः ॥

---

## नवमः खण्डः ॥

विश्वजिदतिरात्राख्यस्य क्रतोः स्तोमक्लृप्तिमधिकारिणञ्चाऽऽह—

स्पष्टोऽर्थः ॥ १ ॥

त्रिवृत् बहिष्पवमानं पञ्चदशॅं होतुराज्यॅंसप्त-दशं मैत्रावरुणस्यैकविॅंशं ब्राह्मणाच्छॅंसिनः पञ्च-दशमच्छावाकस्य सप्तदशो माध्यन्दिनः पवमान एक-विॅंशं होतुः पृष्ठं त्रिणवं मैत्रावरुणस्य सप्तदशं ब्राह्म-णाच्छॅंसिन एकविॅंशमच्छावाकस्य त्रिणव आर्भव-स्त्रयस्त्रिॅंशोऽग्निष्टोमः प्रत्यवरोहीण्युक्थानि त्रिणवं प्रथमं द्वे एकविॅंशे सषोडशिके पञ्चदशी रात्रिः त्रि-वृत्सन्धिर्विश्वजिताऽतिरात्रेण पशुकामो यजेत ॥१॥

स्पष्टोऽर्थः ॥ १ ॥

अनेन पशुप्राप्तिः कथमित्याशङ्क्य शस्त्रद्वारेणेत्यभिप्रायेणाऽऽह—

रेतो हि नाभानेदिष्ठीयं पशवो वालखिल्या य-न्नाभानेदिष्ठीयं पूर्वॅंशस्यत उत्तरा वालखिल्या रेत-सस्तत्पशवः प्रजायन्ते रूपाणि विकरोति यद्वार्षाकप-मृतुषु प्रतितिष्ठति यदेवयामरुत् ॥ २ ॥

विश्वजितस्तृतीयसवने शस्त्रिणां मध्ये होता (१)नाभानेदिष्ठीयं शंसति। (२)'इदमित्था रौद्रं गूर्त्तवचा' इत्येतत्सूक्तं नाभानेदिष्ठीयम्, नाभानेदिष्ठेन मुनिना दृष्टत्वात्। मैत्रावरुणस्तु (३)'अभि प्र वः सुराधसमि'त्याद्याः वालखिल्याख्या ऋचश्शंसति। तत्र नाभानेदिष्ठीयं रेतोरूपम, तल्लिङ्गस्य श्रूयमाणत्वात्। तथा हि काचिदृगेवं पठ्यते—

(४)'मनानग्रेतो जहतुर्वियन्ता सानौ निषिक्तं सुकृतस्य योनौ।

पिता यत् स्वां दुहितरमधिष्कन्क्ष्मया रेतः सञ्जग्मानो निषिञ्चदि'ति

वालखिल्यास्तु पशुरूपाः, तासां बृहतीच्छन्दस्त्वात्। (५)'बार्हताः पशव' इति श्रुत्यन्तरे श्रवणात्। अतो नाभानेदिष्ठीयेन रेतसि सिक्ते सति तस्माद्रेतसो वालखिल्याभिस्साध्याः पशवः प्रजायन्ते। ब्राह्मणाच्छंसी तु(६) 'वि हि सोतोरसृक्षते'ति सूक्तं शंसति। तच्च वार्षाकपम्, वृषाकपिना दृष्टत्वात्। तेन वार्षाकपेन पशुषु गोमहिषाश्वधेनुबलीवर्दवृषादिरूपाणि विकरोति विशेषेण सम्पादयति। अच्छावाकस्तु (७)'प्र वो महे मतयो यंतु विष्णव' इत्येतत् सूक्तं शंसति। तच्च सूक्तं एवयामरुन्नामकम्, केनचित् एवयामरुता मुनिना दृष्टत्वात्। यदिदं सूक्तमस्ति तेन वसन्ताद्यृतुषु प्रतितिष्ठति॥ २॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे विंशाध्यायस्य नवमः खण्डः॥



१. नाभानेदिष्ठो नाम मनोः पुत्रः कश्चिदृषिः तैत्तिरीयसंहितायां(३.१.११.४.)श्रुतः।

२. 'इदमित्था रौद्र'मित्यादिसप्तविंशत्यृगात्मकं नाभानेदिष्ठियं सूक्तं ऋग्वेदे (८.१.२६.) द्रष्टव्यम्।

३. 'अभि प्र वस्सुराधसमिन्द्रमर्च यथा विदे।
यो जरितृभ्यो मघवा पुरूवसुस्सहस्रेणेव शिक्षती'·
त्यारभ्य एकादश सूक्तानि वालखिल्यानि ऋग्वेदे (६.४.१४.) द्रष्टव्यानि।

४. ऋ. सं. ८. १. २७. ५. तै. सं. ५. ३. २.

६. 'विहि सोतोरसृक्षते'ति त्रयोविंशत्यृगात्मकं सूक्तं ऋग्वेदे (८.४.१.) द्रष्टव्यम्।

७. 'प्र वो महे मतयो यन्तु'' इति नवर्चं सूक्तमृग्वेदे (४. ४. ३३.) द्रष्टव्यम्।

## दशमः खण्डः ॥

अथैकस्तोमकाश्चत्वारोऽतिरात्राः सन्ति। तेषु त्रिवृदतिरात्रः प्रथमः, पञ्चदशातिरात्रो द्वितीयः, सप्तदशातिरात्रस्तृतीयः, एकविंशातिरात्रश्चतुर्थः। तानेतान् चतुरोऽतिरात्रान् तत्तदधिकारिणस्तत्फलानि च क्रमेणाऽऽह—

त्रिवृताऽतिरात्रेण ब्रह्मवर्चसकामो यजेत तेजो वै त्रिवृत् ब्रह्मवर्चसं तेज एव ब्रह्मवर्चसमवरुन्धे तेजसि ब्रह्मवर्चसे प्रतितिष्ठति पञ्चदशेनाऽतिरात्रेण वीर्यकामो यजेतौजो वीर्यं पञ्चदश ओज एव वीर्यमवरुन्ध ओजसि वीर्ये प्रतितिष्ठति सप्तदशेनाऽतिरात्रेणाऽन्नाद्यकामो यजेताऽन्नं वै सप्तदशोऽन्नाद्यमेवाऽवरुन्ध एकविंशेनाऽतिरात्रेण प्रतिष्ठाकामो यजेत प्रतिष्ठा वा एकविंशो यदतिरात्रो भवत्यहोरात्रयोरेव प्रतितिष्ठति ॥

अत्र त्रिवृदादीनां ब्रह्मवर्चसादिफलहेतुत्वं यच्छ्रुतं तत् पूर्वमसकृदुपपादितम्। स्पष्टमन्यत॥ १ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे विंशाध्यायस्य दशमः खण्डः ॥

---

## एकादशः खण्डः ॥

उक्तास्त्रयोदशप्रकारा अतिरात्राः। अथाऽहीनेषु द्विरात्रा वक्तव्याः। तेष्वङ्गिरसां द्विरात्रं विधत्ते—

ज्योतिष्टोमोऽग्निष्टोमः पूर्वमहः सर्वस्तोमोऽतिरात्र उत्तरम् ॥ १ ॥

पूर्वस्मिन्नहनि प्रकृतितो विशेषो नाऽस्ति ॥ १ ॥

उत्तरस्याऽहः स्तोमक्लृप्तिमाह—

तस्य चतुर्विंशं बहिष्पवमानं पञ्चदशान्याज्यानि

सप्तदशो माध्यन्दिनः पवमान एकविꣳशानि पृष्ठानि त्रिणव आर्भवस्त्रयस्त्रिꣳशोऽग्निष्टोमः प्रत्यवरोहीण्युक्थानि त्रिणवं प्रथममथैकविꣳशमथ सप्तदशमेकविꣳशः षोडशी पञ्चदशी रात्रिस्त्रिवृत् सन्धिः ॥ २ ॥

अस्याऽध्यायस्य द्वितीयखण्डे यः सर्वस्तोमोऽतिरात्र उक्तः, तस्मिंस्त्रिवृद्बहिष्पवमानमत्र चतुर्विंशम्, तथा तृतीयमुक्थं तत्रैकविंशम्, अत्र तु सप्तदशमिति विशेषः ॥२॥

अनयोरह्नोः क्रमेण सामद्वयविधिमभिप्रेत्योपाख्यानमाह—

आङ्गिरसः स्वर्गं लोकमायꣳस्तेषाꣳहविष्माꣳश्च हविष्कृच्चाऽङ्गिरसावहीयेतां तावागच्छेतां यतोऽङ्गिरसः स्वर्गं लोकमायꣳस्तावतप्येतां तावेते सामनी अपश्यतां ताभ्यां द्विरात्रमतन्वातां तेन स्वर्गं लोकमैताम् ॥ ३ ॥

अङ्गिरोनामका ऋषयः सत्रमनुष्ठाय तेन सत्रेण स्वर्गं लोकं प्राप्नुवन्। तथा च तैत्तिरीया आमनन्ति—(१)'अङ्गिरसो वै सत्रमासत ते सुवर्गं लोकमायन्नि'ति। तेषामङ्गिरसां मध्ये हविष्मान्नामक एक ऋषिः हविष्कृन्नामकोऽपरस्तावुभावहीयेताम्। तयोरुभयोः सत्रानुष्ठानं स्वर्गप्राप्तिश्च नाऽऽसीत्। इतरेऽङ्गिरसो यतो यस्माद्देशात् स्वर्गं प्राप्नुवन् स देशः स्वर्गप्राप्तिहेतुरिति मन्वानावुभौ तं देशमागतौ। तावेतौ स्वर्गप्राप्त्यभावे सति तत्प्राप्तिसाधनमिच्छन्तौ तपोऽकुरुताम्। तेन च तपोबलेन स्वर्गप्रापके सामनी अपश्यताम्। ताभ्यां सामभ्यां द्विरात्रनामकं क्रतुमतन्वातां विस्तरेणाऽनुष्ठितवन्तौ। तयोस्साम्नोर्मध्ये हविष्कृन्नामकं साम प्रथमेऽह्नि 'स्वादिष्ठये'त्यस्यां गेयम्। अथ द्वितीयं हविष्मन्नामकं यत्साम तदेतद् द्वितीयेऽहनि(२) 'अस्य प्रत्नामनु द्युतमि'त्यस्यामृचि गातव्यम्। उक्तसामोपेतेन द्विरात्रेण तावुभौ स्वर्गं लोकं प्राप्नुताम्। तस्माद् द्विरात्रक्रतौ सामद्वयं गायेदित्यभिप्रायः ॥ ३ ॥

उक्तक्रताबधिकारिणमाह—

यः पौण्यो हीन इव स्यात् स एतेन यजेताऽऽप्नोति पूर्वेषां प्रहामाप्नुताꣳहि तावाङ्गिरसः ॥ ४ ॥

---

१. तै. सं. ७. १. ३. १.  २. पृष्ठे १८५ ऋगियं द्रष्टव्या ।

## दशमः खण्डः ॥

अथैकस्तोमकाश्चत्वारोऽतिरात्राः सन्ति। तेषु त्रिवृदतिरात्रः प्रथमः, पञ्चदशातिरात्रो द्वितीयः, सप्तदशातिरात्रस्तृतीयः, एकविंशातिरात्रश्चतुर्थः। तानेतान् चतुरोऽतिरात्रान् तत्तदधिकारिणस्तत्फलानि च क्रमेणाऽऽह—

त्रिवृताऽतिरात्रेण ब्रह्मवर्चसकामो यजेत तेजो वै त्रिवृत् ब्रह्मवर्चसं तेज एव ब्रह्मवर्चसमवरुन्धे तेजसि ब्रह्मवर्चसे प्रतितिष्ठति पञ्चदशेनाऽतिरात्रेण वीर्यकामो यजेतौजो वीर्यं पञ्चदश ओज एव वीर्यमवरुन्ध ओजसि वीर्ये प्रतितिष्ठति सप्तदशेनाऽतिरात्रेणाऽन्नाद्यकामो यजेताऽन्नं वै सप्तदशोऽन्नाद्यमेवाऽवरुन्ध एकविंꣳशेनाऽतिरात्रेण प्रतिष्ठाकामो यजेत प्रतिष्ठा वा एकविंꣳशो यदतिरात्रो भवत्यहोरात्रयोरेव प्रतितिष्ठति ॥

अत्र त्रिवृदादीनां ब्रह्मवर्चसादिफलहेतुत्वं यच्छ्रुतं तत् पूर्वमसकृदुपपादितम्। स्पष्टमन्यत् ॥ १ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे विंशाध्यायस्य दशमः खण्डः ॥

---

## एकादशः खण्डः ॥

उक्तास्त्रयोदशप्रकारा अतिरात्राः। अथाऽहीनेषु द्विरात्रा वक्तव्याः। तेष्वङ्गिरसां द्विरात्रं विधत्ते—

ज्योतिष्टोमोऽग्निष्टोमः पूर्वमहः सर्वस्तोमोऽतिरात्र उत्तरम् ॥ १ ॥

पूर्वस्मिन्नहनि प्रकृतितो विशेषो नाऽस्ति ॥ १ ॥

उत्तरस्याऽहः स्तोमक्लृप्तिमाह—

तस्य चतुर्विंꣳशं बहिष्पवमानं पञ्चदशान्याज्यानि

सप्तदशो माध्यन्दिनः पवमान एकविंशानि पृष्ठानि त्रिणव आर्भवस्त्रयस्त्रिंशोऽग्निष्टोमः प्रत्यवरोहीण्युक्थानि त्रिणवं प्रथममथैकविंशमथ सप्तदशमेकविंशः षोडशी पञ्चदशी रात्रिस्त्रिवृत् सन्धिः ॥ २ ॥

अस्याऽध्यायस्य द्वितीयखण्डे यः सर्वस्तोमोऽतिरात्र उक्तः, तस्मिंस्त्रिवृद्बहिष्पवमानमत्र चतुर्विंशम्, तथा तृतीयमुक्थं तत्रैकविंशम्, अत्र तु सप्तदशमिति विशेषः ॥२॥

अनयोरह्नोः क्रमेण सामद्वयविधिमभिप्रेत्योपाख्यानमाह—

आङ्गिरसः स्वर्गं लोकमायंस्तेषांहविष्मांश्च हविष्कृच्चाऽऽङ्गिरसावहीयेतां तावागच्छेतां यतोऽङ्गिरसः स्वर्गं लोकमायंस्तावतप्येतां तावेते सामनी अपश्यतां ताभ्यां द्विरात्रमतन्वातां तेन स्वर्गं लोकमैताम् ॥ ३ ॥

अङ्गिरोनामका ऋषयः सत्रमनुष्ठाय तेन सत्रेण स्वर्गं लोकं प्राप्नुवन्। तथा च तैत्तिरीया आमनन्ति—(१)'अङ्गिरसो वै सत्रमासत ते सुवर्गं लोकमायन्नि'ति। तेषामङ्गिरसां मध्ये हविष्मान्नामक एक ऋषिः हविष्कृन्नामकोऽपरस्तावुभावहीयेताम् । तयोरुभयोः सत्रानुष्ठानं स्वर्गप्राप्तिश्च नाऽऽसीत् । इतरेऽङ्गिरसो यतो यस्माद्देशात् स्वर्गं प्राप्नुवन् स देशः स्वर्गप्राप्तिहेतुरिति मन्वानावुभौ तं देशमागतौ। तावेतौ स्वर्गप्राप्त्यभावे सति तत्प्राप्तिसाधनमिच्छन्तौ तपोऽकुरुताम् । तेन च तपोबलेन स्वर्गप्रापके सामनी अपश्यताम् । ताभ्यां सामभ्यां द्विरात्रनामकं क्रतुमतन्वातां विस्तरेणाऽनुष्ठितवन्तौ। तयोस्साम्नोर्मध्ये हविष्कृन्नामकं साम प्रथमेऽह्नि 'स्वादिष्ठये'त्यस्यां गेयम् । अथ द्वितीयं हविष्मन्नामकं यत्साम तदेतत् द्वितीयेऽहनि(२)'अस्य प्रत्नामनु द्युतमि'त्यस्यामृचि गातव्यम् । उक्तसामोपेतेन द्विरात्रेण तावुभौ स्वर्गं लोकं प्राप्नुताम् । तस्मात् द्विरात्रक्रतौ सामद्वयं गायेदित्यभिप्रायः ॥ ३ ॥

उक्तक्रतावधिकारिणमाह—

यः पौण्यो हीन इव स्यात् स एतेन यजेताऽऽप्नोति पूर्वेषां प्रज्ञामाप्नुतांहि तावाङ्गिरसः ॥ ४ ॥

---

१. तै. सं. ७. १. ३. १.  २. पृष्ठे १८५ ऋगियं द्रष्टव्या।

तस्मात्तेषु पुण्येषु कर्म्मसु साधुः पौण्यः तादृशोऽपि सन् यः पुमान् हीन इव स्यात् पुण्यात्मनां सर्वैः पूज्यानां पुरुषाणां मध्ये हीन इव पूजारहित इव भवेत्, स पुमानेतेन द्विरात्रेण यजेत । इष्ट्वा पूर्वेषां पूज्यानाम्मध्ये प्रहां प्रकृष्टगतिं प्राप्नोति । ओहाङ्गताविति धातोरयं शब्दः । हि यस्मात् कारणात् अङ्गिरसः वचनव्यत्ययेनाऽन्वयः । अङ्गिरसां स्वर्गं प्राप्तानां गतिं द्विरात्रेणाऽनेन तावुभौ हविष्मद्धविष्कृतौ प्राप्नुताम् । तस्मादेतेनोत्तमगतिर्युक्ता ॥ ४ ॥

अस्य क्रतोः फलान्तरमाह—

**प्रजाकामो यजेत द्वितीयं ह्येतद्यत्प्रजाः ॥ ५ ॥**

पुत्रपौत्रादिरूपा प्रजा यदस्ति तदेतत् स्वापेक्षया द्वितीयम् । तस्मादनेन द्वितीयपरातिरात्रयुक्तेन क्रतुना प्रजासिद्धिरुपपन्ना ॥ ५ ॥

पुनः फलान्तरमाह—

**स्वर्गकामो यजेत द्वितीयाद्धि लोकात्परो लोकोऽभिप्रक्रम्यो दुराधो द्विरात्र इत्याहुर्यदग्निष्टोमः पूर्वमहर्भवत्युक्थ्यमन्तर्यन्ति यद्युक्थ्योऽग्निष्टोमम् ॥ ६ ॥**

भूलोकः प्रथमः, अन्तरिक्षलोको द्वितीयः । तस्मात्पर ऊर्ध्वभावी स्वर्गो लोकोऽभिप्रक्रम्यः अभिलक्ष्य प्रकर्षेण गन्तव्यः । हि यस्मादेवं तस्मात् लोकद्वयस्थानीयेन द्विरात्रेण तृतीयलोकस्य स्वर्गस्य प्राप्तिर्युज्यते । ब्रह्मवादिनां द्विरात्रक्रतुरस्तीति सोऽयं दुराधः दुःखेनाऽऽराधनीय इति ब्रह्मवादिन आहुः । कथमिति चेत्? तदुच्यते—उत्तरमहस्तावदतिरात्र इति स्थितम्। पूर्वमहः किमग्निष्टोमान्तः स्यात्? उक्थ्यो वा? अग्निष्टोमश्चेदुक्थ्यमन्तर्यन्ति परित्यज्यन्ति । उक्थ्यश्चेदग्निष्टोमं परित्यजन्ति । सोऽयं दुःखाराध्य इत्यभिप्रायः ॥ ६ ॥

तस्याऽऽक्षेपस्य परिहारमाह—

**यज्ज्योतिरुक्थ्यः पूर्वमहर्भवति नाऽग्निष्टोममन्तर्यन्ति नोक्थानि ॥ ७ ॥**

तिष्ठतु तावत्पूर्वस्याऽग्निष्टोमत्वपक्षः । यद्यदि पूर्वमहरुक्थ्यो ज्योतिः उक्थ्यसंस्थारूपो ज्योतिष्टोमो भवति, तदानीं पञ्चदशस्तोत्रयुक्ते तस्मिन् द्वादशस्तोत्रयुक्तमग्निष्टोमं न अन्तर्यन्ति, न परित्यजन्ति ।

उत्तराणि च त्रीण्युक्थस्तोत्राणि न परित्यजन्ति । तस्मान्नोक्थशेषोऽस्ति ॥ ७ ॥

ननु वक्ष्यमाणे द्विरात्रे चैत्ररथे पूर्वस्याऽह्न उक्थ्यत्वादस्त्वयं दोषपरिहारः । आङ्गिरसे तु द्विरात्रे कथं दोषपरिहारः ? इत्याशङ्क्याऽऽह—

**तदाहुरेषा वाव यज्ञस्य मात्रा यदग्निष्टोमो यदग्निष्टोमः पूर्वमहर्भवति यज्ञस्य मात्रां नाऽतिक्रामत्यथोत्तरस्याऽह्न उक्थेभ्योऽधि रात्रिमुपयन्ति तेनोक्थान्यनन्तरितानि ॥ ८ ॥**

तत्तस्य चोदितदोषस्याऽभिज्ञा ये ब्रह्मवादिनः ते परिहारमाहुः—कथमिति चेत् ? तदुच्यते-अग्निष्टोम इति यदस्ति एषा वाव यज्ञस्य मात्रा सर्वस्य सोमयागस्य तावत्येव स्वरूपपरिमितिः । अग्निष्टोमस्य सर्वसोमयागप्रकृतित्वेन सर्वस्वरूपस्योपपत्तेः। एवं सति यद्यग्निष्टोमस्य पूर्वमहर्भवेत् तदानीं सर्वस्य यज्ञस्य मात्रां स्वरूपपरिमाणमनुष्ठाता नाऽतिक्रामति नोल्लङ्घयति । अथाऽनन्तरमुत्तरस्याऽह्न उक्थेभ्योऽधिरात्रिमुपयन्ति रात्रिस्तोत्राण्यनुतिष्ठन्ति । तस्मादुक्थानामप्यतिक्रमो नाऽस्ति । इत्थमग्निष्टोमत्वपक्षेऽपि दोषपरिहारः ॥ ८ ॥

उत्तरेऽहनि प्रथमस्तोमं प्रशंसति—

**चतुर्विꣳशं बहिष्पवमानं भवत्युत्तरस्याऽह्नश्चतुर्विꣳशत्यक्षरा गायत्री प्रजननं गायत्री प्रजात्यै ॥ ९ ॥**

स्पष्टोऽर्थः ॥ ९ ॥

सर्वान् स्तोमान् प्रशंसति—

**उभये स्तोमा युग्मन्तश्चाऽयुजश्च तन्मिथुनं तस्मान्मिथुनात्प्रजायते ॥ १० ॥**

चतुर्विंशस्य समसंख्योपेतत्वाद्युग्मत्वम् । बहुवचनं पूजार्थम् । स्पष्टमन्यत् ॥ १० ॥

अस्याऽतिरात्रस्य त्रिवृदादित्रयस्त्रिंशान्तं निखिलस्तोमयुक्तत्वं प्रशंसति—

**(१)सर्वस्तोमोऽतिरात्रो भवति सर्वस्याऽऽप्त्यै सर्वस्य**

१. तै. सं. ५ ४. १२. ३. द्रष्टव्यम् ।

**जित्यै सर्वमेवैतेनाऽऽप्नोति सर्वं जयति ॥ ११ ॥**

अतिरात्रस्य सर्वस्तोमयुक्तत्वं यदस्ति, तदेतत् सर्वस्य प्रापणीयस्य प्राप्त्यर्थम् । अपरं व्याख्यातम ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे विंशाध्यायस्यैकादशः खण्डः ॥

## द्वादशः खण्डः ॥

आङ्गिरसं द्विरात्रमुक्त्वा चैत्ररथं द्विरात्रमाह—

**अथ यस्य ज्योतिरुक्थ्यः पूर्वमहर्भवत्यायुरतिरात्र उत्तरम् ॥ १ ॥**

पूर्वस्मिन् द्विरात्रे अग्निष्टोमः पूर्वमहः । अस्मिन् द्विरात्रे उक्थ्यसंस्थो ज्योतिष्टोम उत्तरमहः । यस्य द्विरात्रस्यैवमहःक्लृप्ति तं द्विरात्रं अनुतिष्ठेदिति शेषः ॥ १ ॥

अस्य द्विरात्रस्य स्तोत्रीयासंख्यामुपजीव्य प्रजोत्पत्तिहेतुत्वं दर्शयति—

**तिस्रः पूर्वस्याऽह्नो विराजमतिरिच्यन्ते द्वाभ्यामुत्तरमहर्विराज ऊनमूनातिरिक्तं वा अनुप्रजाः प्रजायन्ते ॥ २ ॥**

अत्र यदेतत् पूर्वमहरुक्थ्यसंस्थज्योतिष्टोमरूपं तस्य सम्बन्धिनीषु स्तोत्रीयासु दशसंख्यया विच्छिद्य विराट्रूपत्वेन विद्यमानासु तिस्रः स्तोत्रीया विराट्रूपत्वमतीत्य वर्त्तन्ते । ते अग्निष्टोमभागे तावन्नवत्यधिकं शतम् । अत एकोनविंशतिविराजः सम्पद्यन्ते । त्रिषूक्थस्तोत्रेष्वेकविंशस्तोमयुक्तेषु षष्टिस्तोत्रीयाः । तासु षड्भ्यो विराड्भ्य उपरि तिस्रः स्तोत्रीया अतिरिक्ता भवन्ति । तथा द्वितीयेऽहनि स्तोत्रीयाणां स्वरूपं विराजो द्वाभ्यां न्यूनं भवति । तद्यथा उक्थ्यस्तोत्रपर्य्यन्त आयुष्टोमभागे स्तोत्रीयाणामेकोनषष्ट्यधिकं शतद्वयमिति पूर्वत्रैव व्यवस्थितम् । तथा सति पञ्चविंशतिसंख्याभ्यो विराड्भ्य ऊर्ध्वं नवस्तोत्रीयशेषादेकोना विराड् भवति । अषोडशिको ह्ययमतिरात्रः । तस्मात् षोडशस्तोत्रगता संख्या नाऽऽदरणीया । रात्रिपर्य्यायस्तोत्रेषु द्वाद-

शसु पञ्चदशस्तोमयुक्तेष्वशीत्यधिकं शतं स्तोत्रीया भवन्ति । तत्राऽष्टादश विराजः सम्पद्यन्ते । सन्धिस्तोऽत्रस्य त्रिवृत्स्तोमः । तत्र नवसंख्याकाः स्तोत्रीयाः । सा चैकोना विराड् भवति । एवं सत्युत्तरेऽहनि दूव्यूनं विराजस्वरूपम् । प्रथमेऽहनि विराजस्वरूपं तिसृभिरतिरिक्तम् । ऊनातिरिक्तात्मकं तदुभयस्वरूपमनु प्रजानामुत्पत्तिर्भवति । लोके हि योषितो गुह्येन्द्रियमूनम् लिङ्गरहितत्वात् द्वाभ्यां न्यूनम् । पुंसस्तु द्वाभ्यां लिङ्गेन चाऽतिरिक्तम्, तदुभयं यथा प्रजोत्पादकम् ॥ २ ॥

तद्वेदनं प्रशंसति—

**प्र प्रजया प्र पशुभिर्जायते य एवं वेद ॥ ३ ॥**

स्पष्टोऽर्थः ॥ ३ ॥

प्रकारान्तरेणाऽतिरिक्तं सम्पाद्य प्रशंसति—

**एका सꣳस्तुतानां विराजमतिरिच्यते एकाकिनमेवैनमन्नाद्यस्याऽध्यक्षं करोति ॥ ४ ॥**

प्रथमेऽहनि यास्तिस्रोऽतिरिक्तास्तासां मध्ये द्वयमानीय द्वितीयेऽहनि विराजः पूरणीयाः । तथा सति संस्तुतानां स्तोत्रीयाणां मध्ये विराजमेका स्तोत्रीयाऽतिलङ्घ्य तिष्ठति । तथा यजमानमेवाऽन्नाधिपतिं करोति । अयमेव सर्वेभ्यो बन्धुभृत्येभ्योऽन्नप्रदो भवतीत्यर्थः ॥ ४ ॥

अस्य द्विरात्रस्य चैत्ररथत्वं सम्पादयितुमाख्यायिकामाह—

**एतेन वै चित्ररथं कापेया अयाजयꣳस्तमेकाकिनमन्नाद्यस्याऽध्यक्षमकुर्वꣳस्तस्माच्चैत्ररथीनामेकः क्षत्रपतिर्जायते नुलम्ब इव द्वितीयः ॥ ५ ॥**

कपिगोत्रे समुत्पन्ना महर्षयः कापेयाः । ते ह्येतेनैव द्विरात्रेण चित्ररथनामकं राजानं याजयित्वा तमेवाऽन्नाद्यस्याऽध्यक्षमकुर्वन् । तस्मात्कारणादद्याऽपि क्षत्रवंशोत्पन्नानां मध्ये एक एव राजा क्षत्रपतिर्बलाधिपतिर्भवति । द्वितीयस्तु तस्माद्धेतोः नुलम्ब इव तस्याऽनुचर इव भवति । चित्ररथेनाऽनुष्ठितत्वादयं क्रतुश्चैत्ररथ इत्यभिप्रायः ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे विंशाध्यायस्य द्वादशः खण्डः ॥



## त्रयोदशः खण्डः ॥

कापिवनं द्विरात्रमाह—

**अथ यस्य त्रिवृत्पञ्चदशोऽग्निष्टोमः पूर्वमहर्भव- त्यायुरतिरात्र उत्तरम् ॥ १ ॥**

त्रिवृत्स्तोमसहितपञ्चदशस्तोमो यस्मिन्नग्निष्टोमेऽस्ति सोऽयं त्रिवृत्पञ्चदशः। तत्र सर्वेषु स्तोत्रेषु त्रिवृत्पञ्चदशौ स्तोमौ पर्य्यायेण प्रयोक्तव्यौ । अग्निष्टोमः पूर्वमहः, पूर्ववदायुष्टोमोऽतिरात्रो द्विती- यमहः । यस्यैवमहःक्लृप्तिः सोऽनुष्ठेयः ॥ १ ॥

तत्र प्रथममहः प्रशंसति—

**मिथुनाभ्याᳪंस्तोमाभ्यामुत्तरमहः प्रजनयन्ति तत्प्रजातᳪंइव आरभन्ते चक्रे वा एते साकंवृती यत् त्रिवृत्पञ्चदशौ स्तोमौ यं कामं कामयते तमेतेनाऽभ्यश्नुते यत्र यत्र हि चक्रीवता कामयते तत्तदभ्यश्नुते ॥ २ ॥**

प्रथमेऽहनि मिथुनवत् द्वन्द्वभूतौ द्वौ स्तोमौ । ताभ्यामृत्विजः उत्त- रमहरुत्पादयन्ति । यथा लौकिकामिथुनात् प्रजोत्पत्तिस्तद्वदुत्पन्नं तदहः परेद्युरधिष्ठानं प्रारभन्ते । किञ्च त्रिवृत्पञ्चदशौ स्तोमौ यौ विद्येते एते उभे चक्रे द्वे रथस्थानीयेन प्रथमेनाऽऽप्नोति । यत्रेत्यादिर्लौकिकवृत्ता- न्तः । चक्रयोस्समाहारश्चक्री । स यस्याऽस्तीति सोऽयं रथः चक्रीवान् । लोके पुमान् यत्र यत्र स्थाने गन्तुं कामयते, तत्तत् स्थानं चक्रीवता रथेन प्राप्नोति । तद्वदत्राऽपीत्यर्थः ॥ २ ॥

द्वितीयमहः प्रशंसति—

**अथ यदायुरतिरात्रो भवति प्रतिष्ठित्यै ॥ ३ ॥**

योऽयमायुष्टोमोऽतिरात्रोऽस्ति सोऽयं प्राप्तेषु कामेषु प्रतिष्ठायै स्थै- र्याय सम्पद्यते ॥ ३ ॥

अस्य द्विरात्रस्य कपिवनत्वं दर्शयति—

**एतेन वै कपिवनो भौवायन इष्ट्वाऽऽर्धृततामग- च्छत् ॥ ४ ॥**

भूनामकस्य महर्षेः पुत्रो भौवायनः । कपिवन इति तस्य नाम ।

स एतेन द्विरात्रेण स्वयमरूक्षतामगच्छत्, रूक्षः उग्रः शोषणोपलक्षितः दरिद्रो वा । तद्वैपरीत्येन शान्तः समृद्धो वाऽभवत् । कपिवनेनाऽनुष्ठितत्वात् कापिवन इत्यर्थः ॥ ४ ॥

वेदनपूर्वकानुष्ठानस्य फलमाह—

अरूक्षो भवति य एवं विद्वानेतेन यजते ॥ ५ ॥

स्पष्टोऽर्थः ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे विंशाध्यायस्य त्रयोदशः खण्डः ॥

---

## चतुर्दशः खण्डः ॥

उक्तास्त्रयो द्विरात्राः । अथ त्रिरात्रेषु प्रथमं गर्गत्रिरात्रमाह—

त्रिवृत्प्रातस्सवनं पञ्चदशं माध्यन्दिनꣳ सवनꣳ सप्तदशं तृतीयसवनं पञ्चदशं प्रातस्सवनं सप्तदशं माध्यन्दिनꣳसवनमेकविꣳशं तृतीयसवनꣳसोक्थमेकविꣳशं प्रातस्सवनं त्रिणवं माध्यन्दिनꣳसवनं त्रयस्त्रिꣳश आर्भवश्चतुस्त्रिꣳशोऽग्निष्टोम एकविꣳशान्युक्थानि सषोडशिकानि षोडशं प्रथमꣳ रात्रिषाम पञ्चदशी रात्रिस्त्रिवृत्सन्धिः ॥ १ ॥

अथ त्रीण्यहानि क्रमेणाऽग्निष्टोमोक्थातिरात्ररूपाणि ॥ १ ॥

तमेतं त्रिरात्रं स्तोतुमन्तरिक्ष इत्येतस्याऽहस्त्रयस्य सृष्टिमाह—

प्रजापतिर्वा इदमेक आसीत्तस्य वागेव स्वमासीद्वाग् द्वितीया स ऐक्षतेमामेव वाचं विसृजा इयं वा इदꣳसर्वं विभवन्त्येष्यतीति स वाचं व्यसृजत सेदꣳसर्वं विभवन्त्यैत् सोर्ध्वोदाततनोद्यथाऽपां धारा सन्ततैवं तस्या एति तृतीयमच्छिनत्तद्भूमिरभवद्भूदिव वा इदामिति तद्भूमेर्भूमित्वं कॆति तृतीयमच्छिनत्तदन्तरिक्षमभवदन्तरेव वा इदमिति तदन्तरिक्षस्याऽन्तरि-

क्षत्वऽ३ं हो इति तृतीयमूर्ध्वमुदास्यत् तत् द्यौरभवद्यु-तदिव वा अद इति तद्दिवो दिवत्वम् ॥ २ ॥

इदं प्रतीयमानं जगत् शब्दरूपमर्थरूपञ्च। तयोः शब्दार्थयोः सृष्टेः पुरा प्रजापतिर्वा एक आसीत्। प्रजापतिशब्देनाऽत्र चिदेकरसरूपो मायाशक्तियुक्तः परमेश्वर उच्यते । स एवैकस्तदानीमासीत् । ततस्स परमेश्वर एकः स्वामी, तस्य प्रभुत्वं द्वितीयेत्येवं स्व-स्वामिरूपं द्वयमासीत्। तदानीं परमेश्वर ऐक्षत मनसि विचारित-वान्। कथं विचारितवानिति चेत् ? तदुच्यते—इमामेव मम स्वभूतां द्वितीयां वाचं विसृजे विविधत्वेन सृजामि। तत इयमेव वाङ्मन-स्सङ्कल्पवशादिदं प्रतीयमानं सर्वं जगदिदं विभवन्ती विशेषेण भवन्ती सर्वजगदाकारेण भासमाना सती मामेष्यति प्राप्स्यतीति ।

स इत्थं विचार्य शब्दसामान्यरूपां वाचं व्यसृजत विविधत्वेन सृष्टवान्। ततस्सा शब्दसामान्यरूपा वाक् इदं सर्वं शब्दजातं विशेषेण भवन्ती प्रजापतिमैत् प्राप्नोत्। ततः सा वागूर्ध्वा मायाविशिष्टादव्यक्तादुद्गता सती स्वतस्तच्छब्दविशेषेण रूपेणोदातनोत् उत्कर्षेण समन्ताद्विस्तृ-ताऽभवत्। तत्र दृष्टान्तः-यथा वृष्टावपां धारा मेघादुद्गता सन्तता भूमौ सर्वतो व्याप्ता भवति तद्वद्वेदशास्त्रलौकिकभाषारूपेण या वाक् सन्तता तस्याः सकाशादृक्तृणां गानभागमनपेक्ष्य तृतीयं भागं स प्रजापति-रच्छिनत् पृथक्कृतवान्। स भाग एतीत्युच्चार्य्य प्रदर्श्यते अकार इति-शब्दपरस्सन् एतीति निर्दिश्यते। अकारस्तृतीयो भाग इत्यर्थः। तद-कारस्वरूपञ्चाऽत्र वाक्यार्थरूपा भूमिरभवत्। तदानीं प्रजापतिः स्वम-नस्येवं चिन्तयामास—इदं पृथिवीरूपमभूदिव वै पूर्वमविद्यमानं सदि-दानीं विद्यमानमेवाऽऽसीत् इत्येवं यस्माच्चिन्तितवान्, तत्तस्मात् का-रणादस्या भूमेः (१)अभूदिति व्युत्पत्त्या भूमिनाम सम्पन्नम्। ओमित्य-स्मिन् वाग्व्यवहारे योऽयमादिरकारः सोऽयं वाचकः भूमिर्वाच्याऽ-भूदिति तात्पर्य्यार्थः। स प्रजापतिर्वाचः प्रसादकरं तृतीयभागं सृष्ट्वा पुनः केत्यन्तं तृतीयभागमच्छिनत् पृथक् कृतवान्। तत् कशब्दरूप-वाचकं भूत्वा पुनर्वाच्यमन्तरिक्षमभवत्। तदानीं प्रजापतिरेवं चिन्ति-तवान्-इदं प्रतीयमानं अन्तरिक्षाख्यमन्तरा द्यावापृथिव्योर्मध्य इव वै स्थितमेवेत्यर्थः। यस्मादेवं चिन्तितवान् तत् तस्मादन्तरिक्षलोकस्या-

---

१. एतदन्यथा व्याख्यातं तैत्तिरीयब्राह्मणे आधानप्रकरणे ( १. १. ३. )

ऽन्तरवस्थितमिति व्युत्पत्त्याऽन्तरिक्षनाम सम्पन्नम् । तस्मिन्नाम्नि षकारात् पूर्वं कोऽस्ति, तस्मादसावन्तरिक्षवाचक इत्यभिप्रायः। भूम्यन्तरिक्षवाचकावधारकशब्दौ निर्म्माय तदपेक्षया तृतीयं वाचो भागं हो इति शब्दमूर्ध्वमुदास्यत ऊर्ध्वदेशमुद्दिश्य तद्वाचकत्वेनोत्कर्षेण प्रक्षिप्तवान् । उच्चारितवानित्यर्थः । तदुच्चारणं हो इति शब्दरूपमूर्ध्वदेशवाचकं भूत्वा द्यौरभवत् । तदा प्रजापतिरेवं चिन्तितवान्-अहो द्युलोकरूपं वस्तु अद्युतदिव चन्द्रसूर्य्यादिप्रकाश इव द्योतमानमेवेत्यर्थः । यस्मादेवं तस्मात् द्युलोकस्य दिवत्वं द्युनामकत्वं सम्पन्नम् ॥ २ ॥

प्रजापतिना यान्यकहो इत्येतानि त्रीण्यक्षराणि वाचस्सकाशात् छिन्नानि तानि पुनः प्रशंसति—

**एषा वाव प्रत्यक्षं वागग्रजिह्वाग्रेणैतद्वाचो वदति यदेति मध्येनैतद्वाचो वदति यत् केति सर्वैवैतद्वाचो रसोऽध्यूर्ध्व उद्वदति यद्धो इति ॥ ३ ॥**

यदक्षरं एषैव त्रिरूपा वागस्माकं प्रत्यक्षा यथा भवति तथोपलभ्यते शेषः । यदेति जिह्वेत्यादिना स्पष्टीकरोति । एति यदस्ति अकाररूपं यदक्षरमस्ति एतद्वाचस्सम्बन्ध्यक्षरं जिह्वाग्रेण मातृकामन्त्रोच्चारणेन जिह्वयोः प्रथमव्यापारेण लोको वदति । केति यत् द्वितीयमक्षरमस्ति एतदक्षरं मध्येऽत्र मातृकामन्त्रे षोडशस्वरेभ्य ऊर्ध्वगतेन मध्येन जिह्वाव्यापारेण लोको वदति । हो इति यदक्षरमस्ति तदक्षरस्वरूपं वाचस्सर्वो रसः । अत एवाऽध्यूर्ध्वः मातृकामन्त्र अधिकत्वेनोर्ध्वभागे मन्त्रावसाने हकारः पठितः । तदिदं हो इत्यक्षरं लोकः उद्वदति उच्चस्वरेण पठति ॥ ३ ॥

उक्तानां त्रयाणामक्षराणां सृष्टिं प्रशंसाञ्चोक्त्वा त्रिरात्रक्रतुसम्बन्धमाह—

**यदेतानि रूपाण्यन्वहं व्यज्यन्ते मुखत एव तद्वाचं विसृजन्ते मुखतो यज्ञियं कर्म्म ॥ ४ ॥**

एतान्यकहो इति त्रीण्यक्षररूपाणि त्रिरात्रक्रतावन्वहं प्रतिदिनं व्यज्यन्ते विशेषेणाऽऽज्यस्तोत्रेषु प्रक्षिप्यन्ते । अजगतिक्षेपणयोरिति धातुः । आज्यस्तोत्रेषु कथं विक्षेप इति चेत्? उच्यते—प्रथमेऽहन्य'ग्न आयाहि वीतय' इत्यादावकारः पठितः । द्वितीयेऽहनि 'कया ते अग्ने

अङ्गिरस' इति क शब्द आदौ पठितः। तृतीयेऽहनि 'होता देवो अमर्त्य' इति हो शब्द आदौ पठितः। यद्यस्मादेवं तस्मान्मुखत एव आज्यस्तोत्ररूपे यज्ञस्य मुखभाग एव वाचमक्षरत्रयरूपां विसृजन्ते विशेषेण सम्पादयन्ति। किञ्च यन्नियं यज्ञसम्बन्धि यत् प्रोक्ताक्षरसाध्यमाज्यस्तोत्ररूपं कर्म्म तन्मुखतो यज्ञमुखे सम्पादयन्ति ॥ ४ ॥

अथैतस्य त्रिरात्रस्य पुष्टिहेतुत्वं विवक्षुराह—

**प्रजापतिर्वा इदमेकाक्षरां वाचꣳ सतीं त्रेधा व्यकरोत्त इमे लोका अभवन् रूक्षा अनुपजीवनाः स ऐक्षत कथमिमे लोका लोम गृह्णीयुः कथमुपजीवनीयाः स्युरिति स एतं त्रिरात्रमपश्यत्तमाहरत्तेनेमान् लोकानन्वातनोत्ततो वा इमे लोका लोमाऽगृह्णꣳस्तत उपजीवनीया अभवꣳस्त्रिरात्रस्य वा इदं पुष्टं त्रिरात्रस्योदरणं यदिदमेषु लोकेष्वधि ॥ ५ ॥**

प्रजापतिशब्देनाऽचिन्त्यशक्तिः परमेश्वरो ग्राह्यः। इदमित्यस्य लिङ्गव्यत्ययः स ईश्वरः इमां वाचं त्रेधा भागत्रयरूपेण व्यकरोत् विकारमापादितवान्। कीदृशीं वाचम्? एकाक्षरां सतीम्। वागित्यनेन शब्देन व्यवह्रियमाणत्वात् एकाक्षरा, ककारस्य हलमात्रस्य पृथगक्षरत्वव्यवहाराभावात्। वागिति शब्दस्यैकाक्षरस्य ये विकारास्ते पृथिव्यन्तरिक्षद्युरूपा इमे त्रयो लोका अभवन्। यथा क्षीरं दधि भवति तथा विधिवाक्योपेतत्वात्, एवमीश्वरस्याऽचिन्त्यशक्तिवशाच्छब्दस्य लोकत्रयरूपापत्तिर्द्रष्टव्या। ते च त्रयो लोका अनुपजीवना जीवनहेतुभोग्यद्रव्यरहिताः। अत एव रूक्षाः शुष्काः सन्तापहेतवोऽभवन्। तदा स प्रजापतिरित्थं व्यचारयत्-इमे लोकाः कथं लोम गृह्णीयुः। लोम प्रकृते व्रीहियवादिभोग्य वस्तु। कथं स्वीकुर्य्युः? स्वीकृत्य च प्राणिनामुपभोगेन योग्याः कथं भवेयुः? स प्रजापतिरित्थं विचार्य्य वेदान् पर्य्यालोच्य व्रीहियवाद्युत्पादनसाधनमेतं गर्गत्रिरात्रमपश्यत्। तं क्रतुमाहरदन्वतिष्ठत्। तेनाऽनुष्ठितेन क्रतुना त्रीनिमान् लोकाननुक्रमेण सर्वतो व्याप्तवान्। पर्य्यालोच्य व्रीहियवानेषु लोकेषु चोदपादयत् सामर्थ्यं सम्पादितवान्। तदनन्तरमेव प्रथमेनाऽह्ना भूलोके सामर्थ्यमभूत्, मध्यमेनाऽन्तरिक्षे, उत्तमेन दिवि। ततो वै तदनन्तरमेवेमे लोका लोमोत्पाद्यं तं भोग्यजातम-

गृह्णन्। ओषधिवनस्पतयः पृथिव्या लोम, वृष्टिरन्तरिक्षस्य लोम, चन्द्र-तारकाद्या दिवो लोम। ततो भोग्यसद्भावात् लोका उपजीवनयोग्या अभवन्। यदिदं भोग्यजातमेषु लोकेष्वोषधिवनस्पतीन् लोकान् अधितिष्ठति, तदिदं भोग्यवस्तु त्रिरात्रक्रतोरेव सम्बन्धि पुष्टं पुष्टिकारणम्, यतस्त्रिरात्रस्य सम्बन्धित्वेन उदरणं भोग्यवस्तुवदुद्गमभून्, ततस्त्रि-रात्रस्य पुष्टिहेतुत्वं युक्तम् ॥ ५ ॥

एतद्वेदनं प्रशंसति—

**गच्छति पशूनां भूमानं द्विपदां चतुष्पदां य एवं वेद ॥ ६ ॥**

द्विपदो मनुष्याः पुत्रभृत्यादयो गवादिवद्भोग्यत्वात्पशवः। भूमानं बाहुल्यं गच्छति प्राप्नोति ॥ ३ ॥

पूर्वमकह्वो इत्यक्षरत्रयमुपजीव्य यथा त्रिरात्रः प्रशस्तः, तथैवाक्ष-रेति शब्दमुपजीव्य त्रिरात्रं प्रशंसति—

**प्रजापतिर्यद्वाचं व्यसृजत साक्षरदेवेति प्रथमं चेति द्वितीयं रेति तृतीयं येन येन वै रूपेण प्रजापतिर्वाचं व्यसृजत तेन तेन रूपेणाऽऽज्यानि चाऽऽरभ्यन्तेऽहानि चाऽऽप्यन्ते ॥ ७ ॥**

प्रजापतिः पुनरपि वाचं स्वीकृत्य विविधत्वेन सृष्टवानिति यदस्ति, सा सृष्टा वाक् भिन्नभाण्डस्थितोदकवदक्षरदस्रवदेव। तस्याः सृताया वाचः प्रति प्रथमं रूपं अकार इति शब्दपर एतीति निर्दिश्यते, क्षेति द्वितीयं रूपं, रेति तृतीयमेतदक्षरशब्दनिष्पत्तिः। एवं सति प्रजापतिः येन येन रूपेण वाचं विधत्ते तेन तेन रूपेणाऽऽज्यस्तोत्रारम्भः त्र्यहफ-लभूतलोकत्रयप्राप्तिश्च सम्पद्यते। कथमिति चेत्? उच्यते—अकह्वो इत्येतत्त्रयसृष्टिमुपजीव्याऽऽज्यस्तोत्रारम्भः पूर्वमुदाहृतः। अक्षरेत्येतत् त्रयमुपजीव्य लोकत्रयप्राप्तिरुदाह्रियते–अकारो भूर्लोकः, अयं लोक इति वाक्यस्यादावकारसद्भावात्, क्षेत्यन्तरिक्षलोकः, अन्तरिक्ष इत्यत्र क्ष-कारसद्भावात्। रेति द्युलोकः द्यौरित्यत्र रेफसद्भावात्। एवञ्च सति त्रयाणामह्नां फलभूतास्त्रयो लोका अक्षरेति त्रिभिर्वाग्भवैः प्राप्यन्ते ॥७॥

पुनरपि तमेतं त्रिरात्रं पुरुषसादृश्यसम्पादनेन प्रशंसति—

**तदाहुर्ब्रह्मवादिनोऽक्षरेस्थो वै त्रिरात्र इत्येकाक्षरा**

**वै वाक् त्र्यक्षरमक्षरं त्र्यक्षरः पुरुषः स वा एनं वेदेत्याहुर्य एनं पुरुषसम्मितं वेदेति ॥ ८ ॥**

कथमित्याशङ्क्य तदेवैकेत्यादिना स्पष्टीकृतम् । वागेकाक्षरा वै ककारस्य पृथगक्षरत्वाभावाद्वाचो निष्पन्नमक्षरमिति पूर्वोक्तरीत्या त्रिरात्रेऽयमक्षरे स्थितो भवति । मन्त्ररूपया वाचा निष्पन्नत्वात् एकाक्षरायां वाचि स्थितिः । एति क्षेति रेति त्रिरात्रफलानां लोकानामुक्तत्वादक्षरनाम्नि त्र्यक्षरे स्थितिः । पुरुष इत्येतदपि नाम त्र्यक्षरम् । ततः पुरुषतुल्यत्वम् । वेद स पुमानिदं त्रिरात्रं वेद । इतिशब्द उक्तार्थसमाप्त्यर्थः ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे विंशाध्यायस्य चतुर्दशः खण्डः ॥

---

## पञ्चदशः खण्डः ॥

प्रकारान्तरेण गर्गत्रिरात्रं स्तौति—

**एतेन वै देवा एषु लोकेष्वाध्नुवन्नेतेन स्वर्गं लोकमायन् ॥ १ ॥**

ये पुरुषा देवत्वं वाञ्छन्ति, ते पुरा एतं त्रिरात्रमन्वतिष्ठन् । ते एतेनैव त्रिरात्रेणैषु लोकप्रदेशेषु भोग्यवस्तुसमृद्धिं प्राप्य तत एतेन त्रिरात्रेण देहपातादूर्ध्वं देवा भूत्वा स्वर्गं लोकं प्राप्नुवन् ॥ १ ॥

पूर्वखण्डोक्तमर्थमनूद्याऽग्निवाय्वादित्यानामक्षरादुत्पत्तिमाह—

**वाग्वै त्रिरात्रो वाचो रूपेणाऽऽज्यानि चाऽऽहानि च विभज्यन्त एकाक्षरा वै वाक् त्र्यक्षरमक्षरमक्षरस्य रूपेण विभज्यन्ते त्रयो गन्धर्वास्तेषामेषा भक्तिरग्नेः पृथिवी वायोरन्तरिक्षमसावादित्यस्य द्यौस्त्रयो घर्मास उषसꣳ सचन्ते ॥ २ ॥**

वाग्रूप एव आज्यस्तोत्राणामप्यकहो इति यत् तत्र उत्पन्नोऽक्षरशब्दस्त्र्यक्षरः । तस्य शब्दस्य त्रिविधेन रूपेण त्रयो देवाः । अनेन वाचोरूपेण निष्पद्यन्ते त्रीण्यहानि । अक्षरोत्पत्तिस्त्रिर्वाचोरूपलोकत्रया-

त्मकैर्विगमस्य सम्पाद्यन्ते । एतावाननुवादः। अथाऽऽम्यायुत्पत्तिरुच्यते तत्र त्र्यक्षरगेकाक्षरा ककारस्याऽर्द्धमात्रस्य पृथगक्षरत्वाभावात् । तत्र उत्पन्नोऽक्षरशब्दस्त्र्यक्षरः । तस्य शब्दस्य त्रिविधेन रूपेण त्रयो देवा विभागेनोत्पद्यन्ते । देवा गन्धर्वाः । अथाऽऽम्यायुत्पत्तिरुच्यते-तस्य शब्दस्य त्रिविधेन रूपेणेमां वाचं त्रेधा रवतीति व्युत्पत्तेः यौगिक इत्यर्थः । एतेषां त्रयाणां देवानां एषा वक्ष्यमाणा भक्तिर्भजनं स्थानं अग्निवाय्वादित्यदेवतानां पृथिव्यादिकं स्थानमित्येतत्प्रसिद्धमेव । अस्मिन्नर्थे सम्बन्धाय कस्यचिन्मन्त्रस्य पादं पठति-'त्रयो घर्मास उषसं सश्चन्त' इति । घर्मासो दीप्यमाना देवास्त्रयोऽग्निवाय्वादित्या उषसं उषा कालरूपिणी तमोनिवारणेनोत्पन्ना, तां देवाः सचन्ते सेवन्ते ॥ २ ॥

मन्त्रार्थं विविच्य दर्शयति—

**अग्निरुषसꣳ सचते वायुरुषसꣳ सचतेऽसावादित्य उषसꣳसचते ॥ ३ ॥**

अग्निर्देवः पृथिव्यां उषोदेवीं सेवते । तया कृतं तमोनिवारणमनुभवतीत्यर्थः । एवं वाय्वादित्यावप्यन्तरिक्षद्युलोकयोरिति द्रष्टव्यम् ॥३॥

अस्त्येवमग्न्यादीनामुषस्सेवा । प्रकृते किमायातम् ? इत्याशङ्क्याऽऽह—

**त्रीणि मिथुनानि तान्येषः ॥ ४ ॥**

अग्निवाय्वादित्यास्त्रयो गन्धर्वाः पुरुषा लोकत्रयेऽपि उषसः योषिता मिलिताः तन्मिलितेन त्रीणि मिथुनानि भवन्ति। तानि चैषः त्र्यस्त्रिरात्रः त्रित्वसंख्यायाः समानत्वात् । तस्मादयं प्रसिद्ध इत्यर्थः ॥ ४ ॥

किञ्च मिथुनावयवौ द्वौ तत्पुत्रश्चैकः, इत्यनेनाऽपि प्रकारेण त्रित्व साम्यात् प्रशस्त इत्याह—

**मिथुनं द्वे सम्भवतो मिथुनाद्यत्प्रजायते तत्तृतीयम् ॥५॥**

द्वे स्त्रीपुरुषशरीरे सम्भवत इति यदस्ति तदेतन्मिथुनमुच्यते । स्पष्टमन्यत् ॥ ५ ॥

अथाऽस्य त्रिरात्रस्य यागे सहस्रदक्षिणाऽस्ति । तां स्तोतुमाख्यायिकामाह—

(१)इन्द्रो वृत्राय वज्रमुदयच्छत्सोऽब्रवीन्मा मे प्रहार्षीरास्ति वा इदं मयि वीर्यं तत्ते प्रदास्यामीति तदस्मै प्रायच्छत्तद्विष्णुः प्रत्यगृह्णात् स द्वितीयꣳ स तृतीयमुदयच्छत्स एवाऽब्रवीन्मा मे प्रहार्षीरास्ति वा इदं मयि वीर्यं तत्ते प्रदास्यामीति तदस्मै प्रायच्छत्तद्विष्णुः प्रत्यगृह्णादेतद्वाव तदभ्यनूच्यते ॥ ६ ॥

लोकत्रयमावरीतुं प्रतिक्षणं वर्द्धमानेन देहेनोपेतस्त्वष्टुः पुत्रो वृत्रनामकः कश्चिदसुर आसीत्। तद्वधार्थं इन्द्रः कदाचिद्वज्रमुद्यम्याऽवस्थितः। तमिन्द्रं दृष्ट्वा स वृत्र एवमब्रवीत्—हे इन्द्र कदाऽपि मे शरीरं मा प्रहार्षीः मयि वृत्रे वीर्यं सारभूतं इदं वस्त्वस्त्येव। मच्छरीरे रक्षिते सति तद्वस्तु तुभ्यं प्रदास्यामीत्युक्त्वा प्रहारादुपरतायाऽस्मा इन्द्राय तद्वस्तु प्रायच्छत्। इन्द्राय प्रदत्तं तद्वीर्यरूपं वस्तु अस्येन्द्रस्य सखा विष्णुस्तस्मादिन्द्रात्प्रतिगृह्य रक्षितवान्। वृत्रवधार्थं प्रवृत्तस्येन्द्रस्य वज्रोद्यमे विष्णुः साहाय्यं कृतवान्। तदिदं तैत्तिरीया आमनन्ति—'इन्द्रो वृत्राय वज्रमुदयच्छत् विष्णवनुस्थित' इति। विष्णुः साहाय्यादनुस्थित उपविष्ट एव सन् वज्रमुद्यतवानित्यर्थः। वृत्रेण दत्तं तद्वीर्यं इन्द्रः प्रतिगृह्य सख्ये विष्णवे प्रायच्छत् एतदपि त एवाऽऽमनन्ति—'तद्विष्णवेऽतिप्रायच्छत्तद्विष्णुः प्रत्यगृह्णादस्मास्विन्द्र इन्द्रियं दधात्वि'ति। तत्तस्मा इन्द्राय दत्तस्य विष्णुना प्रतिग्राह्यत्वं युक्तम्। स इन्द्रः पुनरपि वृत्रं हन्तुं द्वितीयं द्वितीयवारं अस्मिन्वाक्ये पूर्वोक्तं वज्रमुदयच्छदित्यादिकं विष्णुः प्रत्यगृह्णादित्यन्तं अनुवर्त्तते। पुनरपि स इन्द्रस्तृतीयवारं उदयच्छत्। तदाऽपि स वृत्रः पूर्ववदेव अब्रवीत्। मा मे प्रहार्षीरित्यादिकं पूर्ववद्योज्यम्। तद्वाव त्रिवारञ्च तद्वृत्रमिन्द्रवीर्येण विष्णुना च प्रतिगृहीतं तदेतत्सर्वमेव कयाचिदृचाऽभ्यनूच्यते ॥ ६ ॥

तामेतामृचमुदाहरति—

उभौ जिग्यथुर्न पराजयेथे न पराजिग्ये कतरश्चनैनोः। इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वितदैरयेथामिति ॥ ७ ॥

---

१. तैत्तिरीयसंहितायां द्वितीयकाण्डे चतुर्थप्रपाठके द्वादशोऽनुवाके 'इन्द्रो वृत्राय वज्रमुदयच्छत् विष्णवनुस्थितस्सोऽब्रवीत्' इत्यादिको भागो द्रष्टव्यः।

हे इन्द्राविष्णू युवामुभौ जिग्यथुः सर्वत्र जितवन्तौ। न पराजयेथे क्वाऽपि पराजयं न प्राप्नुथः। एतयोर्मध्ये कतरश्च न एकतरोऽपि पराजिग्ये। द्वितीयं प्रत्यक्षं विनाऽपि क्वाऽपि युद्धे पराजयं न प्राप्तवान्। हे विष्णो त्वमिन्द्रश्चोभौ यदपस्पृधेथां यदा परस्परं स्पर्द्धितवन्तौ तत्र वृत्राल्लब्धं गोसहस्ररूपं वीर्यं त्रेधा विभज्य इन्द्रस्य द्वौ भागौ, विष्णोरेको भाग इत्येवमैरयेथां प्राप्तवन्तौ। इतिशब्दस्समाप्त्यर्थः॥ ७॥

नन्विन्द्राविष्णुभ्यां वृत्रो वीर्यं प्रायच्छदि'ति ब्राह्मणे श्रुतम्। तत्संवादार्थमुदाहृतायामृचि 'सहस्रं श्रुतमि'ति वैयधिकरण्यमाशङ्क्याऽऽह—

**एतद्वा आभ्यां तत्सहस्रं प्रायच्छत्॥ ८॥**

तदेतदेव गोसहस्रमभिहितं वृत्र आभ्यां त्रिविण्वन्द्राभ्यां प्रायच्छत्। तस्मान्न वैयधिकरण्यम्। उदाहृतायामृच्यभिहिता येयमिन्द्राविष्णोः परस्परस्पर्द्धा यश्चेन्द्रस्य भागद्वयं विष्णोरेको भाग इत्येतादृशो गोसहस्रस्य त्रेधा विभागस्तदुभयं तैत्तिरीयैः विस्पष्टमाम्नायते—(१)'अथ या सहस्रतम्यासीत्तस्यामिन्द्रश्च विष्णुश्च व्यायच्छेतां स इन्द्रोऽमन्यताऽनया वा इदं विष्णुस्सहस्रं वर्क्ष्यत इति तस्यामकल्पेतां द्विभाग इन्द्रस्तृतीये विष्णुस्तदेषाऽभ्यनूच्यत उभा जिग्यथुरिती'ति। अस्याऽऽम्नायस्याऽयमर्थः—पुरा कदाचित् प्रजापतिः वसून् रुद्रानादित्यांश्च ससर्ज। एते सर्वे सम्वत्सरं तपस्तप्त्वा गामेकामसृजन्त। सा च गौर्वसूनां गवामेकोनसहस्रे सम्पन्ने सति स्वयं सहस्रसंख्यापूरणी सम्पन्ना। तस्यां गवि ममैवेयमिति विष्णुरिन्द्रश्च परस्परमस्पर्द्धेताम्। तदानीमिन्द्र एवं व्यचारयत्-अनया सहस्रतम्या सहितं गोसहस्रं विष्णुर्मत्सकाशात् ग्रहीष्यतीति। तत इन्द्राविष्णू स्पर्द्धां परिहर्तुं अन्याभिर्गोभिः सहितायां तस्यां सहस्रतमं विभागं कल्पितवन्तौ। तत्रेन्द्रो भागद्वयेऽवस्थितः, विष्णुस्तृतीये भागेऽवस्थितः। तस्मिन्नेवोक्तार्थे उभा जिग्यथुरित्यृगभ्यनूच्यते इति। इत्थमस्मिन् दक्षिणारूपेण दातव्यस्य गोसहस्रस्येन्द्रविषयोपाख्यानेन प्रशंसा कृता॥ ८॥

तत्र गोसहस्रं त्रिषु दिनेषु विभज्य दातव्यम्। तत्र प्रथमदिने प्रतिगृहीतृविशेषं दर्शयति—

---

१. तै. सं. ७. १. ५. ५.

**तस्यैषा भक्तिर्य आर्षेयो विद्वाꣳस्तस्मै प्रथमेऽहनि देयं यथा वा इयं एवꣳ स प्रतिष्ठितेयं प्रतिष्ठितः सः ॥९॥**

तस्य दातव्यस्य द्रव्यस्य एषा वक्ष्यमाणा भक्तिर्भागः। विभज्य दानप्रकारः कथ्यते—ऋषेर्गोत्रप्रवर्त्तकस्य भरद्वाजकश्यपादेः सम्बन्धी पुमानार्षेयः। प्रख्यातकुलगोत्र इत्यर्थः। विद्वान् वेदशास्त्राभिज्ञः। तादृशो यः प्रतिगृहीता तस्मै प्रथमेऽहनि दक्षिणा दातव्या। प्रथमस्याऽह्नः पृथिवीरूपत्वं पूर्वमुक्तम्। इयं प्रथमाहस्स्वरूपा पृथिवी यादृशी तादृगेव स आर्षेयः। उभयोः प्रतिष्ठासम्बन्धस्य तुल्यत्वात् प्रतिष्ठितः ॥ ९ ॥

द्वितीयेऽहनि प्रतिगृहीतृविशेषं दर्शयति—

**योऽनार्षेयो विद्वाꣳस्तस्मै द्वितीयेऽहनि देयं यथा वा अन्तरिक्षमेवꣳ सोऽन्तरिक्षमित्यन्तरिक्षं विदुर्वेदं तस्य विदुः ॥ १० ॥**

अज्ञातकुलगोत्रो वैदेशिकोऽनार्षेयः, द्वितीयाह्नोऽन्तरिक्षरूपत्वादन्तरिक्षद्वारेण वैदेशिकस्य साम्यं नेतुं शक्यम्। अन्तरिक्षमित्यनेन शब्देनाऽन्तरिक्षं द्यावापृथिव्योरन्तरा क्षयति निवसतीति व्युत्पत्त्या सर्वे जना मध्यवर्त्तिनं लोकं विदुः। वैदेशिकोऽपि ज्ञाताज्ञातयोर्म्मध्ये वर्त्तते। तदीयकुलगोत्रयोरज्ञातत्वात्। वेदपाठन्तु तदीयं सर्वे विदुः। अतो द्वितीयेऽहनि प्रतिग्रहयोग्यः ॥ १० ॥

तृतीये प्रतिगृहीतृयोगं दर्शयति—

**य आर्षेयो विद्वाꣳस्तस्मै तृतीयेऽहनि देयं यथा वै द्यौरेवꣳ स द्यौरिति दिवं विदुर्बन्धु तस्य विदुः ॥ ११ ॥**

तृतीयाहस्स्वरूपत्वेनोक्तस्य द्युलोकस्याऽऽर्षेयेण सहजातत्वसाम्यमस्ति। दीव्यति इति द्यौरित्येवं दिवं सर्वे जानन्ति। तस्याऽऽर्षेयस्य बन्धुजातं भ्रातृपुत्रादिकं च जानन्ति ॥ ११ ॥

दातव्ये गोसहस्रे या संख्याऽन्तर्भूताऽस्ति तथा तस्यां शतसंख्यायामन्तर्भूता या संख्याऽस्ति तदुभयं क्रमेण प्रशंसति—

**शतान्यन्वहं दीयन्त एषा वाव यज्ञस्य मात्रा यच्छतं सैव साऽविच्छिन्ना दीयते दशतोऽन्वहं दीयन्ते**

**दशाक्षरा विराड्वैराजो यज्ञः सैव सा विच्छिन्ना दीयते ॥ १२ ॥**

प्रतिदिनं गवां शतानि दीयन्ते । तद्विशेषस्तूत्तरत्र वक्ष्यते । शतमिति यदस्ति एषैव संख्या यज्ञस्य मात्रा सोमयागस्य दक्षिणाद्रव्यपरिमाणम् । प्रकृतौ हि द्वादशाधिकं शतं विहितम्—(१)'तस्य द्वादशशतं दक्षिणाः'इत्याम्नातत्वात् । ततः शतादर्वाचीनसंख्याया अभावाच्छतसंख्या मात्रेत्युच्यते । यैव शतसंख्या सा यज्ञस्य मात्रा भूत्वा प्रतिदिनमविच्छिन्ना दीयते । दशदित्यनेन तकारान्तशब्देन दशानां समूहोऽभिधीयते । (२)'पञ्चद्दशतौ वर्गे वे'ति पाणिनिः । आर्षेयादिभ्यः प्रतिगृहीतृभ्यो दशतो दशसंख्योपेताः वर्गाः प्रतिदिनं दीयन्ते । ते च वर्गाः संख्यासाम्याद्विराट्छन्दोरूपाः । सोमयागश्च वैराजः प्रकृतिगतासु स्तोत्रीयास्वेकोनविंशतिविराट्रूपस्याऽसकृद्दर्शितत्वात् । अतः सैव संख्या विराड्रूपा भूत्वा प्रतिदिनमविच्छिन्ना दीयते ॥ १२ ॥

एकोनसहस्रसंख्याकानां गवां दिनत्रये साम्येन दानं दर्शयति—

**त्रयस्त्रिंशच्च त्रीणि च शतानि प्रथमेऽहनि देयास्तथा द्वितीये तथा तृतीये ॥ १३ ॥**

स्पष्टोऽर्थः ॥ १३ ॥

सहस्रतम्यां गोदानप्रकारमाह—

**अथैषा द्विदेवत्या त्रिरूपा ब्रह्मणो द्वे तृतीये तृतीयमग्नीधः ॥ १४ ॥**

एकोनसहस्रकथनानन्तरमेषा सहस्रतमी कथ्यते । सा चेन्द्रविष्णुरूपदेवताद्वयोपेता, शुक्लकृष्णरोहितवर्णा त्रिरूपा च । तेषु त्रिरूपेषु शुक्लं रूपं प्रथममितरापेक्षया, तथा कृष्णमपि द्वितीयं, रोहितमपि तृतीयम् । तत्र द्वे तृतीये ब्रह्मणो योग्ये, तस्य द्विभागोपेतेन्द्रस्थानीयत्वात् । अवशिष्टं तृतीयमग्नीधो योग्यम् , तस्यैकभागोपेतविष्णुस्थानीयत्वात् ॥ १४ ॥

अथ सहस्रतम्यनुमन्त्रणे मन्त्रमाह—

**काम्याऽसि प्रियाऽसि हव्याऽसीडे रन्ते सरस्वति**

---

१. तां. ब्रा. १६. १. १९. २. पा. सू. ५. २. ६०.

**महि विश्रुत एतानि तेऽघ्न्ये नामानि देवेषु नः सुकृतो ब्रूतात् ॥ १५ ॥**

सहस्रतमी षड्भिः पदैः सम्बोध्यते—हे इडे अन्नरूपे, हे रन्ते रमणीये, हे सरस्वति सरणात्सरः क्षीरं तद्वति, हे महि महति, हे विश्रुते प्रख्याते, हे अघ्न्ये हन्तुमयोग्ये त्वं काम्या कमनीयाऽसि, प्रिया प्रीतिविषयाऽसि, हव्या हविर्दानयोग्याऽसि । एतानीडादीनि काम्यादीनि च तव नामानि । तादृशी त्वं नः अस्मान् सुकृतः शोभनस्य कर्त्तॄन् देवेषु ब्रूतात् देवसमीपे कथय ॥ १५ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे विंशाध्यायस्य पञ्चदशः खण्डः ॥

## षोडशः खण्डः ॥

पुनरपि त्रिरात्रं बहुधा तुष्टुषुरादौ तावत् त्रैलोक्यवर्त्तिपदार्थसमृद्धिहेतून् दर्शयति—

**इदं वाव प्रथमेनाऽह्ना व्यकरोद्यादिदमस्यामध्यायत्तमूलमिदं द्वितीयेन यदिदं प्राणादेजत्यदस्तृतीयेन यद्वर्षन्ति यन्नक्षत्राणि यदमुं लोकं भेजे ॥ १ ॥**

अस्यां पृथिव्यामध्युपरि यदिदं गिरिवृक्षादिकमायत्तमूलमधीनमूलं वर्त्तते स्थावराणां हि मूलानि भूमौ प्रविश्य तिष्ठन्ति तदिदमेतत् स्थावरस्वरूपमयं त्रिरात्रः प्रथमेनाऽह्ना व्यकरोत् विशिष्टं समृद्धं करोतिस्म । प्रथमस्याऽह्नोऽनुष्ठानेन जनितमपूर्वं तत्समृद्धेः कारणमित्यर्थः । यदिदं जङ्गमं मनुष्यपक्ष्यादिरूपं प्राणात् श्वासं कुर्वन् एजति कम्पते, भूम्यन्तरिक्षयोश्चलति तदिदं द्वितीयेनाऽह्ना व्यकरोत् । द्युलोकवर्त्तिवृष्टिनक्षत्रदेवताग्रहादिकं यदस्ति अदः एतत् तृतीयेनाऽह्ना व्यकरोत्॥१॥

अथ महाव्रतरूपतामापाद्य प्रशंसति—

**तदाहुर्ब्रह्मवादिनो महाव्रतं वा एतद्यदेष त्रिरात्र इति तस्यै तदेव मुखं यदेतेषामह्नां बहिष्पवमानं ये अभितोऽहनी तौ पक्षौ यन्मध्यममहः स आत्माऽग्निष्टोमसामानि पुच्छम् ॥ २ ॥**

अग्निचयनोपेतस्य महाव्रतक्रतोः सम्बन्धी योऽयं चित्योऽग्निस्त-स्य मुखपक्षद्वयमध्यदेहपुच्छरूपाः पञ्चावयवाः । तस्य सर्वस्य त्रिरात्रे सम्पादितत्वादयं त्रिरात्रो महाव्रतगतचित्याग्निभावनया कर्मफलसं-मृद्धिं ब्रुवत इत्यभिप्रायः ॥ २ ॥

प्रकारान्तरेण मुखपुच्छे निरूपयति—

**यदेवाऽसावुदेति तन्मुखं ये अभितोऽहर्नी तौ पक्षौ यन्मध्यममहः स आत्माऽग्निः पुच्छम् ॥ ३ ॥**

बहिष्पवमानस्तोत्रात् प्रागेवाऽसाऽवादित्य उदेतीति यदस्ति तदेव मुखम् । आहवनीयाद्यग्निः पुच्छम् ॥ ३ ॥

पुनरपि प्रकारान्तरेण मुखपुछे निरूपयति—

**यदेवाऽसावुदेति तन्मुखं ये अभितोऽहनी तौ पक्षौ यन्मध्यममहः स आत्मा यदस्तमेति तत्पुच्छम् ॥ ४ ॥**

आदित्योऽस्तमेतीति यदस्ति तत्पुच्छमिति द्रष्टव्यम् । त्रिरात्रस्य यदिदं महाव्रतत्वसम्पादनं तदिदमनुतिष्ठासोः प्ररोचनायोपयुक्तम् । अनुष्ठातुमशक्तस्य तु भावनया तत्र कश्चित्सुकृतविशेषो भवति । अय-मेव न्यायः सर्वेष्वर्थवादेष्वनुसन्धातव्यः । एतदेवाऽभिप्रेत्य तत्र तत्र 'य एवं वेदे'त्याम्नायते ॥ ४ ॥

अथ त्रिरात्रे प्रकारान्तरेण भावनां दर्शयति—

**एतावान्वाव त्रिरात्रो गायत्रः प्राणस्त्रैष्टुभं चक्षुर्जा-गतं श्रोत्रं सर्वमायुरेति य एवं वेद ॥ ५ ॥**

यावान् गायत्र्यादिरस्ति एतावानेव त्रिरात्र इति भावयेत् । त्रिरात्रे यानि गायत्रीत्रिष्टुब्जगतीरूपाणि सम्पद्यन्ते तत्सम्बन्धीनि पुरुषमुख-वर्त्तीनि प्राणचक्षुःश्रोत्राणि, तेषु छन्दस्सु प्राणादीनां भावनीयत्वात् । यः पुमानेवं वेद मनसा भावयति स पुमान् सर्वमायुरेति अस्याऽपमृ-त्युर्न भवतीत्यर्थः ॥ ५ ॥

पुनरप्युत्तराभ्यां त्रिरात्रस्य महिमानं विशदयति—

**तदाहुर्ब्रह्मवादिनः कियांꣳस्त्रिरात्र इतीयानिति ब्रूयादियद्ध्येतदभ्यथो इयानिति ब्रूयादियद्ध्येवैतदभिप-राङ्र्वाꣳइत्याहुः पराङिति ब्रूयात्पराङ् हि वदति**

**पराङ् पश्यति पराङ् प्राणित्येका३द्वा३उ तया३इत्याहुरेक इति ब्रूयात् समानो ह्येष यत् प्राणोऽपानो व्यानस्तद्यथा वा अदो मणौ सूत्रमोतमेवमेषु लोकेषु त्रिरात्र ओतः शोभतेऽस्य मुखं य एवं वेद ॥ ६ ॥**

कियानिति पृच्छतां ब्रह्मवादिनामयमभिप्रायः—'इदं वाव प्रथमेनाऽह्ना' इत्यादिना त्रैलोक्यवर्त्तिभोग्यपदार्थसमृद्धिहेतुस्त्रिरात्र इत्युक्तम्। किन्तावानेव त्रिरात्रो भावयितव्यः ? किम्वा ततोऽप्यधिकम् ? इति। इयानेव त्रिरात्रो ध्यातव्यो नत्वधिक इति ब्रह्मवादिना गुरुरुत्तरं ब्रूयात्। तत्रोपपत्तिर्विद्यच्चेतादिति वाक्येनोच्यते—यद्यस्मादयं लोकत्रयपरिमितमेतद्भोग्यजातमभिलक्ष्य त्रिरात्रः प्रसृतः, तस्मादियानेव ध्यातव्यः। अथो अपि च महाव्रतरूपत्वेन च विधानमुक्तम्। तत सर्वत्र कियानिति प्रश्नश्चेदाशङ्क्यते तत्तदानीमियानित्येवोत्तरमुक्तोपपादयेत्। वाचानिकेषु ध्यानादिषु यथावचनमनुतिष्ठेत्, न पुनस्संशयः कर्त्तव्य इत्यर्थः। अयं त्रिरात्रः पराङ् वाऽर्वाङ् वेति प्रश्नस्य पराङित्युत्तरं, परमुत्कर्षमञ्चति गच्छत्यनेनेति पराङ्, उत्कृष्टफलप्राप्तिहेतुरिति ध्यायेत्, न त्वर्वाङधम इत्यर्थः। हि यस्मादयमनुष्ठाता फलकाले पराङुत्कर्षं प्राप्तस्सन् वदनदर्शनप्राणनादिव्यवहारं करोति, न तु कस्मिंश्चिदपि व्यवहारेऽपकृष्टो भवति। तस्मात्फलहेतुः त्रिरात्रः, पराङिति ध्यायेत्।

एको द्वौ त्रयो वाऽयं त्रिरात्रात्मकः क्रतुः। एक एव उत तिसृषु रात्रिषु त्रयः क्रतव इति प्रश्नः। तस्यैक इत्युत्तरम्। हि यस्मात्प्राणोऽपानो व्यान इत्येवं वृत्तित्रयरूपेण वायुस्स्वरूपं वर्त्तते। स वायुस्तिसृष्वपि वृत्तिषु समान एकः, तद्वदयं क्रतुरित्यर्थः। यथेत्यादिनाऽन्यो दृष्टान्त उक्तः—अदः कार्पासादिजनितं सूत्रं मणौ मणिसमूहे यथा ओतमनुस्यूतं तद्वत क्रतुफले लोकत्रयसाधनभूतः क्रतुरनुगतः। य एवं वेद ध्यायति, अस्य देवताशरीरं प्राप्तस्य मुखं शोभते ॥ ६ ॥

सर्वत्र त्रिरात्रस्य त्रैष्टुभं जागतमित्येवं क्रमेण त्रीण्यहानि न्यायतः प्राप्नोति। अत्र तु मध्यममहर्जागतमित्येकदेशवैलक्षण्यं दर्शयति—

**यद्वै त्रिरात्रस्य सलोम तदस्य विलोम यदस्य विलोम तदस्य सलोम तद्यदेतत्परं सदहरवरं क्रियते यजमानायैव तत्पशून् परिगृह्णाति प्रजननाय न ह्यमुष्मिन् लोके पशवः प्रजायन्ते ॥ ७ ॥**

अनुकूलमनुष्ठानं सलोमेत्युच्यते । तद्विपरीतं तु विलोमेति । तथा सति तस्य सर्वस्य त्रिरात्रस्य न्यायप्राप्तं यत् सलोमाऽनुष्ठानं जागतावसानमस्ति, तदस्य गर्गत्रिरात्रस्य विलोम भवति । अत्राऽस्मिन् गर्गत्रिरात्रे जागतस्याऽह्नो मध्यमत्वात् यत् पुनरस्येतरत् त्रिरात्रस्य विलोमरूपं जागतं मध्यमत्वमस्ति, तदस्य गर्गत्रिरात्रस्य सलोम भवति । तस्मिन् गर्गत्रिरात्रे परं स तृतीयप्राप्तियुक्तं सज्जागतमहरवरं मध्यमं क्रियत इति यदेतदस्ति तत्तेन मध्यमत्वकरणेन यजमानार्थमेव पशून् पशुसमूहं परिगृह्णाति । पशूनां जागतत्वं (१)'जगती छन्दसां पशव्यतमे'ति श्रुत्यन्तरात् । स च पशुपरिग्रहः प्रजननाय बहुपशूत्पादनाय सम्पद्यते । जागतस्याऽह्नस्तृतीयत्वे तु तस्य तृतीयस्याऽह्नो द्युलोकरूपत्वात्पशुप्रजननं न सम्भवति । द्युलोके ह्यमृतं पीत्वा तृप्ता देवा गवादिपशून् न सम्पादयन्ति ॥ ७ ॥

प्रकारान्तरेण प्रशंसति—

**एते वाव छन्दसां वीर्यवत्तमे यद्गायत्री च त्रिष्टुप् च यदेते अभितो भवतो मध्ये जगती वीर्यवतीभ्यामेव तच्छन्दोभ्यां पशून् परिगृह्णाति प्रजननाय न ह्यमुष्मिन् लोके पशवः प्रजायन्ते ॥ ८ ॥**

गायत्री त्रिष्टुप् चेति यत् छन्दोद्वयमस्ति, एते छन्दसी उभे एव सर्वेषां छन्दसां वीर्यातिशयोपेते । तत्र गायत्र्याः सोमाहरणेन वीर्यवत्त्वं द्रष्टव्यम् । त्रिष्टुभस्तु वीर्यवत्त्वं सर्वश्रुतिप्रसिद्धम् । एते गायत्रीत्रिष्टुभावभितः प्रथमतृतीययोरह्नोर्भवतः । मध्यमेऽहनि जगती भवतीति यदस्ति तत्तेन त्रिविधानुष्ठानेन मध्यदिनवर्त्तिजगतीसम्पादितान् पशूनुभाभ्यां वीर्यवतीभ्यां तच्छन्दोभ्यां परिगृह्णाति परिपालयति । अन्यत् पूर्ववत् ॥ ८ ॥

अथ त्रिरात्रस्याऽऽदित्यरूपेण ध्यानमाह—

**असौ वाव त्रिरात्रो यथोदेत्येवं प्रथममहर्यथा मध्यन्दिन एवं द्वितीयं यथाऽस्तमेत्येवं तृतीयं गच्छत्यमुष्य सायुज्यं गच्छति सावेश्यं य एवं वेद ॥ ९ ॥**

---

१. तै. सं. ६. १. ५.

असौ द्युलोकवर्त्ती सूर्य्य एव त्रिरात्रस्वरूपः । यथाऽऽदित्यस्योदयमध्यन्दिनास्तमयास्तथाऽस्याऽपि क्रतोस्त्रीण्यहानि सन्ति । क्रतावादित्यस्य दृष्टिः कर्त्तव्या त्रिष्वहस्सु उदयादिदृष्टिरित्यर्थः । यः पुमानेवं वेद ध्यायति स पुनर्ध्यानेनाऽमुष्य सूर्य्यस्य सायुज्यं गच्छतीति ॥

वेदार्थस्य प्रकाशेन तमो हार्द्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीर
बुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते
माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे
विंशाध्यायस्य षोडशः खण्डः ॥

विंशोऽध्यायस्समाप्तिमगमत् ॥



# अथैकविंशोऽध्यायः ॥

## प्रथमः खण्डः ॥

यस्य निश्श्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथैकविंशाध्याय आरभ्यते । तत्र गर्गत्रिरात्रस्य यद्दक्षिणारूपं गोसहस्रं पूर्वमुक्तं, या चोक्ता सहस्रतमी, तयोः प्रशंसार्थमाख्यायिकामाह —

**इन्द्रो मरुतः सहस्रमजिनात् स्वां विशं सोमाय राज्ञे प्रोच्य तस्माद्राज्ञे प्रोच्य विशं जिनन्ति तौ यमोऽशृणोन्मरुतो ह सहस्रमज्याशिष्टामिति स आगच्छत्सोऽब्रवीदुप माऽस्मिन् सहस्रे ह्वयेथामिति तमुपाह्वयेताꣳस यमोऽपश्यदेकाङ्गाꣳ सहस्रेऽपि सहस्रस्य पयो बिभ्रतीꣳ सोऽब्रवीदियमेव ममाऽस्तु सहस्रं युवां विकल्पयेथामिति तावब्रूतां यथा वाव त्वमेतां पश्यस्येवमावमेतां पश्याव इति ॥ १ ॥**

इन्द्रः पूर्वं सोमाय राज्ञे प्रोच्य गोसहस्रजयलक्षणं फलमावयोः सहाऽस्त्विति कथयित्वा सहस्रं सहस्रसंख्याकान्मरुतः अजिनात् हीनानकरोत्। ज्यावयोहानाविति धातुः अत्र हानिमात्रे प्रवर्त्तते । जितवानित्यर्थः । तदेवाऽऽह—स्वां विशमिति । स्वीयां प्रजामित्यर्थः। एतदुक्तं भवति—स्वप्रजाभूतमरुत्सहस्रं जित्वा गोसहस्रं लब्धवानित्यर्थः। यद्वा मरुतस्सहस्रमित्यधिकरणनिर्देशः । मरुतस्सकाशात् गोसहस्रमजिनादित्यर्थः । यस्मादेवं तस्मादिदानीमेता अपि राज्ञे प्रोच्य विज्ञप्यैवं विशः स्वां प्रजां गवादिधनार्थं निगृह्णन्ति । ताविन्द्रसोमौ यमोऽशृणोत् । किमिति ? मरुतः खलु सहस्रं अज्याशिष्टामलभेतामिति । स यमस्तु आगच्छत् । तयोरन्तारितो यमस्तावब्रवीत्—अस्मिन् गोसहस्रे मा मां उपह्वयेथामिति । तौ च तमुपाह्वयेताम् । स उपहूतो यमः अपश्यत् । किम् ? एकाङ्गाम् । सहस्रेऽपि कीदृशीम् ? सहस्रस्य पयः गोसहस्रे यावत्पयोऽस्ति तावत् समृद्धं पयो बिभ्रतीम् । स तां दृष्ट्वा इयमेव ममाऽस्तु, युवां

सहस्रं विकल्पयेथां विभजेथामित्यब्रवीत् । तावपि पुनरेवमब्रूतां तु-यथा वाव त्वमेतां पश्यसि एवमेवाऽऽवामप्यस्मदर्थं पश्याव इति ॥ १ ॥

अथ तेषां समविभागकल्पनाप्रकारमाह—

**तया वा इदꣳ सहस्रं विकल्पयामहा इत्यब्रुवꣳस्तामुदके प्रावेशयꣳस्तेऽब्रुवन्नꣳशानाहरामहै यस्मै न इयं प्रथमायोदेष्यति इति तेꣳशानाहरन्त सोमस्य प्रथम ऐदथेन्द्रस्याऽथ यमस्य ॥ २ ॥**

( विभागस्मे इति विविधमेतास्ते समविभागप्राप्त्यर्थतया वै ) तया सहस्रतम्या सह इदं गोसहस्रं विकल्पयामहै विभजामहा इत्यब्रुवन् । तथोक्तां तामेकां गां विभागकल्पनायोदके प्रावेशयन् । तदनन्तरं ते अंशायैवमब्रुवन्—किमिति ? नः अस्माकं मध्ये यस्मै प्रथमाय प्रथमविभागाय उदेष्यति जलादुद्गमिष्यति, ते वयं गोसहस्रस्य सहस्रतम्याश्चांऽशानाहरामहै कल्पयामहा इति । एवं मिथस्संभाष्य अंशानाहरन्त । तत्र प्रथमोंऽशः सोमं एत् सोममागच्छत् । अथ इन्द्रस्य, अथ यमस्य ॥ २ ॥

अथ गोसहस्रस्य सहस्रतम्याश्च भागत्रयसाम्ये सोमप्राप्तिं दर्शयति—

**तेऽब्रुवन् सोमाय राज्ञ उदेहि तृतीयेन चाऽऽत्मनस्तृतीयेन च सहस्रस्य पयस इति सा बभ्रुः पिङ्गाक्ष्येकवर्षोदैत्तृतीयेन चाऽऽत्मनस्तृतीयेन च सहस्रस्य पयसः सा या सोमक्रयणी सैव सा ॥ ३ ॥**

ते विभागक्रमकल्पनानन्तरमब्रुवन्—हे सहस्रतमि सोमाय राज्ञे प्रथमं उदेहि जलादुद्गच्छ । किंविशिष्टा सती ? आत्मनस्तव तृतीयेनांऽशेन च गोसहस्रस्य च पयसः तृतीयेनांऽशेन सहिता सती । इत्येवमुक्ते सा सहस्रतमी स्वतृतीयांशेन बभ्रुररुणवर्णा पिङ्गाक्षी एकवर्षा सती उदैत् । तैर्यथा प्रार्थितं तथैवेत्युक्तं भवति । 'तृतीयेन चाऽऽत्मन' इत्यादिना अस्याः सोमांशरूपत्वात् सोमक्रयणीत्वमाह । या सा सोमक्रयणी इदानीन्तनैः सोमक्रेतृभिः तत्साधनत्वं कल्प्यते । सैव सोमक्रयणी सा जलादुद्गता बभ्र्वादिलक्षणोपेतेत्यर्थः ॥ ३ ॥

---

( ) अशुद्धमिदम् ।

अथोक्तार्थज्ञानपुरस्सरं क्रयणं प्रशंसति--

**तृतीयेन चाऽस्य तस्या आत्मनस्तृतीयेन च सहस्रस्य पयसः सोमः क्रीतो भवति य एवं विद्वान् सोमं क्रीणाति यस्मा एवं विदुषे सोमं क्रीणन्ति ॥ ४ ॥**

तस्याः बभ्र्वादिलक्षणाया अस्या आत्मनः स्वस्य तृतीयेन भागेन गोसहस्रस्य पयसस्तृतीयांशेन च सोमः क्रीतो भवतीदानीन्तनैः गवा क्रीतोऽपि । य एवमादि स्पष्टम् ॥ ४ ॥

अथेन्द्रभागप्राप्तिं दर्शयति—

**तेऽब्रुवन्निन्द्रायोदेहि तृतीयेन चाऽऽत्मनस्तृतीयेन च सहस्रस्य पयस इति सा शबली पष्ठौह्युदैत् तृतीयेन चाऽऽत्मनस्तृतीयेन च सहस्रस्य पयसः सा यन्द्रियैष्या सैव सा ॥ ५ ॥**

पूर्ववद्व्याख्येयम् । इयांस्तु विशेषः—इन्द्रियैष्या इन्द्रियं इन्द्राय हितं वा । तदेतावताऽवगम्यते—पिङ्गाक्ष्यैकहायन्या सोमः क्रेतव्य इति । तदर्थमेष्या एषणीया दातव्येत्यर्थः । पष्ठौही तु प्रसिद्धा—त्रिवर्षा गौरिति॥५॥

अथोक्तार्थवेदनपुरस्सरामिन्द्रियैष्यादानं प्रशंसति—

**तृतीयेन चाऽस्य तस्या आत्मनस्तृतीयेन च सहस्रस्य पयस इन्द्रियैष्या दत्ता भवति य एवं विद्वानिन्द्रियैष्यां ददाति यस्मा एवं विदुष इन्द्रियैष्यां ददाति ॥ ६ ॥**

अन्यस्या अपि इन्द्रियैष्यायाः गोर्दानेऽपि गोसहस्रतृतीयांशपयोयुक्ता सहस्रतमी तृतीयांशभूतोक्तलक्षणैस्तैरेव दत्ता भवति ॥ ६ ॥

अथ यमस्य स्वांशप्राप्तिं दर्शयति—

**तेऽब्रुवन्यमायोदेहि तृतीयेन चाऽऽत्मनस्तृतीयेन च सहस्रस्य पयस इति सा जरती कुष्ठाऽश्रृङ्ग्युदैद्धूम्रा वा इत्यौहीर्म्मतो ह्रसीयसी तृतीयेन चाऽऽत्मनः तृतीयेन च सहस्रस्य पयसः सा याऽनुस्तरणी सैव सा ॥७॥**

पूर्ववद्व्याख्येयम् । जरतीति जरसा युक्ता कुष्ठा कुष्ठवर्णा अश्रृङ्गी शृङ्गरहिता । उदैत् उदगच्छत । वर्णान्तरप्रसिद्धतरं दर्शयति वा अ-

थवा धूम्रा धूम्रवर्णा(१)दित्यौही ईर्म्मतो जघनप्रदेशतो ह्रसीयसी अ-त्यन्तं ह्रासयुक्तेत्यर्थः।(२)'ईर्म्मान्तासः सिलिकमध्यमास' इत्यादौ तथा दर्शनात्। यद्वा ईर्म्मं व्रणं तत् करोतीत्यर्थः। सोदेदिति सम्बन्धः। अनुस्तरणी मृतसंस्कारार्थमुपाकरणीया गौः। मृतमनुहन्यत इत्यनुस्त-रणीति च व्युत्पत्तिः भवति ॥ ७ ॥

उक्तार्थस्याऽनुस्तरणीकरणं प्रशंसति—

**तृतीयेन चाऽस्य तस्या आत्मनस्तृतीयेन च सह-स्रस्य पयसोऽनुस्तरणी कृता भवति य एवं विद्वाननुस्त-रणीं करोति यस्मा एवं विदुषेऽनुस्तरणीङ्कुर्वन्ति नाऽच-कृवान्मन्यते ॥ ८ ॥**

यदुक्तार्थाभिज्ञोऽनुस्तरणीं ददाति, अप्यस्मै वा उक्तार्थस्याऽनुस्त-रणीं कुर्वन्ति। तेनोभयविधेनोपलक्षणेनाऽनुस्तरण्येव कृता भवति। किञ्च सोऽर्थज्ञः स्वयं आत्मानं उक्तलक्षणानुस्तरणीदानमकृत्वा चकृ-वानिति न मन्यते, किन्तु विहितामेव कृतवानस्मीति मन्यते ॥ ८ ॥

अथ ब्रह्मवादिनां प्रश्नावतारणमुखेन गर्गत्रिरात्रस्य गोसहस्रद-क्षिणादातृप्रशंसाद्वारेण त्रिरात्रगतं दानं प्रशंसति—

**तदाहुर्ब्रह्मवादिनो न वा अमुष्मिन् लोके सहस्र-याऽलोकोऽस्तीति तद्यावदितः सहस्रस्य गौर्गौर्वि प्र-तिष्ठिता तावदस्माल्लोकादसौ लोकः सहस्रयाजी वा इमान् लोकान् व्याप्नोत्यथो यावत् सहस्रं योजनान्यथो सहस्रमाश्वीनान्यथो यावत् सहस्रमह्न्यानि तद्गवा गवा स्पृणोति समाक्रमणाय वा एता दीयन्ते ॥ ९ ॥**

तत्र गोसहस्रदक्षिणकत्रिरात्रविषये आहुः ब्रह्मवादिनः—अमु-ष्मिन् लोके भूलोकव्यतिरेके फलत्वेन प्राप्तव्येषु लोकेष्वित्यर्थः। सह-स्रयाट् सहस्रदक्षिणोपेतगर्गत्रिरात्रावयवः। अलोकः प्राप्तव्यलोकरहित इत्यर्थः। तादृशी नैवाऽस्ति। सर्वोऽप्यस्य भोगोपायविषयीभवतीत्युक्तं भवति। तत्तस्मात् यावदितः अस्मात् लोकात् सहस्रस्य सम्बन्धिनी एकैका गौः एकस्यामेकस्यां गवि प्रतिष्ठिता, तावत्सावन्नोऽस्मात् लो-

१. तै. सं. ५. ६. १५. दित्यौही द्विवर्षा गौः। २. तै. सं. ४. ६. ७. ४.

कादारभ्याऽसौ लोक अमी गन्तव्या उपर्य्युपरि लोका इत्यर्थः । अस्त्वेवम् । किं ततः ? इत्याह-सहस्रयाजी खलु इमान् गोसंख्यापरिमितान् लोकान् क्रमेण भोगाय व्याप्नोति । तदेवोपपादयति-अथो अपि च योजनानि सहस्रं यावत्परिमाणं भूस्वर्गयोरन्तरालमस्ति, अथो अपि च आश्वीनानि एकस्मिन्दिने एकस्य शीघ्रगामिनोऽश्वस्य सम्बन्धीनि योजनान्याश्वीनानि, तेषाञ्च सहस्रं यावद्भवति, अथो अपि च अह्न्यानि अहस्सम्बन्धीनि एकस्मिन्नहनि शीघ्रगामिना पुरुषेण गन्तव्यानि योजनान्यह्न्यानि, तेषाञ्च सहस्रं यावत्परिमाणं भवति तावद्योजनानि गवा गवां सहस्रमध्ये एकैकया गवा एकैकयोजनस्याऽऽक्रमणं युक्तमित्यर्थः ॥ ९ ॥

अथ दक्षिणारूपस्य गोसहस्रस्योपरि तार्प्याच्छादनं विधत्ते—

**सहस्रं यदसृजत तस्य तार्प्यं योनिरासीद्यत्तार्प्यं प्रत्यस्य नयति सयोनित्वाय ॥ १० ॥**

यद्गोसहस्रमसृजत तद्दक्षिणार्थं सृष्टम् । यतत्तस्य तार्प्यं घृताक्तं वस्त्रं तार्प्यमाहु । अन्ये त्वाऽहतं वस्त्रमाहुः । तद्योनिर्योनिवदाच्छादकमासीत् । अतस्तार्प्यं गोसहस्रस्य तर्पणभूतस्य सहस्रतमीरूपस्य वा तार्प्यं प्रत्यस्य विधानं नयति आग्नीध्रं प्रापयति सयोनित्वाय । अत्राऽऽपस्तम्बः—(१)'तामुदीचीमाग्नीध्रं नीत्वा तस्याः पृष्ठे तार्प्यमध्यास्यती'ति ॥ १० ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकविंशाध्यायस्य प्रथमः खण्डः ॥

## द्वितीयः खण्डः ॥

अथ त्रीण्याज्यदोहानि प्रशंसितुमाख्यायिकामाह—

**प्रजापतिः प्रजा असृजत ता अस्मात्सृष्टाः पराच्य आयन्नत्स्यति न इति बिभ्यत्यः सोऽब्रवीदुप मा वर्त्तध्वं तथा वै वोऽत्स्यामि यथाऽद्यमाना भूयस्यः प्रजनिष्यथ इति ताभ्यो वैनं ऋतं ब्रूहीत्यब्रुवꣳस्ताभ्य ऋतनिधनेनरामब्र-**

---

१. आप. श्रौ. २२. १६. २. ।

**वीदीनिधनेनाऽवयत्त्रिणिधनेन प्राजनयदेतैर्हवा इदꣳसा-मभिर्मृत्युः प्रजा अत्ति च प्रजनयति ॥ १ ॥**

पूर्वं प्रजापतिना सृष्टाः प्रजाः स्वयमेव नः अस्मान् अत्स्यति संहरिष्यतीति तद्भक्षणाद्बिभ्यत्यः पराच्यः आयन् आगताः । ताः प्रजापतिरेवमब्रवीत्—मा मामुपावर्त्तध्वमिति । एवमुक्ते ताः प्रजाः ताभ्यो बिभ्यतीभ्यो नो अस्माकं वै खलु ऋतं सत्यं शपथं ब्रूहीत्यब्रुवन् । ताभ्यः प्रजापतिः आज्यदोहगतेन ऋतनिधनेन ऋतं सत्यं वचनमब्रवीत् । तत ई इति निधनेनाऽवयत् । पुनश्च त्रिणिधनेन प्राजनयत् । ( उक्तनिधनवता साम्ना सहाऽस्पृणोत् साधनत्वमिदानीन्तयप्रसिध्याह्वयति ) एतैः खल्वाज्यदोहैः सामभिर्मृत्युः प्राणिहिंसोपाधिकः प्रजापतिः प्रजामत्ति च एतैरेव प्रजनयति पुनरुत्पादयतीदानीमपि ॥ १ ॥

उक्तार्थवेदनं प्रशंसति—

**अद्यमानस्य भूयो भवति य एवं वेद ॥ २ ॥**

उक्तार्थज्ञेनाऽद्यमानमन्यस्य भूयः पुनः पुनः प्रवृद्धमेव भवति, न कदाचिदपि क्षीयते ॥ २ ॥

तानि पुनः प्रकारान्तरेण प्रशंसति—

**ज्येष्ठसामानि वा एतानि श्रेष्ठसामानि प्रजापतिसा-मानि ॥ ३ ॥**

एतान्याज्यदोहानि साम्नां मध्ये ज्येष्ठानि प्रथमभूतानि खलु । तथा श्रेष्ठसामानि गुणैः प्रशस्तानि । तत् कथमिति चेत्? तदाह—यतः एतानि प्रजापतिसामानि, अतः प्रजापतेर्ज्येष्ठत्वात् तत्सम्बन्धादेवाऽन्यान्यपि तथाविधानीत्यभिप्रायः ॥ ३ ॥

वेदनं प्रशंसति—

**गच्छति ज्यैष्ठ्यꣳ श्रैष्ठ्यं य एवं वेद ॥ ४ ॥**

स्पष्टोऽर्थः ॥ ४ ॥

अथ निर्वचनद्वारा प्रशंसति—

**एतैर्वै सामभिः प्रजापतिरिमान् लोकान् सर्वान् कामान् दुग्धे यद्वाच्या दुग्धे तदाच्या दोहानामाच्या दोहत्वम् ॥ ५ ॥**

पूर्वं प्रजापतिरेतैस्सामभिरिमान् लोकान् तेषां जीवनाय सर्वान् कामान् कमनीयान् भोगान् दुग्धे। यद्यस्मादाच्या लौकिको दोग्धा जानुनी आच्य दुग्धे तत् प्रजापतिरपि जानुनी चक्रे कृत्वा सामभ्यां दुग्धे। तत् तस्मादाज्यदोहानां साम्नामाज्यदोहत्वं सम्पन्नम् ॥ ५ ॥

उक्तार्थज्ञानपूर्वकमुक्तसाम्नां प्रयोगं प्रशंसति—

**सर्वानिमान् लोकान् कामान् दुग्धे य एवं विद्वानेतैस्सामभिः स्तुते ॥ ६ ॥**

एतावता एतैः स्तोतव्यमिति विधिरुन्नीयते ॥ ६ ॥

अथ विहितसामत्रयं लोकत्रयरूपत्वेन प्रशंसति—

**इमे वै लोका एतानि सामान्ययमेवर्त्तानिधनमन्तरिक्षमीनिधनं द्यौस्त्रिणिधनम् ॥ ७ ॥**

भूलोकस्य सर्वैरनुभूयमानत्वेन सत्यत्वाहतनिधनसामस्थानत्वं युक्तम्। अन्तरिक्षस्य निराश्रयत्वात् ईनिधनसाम्यम्। ईनिधनस्य स्वरैकाक्षरत्वेन ऋतनिधनद्वयवैषम्येणाऽऽस्ते तत् सादृश्यम्। द्युलोकस्य क्षित्यपेक्षया तृतीयत्वात् त्रिणिधनसाम्यम् ॥ ७ ॥

अथोक्तार्थज्ञानं प्रशंसति—

**यथा क्षेत्रज्ञः क्षेत्राण्यनुसञ्चरत्येवमिमान् लोकाननुसञ्चरति य एवं वेद ॥ ८ ॥**

स्पष्टम् ॥ ८ ॥

अथैतेषां गाने अग्निसान्निध्यं विवक्षुराह—

**अग्नेर्वा एतानि वैश्वानरस्य सामानि यत्र वा एतैरशान्तैः स्तुवन्ति तत् प्रजा देवो घातुको भवत्यग्निमुपनिधाय स्तुवते स्वाया एव तद्देवतायाः साम्येक्षाय नमस्कृत्योद्गायति शान्तैस्स्तुवन्ति ॥ ९ ॥**

एतान्याज्यदोहानि अग्नेर्वैश्वानरस्य सम्बन्धीनि खलु। अतो यत्र यत्र हि यज्ञे अशान्तैः सामभिः स्तुवन्ति, तत्र तत्र देवोऽग्निः प्रजाघातुकः प्रजाहिंसनशीलो भवति। अतस्तत्परिहारायाऽग्निमुपनिधाय स्तुवते। स्तुयुरित्यर्थः। तत् किं कृतं भवति? तत्राऽऽह—तथा सति स्वाया एव एतेषां साम्नां या देवता तस्या एव साम्येक्षाय समदृष्टि-

त्वाय, नमस्कृत्योद्गायति । तथा सति शान्तैरेव स्तुवन्ति । कस्य स्तोत्र· समये ? कः पुनरग्निः ? कथं वा तस्य निधनम् ? इति तत्सर्वं सूत्रकार आह–(१)'आज्यदोहानामग्निमुपनिधाय स्तुवत इति होतुर्धिष्ण्येऽग्निं धारयेयुः प्रथमेऽहनि यं मध्यन्दिन आनयेयुः, प्रातस्सवन उत्तरयोरह्नोः, स्तोत्रवेलायामेनं प्रज्वलयेयुरि'ति । आज्यदोहानामित्यादेरयमर्थः— गर्गत्रिरात्रेऽ'ग्निमुपनिधाय स्तुवत' इति यत्, तदेतदाज्यदोहानां तदङ्ग· त्वेनाऽग्निनिधानमित्यर्थः । होतुर्धिष्ण्य इति । प्रथमेऽहनि आर्भवपवमाने कृतनिधनमाज्यदोहं तस्य गानकाले होतुर्धिष्ण्ये अग्निं धारयेयुः यमग्निं माध्यन्दिनपवमाने 'अग्नीदग्नीन्विहरे'ति प्रैषकाले होतुर्धिष्ण्ये आनयति तमग्निं तदाप्रभृत्याज्यदोहकालं यावद्धारयेयुरित्यर्थः । प्रात· स्सवन उत्तरयोरिति । उत्तरयोरह्नोः प्रातस्सवने यमग्निं धारयन्ति तन्माध्यन्दिनं पवमानं यावद्धारयेयुः । अत्र 'स्थानत्वादाज्यदोहयोरिति त्रिष्वहस्सु स्तुतिकालेऽग्निं प्रज्वलयेयुरि'ति कल्पो द्रष्टव्यः ॥९॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ· प्रकाशे एकविंशाध्यायस्य द्वितीयः खण्डः ॥

## तृतीयः खण्डः ॥

अथ शबलीहोमं विधित्सुराह—

**वाग्वै शबली तस्यास्त्रिरात्रो वत्सस्त्रिरात्रो वा एतां प्रदापयति ॥ १ ॥**

शबली कामधेनुः । सा वाग्वै स्तुतिरूपवागभिमानिदेवतैव । तस्या यो गर्गत्रिरात्रः स एव वत्सस्थानीयः । कथमिति ? तदुपपादयति— एतां शबलीं त्रिरात्रः खलु प्रदापयति पयस्स्थानीयं फलमिति शेषः । तत्त्रिरात्रयाजिनाऽयं होमः कर्त्तव्य इत्युक्तं भवति ॥ १ ॥

उक्तार्थवेदनं प्रशंसति—

**तद्य एवं वेद तस्मा एषा प्रत्ता दुग्धे ॥ २ ॥**

यत् शबल्या वाग्रूपत्वं त्रिरात्रस्य वत्सरूपत्वं यो वेद तस्मा एषा कामधुग्रूपा शबली अप्रत्ता स्वादुपायसादिप्रदाननिरपेक्षैव सती दुग्धे इति ॥ २ ॥

१. लाट्या. श्रौ. ९. ७. १३–१५.

अथाऽस्य फलमाह—

**योऽलमन्नाद्याय सन्नथाऽन्नं नाऽद्यात् ॥ ३ ॥**

अन्नाद्यं नाम पश्वाद्युपभोगः । यो विद्यातपोभ्यां सहस्रपोषार्होऽपि सहस्रं न प्राप्नोति स जुहुयादित्यर्थः । अत्र धानञ्जय्यः—(१) 'वाग्वै शबली तस्यास्त्रिरात्रो वत्स' इति श्रुतेः त्रिरात्रयाजिन एव सहस्रपोषकस्याऽयं होम इति मन्यते । शाण्डिल्यस्तु(२) 'प्रजापतिर्वा इदमेक आसीत्तस्य वागेव स्वमासीदि'त्यादिना त्रिरात्रस्य वत्सत्वं शबल्या मातृत्वं यत्पूर्वं दर्शितं तस्य विज्ञानप्रशंसार्थं 'वाग्वै शबली'ति श्रुतिः । अतोऽधिकारवाक्ये विशेषाश्रवणादादिष्टात्रिरात्रस्याऽपि सहस्रपोषकार्योऽयं होम इत्याह । तथा च सूत्रम्—(३)'सहस्रपोषकामः शबलीहोमं कुर्वीत, नाऽत्रिरात्रयाजीति शाण्डिल्यस्त्रिरात्रो वा एतां प्रदापयतीति ह्याह,यः कश्च सहस्रपोषकाम इति धानञ्जय्य' इति ॥ ३ ॥

अथ शबलीहोमाङ्गं व्रतमाह—

**वरासीं परिधाय तप्तं पिबन् द्वादश रात्रीरधः शयीत ॥ ४ ॥**

अहतं वासो वरासी । तप्तं क्षीरमिति शेषः । अत्र सूत्रम्—(४) 'वसन्ते प्रथमायां पूर्वपक्षस्य केशश्मश्रूणि वापयित्वाऽहतं वसनं परिधायाऽनन्तर्हिते स्थण्डिले द्वादश रात्रीरधश्शयीत तप्तं क्षीरं पिबन्, नित्याभ्याहितोऽस्याऽग्निरावसथे स्यात्, नैनमन्यस्सुहृदः प्रैषकृतोऽनुप्रविशेत, अल्पव्याहारी च स्यादि'ति । प्रैषकृत् कर्मकरस्सुहृत् । अल्पव्याहारी यावदर्थभाषी । स्पष्टमन्यत् ॥ ४ ॥

अथ शबलीहोमं तदाह्वानञ्चाऽऽह—

**या द्वादशी स्यात्तस्या उपव्युषꣳ शबलीहोमꣳ हुत्वा पुरा वाग्भ्यः सम्प्रवदितोर्यत्र ग्राम्यस्य पशोर्नाशृणुयात्तदरण्यं परेत्य दर्भस्तम्बमालभ्य शबलि शबलीति त्रिराह्वयेद्यदन्यच्छुनश्च गर्दभाच्च प्रतिवाश्यते सा समृद्धा ॥ ५ ॥**

---

१ तां. ब्रा. २१. ३. १.
२. तां ब्रा. २०. १४. २.
३. लाट्या. श्रौ. ९. ६. १–२.
४. लाट्या. श्रौ. ९. ८. ४–७.

पूर्वमुक्तस्य द्वादशरात्रस्य याऽन्त्या रात्रिः स्यात्तदुपव्युषं तस्या अपरेद्युः उषःकाल एव शबलीहोमं हुत्वा अनन्तरमेव वाक्संप्रवदनात् पूर्वं यत्र ग्राम्यस्य पशोः ध्वनिर्न श्रूयते तदरण्यमुच्यते । तत्परेत्य दर्भस्तम्बं संस्पृश्य शबलीति त्रिराह्वयेत् । यदि पुनः श्वानात् गर्द-भाद्वाऽन्यः पशुः जात्या यः प्रतिवाश्यते प्रतिशब्दं करोति साऽऽह्वानं किल समृद्धेति जानीयात् ॥ ५ ॥

अथोक्तप्रतिवाशनाभावे उपायमाह—

**यदि न प्रतिवाश्येत संवत्सरे पुनराह्वयेत् ॥ ६ ॥**

स्पष्टोऽर्थः । अत्र सूत्रम्—(१)'द्वादश्या उपव्युषं परिसमुह्याऽग्निं परि-स्तीर्यौदुम्बर इध्मस्स्यात् स्रुक्स्रुवौ च तथा चमसस्तस्माद्दधिमधुस-र्पिरिति स्रुवेण स्रुचि गृह्णीयाच्चतुर्गृहीतमष्टगृहीतं वा, तज्जुहुयाच्छ-बलि समुद्रोऽसीति, स्वाहाकारेणोत्तरां, स्रुचि यश्शेषः स्यात्तं चमस आनीय प्राश्नीयात्, प्रक्षाल्य स्रुक्स्रुवौ चमसञ्च निदध्यात्, तत्रैवाऽनु-प्रहरेदिति शाण्डिल्यायनः, प्राङ्वोदङ्वा ग्रामान्निष्क्रम्य यत्र ग्राम्यस्य पशोर्नाशृणुयात्तदरण्यं परेत्य दर्भस्तम्बमालभ्य शबलि शबलीति त्रिः परमकण्ठेन क्रोशेत्, यदन्यच्छुनो गर्दभाद्वा प्रतिवाश्येत समृद्धं कर्मेति विद्यात्, एवमातृतीयं संवत्सरात्यासमप्रतिवाश्यमाने कुर्वीत, प्रथम-तश्चेत्तु श्वा गर्दभो वा प्रतिवाश्येत न पशूनामाशास्तीति विद्यात्, आ-तृतीयं चाऽप्रतिवाश्यमाने, शान्तिर्वामदेव्यामि'ति ॥ ६ ॥

अथ होममन्त्रमाह—

**शबलि समुद्रोऽसि विश्वव्यचा ब्रह्म देवानां प्रथमजा ऋतस्याऽन्नमसि शुक्रमसि तेजोऽस्यमृतमसि तां त्वा विद्म शबलि दीद्यानां तस्यास्ते पृथिवी पादोऽन्तरिक्षं पादो द्यौः पादः समुद्रः पाद एषाऽसि शबलि तां त्वा विद्म सा न इषमूर्जं धुक्ष्व वसोर्द्धाराꣳशबलि प्रजानाꣳ श्रेष्ठा व्रतमनुगेषꣳस्वाहा ॥ ७ ॥**

हे शबलि विश्वव्यचा सर्वत्र व्याप्ता च समुद्रोऽसि समुद्रस्थानी-या भवसि । फलानां समुद्रवत्साधनं भवसीत्यर्थः । यद्वा 'वाग्वै शब-ली'त्युक्तत्वात्,'वाग्वै समुद्र' इति श्रुतेः, अतः समुद्ररूपत्वम् । तथा ब्रह्म

१. लाट्या. श्रौ. ९. ८. ९–२०

रिवृद्धाऽसि, देवानां मध्ये ऋतस्य सत्यभूतस्य ब्रह्मणः प्रथमजा प्रथमोत्पन्ना भवसि। (१)'हिरण्यगर्भः समवर्त्तताग्रे' इत्यादिश्रुतेः। ब्रह्मण ऋतस्य प्रथमजत्वं तस्य स्वभूतत्वादेषाऽपि प्रथमजा इत्युच्यते। किञ्च त्वं अन्नमसि, धेनुरूपत्वात्। शुक्रं दीप्तमसि अत एव तेजोऽसि। अमृतमसि कदाचिदपि मरणरहिताऽसि। हे शबलि दीद्यानां द्योतमानां तामुक्तमहिमोपेतां त्वा त्वां विद्म विजानीमः। तस्या उक्तरूपायास्ते पृथिव्यादिसमुद्रान्ताश्चत्वारः पादाः। हे शबलि त्वं एषा निर्दिष्टप्रकाराऽसीति तां तादृशीं विद्म वयम्। सा तादृशी त्वं नो अस्मभ्यं इषमन्नं ऊर्जञ्च धुक्ष्व। किञ्च हे शबलि शचिष्ठा अतिशयेन शक्तिमती ह्यस्माकं प्रजानाञ्च वसोर्धारां धुक्ष्व। अहं व्रतमनुगेषं अनुगच्छेयम्। अस्य होमस्य कालमापस्तम्ब आह—(२)'उत्तमदक्षिणां नीत्वोदवसाय वा शबलि समुद्रोऽसी'त्युपक्रम्य शबलीहोमञ्जुहोती'ति ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकविंशाध्यायस्य तृतीयः खण्डः ॥

---

## चतुर्थः खण्डः ॥

उक्तो गर्गत्रिरात्रः। अथाऽश्वत्रिरात्रमाह—

**चतुष्टोमोऽग्निष्टोम एकविꣳश उक्थ्यः सर्वस्तोमोऽतिरात्रः ॥ १ ॥**

त्रिवृदादिचतुष्टोमोऽग्निष्टोमः प्रथममहरेकविंशस्तोमोपेतम्। द्वितीयमहः सर्वस्तोमकम्। अतिरात्रसंस्थं तृतीयमिति ॥ १ ॥

अथैतदश्वमेधत्रिरात्रं प्रजापतेरक्षिसमाधानत्वेन प्रशंसति—

**प्रजापतेर्वा अक्ष्यश्वयत्तत्परापतत्तदश्वोऽभवत्तदश्वस्याऽश्वत्वं तद्देवा अश्वमेधेन प्रत्यदधुरेष वाव प्रजापतिꣳसर्वं करोति योऽश्वमेधेन यजते ॥ २ ॥**

प्रजापतेर्लोचनमक्षि अश्वयत् तदश्वोऽभवत्। तदधः परापतत्। पतितं तदक्षि अश्वत्वेन अरोचयत्। तदश्वस्याऽश्वत्वं सम्पन्नम्। तन्नतमक्षि देवा अश्वमेधयागेन परिणतेनाऽश्वेन यागं कृत्वा प्रत्यदधुः

---

१. ऋ. सं. ८. ७. ३. १. २. आप. श्रौ. २२. १७. ९, १०.

प्रतिसन्धानमकुर्वन्। यः अश्वमेधेन यजते एष वाव प्रजापतिः सर्वं अन्यूनं सम्पूर्णं करोति ॥ २ ॥

पुनरप्यश्वमेधयाजिनः प्रशंसाद्वारा तत् प्रशंसति--

**एष वाव सशरीरः सम्भवत्यमुष्मै लोकाय योऽश्वमेधी ॥ ३ ॥**

योऽश्वमेधवान् अश्वमेधयाजी अस्ति एष अमुष्मै स्वर्गाय लोकाय सशरीरः शरीरसहितः सम्भवति ॥ ३ ॥

अथ प्रथमं चतुष्टोममहः प्रशंसति--

**(१)सरघा वा अश्वस्य सक्थ्यावृहत्तद्देवाश्चतुष्टोमेन प्रत्यदधुर्यच्चतुष्टोमो भवत्यश्वस्य सर्वत्वाय ॥ ४ ॥**

सरघा मक्षिका क्रिमिः। अश्वस्य सक्थिप्रदेश आवृहत् व्रणं चकारेत्यर्थः। तद्देवाश्चतुष्टोमेन समदधुः। यस्मादेवं तस्मादश्वस्य सर्वत्वाय सम्पूर्णतायै चतुष्टोमः कर्त्तव्यः ॥ ४ ॥

अथ प्रथमस्याऽह्नो बहिष्पवमानस्य प्रतिपत्तृचचतुष्टयं गायत्रीचतुष्टयं कर्त्तव्यमिति विधाय प्रशंसति—

**यत्तिस्रोऽनुष्टुभश्चतस्रो गायत्रीः करोति तस्मात्त्रिभिस्तिष्ठन् प्रतितिष्ठति सर्वान् पलायमानः प्रतिदधाति ॥ ५ ॥**

(२)'पवस्व वाजसातय' इति योयं प्रतिपत्तृचस्तस्य यास्तिस्रोऽनुष्टुभः स्तोत्रीयाः सन्ति, ताः पादत्रयपरिगणनया चतस्रो गायत्रीः कुर्यात्। यस्मात् प्रकृत्या तिस्रः अतस्त्रिभिः पादैस्तिष्ठन् प्रतितिष्ठति यस्माच्चतस्रो गायत्रीः, तस्मात् सर्वान् चतुरः पादान् पलायमानस्सन् प्रतिदधात्यश्वः। यद्यप्यत्राऽश्वशब्दो न श्रूयते, तथाऽपि तैत्तिरीयके स्पष्टमाम्नातम्—(३)'पवस्व वाजसातय इत्यनुष्टुक् प्रतिपद्भवति तिस्रोऽनुष्टुभश्चतस्रो गायत्रियो यत्तिस्रोऽनुष्टुभस्तस्मादश्वस्त्रिभिस्तिष्ठंस्तिष्ठति यच्चतस्रो गायत्रियस्तस्मात् सर्वांश्चतुरः पदः प्रतिदधत्पलायत इति ॥ ५ ॥

---

१. तै. सं. ५. ३. अनुवाकस्याऽन्ते द्रष्टव्यम्।

२. पृष्ठे २७ तृचोऽयं द्रष्टव्यः। ३. तै. सं. ५. ४. १२. १.

अथाऽश्वमनूद्याऽनुष्टुभां वैप्लवत्वं प्रशंसति—

**अन्तो वा अश्वः पशूनामन्तोऽनुष्टुप् छन्दसामन्तो विष्णुर्देवतानामन्तश्चतुष्टोमस्स्तोमानामन्तस्त्रिरात्रो यज्ञानां यद्वैप्लव्योऽनुष्टुभः प्रतिपदो भवन्ति चतुष्टोमस्तोमस्त्रिरात्रो यज्ञोऽन्त एव तदन्तं प्रतिष्ठापयति ॥६॥**

अजादिपशूनाम्मध्ये अश्वस्यैवाऽन्तत्वं (१)'अपशवो वाऽन्ये गोअश्वेभ्य' इत्यादिश्रुतिषु प्रसिद्धम । यद्वा प्रशस्तवीर्य्यत्वात् प्रजापतेरक्षिरूपत्वाद्वा परमत्वम् । छन्दसां मध्येऽनुष्टुभः परमत्वमसकृद्गतम् । देवतानां मध्ये विष्णोरन्तत्वं (२)'अग्निर्वै देवानमवमो विष्णुः परम' इत्यादिश्रुतिषु प्रसिद्धम्। स्तोमानां त्रिवृदादीनां मध्ये चतुष्टोम एवाऽन्तः परमः, प्रकृतिभूताग्निष्टोमगतत्वात प्रजापतेस्सकाशादुत्पन्नत्वाच्च । यज्ञानां मध्ये त्रिरात्रोऽन्तः, 'ब्रह्महत्याश्वमेधाभ्यां नाऽपरं पुण्यपापयोरि'ति हि वदन्ति । यद्वा 'त्रयो वा एते त्रिरात्रा यदेष द्वादशाह' इति द्वादशाहस्याऽपि त्रिरात्रत्वेन प्रशंसादर्शनात्त्रिरात्रस्याऽन्तत्वमवगन्तव्यम्। एवं सति यद्यनुष्टुभस्तिस्रो वैप्लव्यः प्रतिपदो भवन्ति, चतुष्टोमस्तोमस्त्रिरात्रो यज्ञश्चोभावन्तभूतौ, तत्तथा सति अन्तत एव अन्तर्भूतेष्वेष्वश्वादिषु अन्तर्भूतं विष्णुं प्रतिष्ठापितवान् भवति ॥ ६ ॥

अथ मध्यममेकविंशमहरनूद्य प्रशंसति—

**एकविंशमहर्भवति यस्मिन्नश्व आलभ्यत एकविंशो वा इतोऽसावादित्यो द्वादश मासाः पञ्चर्त्तवस्त्रय इमे लोका असावादित्य एकविंश आदित्यस्यैवैनं मात्रां गमयति ॥ ७ ॥**

यस्मिन् द्वितीयेऽहनि अश्व आलभ्यते तदहरेकविंशस्तोमकं भवति । इतः पृथिवीमारभ्य द्वादशमासादिगणनया आदित्योऽप्येकविंशः । तथा सति मध्यममहरेकविंशस्तोमं तत् यज्ञं आदित्यस्यैव मात्रां परिमाणं गमयति ॥ ७ ॥

अथ मध्यमस्याऽह्नः पृष्ठमाह—

**तस्य महानाम्न्यः पृष्ठं भवन्ति ॥ ८ ॥**

---

१. तै. सं. ५. २. ९. २. ऐ. ब्रा. १. १. १.

महानाम्न्यः शक्वर्यः। शाक्वरं पृष्ठं भवतीत्यर्थः। तथा चाऽऽपस्तम्बः त्र्याणामह्नां पृष्ठान्याह—(१)'रथन्तरं महानाम्न्यो बृहदिति पृष्ठानी'ति॥

तत्राऽयं देवानां छन्दः प्रशंसति—

अन्यदन्यद्वा एताश्छन्दोऽन्योन्य एते पशव आलभ्यन्त एता वा एतꣳ समाप्नुवन्ति यन्महानाम्न्यः पृष्ठं भवन्त्यश्वस्य सर्वत्वाय ॥ ९ ॥

एताः(२) महानाम्न्य ऋचः अन्यदन्यच्छन्दो वै विच्छन्दस्का इत्यर्थः। तथा हि–अनुष्टुप्गायत्रीद्विपदादिनानाच्छन्दस्का निर्वहन्तीत्यर्थः। 'प्रचेतन प्रचेतये'त्यनुष्टुप्। 'चिकित्वो अभि नो नये'ति गायत्री। 'विदा मघवन्नि'ति द्विपदा। एवं सर्वेष्वपि द्रष्टव्यम्। अथाऽत्र अन्योन्ये नानाविधा एते पशव आलभ्यन्ते। तथा ह्यापस्तम्बः अश्वेन सार्द्धमुपाकरणमाह–(३)'प्लक्षशाखाभिरितरान् पशूनश्वे पर्य्यङ्ग्यान्, आग्नेयं कृष्णग्रीवं पुरस्ताल्ललाटे, पौष्णमन्वञ्चं, ऐन्द्रापौष्णमुपरिष्टात् ग्रीवासु, आग्नेयौ कृष्णग्रीवौ बाह्वो'रिति। अन्येऽपि 'अश्वस्तूपरो गोमृग' इत्यादयः। नानापशुकथनं शक्वरीछन्दसो नानार्थत्वप्रशंसार्थम्। एताः खलु महानाम्न्यस्त्रिरात्रं समाप्नुवन्ति निर्वहन्तीत्यर्थः। अतो 'महानाम्न्यः पृष्ठं भवन्ती'ति यत् तदश्वस्य सर्वत्वाय सम्पूर्णत्वाय भवति ॥ ९ ॥

अथाऽस्य ब्रह्मसाम विधत्ते—

पार्थुरश्मं ब्रह्मसाम भवति ॥ १० ॥

ब्रह्मसाम ब्राह्मणाच्छंसिनः साम। पार्थुरश्मं पृथुरश्मिना दृष्टं साम कार्य्यम् ॥ १० ॥

एतत् सामाऽस्याऽह्न उचितमिति प्रशंसति—

(४)ईश्वरो वा एषोऽयतोऽधृतः परां परावतमेतो रश्मिना वा अश्वो धृतो यत्पार्थुरश्मं ब्रह्मसाम भवत्यश्वस्यैव धृत्यै ॥ ११ ॥

अयतोऽनियमितः तथा अधृतः पाशादिभिरधार्य्यमाणोऽश्वः परात्परावतं अत्यन्तदूरदेशं गन्तुं तूर्णं पलायितुमीश्वरो वै समर्थः खलु। केन? रश्मिना, प्रग्रहेण खल्वश्वो धृतो भवति। तथा सति यत्पार्थु-

१. आप. श्रौ. २२. १८. २. २. महानाम्नीनामृचां विवेकः पृष्ठे १७ द्रष्टव्यः। ३ आप. श्रौ. २०. १३. १२. ४. तै. सं. ५. ४. १२. अनुवाकान्ते द्रष्टव्यम्।

रश्मं ब्रह्मसाम भवति, तदश्वस्यैव यत्यै नियमनाय भवति । पार्थुर श्मशब्देन रश्मिरूपोऽर्थः स्तूयते । तच्छब्दसाम्येन स्तुतिरिति द्रष्टव्यम् ॥ ११ ॥

अथ सर्वस्तोमातिरात्रं स्तौति--

**(१)सर्वस्तोमोऽतिरात्रो भवति सर्वस्याऽऽप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाऽऽप्नोति सर्वं जयति ॥१२॥**

सर्वस्तोमोऽतिरात्रः सर्वस्याऽऽप्त्यै प्रापणाय । सर्वस्य जित्यै जयाय । सर्वमेतेनाऽऽप्नोति ॥ १२ ॥

अथ यूपविषये किञ्चिदाह--

**(२)एकयूपो वैकादशिनी वाऽन्येषां यज्ञानां भवत्येकविंशिन्यश्वमेधस्य खादिरो वा बैल्वो वा पार्णो वाऽन्येषां यज्ञानां भवति नैचुदार एकविंशत्यरत्निरश्वमेधस्य नाऽन्येषां पशूनां तेजन्या अवद्यन्त्यवद्यन्त्यश्वमेधस्य दक्षिणतोऽन्येषां पशूनामवद्यन्त्युत्तरतोऽश्वमेधस्य प्लक्षशाखास्वन्येषां पशूनामवद्यन्ति वेतसशाखास्वश्वमेधस्य यूपे ग्राम्यान्पशून्नियुञ्जन्त्यारोकेष्वारण्यान् धारयन्त्या ग्राम्यान्पशून् लभन्ते प्रारण्यान् सृजन्ति १३**

(अत्र भाष्यं नोपलभ्यते । अतस्सुगमतासम्पादनाय किञ्चिद्विवरणं क्रियते--एकादशानां यूपानां समाहारः एकादशिनी । इतरेषु पशुयागेषु एकस्मिन् यूपे वा पश्वेकादशिनीपक्षे एकादशसु वा यूपेषु पशवो नियुज्यन्ते । अश्वमेधे तु एकविंशतिर्यूपाः । अन्येषु यज्ञेषु खादिरबिल्वपलाशान्यतमवृक्षीयाः यूपाः कर्तव्याः । अश्वमेधस्य तु श्लेष्मातकवृक्षेण अग्निष्ठो यूपः कर्तव्यः । आहवनीयस्याऽग्नेस्समीपे तत्पुरतः यो निखातस्सोऽग्निष्ठ इत्युच्यते । स एव श्लेष्मातकवृक्षीयः । इतरेषान्तु यूपानां 'पौतुद्रवावभितो भवतः, षट् बैल्वा भवन्ति, षट् खादिराः, षट् पालाशाः' इत्यादिविधिविहिता वृक्षा द्रष्टव्याः । स चैकविंशत्यरत्निपरिमाणः । ( चतुर्विंशत्यङ्गुलपरिमाणः एको हस्तः अरत्निरित्युच्यते )

१. तै. सं. ५. ३. १४. २. अनुवाके द्रष्टव्यम् ।

२. तै. ब्रा. ३. ८. १९ अनुवाकस्सम्प्रो द्रष्टव्यः ।

विशसनकाले प्रवृत्तं रुधिरं धारयितुं सम्पादिता स्रुक् तेजनीत्युच्यते। तथा चाऽवदानं न पश्वन्तरेषु क्रियते, तत्र रुधिरधारणाभावात्। अश्वमेधे तु तत्सद्भावात् तेजन्यैवाऽवदानं कर्तव्यम्। इतरेषां पशूनामुत्तरभागतोऽवदानं कर्तव्यम, अश्वस्य तु दक्षिणभागतः। प्लक्षशाखायामितरेषां पशूनां हवींष्यवदीयन्ते वेतसशाखाया मश्वस्याऽवदानं कर्तव्यम्। एवं यूपेषु एकविंशतिसंख्याकेषु ग्राम्याः पशवो नियोक्तव्याः। द्वयोर्यूपयोर्मध्ये यदन्तरालं स आरोक इत्युच्यते। तेष्वन्तरालेषु रशनाभिर्बध्वा आरण्याः पशवो धारयितव्याः। 'रोहितो धूम्ररोहितः, इति विहिताः पशवो ग्राम्याः। 'इन्द्राय राज्ञे सूकरः' इत्यादय आरण्याः। तत्र ग्राम्याणां पशूनामुपाकरणनियोजनविशसनादिकं सर्वं क्रियते। आरण्यानां पशूनां पर्यग्निकरणानन्तरमुत्सर्गाख्यः परित्याग एव, न तु विशसनादिकं तेषामिति) ॥ १३ ॥ ( सम्पा. )

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकविंशाध्यायस्य चतुर्थः खण्डः ॥

## पञ्चमः खण्डः ॥

अथ वैदत्रिरात्रमाह--

**त्रयस्त्रिवृतोऽतिरात्राः सर्वे षोडशिमन्तः ॥ १ ॥**

त्रीण्यहानि त्रिवृत्स्तोमकानि सषोडशिकान्यतिरात्रसंस्थानि ॥१॥

अथाऽस्याऽधिकारिणमाह--

**यो राज्य आशꣳसेत स एतेन यजेत ॥ २ ॥**

यो राज्ये राज्यविषये आशंसेत इच्छति, स राजा एतेन यजेत। स्वाराज्यफलमित्युक्तं भवति। अत्राऽऽपस्तम्बः-(१)'वैदत्रिरात्रेण स्वाराज्यकामः, त्रयस्त्रिवृतोऽतिरात्राः षोडशिमन्तः, रथन्तरं वामदेव्यं बृहदिति पृष्ठानी'ति ॥ २ ॥

अस्य त्रिरात्रस्य यत् त्रिवृत्स्तोमत्वं तत्र राज्यफलसंयुक्तत्वं प्रशंसति--

**राजा वा एष स्तोमानाꣳराज्यमेवाऽस्मिन्दधाति ॥**

एष त्रिवृत्स्तोमः स्तोमानां मध्ये राजा, सर्वेषां प्राथम्यात्। अत

१. आप. श्रौ. २२. १८, ४-६.

एतत्प्रयोगादस्मिन् यजमाने राज्यमेवाऽभिलषितं दधाति ॥ ३ ॥

अथ प्रथमस्याऽह्न आर्भवान्ते यदाक्षारं सामाऽस्ति तत् प्रशंसति--

**यदाक्षाराणि प्रथममहर्भजन्त एकाक्षरा वै वाग्वाचोऽनतिवादाय ॥ ४ ॥**

स्तोत्रीयापेक्षया आक्षाराणीति बहुवचनम् । 'पवते हर्यतो हरि'रित्यत्राऽऽक्षारं एकाक्षरणिधनम् । वागपि हल्परित्यागे सत्येकाक्षरा खलु । एवं तन्निधनं सर्वस्या वाचोऽनतिवादाय साम्याय भवति । यद्यपि कल्पकारेण आक्षारं साम नाऽऽदिष्टं, तथाऽपि सामान्तरं प्रथमेनाऽह्ना गर्गत्रिरात्रस्याऽतिदेशादुक्तमेव तत् ॥ ४ ॥

अथ प्रथमेऽह्नि तृतीयसवने पदनिधनमाज्यदोहमनूद्य प्रशंसति--

**अथ यत् द्व्यक्षरणिधनमाज्यदोहं भवत्युत्तरयोरह्नोरभिसन्तत्या अन्वहमाज्यदोहानि भवन्त्यन्वहमेवैनं पशुभिः समर्द्धयन्ति ॥ ५ ॥**

प्रथमं आज्यदोहे ऋतमिति द्व्यक्षरणिधनमस्ति । अतस्तद्युक्तसामप्रयोगे उत्तरयोर्द्वयोरह्नोः सन्तत्यै अविच्छेदाय भवति । उभयत्र द्वित्वसाम्यादित्यभिप्रायः ॥ ५ ॥

अथोक्तमाज्यदोहमतियुक्त्या त्रिष्वहस्सु विधाय प्रशंसति—

**सर्वे षोडशिमन्तो भवन्तीन्द्रियं वीर्य्यं षोडशीन्द्रियेणैवैनान् वीर्य्येण समर्द्धयति ॥ ६ ॥**

सर्वेऽतिरात्रा इति शेषः । इन्द्रियमित्यस्य व्याख्यानं वीर्य्यमिति । अतिरात्राणां वीर्य्यैः समर्धनं नाम फलजनकत्वलक्षणसामर्थ्यसम्पादनम् । अत्र 'प्र सोमासो विपश्चित इति गायत्रमेकस्यामाश्वमेकस्याजराबोधीयमेकस्यां प्र सोम देव वीतय इति पौङ्गवमेकस्या'मित्यादिकः कल्पो द्रष्टव्यः ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकविंशाध्यायस्य पञ्चमः खण्डः ॥

## षष्ठः खण्डः ॥

अथ छन्दोमपवमानाख्यं पशुफलसाधनं चतुर्थं त्रिरात्रमाह—

**चतुर्विंशाः पवमानास्त्रिवृन्त्याज्यानि पञ्चदशानि पृष्ठानि सप्तदशोऽग्निष्टोमश्चतुश्चत्वारिंशाः पवमानाः पञ्चदशान्याज्यानि सप्तदशानि पृष्ठान्येकविंशोऽग्निष्टोमः सोक्थोऽष्टाचत्वारिंशाः पवमाना एकविंशान्याज्यानि त्रिणवानि पृष्ठानि त्रयस्त्रिंशोऽग्निष्टोम एकविंशान्युक्थानि सषोडशिकानि पञ्चदशी रात्रिस्त्रिवृत्सन्धिश्छन्दोमपवमानः ॥ १ ॥**

पृष्ठस्तोमः क्लृप्तः गायत्रीत्रिष्टुब्जगतीनामक्षरसंख्याभिर्मिलित्वा चतुर्विंशाद्यास्त्रयश्छन्दोमाः। तेषु त्रयः पवमाना भवन्तीति छन्दोमपवमानोऽयं त्रिरात्रः ॥ १ ॥

अथाऽस्याऽधिकारिणमाह—

**पशुकामो यजेत ॥ २ ॥**

स्पष्टोऽर्थः ॥ २ ॥

अथ छन्दोमपवमानं पशुसाधनमिति प्रशंसति—

**पशवो वै छन्दोमा यच्छन्दोमाः पवमाना भवन्ति पशूनेवाऽवरुन्धे ॥ ३ ॥**

स्पष्टम् ॥ ३ ॥

**उभये स्तोमा युग्मन्तश्चाऽयुजश्च तत् मिथुनं तस्मान्मिथुनात्प्रजायते ॥ ४ ॥**

अहस्त्रयगतपवमानास्तावत् युक्संख्याः। इतरस्तोत्रगता अयुजः स्तोमाः अयुग्मसंख्याकाः स्तोमा इत्यर्थः। तत्र युग्मन्तु पुंसो रूपम्। अयुग्मं स्त्रियाः। तद्द्वयम् मिथुनम्। तस्मान्मिथुनाद्यजमानः प्रजायते। अत्र 'साम्वत्सरिकस्य विषुवतो बहिष्पवमानमुभौ पर्यासावि' त्यादिकः कल्पो द्रष्टव्यः ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकविंशाध्यायस्य षष्ठः खण्डः ॥

## सप्तमः खण्डः ॥

अथाऽन्तर्वसुनामानं पशुसाधनं पञ्चमं त्रिरात्रमाह—

**त्रिवृत्प्रातस्सवनं पञ्चदशं माध्यन्दिनꣳ सवनं सप्तदशं तृतीयसवनं चतुर्विꣳशं प्रातस्सवनं चतुश्चत्वारिꣳशं माध्यन्दिनꣳसवनमष्टाचत्वारिꣳशं तृतीयसवनꣳ सोक्थमेकविꣳशं प्रातस्सवनं त्रिणवं माध्यन्दिनꣳसवनं त्रयस्त्रिꣳशं तृतीयसवनꣳ सोक्थमेकविꣳशः षोडशी पञ्चदशी रात्रिस्त्रिवृत् सन्धिरन्तर्वसुः ॥ १ ॥**

अत्र त्रीण्यहानि क्रमेणाऽग्निष्टोमोक्थातिरात्रसंस्थानि । रथन्तरं वामदेव्यं बृहदिति क्रमेण पृष्ठानि । स्तोमाः स्पष्टाः । अष्टाचत्वारिंशं तृतीयसवनं सोक्थमिति। उक्थान्यपि अष्टाचत्वारिंशस्तोमकानीत्यर्थः। त्रयस्त्रिंशं तृतीयसवनं सोक्थमिति । अत्रोक्थान्यपि त्रयस्त्रिंशस्तोमकानीत्युक्तं भवति । छन्दोमानां पशुसाधनत्वरूपस्य मध्यमेऽहनि सम्भवादेवं त्रिरात्रोऽन्तर्वसुरित्युच्यते ॥ १ ॥

छन्दोमानां मध्यमाहर्भाक्त्वं प्रशंसितुमस्य त्रिरात्रस्य लोकत्रयात्मकत्वमाह—

**इमे लोकास्त्रिरात्रः ॥ २ ॥**

इमे लोकास्त्रिरात्राः क्रमेण त्रीण्यहानि भूरादिलोकत्रयस्थानीयानीत्यर्थः ॥ २ ॥

त्रिरात्रस्वरूपप्रतिपादनाय स्वरूपमाह—

**अस्तीव वा अयं लोकोऽस्तीवाऽसौ छिद्रमिवाऽन्तरिक्षम् ॥ ३ ॥**

भूलोकस्याऽस्तित्वं सिद्धम्। स्वर्गस्याऽपि ग्रहनक्षत्रताराधिष्ठानत्वेन तदर्थं ज्योतिष्टोमादिभिः प्रयतमानत्वेन चाऽस्तित्वम् । मध्यमं त्वन्तरिक्षं छिद्रमिव निराश्रयमिवाऽमूर्त्तत्वात् अस्त्येव ॥ ३ ॥

कथमेतदह्नां लोकसाम्यमित्याह—

**अस्तीव त्रिरात्रस्य प्रथममहरस्तीवोत्तमं छिद्रमिव मध्यतः ॥ ४ ॥**

अह्नां क्षित्याद्यात्मकत्वोपन्यासान्मध्यमस्याऽह्नोऽन्तरिक्षस्थानीयत्वेन छिद्रत्वम् ॥ ४ ॥

तस्य कः परिहार ? इति, तत्राऽऽह—

**पशवो वै छन्दोमा यच्छन्दोमा मध्यतो भवन्त्य-पिहित्या एवाऽच्छिद्रतायै ॥ ५ ॥**

(१)'छन्दांसि पशुष्वाजिमयुस्तान् बृहत्युदजयदि'ति श्रुतेर्बृहतीद्वारा छन्दांसि पशवः । स्तोमनिर्मितत्वात् छन्दोमा अपि पशवः । । पशूनां जीवनं छिद्रकलुसिसाधनं प्रसिद्धम् । अतो यच्छन्दोमा मध्यतो मध्यमेऽहनि भवन्ति तदपिहित्यै अपिधानाय । तच्चाऽपिधानं अच्छिद्रतायै सम्पूर्णत्वाय भवति । 'ये गर्गत्रिरात्रस्य प्रथमोत्तमे अहनी तेऽन्तर्वं सोरुपोषु जातमप्तुरमि'त्यादिकल्पो द्रष्टव्यः ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकविंशाध्यायस्य सप्तमः खण्डः ॥

## अष्टमः खण्डः ॥

अथ पराकाख्यं स्वर्गसाधनं षष्ठं त्रिरात्रमाह—

**त्रिवृत् प्रातस्सवनं पञ्चदशं माध्यन्दिनꣳ सवनꣳ सप्तदशं तृतीयसवनं एकविꣳशं प्रातस्सवनं त्रिणवं माध्यन्दिनꣳ सवनं त्रयस्त्रिꣳशं तृतीयसवनꣳ सोक्थं चतुर्विꣳशं प्रातस्सवनं चतुश्चत्वारिꣳशं माध्यन्दिनꣳ सवनमष्टाचत्वारिꣳशं तृतीयसवनꣳ सोक्थमेकविꣳशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिः पराकः ॥ १ ॥**

स्तोमक्रमेण परागुपर्युपर्य्यारोहणादयं त्रिरात्रः परागित्युच्यते ॥ १ ॥

अत्राऽधिकारिणमाह—

**पराकेण वै देवाः स्वर्गं लोकमायन् स्वर्गकामो यजेत पराकेणैतेन स्वर्गं लोकमाक्रमते ॥ २ ॥**

---

१. तै. सं. ५. ३. २.

ये स्तोमाः पराञ्चः सन्ति एतदनुष्ठाताऽपि पराङेव स्वर्गमाक्रमते॥२॥
अथ त्रिरात्रं नामनिर्वचनेन प्रशंसति—

**यद्वा एतस्याऽकं तदस्य पराक् तत् पराकस्य पराकत्वम् ॥ ३ ॥**

यदेव तस्य भूलोकस्य तत्स्थस्य पुरुषस्य अकं दुःखं तदस्य स्वर्गस्य तत्प्राप्तवतः पुरुषस्य पराक् न्यग्भूतं भवति । पराग्भूतमकं दुःखं त्रिरात्रेण भवति पराागिति व्युत्पत्तिः ॥ ३ ॥

**न वै तत्र जग्मुष किञ्चनाऽकम् ॥ ४ ॥**

तं स्वर्गं प्राप्तवते पुरुषाय किञ्चन अकं दुःखं नैव खलु ॥ ४ ॥
अथोक्तार्थवेदनफलमाह—

**नाऽस्मा अकं भवति य एवं वेद ॥ ५ ॥**

स्पष्टम् ॥ ५ ॥

अथ तस्य षोडशिन एकविंशस्तोमस्य तत्परिहारार्थं रात्रिपर्य्यायसन्धिस्तोत्राणां पञ्चदशी रात्रिस्त्रिवृत्स्तोमकत्वमिति प्रशंसति—

**प्रजायास्त्वक्लृप्तः पराङ्ह्येवैतेन स्वर्गं लोकमाक्रमते तद्यदेकविंशः षोडशी भवति पञ्चदशी रात्रिस्त्रिवृत्सन्धिस्तेनाऽस्मिन् लोके प्रतितिष्ठति ॥ ६ ॥**

तत् तत्र तृतीयेऽहनि षोडशी एकविंशस्तोमको भवति । तुशब्दो विशेषोऽस्तीति द्योतनार्थः । षोडशिनामेकविंशं कुर्वन् यजमानः प्रजायास्सकाशादक्लृप्तः सन् प्रजाभिस्सहेह स्थितिं चिरकालमलभमान एव एतेन एकविंशकरणेन पराङ्ह्येवाऽभिमुखमेव स्वर्गमाक्रमते । अतस्तत्परिहाराय यदि रात्रिः पञ्चदशी स्यात् सन्धिः सन्धिसाम त्रिवृत्स्तोमकं स्यात् तर्ह्यऽनुष्ठाताऽस्मिन् लोके प्रतितिष्ठति प्रजादिभिस्सह । अयमर्थः—अपरावृत्तैः स्तोमैरनुष्ठानात्पराङेव स्वर्गमाप्नोति अतोऽन्ते परावृत्तिरहिताभ्यां कृताभ्यामेव पञ्चदशत्रिवृद्भ्यां समापनेन इह लोके चिरकालं पुत्रादिभोगमनुभूय पश्चात् स्वर्गमाप्नोतीति । अत्र कल्पः—'याऽन्तर्वसोः प्रथमा साऽस्य पराकस्य वृषा सोम द्युमां असी'त्यादिकः कल्पो द्रष्टव्यः ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकविंशाध्यायस्याऽष्टमः खण्डः ॥

## नवमः खण्डः ॥

उक्ताः षट् त्रिरात्राः। अथ चतूरात्राश्चत्वार उच्यन्ते। तत्र प्रथमं चतुर्वीराख्यं वीरोत्पत्तिसाधनं चतूरात्रमाह—

**चतुर्विंशाः पवमानास्त्रिवृन्त्याज्यानि पञ्चदशानि पृष्ठानि सप्तदशोऽग्निष्टोमश्चतुर्विंशाः पवमानाः पञ्चदशान्याज्यानि सप्तदशानि पृष्ठान्येकविंशोऽग्निष्टोमः सोक्थश्चतुर्विंशाः पवमानाः सप्तदशान्याज्यान्येकविंशानि पृष्ठानि त्रिणवोऽग्निष्टोमः सोक्थश्चतुर्विंशाः पवमाना एकविंशान्याज्यानि त्रिणवानि पृष्ठानि त्रयस्त्रिंशोऽग्निष्टोम एकविंशान्युक्थानि सषोडशिकानि पञ्चदशी रात्रिस्त्रिवृत्सन्धिः ॥ १ ॥**

आद्यमग्निष्टोमसंस्थं, द्वितीयं तृतीयमुक्थसंस्थं, चतुर्थमतिरात्रसंस्थम्। सर्वत्र पवमानाश्चतुर्विंशाः। त्रिष्वहस्सु पवमानव्यतिरिक्तेषु त्रिवृदादिक्रमेण एकैकस्तोमपरित्यागेनाऽऽज्यादीनि कल्पनीयानि। प्रथमेऽहनि त्रिवृदाद्यास्त्रय आज्यपृष्ठानि, द्वितीये पञ्चदशाद्यास्त्रयः, तृतीये सप्तदशाद्याः। उभयत्राऽग्निष्टोमस्तोमक उक्थोऽपि तत्स्तोमक एव। चतुर्थे एकविंशाद्यास्त्रयः। रात्रिसन्धी प्रकृतिवत् पञ्चदशत्रिवृतौ ॥ १ ॥

अथाऽस्य प्रयोगकृतो वीरसाधनत्वमाह—

**अत्रिरकामयत चत्वारो मे वीरा आजायेरन्निति स एतमपश्यत्तस्य चत्वारो वीरा आजायन्ताऽस्य चत्वारो वीरा जायन्ते य एवं वेद ॥ २ ॥**

अपश्यत् अन्वतिष्ठदित्यर्थः ॥ २ ॥

तत् प्रशंसति—

**एकंस्तोममुत्सृज्यैकमभ्यारभते वीरजननं वै स्तोमो वीरमेवाऽस्मै तत् प्रजनयति ॥ ३ ॥**

स्तोमः स्तोमप्रयोगो वीरजननं वै वीरोत्पादनम्। एवमेतदुत्तरोत्तरादतः पूर्वस्माच्च वीरलक्षणं वीरोत्पत्त्यर्थो भवति। ते च वीराः तैत्ति-

रीये दर्शिताः—(१)'य एवं विद्वांश्चतूरात्रेण यजते आऽस्य चत्वारो वी-
रा जायन्ते सुहाता सूद्गाता स्वध्वर्युः स्सुसभेयः' इति ॥ ३ ॥

अथ पवमानस्य चतुर्विंशं प्रशंसति—

**चतुर्विंᳩशाः पवमाना भवन्ति चतुर्विंᳩशत्यक्षरा गायत्री प्रजननं गायत्री प्रजात्यै ॥ ४ ॥**

सर्वेष्वहस्सु पवमानाश्चतुर्विंशा भवेयुः। तेन गायत्र्यपि चतुर्विं-
शत्यक्षरा। सा च प्रजननसाधनम्। अतो गायत्रीसंख्यया सह स्तो-
मा वीराणां प्रजननाय भवन्ति ॥ ४ ॥

अथाऽस्मिन् यत्पवमानगतं युग्मस्तोमकत्वं यच्च स्तोत्रगतमयु-
ग्मस्तोमकत्वं तदुभयं प्रजननसाधनमिति प्रशंसति—

**उभये स्तोमा युग्मन्तश्चाऽयुजश्च तन्मिथुनं तस्मा-न्मिथुनात् प्रजायते ॥ ५ ॥**

स्पष्टम् ॥ ५ ॥

चतुर्णामह्नां संस्थानं विदधाति—

**अग्निष्टोमः प्रथममहरुक्थो द्वितीयᳩषोडशी तृती-यमतिरात्रश्चतुर्थं नानावीर्यतायै ॥ ६ ॥**

पुरुषाणां नानावीर्यलाभाय अहान्यपि नानावीर्याणि कर्त्त-
व्यानि ॥ ६ ॥

उक्तक्रमानुष्ठानवतो यजमानस्य नानावीर्यता कथम्? तत्राऽऽह—

**नानावीर्याण्यहानि करोति ॥ ७ ॥**

यतोऽयं संस्थानानात्वेनाऽहान्यपि नानावीर्याणि करोति अतो
नानावीर्यत्वमपि सिद्धमिति ॥ ७ ॥

मानान्तरप्रसिद्ध्या षोडशी तृतीयमिति यदुक्तं तन्निराकर्त्तुं प्रसि-
द्धानामह्नां स्थितिमनुवदति—

**गायत्रं वै प्रथममहस्त्रैष्टुभं द्वितीयं जागतं तृतीय-मानुष्टुभं चतुर्थम् ॥ ८ ॥**

स्पष्टोऽर्थः ॥ ८ ॥

---

१. तै. सं. ७. १. ८. 'अत्रिरददात्' इत्ययमनुवाकस्समग्रो द्रष्टव्यः।

इदानीं तृतीयेऽहनि षोडशिनिराकरणविषयं ब्रह्मवादिनां प्रश्नमवतारयति—

**तदाहुर्यत् तृतीयेऽहनि षोड़शिनं गृह्णीयुस्तृतीयेनाऽह्नाऽनुष्टुभमाप्नुयुरच्छन्दश्चतुर्थमहः स्यादानुष्टुभो वै षोडशीति ॥ ९ ॥**

तत्र षोडशिविषये ब्रह्मवादिन आहुः । किमिति ? यद्यदि तृतीयेऽहनि षोडशिनं गृह्णीयुः, तदानीं तृतीयेनाऽह्नाऽनुष्टुभमेवाऽऽप्नुयुः प्राप्ता भवेयुः । अस्तु नाम तथा, किं छिन्नमिति ? तत्राऽऽह—चतुर्थमहरच्छन्दः छन्दोविरहितं स्यात् । तत्र हि यत् तृतीयमहः षोडशिनं कुर्वन्ति, षोडशिनषोडश्यानुष्टुभो वै अनुष्टुप्छन्दस्सम्बन्धी खलु । षोडशिसंस्थायां ग्रहणायोक्तस्याग्निष्टोमोक्थादिक्रमेण(?) चतुर्थत्वात् षोडशिसाम्नः षोडशिग्रहाङ्गत्वात्,तस्य कृतत्वात्तदेवाऽऽक्षिप्तमिति वेदितव्यम् । इति शब्दस्तेषामाक्षेपसमाप्तिद्योतनार्थः ॥ ९ ॥

अथ तत्परिहारलक्षणं सिद्धान्तमाह—

**चतुर्थेऽहनि षोडशी ग्रहीतव्यः स्व आयतने षोडशी गृह्यते ॥ १० ॥**

यत्र हि षोडशी गृह्यते, तत्रैव षोडशी क्रियत इत्यर्थः ॥ १० ॥

कथं मध्यमयोरह्नोरुक्थ्यत्वेन नानावीर्याण्यहानि क्रियन्ते ? तदाह—

**छन्दोभिरहानि नानावीर्याणि करोति ॥ ११ ॥**

यथाभिहितं उक्थसंस्थं क्व भविष्यत्यस्मिन् पक्षे ? तथाऽपि छन्दसां पृथक् पृथक्सम्पादनात्तैस्तानि विलक्षणवीर्याणि कृतवान् भवति॥११॥

अथ चतुर्ष्वहस्सु माध्यन्दिनसवने क्रमेण ब्रह्मसाम विदधाति—

**नौधसं प्रथमस्याऽह्नो ब्रह्मसाम श्यैतं द्वितीयस्य आयन्तीयं तृतीयस्य त्रैशोकं चतुर्थस्य ॥ १२ ॥**

स्पष्टम् ॥ १२ ॥

अनुष्टुप्सम्बन्धिनः षोडशिग्रहस्य चतुर्थेऽहनि कर्त्तव्यताविधानाज्जागतं तृतीयमहरानुष्टुभं चतुर्थमहरिति स्थितम् । तत्र ब्रह्मवादिनामाक्षेपमवतारयति—

**तदाहुरपभ्रंश इव वा एष यत् ज्यायसः छन्दसोऽधि कनीयश्छन्द उपैतीति ॥१३॥**

तृतीयस्याऽह्नो जागतत्वाच्चतुर्थस्याऽऽनुष्टुभत्वात् ज्यायसश्छन्दसोऽनन्तरं कनीयश्छन्द उपक्रान्तं भवति । तथा सति अपगतश्छन्दोऽनुक्रमः स्यात् ॥ १३ ॥

तत्र परिहारमाह—

**तद्यदेषा चतुर्थेऽहन्यतिजगती क्रियतेऽनपभ्रंशाय ॥**

त्रैशोकस्य 'विश्वाः पृतना' इत्येषा । सा चाऽतिजगती । अतः छन्दस आरोहग्रहणादपभ्रंशदोषो नाऽस्ति ॥ १४ ॥

अथ चतुर्ष्वहस्सु अच्छावाकसाम विदधाति—

**कालेयं प्रथमस्याऽह्नोऽच्छावाकसाम साधुच्छन्दसं द्वितीयस्य रौरवं तृतीयस्य समन्तं चतुर्थस्य नानावीर्यतायै नानावीर्याण्यहानि करोति ॥ १५ ॥**

स्वस्य विलक्षणवीर्यपुत्रलाभाय प्रत्यहमच्छावाकसाम्नः पृथक्करणम् । तेन तदर्थान्यहान्यपि नानावीर्याणि कृतवान् भवति ॥ १५ ॥

चतुर्णामह्नां ब्रह्मसामान्यच्छावाकसामानि च विहितानि । अथ होतुः पृष्ठानि मैत्रावरुणसामानि विधातव्यानि । तत्र प्रथमद्वितीययोर्होतृ रथन्तरबृहत्पृष्ठे स्वे एव । एवं मैत्रावरुणसाम वामदेव्यं स्वास्वेव । अथोत्तरयोरह्नोर्होतुः पृष्ठं मैत्रावरुणसाम च विदधाति—

**(१)"अभि त्वा वृषभा सुत"इति तृतीयस्याऽह्नो रथन्तरं (२)"कस्तमिन्द्र त्वा वसवे"ति वामदेव्यं "यज्ञा यथा अपूर्वे"ति चतुर्थस्याह्नो बृहत् (३)"एदु मधोर्मदिन्तरमि"ति वामदेव्यं छन्दसां नानावीर्यतायै नानावीर्याण्यहानि करोति ॥ १६ ॥**

---

१. अभिरत्वा वृषभा सुते सुतं सृजामि पीतये । तृम्पा व्यश्नुही मदम् ॥
सा. सं. उ. १. २. ७. १.

२. कस्तमिन्द्र त्वा वसवा मर्त्यो दधर्षति ।
श्रद्धा हि ते मघवन् पार्ये दिवि वाजी वाजं सिषासति ॥ सा.सं.उ. ८.२. ९. १.

३. एदुमधोर्मदिन्तर सिञ्चाऽध्वर्यो अन्धसः । एवा हि वीर स्तवते सदावृधः ॥
सा. सं. उ. ८. २. १०. १.

'अभि त्वा वृषभा सुत' इति गायत्री तृतीयस्याऽह्नो रथन्तरं होतुः पृष्ठम्। 'कस्तमिन्द्रे'ति बृहती प्रगाथेषु वामदेव्यं मैत्रावरुणपृष्ठम्। 'यज्ञा यज्ञे' त्यनुष्टुप् बृहत् होतुः पृष्ठम्। 'एदुमधोरि'त्युष्णिक् वामदेव्यं मैत्रावरुणं साम। नानावीर्य्यताया इति पञ्चम्यर्थे चतुर्थी। छन्दसां वैलक्षण्ये नानावीर्य्यत्वादहान्यपि नानावीर्य्याणि। 'उपास्मै गायता नरो बभ्रवे नु स्वतवसे प्रयद्भावीन भूर्णय आशुरर्षबृहन्मत' इत्यादिकल्पो द्रष्टव्यः॥ १६॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकविंशाध्यायस्य नवमः खण्डः॥

## दशमः खण्डः॥

अथ द्वितीयं जमदग्नेश्चतूरात्रमाह। तत्र प्रथमस्याऽह्नः क्लृप्तिमाह—

**त्रिवृत्पञ्चदशोऽग्निष्टोमः प्रथममहः॥ १॥**

अग्निष्टोमसंस्थम्। तस्य त्रिवृत्पञ्चदशौ स्तोमौ व्यत्यासेन स्याताम्। आद्यानि स्तोत्राणि त्रिवृन्ति, अन्यानि पञ्चदशानीति विभागः॥

अथ द्वितीयस्याऽह्न आह—

**अथोत्तरस्याऽह्नश्चतुर्विंशं बहिष्पवमानं पञ्चदशानि त्रीण्याज्यानि सप्तदशमच्छावाकस्यैकविंशो माध्यन्दिनः पवमानः सप्तदशे द्वे पृष्ठे एकविंशं तृतीयसवनं सोक्थम्॥ २॥**

द्वितीयस्याऽह्नः स्तोत्रमुखं चतुर्विंशस्तोमकम्। तत आज्यानि त्रीणि पञ्चदशानि। चतुर्थमच्छावाकस्याऽऽज्यं सप्तदशम्। माध्यन्दिनसवने एकविंशः पवमानः। होतृमित्रावरुणयोः पृष्ठे द्वे सप्तदशे। ब्राह्मणाच्छंस्यच्छावाकयोरेकविंशे द्वे पृष्ठे। उक्थसहितं तृतीयसवनं सर्वमप्येकविंशस्तोमकम्॥ २॥

अथ तृतीयस्याऽह्न आह—

**तृतीयस्याऽह्न एकविंशं बहिष्पवमानं त्रीणि चाऽऽज्यानि पञ्चदशमच्छावाकस्य चतुर्विंशो माध्यन्दिनः**

**पवमान एकविंᳬशानि पृष्ठानि त्रिणवं तृतीयसवनं द्वे चोक्थे एकविंᳬशमच्छावाकस्य ॥ ३ ॥**

तृतीयस्याऽह्नः आज्यत्रयं बहिष्पवमानं च एकविंशस्तोमकम् । चतुर्थमाज्यं पञ्चदशम् । माध्यन्दिनपवमानः पृष्ठानि च क्रमेण चतुर्विंशैकविंशानि । तृतीयसवनं सर्वमपि त्रिणवम् । मैत्रावरुणब्राह्मणाच्छंसिन उक्थे द्वे अपि त्रिणवे । अच्छावाकीयं तूक्थमेकविंशम् ॥३॥

अथ चतुर्थस्याऽह्न आह—

**चतुर्थस्याऽह्नश्चतुर्विंᳬशाः पवमानाः पञ्चदशᳬ होतुराज्यᳬसप्तदशानि त्रीण्येकविंᳬशानि पृष्ठानि त्रयस्त्रिंᳬशोऽग्निष्टोम एकविंᳬशान्युक्थानि सषोडशिकानि पञ्चदशी रात्रिस्त्रिवृत्सन्धिः ॥ ४ ॥**

स्पष्टम् ॥ ४ ॥

अथाऽस्य पुष्टिलक्षणं फलं सप्रपञ्चमाह—

**(१)जमदग्निः पुष्टिकाम एतमाहरत्स इमान् पोषानपुष्यत् ॥**

पूर्वं जमदग्निः पुष्टिकामस्तदर्थमेतं चतुरात्रमाहरत् । स इमान् लोके प्रसिद्धान् पशुपुत्रादिलक्षणान् पोषान् अपुष्यत् प्राप्नोत् ॥ ५ ॥

अथ यान् पोषानपुष्यत्तेन सन्तानभागिनः आसन्नित्याह—

**यदिदमाहुर्नवा ऊर्वौ पलितौ संजानाते इति ॥ ६ ॥**

यदिदमाहुर्लौकिका ऊर्वौ उर्वपुत्रौ जामदग्न्यौ पलितौ सन्तौ न संजानाते दरिद्रौ नोत्पद्येते इत्यर्थः ॥ ६ ॥

इदानीं तत्प्रतीताऽर्थे तदनुष्ठातुस्तत्फलं भवतीत्याह—

**तत्सर्वानेवैतेन पोषान् पुष्यति ॥ ७ ॥**

एतेन चतूरात्रेण एतान् सर्वान् जमदग्नेः पोषान् पुष्यति इदानीन्तनोऽपि ॥ ७ ॥

अथाऽस्मिन् चतुरात्रे विद्यमानस्तोत्रीयापरिगणनया जगतीच्छन्दस्सम्पत्तिर्भवतीत्याह—

**जगती छन्दोभिः सम्पद्यते ॥ ८ ॥**

---

१. 'जमदग्निः पुष्टिकाम' इत्यनुवाकः ( तै. सं. ७. १. ९. ) द्रष्टव्यः ॥

एतेषामह्नां या स्तोत्रीया सा जगत्याख्यं छन्दस्सम्पद्यते। तथा हि—प्रथममग्निष्टोममहः। तत्र द्वादश स्तोत्राणि। तानि त्रिवृत्पञ्चदशाभ्याम्। यानि षट्त्रिवृतः षट्पञ्चदशानि, तेषां स्तोमगतस्तोत्रीयापरिगणनायां चतुश्चत्वार्य्यधिकं शतं स्तोत्रीया भवन्ति। तास्तिस्रो जगत्यः। एवं द्वितीयेऽहनि अष्टाशीत्यधिकं शतद्वयं स्तोत्रीयाः स्युः ताश्च षट्जगत्यः। तृतीयेऽहनि षट्त्रिंशदधिकात्रिशतानि स्तोत्रीयाः ताः सप्त जगत्यः। उत्तमेऽहनि अष्टाविंशत्यधिकपञ्चशतानि स्तोत्रीयाः स्युः। ता एकादश जगत्य इति जगतीसम्पत्तिः। अत्रोपग्रन्थे 'यज्जामदग्न्यः प्रत्यहं त्रिषट्सप्तैकादश जगत्य' इति। एवं जगतीसम्पत्तिः॥ ८॥

किं ततः? इत्याह—

**जगती वै छन्दसां परमं पोषं पुष्टा परममेवैते पोषं पुष्यति॥ ९॥**

गायत्र्यादीनां सप्तच्छन्दसां मध्ये उत्तमा जगती परमं पोषं पुष्टा। तत्सम्पत्तिः यदेतच्चतूरात्रं कुर्वन्नपि परममविशेषं पोषं पुष्यति प्राप्नोति॥

यद्यदीतरक्रतुगतासूपसत्सु आज्यं द्रव्यं भवति अत्र पुरोडाशं द्रव्यं कर्त्तव्यमिति सप्ररोचनं विदधाति—

**पुरोडाशिन्य उपसदो भवन्ति पशवो वै पुरोडाशाः पशुष्वेव प्रतितिष्ठन्ति॥ १०॥**

स्पष्टम्।(१)'पशुभ्यो वै मेधा उदक्रामन् तौ व्रीहिश्चैव यवश्च भूतावजायेतामि'त्यैतरेयकश्रुतेः पशवो वै पुरोडाशाः। अत्रायं विवेकः—इतरयज्ञगतासुपसत्स्वग्निसोमविष्णवस्तिस्रो देवताः। तेषां आज्यं द्रव्यम्। यथावचनं तिस्रः षट् द्वादशेत्यादि संख्यया सायं प्रातर्होमः। अत्र तु प्रत्यहं देवताभेदः। पुरोडाशो द्रव्यम्। कपालसंख्या, प्रत्यहमिष्टिः। अन्यत्रेष्टिविकारा उपसदः। अत्र तु हविर्होमा इति। सूत्रम्-(२)'त्रयोदश्यामपरपक्षस्य दीक्षेत जामदग्न्याय तस्य विंशतिर्दीक्षा द्वादशोपसदस्तत्रोपसत्सु पृथग्घोमानध्वर्युर्जुहुयात्पुरोडाशास्त उक्ता ब्राह्मणेन समानदेवतौ पूर्वाह्णापराह्णयोरग्ने वेर्होत्रमित्येतत्प्रभृतय एषां होमा' इति॥ १०॥

---

१. ऐ. ब्रा. ७. १. ११.  २. लाट्या. श्रौ. ९. १२. १—५.

तत्र (१)'आग्नेय एककपाल आश्विनो द्विकपाल' इत्यादिना अग्न्यादिदेवताकमेककपालादिपुरोडाशं विधास्यति । तेषां क्रमेण मन्त्रानाह—

**अग्ने वेर्होत्रं वेरध्वरमापितरं वैश्वानरमवसेऽकरिन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ ११ ॥**

हे अग्ने होत्रं होतुः कृत्यं वेः विद्धि । तथा अध्वरं यज्ञञ्च विद्धि । होतारमधिष्ठाय होत्रं कुरु हविःप्रापणेन यज्ञं निर्वर्त्तयेत्यर्थः । विदेर्दकारस्य 'दश्चे'ति कुत्वम् । किञ्च पितरं सर्वस्य पालकं वैश्वानरं विश्वेषां नराणां हितकरं मा मामवसे अस्माकं रक्षणाय अकः अभिमुखं कुरु । हे ऋत्विजः यूयमपि इन्द्राय सर्वदेवाधिपतये देवेभ्योऽन्येभ्यो वस्वादिभ्यश्च हविर्जुहुत प्रयच्छत । यद्वा व्यत्ययेन जुहोमीति व्याख्येयम् । स्वाहेति हविस्त्यागाभिधानं, इदं हविर्दत्तमस्तु ॥ ११ ॥

अथाऽश्विनोर्द्विकपालमन्त्रमाह—

**देवावश्विनौ मधुकशयाऽद्येमं यज्ञं यजमानाय मिमिक्षतमिन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥१२॥**

हे देवौ द्योतमानौ अश्विनौ युवां मधुकशया वृष्ट्यर्थं मेघताडनेनोदकवत्या कशया अद्याऽस्मिन्दिने इमं यज्ञं यजमानाय मिमिक्षतं सेक्तुमिच्छतम् । वृष्ट्यादिफलोपेतं कुरुत इत्यर्थः । शिष्टं पूर्ववत् ॥१२॥

अथ वैष्णवस्य त्रिकपालस्य मन्त्रमाह—

**देव विष्ण उर्वद्याऽस्मिन्यज्ञे यजमानायाऽधि विक्रमस्वेन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ १३ ॥**

हे देव द्योतमान विष्णो अद्येदानीमस्मिन् यज्ञे यजमानाय उरु विस्तीर्णं यथा तथा अधिगम्य विक्रमस्व स्वपादप्रक्षेपं कुरु । उपविशेत्यर्थः । सिद्धमन्यत् ॥ १३ ॥

अथ सौम्यस्य चतुष्कपालमन्त्रमाह—

**देव सोम रेतोधा अद्याऽस्मिन्यज्ञे यजमानायैधीन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ १४ ॥**

हे सोम देव इदानीमस्मिन्यज्ञे यजमानार्थं रेतोधाता एधि भव ॥

---

१. तै. ब्रा. २१. १०. २३.

अथ सावित्रस्य पञ्चकपालस्य मन्त्रमाह—

देव सवितः सुसावित्रमथाऽस्मिन्यज्ञे यजमानाया-ऽऽसुवस्वेन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ १५ ॥

हे सवितः विश्वस्य प्रेरयितः देव सुसावित्रं शोभनं सवितुः कृत्यं इदानीमस्मिन्यज्ञे यजमानायाऽऽसुवस्वाऽनुजानीहि । कुर्वित्यर्थः ॥१५॥

अथ धातुः षट्कपालस्याऽऽह—

देव धातः सुधाताऽथाऽस्मिन्यज्ञे यजमानायैधीन्द्रा-य देवेभ्यो जुहुता हविः स्वाहा ॥ १६ ॥

हे धातः ब्रह्मन् देव मन्त्राभिमानी बृहस्पतिरित्यर्थः 'ब्रह्म वै बृह-स्पति'रिति श्रुतेः । एवंभूतस्त्वं यजमानार्थं सुधाता सुष्ठु कामानां धाता एधि भव ॥ १६ ॥

अथ मारुतस्य सप्तकपालस्याऽऽह—

देवा ग्रावाणो मधुमतीमथाऽस्मिन्यज्ञे यजमानाय वाचं वदतेन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ १७ ॥

अत्र मरुतः सदा यजमानाय वर्षं सृजन्तीत्यभिषवणकाले अभिषव-तावृत्यसि(?)वाक्शब्दा विद्यन्त इति । अत्र तच्छब्दसाम्यात् ग्रावरूपेण मरुतां स्तुतिः । हे ग्रावाणो मरुतां विभूतिभूता देवा यूयं यजमानार्थं मधुमतीं माधुर्योपेतां वाचं वदत । 'ग्रावभ्यो वाचं वदत वदद्भ्य' इति हि निगमान्तरम् ॥ १७ ॥

अथ बार्हस्पत्यस्याऽष्टाकपालमाह—

देव्यनुमतेऽन्वथेमं यज्ञं यजमानाय मन्यस्वेन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ १८ ॥

हे देव्यनुमते अनुज्ञाकर्तृदेवते इमं यज्ञं यजमानायाऽनुमन्यस्व अनुमतं कुरु । नन्वयं मन्त्रो बार्हस्पत्यस्य पुरोडाशस्य । मन्त्रे त्वनुम-तिरेव प्रकाश्यते, कथं वैयधिकरण्यमिति ? नाऽयं दोषः—'ब्रह्म वै ब्रह्मणस्पतिरि'ति श्रुतेः बृहस्पतेर्मन्त्राभिमानित्वात् मन्त्रेण क्रियमा-णानां कर्मणां बृहस्पत्यनुज्ञाया अपेक्षितत्वादनुमत्या एव ब्रह्मणस्पति-त्वम् ॥ १८ ॥

अथ मैत्रस्य नवकपालस्य मन्त्रमाह—

**देव्यदिते स्वादित्यमद्याऽस्मिन्यज्ञे यजमानायाऽऽसुवस्वेन्द्राय देवेभ्यो जुहुता हविः स्वहा ॥ १९ ॥**

हे अदिते देवमातः (१)'अदितिरदीना देवमाते'ति निरुक्तात् मित्राख्यस्याऽऽदित्यमूर्त्यन्तरस्याऽपि सेवमाना हे देवि सुशोभनमादित्यं तव पुत्रभूतं अद्याऽस्मिन्यज्ञे यजमानायाऽऽसुवस्व आभिमुख्येन प्रेरय ॥

अथ वारुणस्य दशकपालस्य मन्त्रमाह—

**देव्य आपो नन्नम्यध्वमद्याऽस्मिन्यज्ञे यजमानायेन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ २० ॥**

हे देव्य आपो नन्नम्यध्वं भृशं सस्यादिसमृद्धये प्रणता भवत । वारुणस्याऽपामधिपतित्वादभेदेनैवोच्यते ॥ २० ॥

अथैन्द्राग्नस्यैकादशकपालस्य मन्त्रमाह—

**सदस्सदः प्रजावानृभुर्जुषाण इन्द्राय देवेभ्यो जुहुता हविस्स्वाहा ॥ २१ ॥**

सदस्सदः तत्तद्यागगृहे प्रजावान् मरुदादिप्रजाभिस्तद्वान् ऋभुः उरु भासमान एवंमहिमा जुषाणो अस्मद्यज्ञं सेवमानो भवतु । अत्रेन्द्रस्य प्राधान्येन स्तुतिः ॥ २१ ॥

अथ वैश्वदेवस्य द्वादशकपालस्य मन्त्रमाह—

**देव त्वष्टः सुरेतोधा अद्याऽस्मिन्यज्ञे यजमानायैधीन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ २२ ॥**

त्वष्टा देवशिल्पी स विश्वेषां देवानामुचितानि कर्म्माणि करोतीति स एव वैश्वदेवस्थाने श्रूयते । सुरेतोधा सुष्ठु रेतसो विधाता विकर्त्ता(२) 'रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो वै तत् प्रजायते' इति श्रुतेः ॥ २२ ॥

उक्ता द्वादश मन्त्राः । येष्वेते मन्त्राः स्युः । तान् पुरोडाशान् क्रमेण विदधाति—

**आग्नेय एककपाल आश्विनो द्विकपालो वैष्णव-**

---

१. निरु. ४. २१. १.        २. तै. सं. १. ५. ९.

स्त्रिकपालः सौम्यश्चतुष्कपालः सावित्रः पञ्चकपालो धात्रः षट्कपालो मारुतः सप्तकपालो बार्हस्पत्योऽष्टाकपालो मैत्रो नवकपालो वारुणो दशकपाल ऐन्द्र एकादशकपालो वैश्वदेवो द्वादशकपालः ॥ २३ ॥

अग्निर्देवताऽस्य पुरोडाशस्याऽऽग्नेय इति, एकस्मिन् कपाले संस्कृतः पुरोडाशः एककपालः। एकस्यैवाऽग्नेर्गार्हपत्यादिषु रूपेषु वर्त्तमानत्वात् वस्तुत एकत्वादेककपालो युक्तः। अश्विनयां द्वित्वेन व्यपदेशात् द्विकपालः।'इदं विष्णुर्विचक्रमे त्रेधा' इति श्रुतेः विष्णोस्त्रिकपालस्सम्मतः। जरायुजाण्डजस्वेदजोद्भिज्जानाञ्चतुःप्राणिजातानामुत्पत्त्यर्थं रेतोधारकत्वाद्वा लता वीरुधो वनस्पतयो वानस्पत्य इति सोमस्य चतुर्विधानां स्वामित्वाद्वा, चतुष्कपालो युक्तः। सवितुः सम्वत्सरस्याऽधिपतित्वात्पञ्चकपालः। (१)'सम्वत्सरो वै धाते'ति श्रुत्यन्तरात् धाता सम्वत्सरात्मकः। सम्वत्सरे च षड् ऋतवस्सन्तीति धातुः षट्कपालो युक्तः। 'सप्तगणा' इति श्रुतेर्मरुतां सप्तकपालो युक्तः। तैत्तिरीयके(२) 'अग्निरेकाक्षरेण वाचमुदजदश्विनौ द्व्यक्षरेण प्राणापानावुदजयतां विष्णुस्त्र्यक्षरेण त्रीन् लोकानुदजयत्' इत्युक्त्वा 'बृहस्पतिरष्टाक्षरेण गायत्रीमुदजयन्मित्रो नवाक्षरेण त्रिवृतं स्तोममुदजयद्वरुणो दशाक्षरेण विराजमुदजयदिन्द्र एकादशाक्षरेण त्रिष्टुभमुदजयद्विश्वे देवा द्वादशाक्षरेण जगतीमुदजयन्नि'ति श्रुतत्वात् तत्कपालसंख्यायोगो द्रष्टव्यः। अत्र 'उपांशु जातमप्तुरमित्यनुरूपो नौधसं ब्रह्मसाम सुम्नानस्य लोके पौष्कलमि'त्यादिकः कल्पो द्रष्टव्यः ॥ २३ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकविंशाध्यायस्य दशमः खण्डः ॥

---

## एकादशः खण्डः ॥

अथ वसिष्ठस्य चतूरात्रमाह—

त्रिवृत् प्रातस्सवनं पञ्चदशं माध्यन्दिनꣳ सवनꣳ सप्तदशं तृतीयसवनं पञ्चदशं प्रातस्सवनꣳ सप्तदशं

---

१. तै. ब्रा. १. ७. २. १.    २. तै. सं. १. ७. ११.

माध्यन्दिनꣳसवनमेकविꣳशꣳ तृतीयसवनꣳ सोक्थꣳ सप्तदशं प्रातस्सवनमेकविꣳशं माध्यन्दिनꣳसवनं त्रिणवं तृतीयसवनꣳसोक्थमेकविꣳशं प्रातस्सवनं त्रिणवं माध्यन्दिनꣳ सवनं त्रयस्त्रिꣳशं तृतीयसवनं प्रत्यवरोहीण्युक्थानि त्रिणवं प्रथमं द्वे एकविꣳशे सषोडशिके पञ्चदशी रात्रिस्त्रिवृत् सन्धिः ॥ १ ॥

आदितः पूर्वपूर्वस्य परित्यागेनोत्तरस्तोमेनेहाऽभ्युपक्रान्तव्यानि त्रीण्युक्थानि प्रत्यवरोहीणि । तद्यथा प्रथमतः त्रिणवस्तोमकं ततो द्वे एकविंशे इति ॥ १ ॥

अथैतच्चतूरात्रं कर्त्तुः प्रशंसनद्वारा समृद्धिफलसाधनमित्याऽऽह—

वसिष्ठः पुत्रहतो हीन इवाऽमन्यत स एतमपश्यत्सोग्रं पर्यैद्यो हीन इव मन्येत स एतेन यजेत ॥ २ ॥

वसिष्ठः पुत्रहतः हतपुत्रः, हीन इव कुलस्य पुत्राभावेन विच्छिन्नत्वादात्मानं हीन इवाऽमन्यत । 'सोऽयं मनुष्यलोकः पुत्रेणैव जय्य' इति श्रुतेः । पश्चादेतं चतूरात्रं हीनत्वपरिहारायाऽपश्यत् । ज्ञात्वाऽयं पर्यैत, साकल्येनाऽनुष्ठितवान् । तस्माद्यः पुत्रादिभिः हीनमात्मानं मन्येत स एतेन यजेतेति ॥ २ ॥

अथाऽऽयतस्तोमात् स्तोमान्तरारम्भः श्रुतस्तत् प्रशंसति—

यत् स्तोमात् स्तोममभिसंक्रामत्यग्रादेवाग्रꣳ रोहति वसिष्ठस्य जनित्रे भवतः प्रजात्यै ॥ ३ ॥

(१)'वशिष्ठो वा एते पुत्रहतस्सामनी अपश्यत्स प्रजया पशुभिः प्राजायते'त्युक्तत्वाद्वसिष्ठपुत्रजननसाधनत्वेन वासिष्ठस्य जनित्रे इति नाम । तथा कुत्र प्रयोगः इति ? तत्र बहून् पक्षानाह । तेषु प्रथमं पक्षमाह सूत्रकारः— (२)'वसिष्ठस्य जनित्रे भवत इति संसर्पस्य चतुर्थेऽहनि बृहदनुष्टुभोः पृथगनुपूर्वमनुकल्पयेत् चतुर्थं हि जनित्रस्थानमि'ति । अस्याऽयमर्थः— वासिष्ठस्य चतुरात्रस्य शाखान्तरप्रसिद्ध्या संसर्प इति नामधेयम् । तथा च तलवकारब्राह्मणम्—'वसिष्ठो वा अकामयतेमान् लोकान् सर्पेयमिति स एतं चतूरात्रमपश्यत्तान् इमान् लोकानसर्पत्तत्संसर्पस्य

१. तां. ब्रा. १९. ३. ८. २. लाट्या. श्रौ ९. १२. ८.

संसर्पेत्वमि'ति । तस्य चतुर्थेऽहनि माध्यन्दिनपवमाने बृहत्यां प्रथमज्ञ-
नित्रं 'अभिसोमास' इत्यत्र । मध्ये आर्भवेऽनुष्टुभि द्वितीयं 'तं वोदस्म
मृतीषहमि'त्यत्र गायेत् । यद्यपि जानित्रे भवत इति सहैव पठिते,
तथाऽपि जानित्रा जानित्रा इत्युभयोरन्त्यस्यैकरूपत्वाद्जामितायै पृथगेव
प्रयोक्तव्ये इति । अविशेषेण विहितयोः जानित्रयोः कथं चतुर्थेऽहनि
नियम ? इति । अत्रोपपत्तिरुच्यते-चतुर्थमहः जनित्रस्य स्थानं दृष्टम् ।
'समूढे षडहे सोमः पवते जनिता मतीनामिति जनित्रमस्य मध्यन्दिन-
स्ये'ति कल्पकारवचनात् तदत्राऽपि युक्तमित्यर्थः । अथ द्वितीयं पक्ष-
माह—'रथन्तरबृहत्योर्वासिष्ठं प्रजननोक्तं रथन्तरमि'ति । अयमर्थः—
वाशब्दः पक्षान्तरार्थे । अथ वा राथन्तरबृहत्पृष्ठयोः प्रथमतृतीययोर-
ह्नोः पवमाने ये बृहत्यौ तयोर्जानित्रे कुर्यात् । पुनरनुष्टुभि छन्दस्सा-
म्यात् बृहत्याञ्जनित्रयोरुत्पत्तिहेत्वन्तरमुच्यते । प्रजननत्वेन रथसं-
स्तुतं रथन्तरं, वसिष्ठश्च रथन्तरं दृष्टवान् । तादृशे च जनित्रे इति
सादृश्यं तयोरह्नोः कारणम् । तृतीयं पक्षमाह—'बार्हतयोरित्येके
तयोर्विकल्पः स्यादार्षेयकल्पेने'ति । बृहत्यबृहत्योर्द्वितीयचतुर्थयोर-
ह्नोर्ये बृहत्यौ तयोः कुर्यादित्यर्थः । आर्षेयकल्पे एते सामनी नोक्ते इति
तयोर्विकल्पः स्यादेतेनाऽऽर्षेयकल्पेनेत्युक्तं प्रत्यक्षब्राह्मणविहितत्वयो-
गाद्विकल्पो युक्त इत्यभिप्रायः ॥ ३ ॥

अथ चतुर्थेऽहनि प्रत्यवरोहीण्युक्थानि तानि प्रशंसति—

**प्रत्यवरोहीण्युत्तमस्याऽह्न उक्थानि भवन्ति प्रतिष्ठित्यै॥४॥**

एकविंशाहर्द्वयकर्तव्यत्वात् प्रतिष्ठाहेतुत्वम् । अत्र 'या जामदग्न्यस्य
प्रथमा सा संसर्पस्य न वा सौपर्णे उद्धरति परितो षिञ्चता सुतमिति
बार्हदुक्थमि'त्यादि कल्पो द्रष्टव्यः ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-
प्रकाशे एकविंशाध्यायस्यैकादशः खण्डः ॥

---

## द्वादशः खण्डः ॥

अथ विश्वामित्रस्य सञ्जयाख्यं चतूरात्रमाह—

**त्रिवृदग्निष्टोमः पञ्चदश उक्थः सप्तदश उक्थ एक-
विंशोऽतिरात्रो विश्वामित्रस्य सञ्जयः ॥ १ ॥**

विश्वामित्रस्य सञ्जयसाधनत्वात् सञ्जय इति नाम ॥ १ ॥

कथमेतन्नाम सम्पन्नमिति तदुपपादयति—

**जह्नुवृचीवन्तो राष्ट्र आहिंसन्त स विश्वामित्रो जाह्नवो राजैतमपश्यत् स राष्ट्रमभवदराष्ट्रमितरे ॥ २ ॥**

जह्नोः पुत्रा ऋचीवन्नामकाः केचन राजानः आसन् । ते च राष्ट्रे राष्ट्रविषये राज्यस्वामित्वाय आहिंसन्त परस्परं हिंसां कलहं सर्वतोऽकुर्वन् । तेषां मध्ये जाह्नवः जह्नुपुत्रो विश्वामित्र एतं चतूरात्रमपश्यत् दृष्ट्वाऽनुष्ठितवानित्यर्थः । स तत्सामर्थ्यात् राष्ट्रमभवत् राष्ट्रं सर्वं विश्वामित्र एव पर्यग्रहीदित्यर्थः । इतरे ऋचीवन्त अराष्ट्रं अराष्ट्रका इतरान् राज्यस्थाः पुरुषा नाऽङ्गीचक्रुरित्यर्थः ॥ २ ॥

एतस्याऽधिकारिणमाह—

**भ्रातृव्यवान्यजेत ॥ ३ ॥**

यस्माद्भ्रातृव्यानां मध्ये वसिष्ठस्यैवेतरवैलक्षण्येन, जयसाधनमभूत् । अतो भ्रातृव्यवानधिकारी ॥ ३ ॥

उक्तार्थवेदनं प्रशंसति—

**भवत्यात्मना पराऽस्य भ्रातृव्यो भवति य एवं वेद॥**

स्वयं जयवान् भवति । अस्य भ्रातृव्यः पराजितो भवतीत्यर्थः ॥४॥

अथ चतुर्णामह्नां यत्त्रिवृदादिस्तोमचतुष्टयात्मकत्वमस्ति तत् प्रशंसति—

**ज्योतिर्वा एष विहृतः ॥ ५ ॥**

(१)'त्रिवृत्पञ्चदशस्सप्तदश एकविंशः। एतानि वाव तानि ज्योतींषी' ति श्रुत्यन्तरादेष चतूरात्रो विहृतो ज्योतिरेव ॥ ५ ॥

अथ वेदनं प्रशंसति—

**ज्योतिः प्रजानां भवति य एवं वेद ॥ ६ ॥**

स्पष्टम् ॥ ६ ॥

प्रकारान्तरेणैतं चतूरात्रं प्रशंसति—

**चतुष्टोमो वा एष चतुष्पादाः पशवः पशुष्वेव प्रतितिष्ठति ॥ ७ ॥**

---

१ तै ब्रा. १ ५. ११.

एष चतूरात्रश्चतुष्टोमः खलु । क्रमेण त्रिवृदादीनां विधानात् ॥ ७॥

अथ चतुर्णामप्यह्नां यदेकविंशात् स्तोमादतिक्रमणमस्ति तत् प्रशंसति—

**एकविंशᳪशᳪस्तोमा नाऽतियन्ति प्रतिष्ठा वा एकविंᳪशोऽन्तत एव यज्ञस्य प्रतितिष्ठति ॥ ८ ॥**

प्रजापतेः पादत उत्पन्नत्वात्पादयोः प्रतिष्ठाहेतुत्वात् 'असावादित्य एकविंश'इति श्रुतेः तस्य च प्रतिष्ठितत्वाच्चाऽस्य प्रतिष्ठितत्वम् । अत्र 'प्र सोमासो विपश्चित इति गायत्रमेकस्यामाश्वमेकस्यां जराबोधीयमेकस्यां प्र सोम देव वीतय इति यौधाजयन्तिसृषु समानमितरं प्रथमेनाऽह्ना संसर्पस्ये'त्यादिकः कल्पो द्रष्टव्यः ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकविंशाध्यायस्य द्वादशः खण्डः ॥

## त्रयोदशः खण्डः ॥

अथ त्रयः पञ्चरात्राः । तत्राऽभ्यासंग्याख्यं पञ्चरात्रमाह—

**द्वे त्रिवृती सवने पञ्चदशमेकं द्वे पञ्चदशे सवने सप्तदशमेकं द्वे सप्तदशे सवने एकविंᳪशमेकं द्वे एकविंᳪशे सवने त्रिणवमेकं द्वे त्रिणवे सवने त्रयस्त्रिंᳪशमेकं प्रत्यवरोहीण्युक्थानि त्रिणवं प्रथमं द्वे एकविंᳪशे सषोडशिके पञ्चदशी रात्रिस्त्रिवृत्सन्धिः ॥ १ ॥**

त्रिवृत्स्तोमके प्रातर्माध्यन्दिने सवने । तृतीयं सवनं पञ्चदशस्तोमकम् । पुनर्द्वितीयस्मिन्नहनि द्वे पञ्चदशस्तोमके सवने । तृतीयं सप्तदशस्तोमकमित्येवं क्रमेण द्रष्टव्यम् । अत्राऽप्युक्थानि त्रीण्यपि प्रत्यवरोहस्तोमकानि । तत्राऽयं विभागः—त्रिणवं प्रथममुक्थं द्वे उक्थे एकविंशे रात्रिस्सन्धिः प्रकृतिवदेव ॥ १ ॥

अस्मिन् पञ्चरात्रे यत्पञ्चरात्रत्वमस्ति तत् प्रशंसितुमाह—

**(१)देवाश्च वा असुराश्चाऽस्पर्धन्त ते न व्यजयन्त**

---

१. अत्र शतपथब्राह्मणं ( १. ४. ४. ६. ) द्रष्टव्यम् ।

**तेऽब्रुवन् वाचो मिथुनेन विजयामहै यतरे नो वाचो मिथुनं न प्रतिविन्दाꣳस्ते परा भवानिति ते देवा एक इत्यब्रुवन्नेकेत्यसुरा वाचो मिथुनं प्रत्यविन्दन् द्वाविति देवा अब्रुवन् द्वे इत्यसुरा वाचो मिथुनं प्रत्यविन्दꣳस्त्रय इति देवा अब्रुवꣳस्तिस्र इत्यसुरा वाचो मिथुनं प्रत्यविन्दꣳश्चत्वार इति देवा अब्रुवꣳश्चतस्र इत्यसुरा वाचो मिथुनं प्रत्यविन्दन् पञ्चेति देवा अब्रुवन्नाऽसुरा अविन्दꣳस्ततो देवा अभवन् परासुराः ॥ २ ॥**

पूर्वं देवाश्चाऽसुराश्चाऽस्पर्द्धन्त। तेषां विजयो न प्राप्तः। तदर्थं देवा इत्यब्रुवन् असुरान्–वयं वाचो मिथुनेन स्त्रीपुंलिंगात्मकेन विजयामहै जयं प्राप्नुमः। अस्माकं मध्ये वाङ्मिथुनं ये प्रयोक्तुं न शक्नुवन्ति ते पराभूता इति मिथस्समयमकुर्वत। एवं सति ते देवा एक इति पुंलिङ्गां वाचं अब्रुवन्। तस्याः प्रतियोगित्वेनाऽसुरा एकेति स्त्रीलिङ्गां वाचमब्रुवन्। एवं द्वित्रिचतुस्संख्यावाचकं वाचो मिथुनं परस्परमब्रुवन्। ततो देवाः पञ्चेत्यब्रुवन् तस्य स्त्रीलिङ्गे रूपाविशेषात् विलक्षणशब्दं कर्तुं नाऽविन्दन् नाऽलभन्ताऽसुराः। ततो वाचो मिथुनजयात् देवा अभवन् समर्थाबभूवन्। असुरास्तु पराभवन्। एवं देवानां जयहेतुरयं पञ्चरात्र इति तस्य स्तुतिर्द्रष्टव्या ॥ २ ॥

उक्तार्थवेदनं प्रशंसति—

**भवत्यात्मना परास्य भ्रातृव्यो भवति य एवं वेद ॥ ३ ॥**

स्पष्टम् ॥ ३ ॥

पुनः प्रशंसति—

**संवत्सरं वा एषां तद्वीर्यमन्नाद्यमवृञ्जत ॥ ४ ॥**

तत्तदा वाग्विवादकाले एषामसुराणामन्नाद्यं वीर्यं आशिष्टत्वलक्षणं यद्वा बहुपुत्रपोषणसामर्थ्यं मध्यं संवत्सरं संवत्सरपर्यन्तमवृञ्जत अवर्जयन् देवाः। संवत्सरस्य पञ्चात्मकत्वात् पञ्चसंख्यायां वाचो मिथुनं नाऽविन्दन् यतः, अतः संवत्सरं वीर्येणाऽवृञ्जेतत्यर्थः ॥ ४ ॥

उक्तार्थज्ञं प्रशंसति—

**संवत्सरं वीर्यमन्नाद्यं भ्रातृव्यस्य वृङ्क्ते य एवं वेद ॥ ५ ॥**

स्पष्टम् ॥ ५ ॥

पुनरत्र यत् पञ्चत्वं तत् प्रशंसति—

पञ्चरात्रो वा एष पाङ्क्तः पुरुषः पाङ्क्ताः पशवस्तेन पुरुषञ्च पशूꣳश्चाऽऽप्नोति ॥ ६ ॥

एष यज्ञः पञ्चरात्रः खलु । पाङ्क्तः पुरुषः । द्वौ पादौ द्वौ हस्तौ मध्यदेहश्चेति पुरुषः पञ्चसंख्यायोगात्पाङ्क्तः । पशवोऽपि पाङ्क्ताः । तत्प्रयोगेण पुरुषं पुत्रभृत्यादिरूपं पशूंश्च प्राप्नोति यजमानः ॥ ६ ॥

अथैतत्सवनत्रयस्तोमं द्वित्वसंख्याद्वारेण प्रशंसति—

अस्थुरिर्वा एष सन्ततो यज्ञो द्वौ द्वौ हि स्तोमावहर्वहतो यं कामं कामयते तमेतेनाऽभ्यश्नुते ॥ ७ ॥

एष उक्तः पञ्चरात्रः सन्ततोऽस्थूरिर्वै । यद्वा अस्थूरिस्सन् सन्ततः अविच्छेदेन प्रवृत्तः । अस्थूरित्वमेव दर्शयति—द्वौ द्वावेव त्रिवृदादिस्तोमौ खलु एकैकमहर्वहतः । स्तोमद्वयेनाऽहर्वहनप्रकारो 'द्वे त्रिवृती सवने पञ्चदशमेकमि'त्यादिना स्पष्टम्। अतोऽप्राप्तिसाधनविषयसंख्याया अत्राऽभावाद्यजमानो यं कामं कामयते तदस्थूरिणा पञ्चरात्रेणाऽऽप्नोति ॥

तदेव प्रसिद्धीकृत्याऽऽह—

यत्र यत्र ह्यस्थूरिणा कामयते तत्तदभ्यश्नुते ॥ ८ ॥

यस्मिन् देशे गन्तुमभिलषति तं तं देशं अस्थुरिणाऽभ्यश्नुत इत्युक्तं भवति ॥ ८ ॥

अथ पुनः प्रशंसति—

अभ्यासंग्यः पञ्चाहो भवति सन्तत्यै ॥ ९ ॥

अभ्यासङ्गनयुक्तेन स्तोमेन पुनरनन्तरं यत्कर्म इत्यर्थः । तद्वताञ्चाऽहः कर्त्तव्यः ? स चाऽहः सन्तत्या अविच्छेदाय भवति ॥ ९ ॥

अथोक्थानां यः प्रत्यवरोहप्रयोगोऽस्ति तं प्रशंसति—

प्रत्यवरोहीण्युत्तमस्याऽह्न उक्थानि भवन्ति प्रतिष्ठित्यै ॥ १० ॥

स्पष्टम् । 'अथ वैश्वामित्रो ह्यहौ जराबोधीयस्य लोकसोमेसाम स्वाशिरामर्कस्य मोक्षं सोरभस्यौपगवं द्वादशाहिकं तृतीयमहरि'त्यादिकः कल्पोऽत्र द्रष्टव्यः ॥ १० ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकविंशाध्यायस्य त्रयोदशः खण्डः ॥

## चतुर्दशः खण्डः ॥

(१) पञ्चशारदीयाख्यं पञ्चरात्रमाह—

**त्रिवृदग्निष्टोमः पञ्चदश उक्थः सप्तदश उक्थः पञ्चदश उक्थः सप्तदशोऽतिरात्रः पञ्चशारदीयो मरुतांस्तोमः ॥ १ ॥**

यः पञ्चसु शरत्स्वङ्गभूतैः पशुबन्धैरिष्ट्वा पश्चादारभ्यते स पञ्चशारदीयो नाम । स एव मरुतां स्तोमः ॥ १ ॥

अस्याऽधिकारिणमाह—

**यः कामयेत बहु स्यामिति स एतेन यजेत ॥ २ ॥**

स्पष्टम् ॥ २ ॥

उक्तं फलं प्रयोगद्वारा प्रशंसति—

**मरुतो वै देवानां भूयिष्ठा बहुरेव भवति ॥ ३ ॥**

देवानां मध्ये अतिशयेन बहवः । अत एतदनुष्ठाताऽपि पुत्रादिभिर्बहुरेव भवति ॥ ३ ॥

अथ यत् स्तोमानां सप्तदशानतिक्रमणमस्ति तत् प्रशंसति—

**सप्तदशंस्तोमा नाऽऽतियन्ति प्रजापतिर्वै सप्तदशः प्रजापतिमेवाऽऽप्नोति ॥ ४ ॥**

यः स्तोमः सप्तदशस्तोमं नाऽऽतिक्रामति । प्रजापतिर्वै सप्तदशः स्तोमः । अतः स्तोतारः प्रजापतिमेवाऽऽप्नुवन्ति ॥ ४ ॥

अथ विधास्यमानसप्तदशोपलक्षणस्तुत्यर्थं कयाशुभीयस्य साम्नो विधानार्थं पुरावृत्तमाह—

**अगस्त्यो वै मरुद्भ्य उक्षणः प्रौक्षत्तानिन्द्रायाऽवहनात्ते वज्रमादायाऽभ्यपतन् स एतत्कयाशुभीयमपश्यत्तेनाऽशमयत ॥ ५ ॥**

पूर्वमगस्त्यो मरुद्भ्यो देवेभ्य उक्षणः प्रौक्षत मरुद्भ्यो देवेभ्यो

---

१. अस्य विधिः तैत्तिरीयब्राह्मणे द्वितीयाष्टके सप्तमप्रपाठके दशमैकादशानुवाकयोर्द्रष्टव्यः ।

युष्मान् प्रोक्षामीति प्रोक्षितवान्। अस्ति प्रोक्षणसमये देवतोद्देशः। यथाऽऽपस्तम्बः–(१)'उपाकरणे नियोजने प्रोक्षणे वपाया उद्धरणे' इति। एवं मरुद्भ्यः प्रोक्षितानेवेन्द्रायाऽबध्नात् उपेत्य न्ययोजयत्। नियोजनेऽपि देवतोद्देशः प्रदर्शितः। ते मरुतः क्रुद्धा वज्रमुद्यम्याऽगस्त्यमभ्यपतन् अपीडयन्। सोऽगस्त्य एतत्कयाशुभीयं साम मरुतां शान्त्यर्थं अपश्यत्। तेन तेषां कोपमशमयत्। तैत्तिरीयकेऽपि अगस्त्येन्द्रावुभावपि मरुतां कोपमशमयतामिति (२)"तानगस्त्यश्चेन्द्रश्च कयाशुभीयेनाऽशमयतामि"त्युक्तम् ॥ ५ ॥

इदानीन्तद्विधत्ते—

**यत् कयाशुभीयं शस्यते शान्त्या एव ॥ ६ ॥**

स्पष्टम् ॥ ६ ॥

अथ पञ्चसंवत्सरेषु ये पशुबन्धाः सन्ति तत्र प्रयोगसंग्रहः—सप्तदशोक्ष्णः प्रोक्षणान्तं कृत्वा विसृजेत्। तत्स्थाने त्रिवत्सानालभेत। एवं पञ्चसम्वत्सरपर्यन्तम्। ततः परित्यक्तान् अनूबन्ध्यान् कुर्यादिति तत्सर्वं प्रदर्शयति—

**सप्तदश पृश्नीनुक्ष्णः पञ्चवर्षान् सप्तदश पृश्नीस्त्रिवत्सा अप्रवीतास्तान् पर्यग्निकृतान् प्रोक्षितानेतरा लभन्ते प्रेतरान् सृजन्ति ॥ ७ ॥**

सप्तदशसंख्याकान् पञ्चवर्षीयानुक्तलक्षणान् सेचनसमर्थान् ऋषभान् सप्तदशसंख्याकास्त्रिवत्सा वर्षत्रयवयस्का अप्रवीता वीगतिप्रजननकान्त्यशनखादनेष्विति धातुरत्र प्रजननार्थः। अगर्भिणीरित्यर्थः। ताश्चाऽऽनीय सहैवोपाकृत्य तानुभयानपि प्रोक्षितान् पर्य्यग्निकृतान् कृत्वा इतरा वत्सतरीरालभेरन्। इतरानुक्ष्णो विसृजेयुः। प्रोक्षितानिति (३)'स्त्रीपुंवच्चे'ति पुंवद्भावः पुंलिङ्गता। आ इतरा इति पदविभागः। आलभन्ते इतरान् प्रसृजन्तीत्यन्वयः ॥ ७ ॥

अथ द्वितीयादिसम्वत्सरचतुष्टयेऽप्येवमेव कर्त्तव्यमित्याह—

**ततः संवत्सरे नवनीतपृश्नीररुणा आनयन्ति ताꣳश्चैवोक्ष्णस्तान् पर्यग्निकृतान् प्रोक्षितानेतरा लभन्ते प्रे-**

---

१. आप. श्रौ. ७. १२. ९. २. तै ब्रा. २. ७. ११. १.
३ पा. सू. १. २. ६६.

**तरान् सृजन्ति ततः संवत्सरे राजीवा आनयन्ति ताꣳश्चैवोक्षणस्तान् पर्यग्निकृतान् प्रोक्षितानेतरा लभन्ते प्रेतरान् सृजन्ति ततः संवत्सरे पिशङ्गीरानयन्ति ताꣳश्चैवोक्षणस्तान् पर्यग्निकृतान् प्रोक्षितानेतरा लभन्ते प्रेतरान् सृजन्ति ततः संवत्सरे सारङ्गीरानयन्ति ताꣳश्चैवोक्षणस्तान् पर्यग्निकृतान् प्रोक्षितानेतरा लभन्ते प्रेतरान् सृजन्ति ॥ ८ ॥**

आलभ्यानां स्त्रीपशूनां वर्णे प्रतिसंवत्सरं विशेषः । तद्वर्णविशेषाः स्पष्टाः । उक्तानेव वर्णविशेषानापस्तम्बोऽनुचक्राम--(१) 'वर्णाननुक्रमिष्यामः । राजीवा नवनीतपृश्नीररुणाः पिशङ्गीः सारङ्गीरुत्तमीरालभ्य दीक्षन्त' इति । अत्र द्राह्यायणः--'पञ्चशारदीये पशुबन्धैर्यजेत न उक्ता ब्राह्मणेन सप्तम्यामष्टम्यां वाऽऽश्वयुजीपक्षेषु वत्सतरीरेवाऽऽलभेरन्नुक्षणो विसृजेयुस्तेषां यावन्तो भ्रेषमापद्येरंस्तावतोऽन्यानयजुष्टः तानपि सृजेयुस्तथारूपांस्तावद्वर्षान् षष्ठ्यां शरदि कार्त्तिके मासि यजेत तस्य द्वादशोपसदः' इति ॥ ८ ॥

अस्य विहितपञ्चरात्रस्य यः कालस्तं दर्शयति--

**ततः संवत्सरे सोमा भवन्ति ॥ ९ ॥**

पञ्चसु शरत्सु पशुबन्धैरिष्ट्वा ततोऽनन्तरं समान्तरे त एव सोमा भवन्ति । पञ्च सोमयागान् कुर्युः । तत्राऽपि कालविशेषः-'षष्ठ्यां शरदि कार्त्तिक' इति ॥ ९ ॥

तत्प्रदर्शितपञ्चवर्षसम्पूर्त्तिपर्य्यन्ताः ये सप्तदशोक्षाणः पर्य्यग्निकृत्य त्यक्ताः तेषां मध्ये प्रत्यहं कियन्त आलभ्या इति विवेके प्राप्ते आह--

**त्रीꣳस्त्रीनन्वहमालभन्ते पञ्चोत्तमेऽहनि ॥ १० ॥**

स्पष्टम् ॥ १० ॥

सवनीयपशुवदग्नीषोमीयस्य ( त्युक्तश्रुतिरिति क्षयरोगाभिमानिनी पापदेवताप्रसक्तौ ) अजः कर्त्तव्य इत्याह--

**अजोऽग्नीषोमीयः ॥ ११ ॥**

स्पष्टम् ॥ ११ ॥

---

१. आप. श्रौ. २२. २०. १३, १४.

अथोक्तपशूनां उक्षान्तपशुबन्धयोगाद्वत्सतरीणाञ्च देवतामाह--

**ऐन्द्रा मारुता उक्षाणो मारुत्यो वत्सतर्य्यः ॥ १२ ॥**

इन्द्रस्य मरुताञ्च पशुसम्बन्धः(१) 'अगस्त्यो वै मरुद्भ्य उक्ष्णः प्रौक्ष'दित्यादितो ज्ञेयः ॥ १२ ॥

अथाऽऽलम्भात् पुरा कञ्चिदुक्षाणं रुद्रो यद्यभिमन्येत तर्हि तस्योपायमाह-

**यदि रुद्रोऽभिमन्येताऽग्नये रुद्रवते पुरोडाशमष्टाकपालं निरुप्याऽथाऽन्यमालभेत ॥ १३ ॥**

यदि कञ्चिदुक्षाणं रुद्रः पशुस्वामी अभिमन्येत रोगोत्पादनेन प्रणाशयेत्। सुज्ञानमन्यत् ॥ १३ ॥

अथ प्रमादाद्दरपतनादिना भूमावेव कश्चित् संशीर्य्येत तदा कथमिति तत्राऽऽह—

**यदि सꣳशीर्य्येत भौममेककपालं निरुप्याऽथाऽन्यमालभेत ॥ १४ ॥**

भौमो भूमिदेवताकः। तस्यैकत्वादेककपालो युक्तः ॥ १४ ॥

पोषार्थं मुक्तानां मध्ये यदि कश्चिदत्यन्तकृशस्स्यात्तत्राऽऽह—

**यद्यवसीदेन्नैर्ऋतं चरुं निरुप्याऽथाऽन्यमालभेत यद्यप्सु म्रियेताऽपोनप्त्रीयं चरुं निरुप्याऽथाऽन्यमालभेत यद्यन्धस्स्यात् सौर्यं चरुं निरुप्याऽथाऽन्यमालभेत ॥ १५ ॥**

सूर्य्यस्य चक्षुरभिमानिदेवतात्वात्तदीयो युक्तः ॥ १५ ॥

त्वग्दोषशृङ्गाद्यङ्गहीनयोराह—

**यदि श्लवणो वा कूटो वा स्याद्बार्हस्पत्यं चरुं निरुप्याऽथाऽन्यमालभेत ॥ १६ ॥**

श्लवणो रक्तवर्णो, विडद्वारः त्वग्दोषः, कूटः शृङ्गहीनः ॥ १६ ॥

अथ कस्यचित्पलायन आह--

**यदि पलायेत वायव्यं चरुं निरुप्याऽथाऽन्यमालभेत ॥ १७ ॥**

---

१. तां. ब्रा. २१. १४. ५

पलायनस्य वाय्वनुग्रहाधीनत्वाद्वायव्यश्चरुर्युक्तः ॥ १७ ॥

अथ वीर्यादिभिः कस्यचिद्बलादपहारे आह—

**यदि प्रासहाजयेयुरिन्द्राय प्रसह्वन एकादशकपालं निरूप्याऽथाऽन्यमालभेत ॥ १८ ॥**

बलात्कारस्येन्द्राधीनत्वादैन्द्र एकादशकपालो युक्तः ॥ १८ ॥

अथ रुद्रस्य व्यतिरेकेण मृत्युनैव यदि कश्चित् मृतस्स्यात्तत्राऽऽह—

**यद्यन्येन मृत्युना म्रियेत प्राजापत्यं द्वादशकपालं निरुप्याऽथाऽन्यमालभेत ॥ १९ ॥**

मृत्योरपि प्रजापत्यधीनत्वात् प्रजापतेः संवत्सरात्मकत्वात् द्वादशमाससमत्वात् प्रजापतेस्तत्संख्याककपालः पुरोडाशो युक्तः ॥ १९ ॥

अथाऽस्य सर्वसिद्धिसाधनत्वं प्रयोगद्वारेणोपपादयति—

**एतेन वा एकया वा गान्दमो वेतस्वतीष्ट्वा सर्वामृद्धिमादृर्ध्नोत् ॥२०॥**

एतेन खलु पञ्चरात्रेण एकया वा एक एवाऽसहायस्सन् मित्रयत्यमित्रानित्येकया वा । गां पेरषां वाचं भूमिं वा दमयतीति गान्दमः । वेतस्वति बहुवेतसे तीर्थविशेष इष्ट्वा सर्वामृद्धिं कृत्स्नां भूमिं स्वामित्वलक्षणामादृर्ध्नोत् प्राप्तवान् ॥ २० ॥

**सर्वामृद्धिमृध्नोति य एवं वेद ॥ २१ ॥**

स्पष्टम् ॥ २१ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे एकविंशाध्यायस्य चतुर्दशः खण्डः ॥

---

## पञ्चदशः खण्डः ॥

अथाऽन्तर्महाव्रतस्य पञ्चरात्रमाह—

**ज्योतिष्टोमोऽग्निष्टोमो गौरुक्थ्यो महाव्रतं गौरुक्थ्य आयुरतिरात्रः ॥ १ ॥**

सुगमम् ॥ १ ॥

यन्महाव्रतं मध्यममहस्तत् प्रशंसितुमाह—

संवत्सरो वै व्रतं तस्य वसन्त ऋतुर्मुखं ग्रीष्मश्च वर्षाश्च पक्षौ शरन्मध्यꣳहेमन्तः पुच्छम् ॥ २ ॥

यन्महाव्रतमस्ति तत् संवत्सरो वै संवत्सरसत्रस्य गवामयनस्योत्पत्तिमाह । तस्य महाव्रतस्य संवत्सररूपत्वमुक्तम् । अतः संवत्सरावयवान् महाव्रतावयवे योजयति—ऋतुषु वसन्तस्य प्राधान्यात् अङ्गेषु मुखस्य प्राधान्यात् वसन्तस्य मुखत्वकल्पनम् । ग्रीष्मवर्षयोः परस्परप्रतियोगित्वेन पक्षद्वयकल्पना । शरदः ऋतुषु मध्यमत्वात् मध्यत्वकल्पनम् । हेमन्तस्याऽन्तिमत्वात् पुच्छत्वकल्पनम् ॥ २ ॥

शरदो मध्यत्वे उपपत्तिं दर्शयति—

तस्माच्छरदमोषधयोऽभिसंपच्यन्ते शरद्धि मध्यꣳ संवत्सरस्य ॥ ३ ॥

यस्माच्छरत् महाव्रतस्य मध्यदेशः तस्माच्छरदमभिलक्ष्य ओषधयो व्रीहियवादयः पच्यन्ते, यथा फलिता भवेयुस्तथा क्रियन्ते कृषीवलैः। मध्यतोऽह्यन्नं धीयते । अतः शरदि अन्नसिद्धिस्तस्य मध्यदेहकल्पनमिति प्रसिद्धिदर्शनार्थमेतत्प्रासङ्गिकम् ॥ ३ ॥

अथाऽस्मिन् पञ्चरात्रे महाव्रतमयुक्तमित्याक्षिपति—

अकृतं वा एते कुर्वन्ति ये पुरा संवत्सरात् व्रतमुपयन्ति ॥ ४ ॥

महाव्रतस्य संवत्सरसत्र एवाऽन्तर्भावसम्भवात् संवत्सरात्पुरा पञ्चरात्रे व्रतं महाव्रतं यदुपयन्ति, अकृतकार्य्यमेव कुर्वन्ति । अतो न युक्तमेव महाव्रतमित्यर्थः ॥ ४ ॥

अथाऽस्य परिहारमाह—

एतद्वै व्रतमाप्तं यत्पञ्चरात्रे पञ्च ह्यृतवः ॥ ५ ॥

अस्मिन् पञ्चरात्रे यद्व्रतमस्ति एतत्खलु आप्तं आप्तव्ययुक्तं व्रतम् । अतोऽकृतकरणं न भवति । अत्र 'ज्योतिष्टोमोऽग्निष्टोमो गौरुकथ्यो महाव्रतं गौरुकथ्य आयुरतिरात्र एकाह कल्पताः' इति कल्पो द्रष्टव्यः । कथमस्याप्तत्वमिति ? तद्दर्शयति—पञ्च ह्यृतव इति । संवत्सरे हेमन्त-

शिशिरयोरैकेन पञ्च ऋतवः खलु, अयमपि पञ्चरात्रः । अतः पञ्चत्व-संख्यासाम्यात् पञ्चरात्रस्य संवत्सरसत्रसदृशत्वात् आप्तमेव व्रत-मित्यर्थः ॥ ५ ॥

उक्तार्थवेदनं प्रशंसति—

आप्तेन व्रतेन स्तुते सर्वमायुरेति य एवं वेद ॥ ६ ॥

व्रतमिति प्राधान्येन महाव्रताहर्गतानां राजनादिपञ्चसाम्नां त त्सम्बन्धिनां तदाश्रयस्याऽह्नोऽपि नामधेयम् । अतो यो व्रतस्याऽऽप्तत्व मुक्तरूपेण जानाति स आप्तेनैतद्व्रतेनैव च स्तुते सर्वं सम्पूर्णं व्रतं सं-वत्सरलक्षणमायुश्चेति प्राप्नोति ॥ ६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीर
बुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते
माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे
एकविंशाध्यायस्य पञ्चदशः खण्डः ॥

एकविंशोऽध्यायस्समाप्तिमगमत ॥



# अथ द्वाविंशोऽध्यायः ॥

## प्रथमः खण्डः ॥

यस्य निश्श्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
एकविंशे गर्गशेषस्तथा पञ्चत्रिरात्रकाः ।
चतूरात्राश्च चत्वारः पञ्चरात्रास्त्रयः क्रमात् ॥
प्रोक्ता द्वाविंशकेऽध्याये षड्रात्रा ह्यथ वर्ण्यते ॥

त्रयः षड्रात्राः । तत्र प्रथमे प्रतिष्ठासाधनं ऋतूनां षड्रात्रमाह—

**पृष्ठ्यः षडहः ॥ १ ॥**

ते च षडहाः । कल्पकारः 'पृष्ठ्यः षडहः समूढो वा व्यूढो वे'त्युक्तवान् । उभयोरन्यतरप्रकृतिकत्वम् ॥ १ ॥

अथास्य ऋतुसम्बन्धं ब्रुवन्नधिकारिणमाह—

**ऋतवो न प्रत्यतिष्ठꣳस्त एतेन प्रत्यतिष्ठन् प्रतिष्ठाकामो यजेत प्रत्येव तिष्ठति ॥ २ ॥**

स्पष्टोऽर्थः ॥ २ ॥

पुनः प्रकारान्तरेण प्रशंसति—

**षड्वा ऋतव ऋतुष्वेवैतेन प्रतितिष्ठति पृष्ठ्यः षडहो भवति प्रत्यक्षमृध्यै ॥ ३ ॥**

यस्मिन् षडहे रथन्तरादि रैवतान्तं पृष्ठानि क्रमेण होतुः पृष्ठानि स्युः, स पृष्ठ्यः षडहः । स चेतरक्रतुवदतिशय ( अदृष्ट ) फलत्वाभावात् प्रत्यक्षसमृध्या एव भवति ॥ ३ ॥

अस्य कथं प्रत्यक्षर्द्धिहेतुत्वमिति तत्राह—

**प्रत्यक्षं ह्येतेनर्त्तव आर्ध्नुवन्नृध्या एव ॥ ४ ॥**

एतेन पृष्ठ्यषडहेन ऋतवः खलु प्रत्यक्षमिदानीं दृश्यमानप्रकारेण शाखोचितपुष्पफलादिलक्षणेनाऽऽर्ध्नुवन् । अतोऽयमृध्या एव भवति । अत्र कल्पः—'पृष्ठ्यः षडहः समूढो वा व्यूढो वा समूढस्त्वेव तस्यो- 'पास्मै गायतानर' 'उपाशु जातमप्तुरं' 'पवमानस्य ते कव' इति प्रथमस्याऽह्नो बहिष्पवमानमौदलमासितं त्वाष्ट्रीसामे'त्यादिको द्रष्टव्यः ॥४॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे द्वाविंशाध्यायस्य प्रथमः खण्डः ॥



## द्वितीयः खण्डः ॥

अथोपरिष्टात् त्रिकद्रुकाख्यं द्वितीयं षड्रात्रमाह—

**त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्यो ज्योतिर्गौरायुरतिरात्रः ॥ १ ॥**

ज्योतिरादय एकाहिका द्रष्टव्याः ॥ १ ॥

अथाऽस्मिन्नधिकारिणमाह—

**यः कामयेत सर्वमायुरियामिति स एतेन यजेत ॥२॥**

स्पष्टम् ॥ २ ॥

पूर्वं त्र्यहं प्रशंसति—

**यस्त्र्यहः पुरस्ताद्भवति त्रयः प्राणापानव्यानास्त एव तत्सन्धीयन्ते ॥ ३ ॥**

यद्यदि त्रिवृत्पञ्चदशसप्तदशस्तोमात्मकस्त्र्यहः षडहस्य पुरस्ताद्भवति, प्राणापानव्यानात्मकाः प्राणा अपि तेन त्र्यहेन त एव प्राणादयः सन्धीयन्ते संयोजिता भवन्ति ॥ ३ ॥

उत्तरं त्र्यहं प्रशंसति—

**अथ यत् ज्योतिर्गौरायुरतिरात्रो भवति प्रतिष्ठित्यै ॥ ४ ॥**

स्पष्टः। अत्र 'एष एव त्र्यहो यदृतूनां यथा व्यूह' इत्यादिकः कल्पो द्रष्टव्यः ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे द्वाविंशाध्यायस्य द्वितीयः खण्डः ॥



## तृतीयः खण्डः ॥

अथाऽभ्यासंग्याख्यं तृतीयं षड्रात्रमाह—

**अभ्यासंग्यः पञ्चाहो विश्वजिदतिरात्रः ॥ १ ॥**

आदौ पञ्चाहो द्वे त्रिवृती सवने पञ्चदशमेकं द्वे पञ्चदशे सवने सप्तदशमेकं द्वे सप्तदशे सवने एकविंशमेकमित्याद्यभ्यासंग्यः क्रमेणाऽनुष्ठेयः। षष्ठमहर्विश्वजिदतिरात्रः कर्त्तव्यः ॥ १ ॥

अथ तं षड्रात्रक्रतुं सत्रात्मना स्तोतुं सत्रषडहयोः फलवैलक्षण्यं दर्शयति—

**अन्यस्मै वै कामाय सत्रमन्यस्मै यज्ञो न तत्सत्रेणाऽऽप्नोति यस्मैकं यज्ञो न तद्यज्ञेनाऽऽप्नोति यस्मैकꣳ सत्रम्॥२॥**

अन्यस्मै कामाय खलु सत्रमनुष्ठीयते। तथा यज्ञोऽपि। तदेव स्पष्टयति—यस्मैकं यस्मै फलाय स्वर्गादिलक्षणाय वै यज्ञो ज्योतिष्टोमादिरनुष्ठीयते तदेव फलं न सत्रेणाऽऽप्नोति, फलस्य प्रतिनियत्वात्। सत्रेण यत् न तत् फलं यज्ञेनाऽऽप्नोति । उभयत्र कमित्यनर्थकः, (१)'यस्मैकं पुने तच्छकेयमि'त्यादिवत् ॥ २ ॥

अस्त्वेवमुभयोः फलवैलक्षण्यम्। प्रकृते किमायातम्? इत्याह—

**सत्रमिव वा एतद्यदनुलोमं पृष्ठानि यदेकधा पृष्ठानि भवन्त्येकधैवाऽस्मिꣳस्तदोजो वीर्यं दधाति ॥ ३ ॥**

अनुलोमं षडहस्सु क्रमेण रथन्तरं बृहदित्येवं पृष्ठानि यद्यदि स्युः एतत्सत्रमिव वै सत्रवत्खलु। गव्यादिसत्रे क्रमेण पृष्ठानां सम्भवात्। एवं सति यद्यदि एकधैव पृष्ठानि षडपि भवन्ति, अस्मिन् यजमाने एकधैव तेजो दधाति प्रयोक्ता ॥ ३ ॥

**अन्नं पृष्ठान्यन्नाद्यमेवाऽस्मिन्दधाति ॥ ४ ॥**

पृष्ठानां षट्संख्याकत्वात् अन्नस्याऽपि षट्संख्याकत्वात् षड्रात्रप्रभवत्वाच्च पृष्ठान्यन्नमित्युपचर्यते। अतः पृष्ठप्रयोगात् तानि यजमाने अदनीयं व्रीह्याद्यन्नमेव स्थापयति ॥ ४ ॥

---

१. तै. सं. १. २. १ २.

अथ तानि पशुसाधनत्वेन प्रशंसति—

**पशवः पृष्ठानि पशुष्वेव प्रतितिष्ठति ॥ ५ ॥**

स्पष्टम् । (१)'स्पृशते'रिति निरुक्तात् पृष्ठानि । यथा ऋतुषु प्रकाशितानि एवं पशूनामपि सर्वैः स्पर्शनीयत्वात् पृष्ठानि पशव इति व्यपदेशः ॥५॥

अथाऽऽदितः पञ्चाहस्य यदभ्यासङ्गित्वं तत् प्रशंसति—

**अभ्यासंग्यः पञ्चाहो भवति सन्तत्यै ॥ ६ ॥**

पूर्वमहर्येन स्तोमेन समापितं तेनैव स्तोमेनाऽहरन्तरस्याऽप्युपक्रमादह्नां सान्तत्यम् ॥ ६ ॥

अथाऽन्त्यस्याऽह्नो विश्वजिदतिरात्रत्वं प्रशंसति--

**विश्वजिदतिरात्रो भवति विश्वस्याऽभिजित्यै ॥७॥**

स्पष्टम् । अत्र 'एष एव पञ्चाहो यः ऋतूनां समूढोऽभ्यासंग्यः' इत्यादिकः कल्पो द्रष्टव्यः ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे द्वाविंशाध्यायस्य तृतीयः खण्डः ॥

---

## चतुर्थः खण्डः ॥

अथ सप्त सप्तरात्राः । तत्र प्रथमं सप्तर्षीणां सप्तरात्रं समृद्धिफलसाधनं वा यज्ञमाह—

**पृष्ठ्यः षडहो महाव्रतमतिरात्रः ॥ १ ॥**

स्पष्टम् । महाव्रतञ्चैकाहिकम् ॥ १ ॥

अथाऽस्य सप्तर्षिसम्बन्धं समृद्धिफलसाधनं यज्ञं चाऽऽह—

**सप्त ऋषय एतेनाऽऽर्ध्नुवꣳस्तेनर्द्धिस्तस्मादेतेन यजन्त ऋद्ध्या एव ॥ २ ॥**

एतेन सप्तरात्रेणाऽऽर्ध्नुवन् पुत्रपश्वादिभिरत्यन्तसमृद्धा अभवन् । तस्मादेतेन ऋद्ध्या एव यजन्ते । एकः द्वौ बहव इति बहूनामप्यधिकारसम्भवाद्यजन्त इति बहुवचनम्, यजेरन्नित्यर्थः ॥ २ ॥

---

१. निरु. ४. ३. २.

अथैतमहर्गतसप्तसंख्याद्वारेण प्रशंसति—

**सप्त शिरसि प्राणाः प्राणा इन्द्रियाणीन्द्रियाण्येवै-तेनाऽऽप्नोति ॥ ३ ॥**

शिरसि चक्षुरादिसप्तच्छिद्रगतानि सप्त इन्द्रियाणि । इन्द्रियप्राणवि-संवादे प्राणस्यैव देहधारकत्वात् प्रशस्तत्वेनेन्द्रियाणि प्राणव्यपदेशं ल-भन्ते इतीन्द्रियाणि प्राणा इत्युच्यन्ते । तदेवाऽऽह–प्राणा इन्द्रियाणीति । प्राणाः प्राणव्यपदेशात्पूर्वं स्वरूपेणेन्द्रियाणीत्यर्थः । अत एतेन सप्तरा-त्रेण इन्द्रियाण्याप्नोति चक्षुरादिपाटवं नयतीति ॥ ३ ॥

पुनरुक्तसप्तसंख्याद्वारेण प्रशंसति—

**सप्त ग्राम्याः पशवस्तानेतेनाऽऽप्नोति ॥ ४ ॥**

ग्राम्या पशवो गवाश्वादयः ॥ ४ ॥

सप्तमस्याऽह्नो यन्महाव्रतपृष्ठत्वं तत्प्रशंसति--

**व्रतꣳ सप्तमस्याऽह्नः पृष्ठं भवति तद्ध्यनाप्तमन्नं वै व्रतमन्नाद्यमेवैतेनाऽऽप्नोति ॥ ५ ॥**

व्रतं महाव्रतं सप्तमस्याऽह्नः पृष्ठं भवति । तद्धि अनाप्तं सत्रेष्वेव प्राचुर्येण सम्भवात् । किं च महाव्रतमन्नं वै अन्नमेव तत्साधनत्वात् । अत एव तत्पृष्ठकरणेनाऽदनीयमन्नमाप्नोति ॥ ५ ॥

अथ महाव्रतातिरात्रमातिरिक्तमहष्षट्कं प्रशंसति—

**पृष्ठ्यः षडहो भवति प्रत्यक्षमृध्यै ॥ ६ ॥**

यत्र प्रयोगलक्षणस्समृध्यपभ्रंशो न जायते केवलमृद्धिकामो यजेते त्येवं स्तूयते तत्र परोक्षसमृद्धिः ॥ ६ ॥

ऋद्धेः प्रत्यक्षत्वेमेव दर्शयति—

**प्रत्यक्षꣳह्येतेन सप्त ऋषय आर्ध्नुवन्नृध्या एव ॥७॥**

अत्र 'एष एव षडहो यः ऋतूनां समूढो वा व्यूढो वा समूढस्त्वे-वैकाहिकं महाव्रतं तस्य ज्योतिष्टोमोऽतिरात्रः षोडशिमानि'ति कल्पो द्रष्टव्यः ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे द्वाविंशाध्यायस्य चतुर्थः खण्डः ॥

## पञ्चमः खण्डः ॥

अथ प्रजापतेस्सप्तरात्राख्यं प्रजादिफलसाधनकं द्वितीयं सप्तरात्रमाह—

**पृष्ठ्यः षडहः सप्तदशं महाव्रतमतिरात्रः ॥ १ ॥**

षडहः स्पष्टः। सप्तदशस्तोमकमतिरात्रसंस्थं महाव्रतं प्रथमं भवति ॥
अथाऽन्तिमस्याऽह्नः शिर आद्यङ्गस्य स्तोमव्यवस्थामाह—

**तस्य त्रिवृच्छिरः पञ्चदशौ पक्षौ सप्तदश आत्मैकविंशं पुच्छम् ॥ २ ॥**

महाव्रतस्तोत्रस्य शिरसः अवयवास्त्रिवृदादिस्तोमकाः कर्त्तव्याः ॥
अथैतस्य प्रजापतेः सृष्टिसाधनत्वेन प्रजासृष्टिसाधनत्वमित्याह—

**एतेन वै प्रजापतिः प्रजा असृजत ॥ ३ ॥**

सुगमम् ॥ ३ ॥
उक्तार्थं प्रशंसति—

**प्र प्रजया प्र पशुभिर्जायते य एवं वेद ॥ ४ ॥**

स्पष्टोऽर्थः ॥ ४ ॥
अथाऽस्याऽह्नः आत्मभागस्य यत् सप्तदशस्तोमत्वं तदनूद्य प्रशंसति—

**सप्तदशो वै प्रजापतिर्यत् सप्तदशं व्रतं भवति प्रजापतिमेवाऽऽप्नोति ॥ ५ ॥**

प्रजापतेस्सप्तदशत्वमसकृदुक्तम् ॥ ५ ॥
अथ शिरोभागस्य त्रिवृत्त्वं प्रशंसति—

**यत् त्रिवृच्छिरो भवति नव प्राणाः प्राणेष्वेव प्रतितिष्ठति ॥ ६ ॥**

त्रिवृत्स्तोमस्तोत्रीया नवकात्मकाः। प्राणा अपि शीर्षण्यास्सप्त, द्वाववाञ्चाविति नव। अतस्त्रिवृत्करणेन प्राणेष्वेव प्रतितिष्ठति ॥ ६ ॥
अथ पक्षयोः पञ्चदशत्वं प्रशंसति—

**यत्पञ्चदशौ पक्षौ सवीर्यत्वाय ॥ ७ ॥**

वीवध इत्युभयतो भारयुक्तः स्कन्धेनोह्यः काष्ठविशेषः। स यथा समभारो भवति तद्वदुभयपक्षयोः पञ्चदशत्वे वैषम्याभावात् सर्वीवधता भवति ॥ ७ ॥

अथाऽऽत्मभागस्य सप्तदशत्वं प्रशंसति—

**सप्तदश आत्मा भवति प्रजापतिर्वै सप्तदशः प्रजापतिमेवाऽऽप्नोति ॥ ८ ॥**

स्पष्टोऽर्थः ॥ ८ ॥

अथ यत्पुच्छभागस्यैकविंशत्वं तत् प्रशंसति--

**एकविंशं पुच्छं भवति प्रतिष्ठित्यै ॥ ९ ॥**

प्रजापतेः पादत उत्पन्नत्वात सर्वप्रकृतिभूताग्निष्टोमसमाप्तिसाधनत्वाच्च एकविंशस्तोमानां प्रतिष्ठा पुच्छभागस्य प्रतिष्ठित्यै। पक्षिणां पुच्छयोः प्रतिष्ठात्वं प्रसिद्धम्। अत्र 'एष एव षडहो यः ऋतूनां समूढो वा व्यूढो वा समूढस्त्वेव सप्तदशं व्रतं तस्यो 'पास्मै गायता नरः' 'पवस्व वाचो अग्रियो'' दविद्युतत्या रुचे'त्यादिकः कल्पो द्रष्टव्यः ॥ ९ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे द्वाविंशाध्यायस्य पञ्चमः खण्डः ॥

---

## षष्ठः खण्डः ॥

अथ छन्दोमपवमानाख्यं पशुफलं तृतीयं सप्तरात्रमाह—

**पृष्ठ्यः षडहश्छन्दोमपवमानं महाव्रतमतिरात्रः॥१॥**

षडहः स्पष्टः। छन्दोमपवमानमिति अस्य चतुर्विंशं बहिष्पवमानं, चतुश्चत्वारिंशो माध्यन्दिनः पवमानोऽष्टाचत्वारिंश आर्भवः कर्त्तव्यः। तदेव महाव्रतमिति प्रथमसप्तरात्रमहाव्रतम्। तदेवाऽतिरात्रमहः। अग्निष्टोमपर्यन्तान्यावृत्तिस्तोत्राणि उक्थानि पञ्चविंशस्तोत्राणि। पञ्चदशी रात्रिस्त्रिवृत्सन्धिः ॥ १ ॥

अस्याऽधिकारिणमाह—

**पशुकामो यजेत ॥ २ ॥**

स्पष्टम् ॥ २ ॥

कथमस्य पशुसाधनत्वं तदाह—

**पशवो वै छन्दोमाः ॥ ३ ॥**

छन्दोमानां चतुर्विंशादीनां, गायत्र्यक्षरसंख्यासाम्यात्तेषां, 'छन्दांसि पशुष्वाजिमयुरि'ति श्रुतेः, छन्दोमाः पशवः ॥ ३ ॥

अस्त्येवं किमत इति ? अत आह—

**यच्छन्दोमाः पवमाना महाव्रतस्य भवन्ति पशूनेवाऽवरुन्धे ॥ ४ ॥**

स्पष्टम् ॥ ४ ॥

अथाऽन्यपवमानानामन्येषां स्तोत्राणां च यत् स्तोमद्वैविध्यमस्ति तत् प्रशंसति—

**उभये स्तोमा युग्मन्तश्चाऽयुजश्च तन्मिथुनं तस्मान्मिथुनात् प्रजायते ॥ ५ ॥**

गतम् । अत्र 'एष एव षडहो यः ऋतूनां समूढो वा व्यूढो वा समूढस्त्वेव छन्दोमपवमानं व्रतं तस्य 'पवमानस्य ते वयामि'ति चतुर्ऋचस्य लोके तृचं व्यपरिवहति सत्रासाहीयजराबोधीयौ' इत्यादिकः कल्पो द्रष्टव्यः ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे द्वाविंशाध्यायस्य षष्ठः खण्डः ॥

---

## सप्तमः खण्डः ॥

अथ पुष्टिसाधनं जामदग्न्यं चतुर्थं लसप्तरात्रमाह—

**अभ्यासंगः पञ्चाहोऽथ त्रयस्त्रिंशमहस्तस्य चतुस्त्रिंशोऽग्निष्टोमः सप्तदशं महाव्रतमतिरात्रस्तस्य चतुर्विंशं बहिष्पवमानं त्रिवृच्छिरः पञ्चदशौ पक्षौ सप्तदश आत्मैकविंशं पुच्छम् ॥ १ ॥**

द्वे त्रिवृती सवने पञ्चदशं तृतीयसवनमित्याद्युक्तक्षण आदावभ्यासङ्ग्यः पञ्चाहः पूर्ववत् । अथ षष्ठमहः कृत्स्नमपि त्रयस्त्रिंशस्तोमकम्

तस्याऽग्निष्टोमश्चतुस्त्रिंशः। अथ सप्तममहः सप्तदशस्तोमकम्। महाव्रतमतिरात्रसंस्थं चतुर्विंशं बहिष्पवमानं भवति। महाव्रतस्य तस्य पृष्ठविभागः प्रजापतेस्सप्तरात्रवदवगन्तव्यः ॥ १ ॥

अथाऽस्य जमदग्निसम्बन्धद्वारेण पुष्टिसाधनत्वमाह—

एतेन वै जमदग्निः सर्वान् पोषानपुष्यत्सर्वानेवैतेन पोषान्पुष्यति ॥ २ ॥

अनेन सर्वविषयकामोऽधिकारीत्युक्तं भवति ॥ २ ॥

आदितः पञ्चाहं प्रशंसति—

यदभ्यासंग्यः पञ्चाहः पुरस्ताद्भवति सन्तत्या एव ॥३॥

अभ्यासङ्ग्यस्याऽह्नः सन्ततिप्रकारः पूर्वमेव प्रदर्शितः ॥ ३ ॥

अथ षष्ठस्याऽह्नो यत् त्रयस्त्रिंशस्तोमकं तदनूद्य प्रशंसति—

अथैतत्त्रयस्त्रिꣳशमहस्त्रयस्त्रिꣳशद्देवता देवता एवाऽऽप्नोति ॥ ४ ॥

अष्टौ वसवः, एकादश रुद्राः, द्वादशाऽऽदित्याः, प्रजापतिश्च, वषट्कारश्चेति त्रयस्त्रिंशद्देवताः ॥ ४ ॥

अथ तस्यैवाऽह्नोऽग्निष्टोमसाम्नो यच्चतुस्त्रिंशत्वं तत् प्रशंसति—

तस्य चतुस्त्रिꣳशोऽग्निष्टोमः प्रजापतिश्चतुस्त्रिꣳशो देवतानां प्रजापतिमेवाऽऽप्नोति ॥ ५ ॥

यद्यपि त्रयस्त्रिंशमध्ये एकः प्रजापतिरप्यन्तर्गतः, तथाऽपि व्यष्टिसमष्टिभेदेन प्रजापतेस्त्रयस्त्रिंशद्देवतात्मकत्वात्त्रयस्त्रिंशत्वं चतुस्त्रिंशत्त्वञ्च। अथ वा (१)'ये देवा दिव्येकादशस्थ पृथिव्यामध्यी'त्यादिमन्त्रवर्णात् पृथिव्यादिस्थानत्रयवासिनस्त्रयस्त्रिंशद्देवाः, तदपेक्षया प्रजापतिश्चतुस्त्रिंशः इत्यवगन्तव्यम् ॥ ५ ॥

अथाऽन्तिमस्याऽह्नो बहिष्पवमानगतां स्तोमसंख्यां प्रशंसति—

चतुर्विंꣳशं बहिष्पवमानं भवति महाव्रतस्य चतुर्विंꣳशत्यक्षरा गायत्री प्रजननं गायत्री प्रजात्यै ॥ ६ ॥

---

१. तै. सं. १. ४. १०.

स्पष्टम् । 'एते असृग्रमि'ति गायत्र्यात्मकाच्छात् देवादिकृत्स्नजगदुत्पत्तेः गायत्र्याः प्रजननसाधनत्वम् । यद्वा सर्वच्छन्दसामादिभूतत्वेनाऽस्या एव चतुश्चतुरक्षराधिक्येन पृथक्पृथगुत्तरोत्तरच्छन्दसामुत्पत्तेर्गायत्र्याः प्रजननत्वम् ॥ ६ ॥

अथाऽन्यस्याऽह्नः पवमानानामितरस्तोत्राणां च यत् युग्मायुग्मस्तोमकत्वं तत् प्रशंसति—

**उभये स्तोमा युग्मन्तश्चाऽयुजश्च तन्मिथुनं तस्मान्मिथुनात् प्रजायते ॥ ७ ॥**

स्पष्टम् ॥ ७ ॥

शिर आद्यङ्गस्य स्तोमव्यवस्थामाह—

**यत्त्रिवृच्छिरो भवति नव प्राणाः प्राणेष्वेव प्रतितिष्ठति यत् पञ्चदशौ पक्षौ सवीर्यत्वाय सप्तदश आत्मा भवति प्रजापतिर्वै सप्तदशः प्रजापतिमेवाऽऽप्नोत्येकविꣳशं पुच्छं भवति प्रतिष्ठित्यै ॥ ८ ॥**

स्पष्टोऽर्थः । अत्र 'एष एव षडहो यः ऋतूनां समूढो वा व्यूढो वा समूढस्त्वेव तस्यैवाऽभ्यासङ्ग्यः पञ्चाहो यथा पृष्ठ्यावलम्बश्चतुर्थस्याऽह्न एवैकविंशः षोडशी पञ्चमस्याऽह्नः पार्थुरश्मं लोकश्च आकूपारमि'त्यादिकः कल्पो द्रष्टव्यः ॥ ८ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे द्वाविंशाध्यायस्य सप्तमः खण्डः ॥

## अष्टमः खण्डः ॥

अथ प्रजापतेरवधानमैन्द्रं पञ्चमं सप्तरात्रमाह—

**ज्योतिष्टोमोऽग्निष्टोमो गौरुक्थ्य आयुरुक्थ्योऽभिजिदग्निष्टोमो विश्वजिदग्निष्टोमः सर्वजिदग्निष्टोमः सर्वस्तोमोऽतिरात्रः ॥ १ ॥**

त्रिकद्रुकाः अभिजिद्विश्वजितौ पञ्चाहः स्पष्टः । महाव्रतमेकाहः सर्वजित् षष्ठमहः । सर्वस्तोमोऽतिरात्रः सप्तममहः ॥ १ ॥

अथाऽस्य फलं सार्थवादमाह—

**एतेन वा इन्द्रोऽत्यन्या देवता अभवदत्यन्या प्रजा भवति य एवं वेद ॥ २ ॥**

स्पष्टम् ॥ २ ॥

आद्यमहः प्रशंसति--

**यत् ज्योतिर्गौरायुरित्यहः पुरस्ताद्भवति प्रज्ञातान् स्तोमानुपैतीमानेव लोकानेष्वेव लोकेषु प्रतितिष्ठति ॥३॥**

प्रज्ञातान् स्तोमान् त्रिवृदादिकानित्यर्थः। किं तदिमानेव लोकानुपैति ? 'अयं वै लोको ज्योतिरन्तरिक्षं गौरसौ लोक आयु'रिति ज्योतिरादीनां भूरादिलोकात्मकत्वात् ज्योतिराद्यनुष्ठाता एषु त्रिषु लोकेष्वपि क्रमेण प्रतिष्ठितो भवति ॥ ३ ॥

अथाऽभिजिद्विश्वजित्सर्वजिदाख्यानि त्रीण्यहानि प्रशंसति--

**अथाऽभिजिदभिजिता वै देवा इमान् लोकानभ्यजयन्विश्वजिता विश्वमजयन् सर्वजिता सर्वमजयन् ॥ ४ ॥**

अत इदानीन्तनानामप्येतान्यहानि तज्जयाय भवन्तीत्यर्थः ॥ ४ ॥

अन्त्यमहः प्रशंसति--

**सर्वस्तोमोऽतिरात्रो भवति सर्वस्याऽऽप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाऽऽप्नोति सर्वं जयति ॥ ५ ॥**

स्पष्टोऽर्थः। अत्र कल्पः 'ज्योतिष्टोमोऽग्निष्टोमः प्रथममितरौ द्वावुक्थ्यौ विश्वजिन्महाव्रतं विश्वजिदग्निष्टोमः सर्वस्तोमोऽतिरात्र एकाहक्लृप्त्या' इति ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे द्वाविंशाध्यायस्याऽष्टमः खण्डः ॥

## नवमः खण्डः ॥

अथाऽन्नाद्यकामं जनकसप्तरात्रं षष्ठं यज्ञमाह—

**चत्वारि त्रिवृन्त्यहान्यग्निष्टोममुखानि विश्वजिन्म-हाव्रतं ज्योतिष्टोमोऽतिरात्रः ॥ १ ॥**

तत्र चत्वार्यहानि त्रिवृन्त्यग्निष्टोममुखानि । अग्निष्टोमः प्रथममितरे त्रय उक्थ्याः । वैश्वजिन्महाव्रतं चाऽग्निष्टोमोऽतिरात्रस्तूत्तममहः ॥१॥

अथाऽस्य फलं सप्ररोचनमाह—

**एतेन वै प्रजापतिः पुरुषमसृजत स सर्वस्याऽन्नाद्य-स्याऽऽधिपत्यमगच्छत् ॥ २ ॥**

प्रजापतिः सर्वस्य जनकः पुरुषं विराडाख्यं असृजत । स्पष्टमन्यत् । अनेनाऽन्नाद्यकामोऽधिकारीत्युक्तं भवति ॥ २ ॥

उक्तार्थवेदनं प्रशंसति—

**सर्वस्याऽन्नाद्यस्याऽऽधिपत्यं गच्छति य एवं वेद ॥ ३ ॥**

स्पष्टम् ॥ ३ ॥

अथैतत्कृत्स्नं सप्तरात्रं पुरुषजनकमित्युक्तम् । तत्राऽऽद्यश्चतुरहः शिरस्स्थानीयो विश्वजिन्मध्यस्थानीय इति प्रशंसति—

**शिरो वा अग्रे सम्भवतः सम्भवति चतुर्द्धा विहि-तं वै शिरः प्राणश्चक्षुः श्रोत्रं वागात्मा वै पृष्ठानि यत्पृ-ष्ठान्युपैति शिर एवाऽऽत्मानमनुसन्दधाति ॥ ४ ॥**

सर्वे प्राणिनः शिरःप्रमुखा एवोत्पद्यन्ते । अतः शिरसः प्रथमं स-म्भवतः तस्य चक्षुश्श्रोत्रवागादिभेदेन चतुर्द्धा विहितत्वादह्नश्च चतुष्ट्वात् (तेषां त्रिवृत्स्तोमकत्वान्नवकपालं शिरसि ?) यदस्य चतुरहः स पुरुष-शिरस्स्थानीयः । तस्य सर्वपृष्ठाश्रयस्य मध्यमत्वेनाऽऽत्मस्थानीयत्वा-च्चतुरहानन्तरं विश्वजित्प्रयोक्ता आत्मानं मध्यदेहं शिरश्चाऽनुसंयोजित-वान् भवति ॥ ४ ॥

अथ महाव्रतं उत्पन्नस्य पञ्चरात्रात्मकपुरुषस्याऽन्नत्वेन प्रशंसति—

**एतद्वै पुरुषमकस्तस्मा अन्नमेव व्रतमपिदधाति ॥५॥**

एतत् खलु पञ्चरात्रं पुरुषं कृतवान् । तस्मात्पञ्चरात्रादनन्तरं महा-

व्रतप्रयोक्ता पुरुषेऽन्नमेव स्थापितवान् भवति ॥ ५ ॥

अथोत्पन्नज्योतिष्टोमातिरात्रं उत्पन्नस्य पुरुषस्याऽन्नव्यतिरिक्तसर्वभोगस्थानीयमिति प्रशंसति—

**अथ यद् ज्योतिष्टोमोऽतिरात्रो भवत्यक्लृप्तस्य क्लृप्त्यै ॥ ६ ॥**

अथ कल्पः 'या देवानां पञ्चरात्रस्य प्रथमा सा जनकसप्तरात्रस्याऽभ्यासक्ता द्वितीयस्याऽह्नः स्तोत्रीयानुरूपौ पर्यासौ वृषा पवस्व धारयेति गायत्रं हाविष्मतमाजिगन्त एकर्चाः पुनानः सोमधारयेति त्रिस्त्रिणिधनमायास्यमि' त्यादिको द्रष्टव्यः ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे द्वाविंशाध्यायस्य नवमः खण्डः ॥

---

## दशमः खण्डः ॥

अथाऽन्नाद्यफलसाधनपृष्ठस्तोमाख्यं सप्तरात्रं सप्तममाह—

**पृष्ठ्यः स्तोमः षडहो विश्वजिदतिरात्रः ॥ १ ॥**

बृहद्रथन्तरपृष्ठ्यः षडहः। अतिरात्रसंस्थो विश्वजित्सप्तममहः॥ १॥

अथैतदितरवैलक्षण्येनाऽनुलोमपृष्ठत्वेन सत्रवान् भवतीति प्रशंसति—

**अन्यस्मै वै कामाय सत्रमन्यस्मै यज्ञो न तत्सत्त्रेणाऽऽप्नोति यस्मैकं यज्ञो न तद्यज्ञेनाऽऽप्नोति यस्मैकं सत्रꣳ सत्रमिव वा एतद्यदनुलोमं पृष्ठानि यदेकधा पृष्ठानि भवन्त्येकधैवाऽस्मिꣳस्तेजो वीर्यं दधात्यन्नं पृष्ठान्यन्नाद्यमेवाऽस्मिन् दधाति पशवः पृष्ठानि पशुष्वेव प्रतितिष्ठति ॥ २ ॥**

अथाऽभ्यासङ्ग्यषड्रात्रवद्व्याख्येयम् ॥ २ ॥

उक्तेषु षट्सु सप्तरात्रेषु प्रत्यक्षं महाव्रतमस्ति। अत्र तु विश्वजिदतिरात्र एव। स एव परोक्षं महाव्रतमहरिति प्रशंसितुमाह—

**यद्वै मनुष्याणां प्रत्यक्षं तद्देवानां परोक्षमथ यन्मनुष्याणां परोक्षं तद्देवानां प्रत्यक्षम् ॥ ३ ॥**

स्पष्टोऽर्थः ॥ ३ ॥

किमत इति चेत्? तदुच्यते—

**एतद्वै परोक्षं व्रतं यद्विश्वजित् प्रत्यक्षमेवैतेनाऽन्नाद्यमवरुन्धे ॥ ४ ॥**

अस्माकं प्रत्यक्षेण महाव्रतभूतं प्रत्यक्षं विश्वजिदतिरात्रमहर्यदस्ति, तद्देवानां व्रतं परोक्षमेव। अतो यद्देवानां परोक्षं महाव्रतं तस्य महाव्रतस्य सर्वत्राऽन्नरूपेण स्तुतत्वेन प्रयोक्ताऽपि प्रत्यक्षमन्नाद्यमवरुन्धे प्राप्नोति। विश्वजिन्महाव्रतयोरुभयोरपि नानाविधानां बहूनां स्तोत्राणां सम्भवाद्विश्वजिदेव महाव्रतमित्युपचारः। 'अथैष एव षडहो य ऋतूनां समूढोऽभ्यासङ्ग्यो बृहद्रथन्तरपृष्ठश्चतुर्थस्याऽह्नः प्रत्यस्मै पिपीषत इति गौरीवितमि' त्यादिकल्पो द्रष्टव्यः ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे द्वाविंशाध्यायस्य दशमः खण्डः ॥

---

## एकादशः खण्डः ॥

अथ देवत्वप्राप्तिसाधनमष्टरात्रमाह—

**पृष्ठ्यः षडहो महाव्रतं ज्योतिष्टोमोऽतिरात्रः ॥ १ ॥**

महाव्रतमग्निष्टोमः अतिरात्रः षोडशिमान्। स्पष्टमन्यत् ॥ १ ॥

अस्य फलं सम्प्रोचनमाह—

**एतेन वै देवा देवत्वमगच्छन् ॥ २ ॥**

इदानीन्तनेनाऽपि देवत्वप्राप्तिकामेनैतत् कर्त्तव्यमित्युक्तं भवति ॥२॥

उक्तार्थञ्च प्रशंसति—

**देवत्वं गच्छति य एवं वेद ॥ ३ ॥**

स्पष्टोऽर्थः ॥ ३ ॥

अथ महाव्रतस्य यदग्निष्टोमसंस्थात्मकत्वं तत् प्रशंसति—

**एतद्वै व्रतमाप्तं यदष्टरात्रेऽग्निष्टोमो हि व्रतꣳसम्पद्यते ॥ ४ ॥**

अस्मिन्नष्टरात्रे यन्महाव्रतमस्ति तद्देवैः प्राप्तं महाव्रतम्। आप्त-

त्वमेव दर्शयति—अग्निष्टोमसंस्थं खलु महाव्रतरूपं सम्पद्यते। एतद्धै व्रतस्याऽऽप्तत्वं स्वकीयाग्निष्टोमसंस्थानतिक्रमणात् ॥ ४ ॥

अथाऽन्त्याह्नोऽतिरात्रसंस्थत्वं प्रशंसति--

**अथ यत् ज्योतिष्टोमोऽतिरात्रो भवत्यक्लृप्तस्य क्लृप्त्यै ॥ ५ ॥**

अथ यत् ज्योतिष्टोमसंस्थः क्लृप्तः तमकृत्वाऽतिरात्रसंस्थः कर्त्तव्यः। तच्च करणं अक्लृप्तस्य फलविशेषस्य क्लृप्त्यै भवति ॥ ५ ॥

एवं स्तुत्वा सर्वाप्तये स्तौति--

**अष्टरात्रेण वै देवाः सर्वमाश्नुवत ॥ ६ ॥**

स्पष्टम्। यद्वा अष्टरात्रे याऽष्टत्वसंख्याऽस्ति तद्द्वारेणाऽस्य स्तुतिर्द्रष्टव्या। अश्नोतेर्हि अष्टन्निति अश्नवादित्यर्थे अष्टन्शब्दः व्याप्तिवचनः। अतस्तत्संख्योपेतेनाऽष्टरात्रेण सर्वं प्राप्नोति ॥ ६ ॥

उक्तार्थज्ञं प्रशंसति--

**सर्वमश्नुते य एवं वेद ॥ ७ ॥**

अस्य कल्पः-'एष एव षडहो य ऋतूनां समूढो वा व्यूढो वा समूढस्त्वेवैकाहिकं व्रतं ज्योतिष्टोमोऽतिरात्रः षोडशिक' इति ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे द्वाविंशाध्यायस्यैकादशः खण्डः ॥

---

## द्वादशः खण्डः ॥

उक्तोऽष्टरात्रः। द्वौ नवरात्रौ। तत्र शतायुष्यसाधनं प्रथमं देवानां नवरात्रमाह--

**पृष्ठ्यः षडहो ज्योतिर्गौरायुरतिरात्रो देवा वै मृत्योरबिभयुस्ते प्रजापतिमुपाधावꣳस्तेभ्य एतेन नवरात्रेणाऽमृतत्वं प्रायच्छत् ॥ १ ॥**

अतोऽमृतत्वकाम्यधिकारीत्युक्तं भवति ॥ १ ॥

ननु सर्वत्र शक्यमेव फलं काम्यम्। अत्र त्वमृतकामानां फलं देवानां युक्तं, न मनुष्याणामित्याशङ्क्य मनुष्योचितममृतत्वं दर्शयति--

**एतद्वाव मनुष्यस्याऽमृतत्वं यत् सर्वमायुरेति वसीयान् भवति ॥ २ ॥**

यत् सर्वं शतवर्षलक्षणमायुरिति एतदेव खलु मनुष्यस्याऽमृतत्वं नाम। न केवलं सर्वमायुःप्राप्तिरेवाऽमृतत्वम् , किन्तु जीवनकालेऽपि वसीयस्त्वं श्रेष्ठत्वमपि। सर्वश्रेष्ठो भूत्वा शतवर्षजीवनमेव मनुष्यस्याऽमृतत्वमित्यर्थः ॥ २ ॥

अथोक्तार्थज्ञं प्रशंसति--

**सर्वमायुरेति वसीयान् भवति य एवं वेद ॥ ३ ॥**

स्पष्टोऽर्थः ॥ ३ ॥

**नवरात्रो वा एष नव प्राणाः प्राणेष्वेव प्रतितिष्ठति॥**

सुगमम ॥ ४ ॥

**पृष्ठ्यः षडहो भवति प्रत्यक्षमृद्ध्या अथ यत् ज्योतिर्गौरायुरतिरात्रो भवति प्रतिष्ठित्यै ॥ ५ ॥**

अथाऽस्य कल्पः--'एष एव षडहो य ऋतूनां समूढो वा व्यूढो वा समूढस्त्वेव ज्योतिर्गौरायुरतिरात्र एकाहक्लृप्त्या' इति ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ प्रकाशे द्वाविंशाध्यायस्य द्वादशः खण्डः ॥

---

## त्रयोदशः खण्डः ॥

अथ पशुसाधनं द्वितीयं नवरात्रमाह--

**ज्योतिष्टोमोऽग्निष्टोमो गौरुक्थ्य आयुरुक्थ्योऽभ्यासंग्यः पञ्चाहो विश्वजिदतिरात्रः पशुकामो यजेत ॥ १ ॥**

प्रथमं त्रिकद्रुकाः। तत्र ज्योतिष्टोमोऽग्निष्टोमसंस्थः । गोआयुषी उक्थ्यसंस्थे। अभ्यासंग्यः पञ्चाहलक्षणः। द्वे त्रिवृती सवने पञ्चदशमेक मित्यादिकमसकृद्दर्शितम् । अतिरात्रसंस्थो विश्वजिन्नवममहः ॥ १ ॥

प्रथमं त्रिरात्रं प्रशंसति--

**यत् ज्योतिर्गौरायुस्त्र्यहः पुरस्ताद्भवति प्रज्ञातान् स्तोमानुपैतीमानेव लोकानेष्वेव लोकेषु प्रतितिष्ठति॥२॥**

एतेषां प्रकृतौ क्लृप्तस्तोमत्वात् प्रज्ञातस्तोमकत्वम् ॥ २ ॥

अथ सवनेऽन्तराभाविनं पञ्चाहं प्रशंसति—

अथ यदभ्यासंग्यः पञ्चाहो मध्यतो भवति पाङ्क्तः पुरुषः पाङ्क्ताः पशवस्तेन पुरुषं च पशूꣳश्चाऽऽप्नोति ॥ ३ ॥

पुरुषस्य पशूनाञ्च पञ्चसंख्यायोगोऽभ्यासंग्यपञ्चरात्रे दर्शितः ॥३॥

अथाऽन्त्यमहः प्रशंसति—

विश्वजिदतिरात्रो भवति विश्वस्याऽऽभिजित्यै ॥४॥

स्पष्टम्। अस्य कल्पः—'ज्योतिष्टोमोऽग्निष्टोमो गौरुक्थ्य आयुरुक्थ्यस्तस्याऽऽयुषः पुरोजिती वो अन्धस इति श्यावाश्वमेकस्यामान्धीगवमेकस्यामाकूपारमेकस्यां बृहन्निधनं वा आर्कजम्भं पृष्ठ्यावलम्बस्य पञ्चाहो विश्वजिदतिरात्र' इति ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे द्वाविंशाध्यायस्य त्रयोदशः खण्डः ॥

---

## चतुर्दशः खण्डः ॥

अथ चत्वारो दशरात्राः। तत्र त्रिकद्रुकाख्यं प्रथमं दशरात्रमाह—

त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यस्त्रिवृदग्निष्टोमः सप्तदशोऽग्निष्टोम एकविंश उक्थ्यः सप्तदशोऽग्निष्टोमस्त्रिणवोऽग्निष्टोमस्त्रयस्त्रिंश उक्थ्यास्त्रिणवोऽग्निष्टोमो विश्वजिदतिरात्रः ॥ १ ॥

स्पष्टम् ॥ १ ॥

अथैतत् प्रशंसति—

इन्द्रोऽसुरान् हत्वाऽकार्यञ्चकृवाꣳ अमन्यत तं देवा एतेन स्तोमेनाऽयाजयन् स पाप्मनो नैर्दश्यमगच्छत् ॥ २ ॥

इन्द्रः पूर्वं प्राजापत्यानसुरान् हत्वा भ्रातृवधादकार्यं कृतवानहं इत्यमन्यत। तं देवा एतेन त्रिकद्रुकाग्निष्टोमेन यज्ञेनाऽयाजयन्। स

एतेनेष्ट्वा पाप्मनो भ्रातृवधनिमित्तस्य नैर्हस्त्यं निर्गतदशरात्रत्वमगच्छत्। विद्धस्य हि दशरात्रादूर्ध्वं वेदना निवर्त्तत इति नैर्हस्त्यशब्देन दुःखनिवृत्तिर्लक्ष्यते ॥ २ ॥

इदानीमपि व्यथितस्य दशरात्रेऽतीते व्यथापगमं एतन्निबन्धमाह—

**तस्मादिषुहतो वा दण्डहतो वा दशमीं नैर्हस्त्यं गच्छति ॥ ३ ॥**

यस्मादिन्द्रो दशरात्रेण पाप्मनो नैर्हस्त्यमगच्छत्तस्मादित्यर्थः ॥३॥

अथाऽस्य संख्यायोगं प्रशंसति—

**दश दशिनी वा एषा विराडन्नं विराडन्नाद्यमेवाऽस्मिन् दधाति ॥ ४ ॥**

एषा विराट् विराट्संख्यानिबन्धो दशरात्र इत्यर्थः। विराडपेक्षया दशरात्रस्यैषेति स्त्रीलिङ्गता। दशदशिनी वै दशिकानुबन्धदशकं दशदशी। दशादशभ्यां विश्वजित इति दशदशिनी विराट्। त्रिवृद्व्यतिरिक्तेषु पञ्चदशादिस्तोमेषु दशसंख्यायोगाःसन्तीति दशदशिनीति दशरात्राभिधानम् ॥ ४ ॥

अथ षट्कृत्वोऽग्निष्टोमः क्रियते मध्यतस्त्रीणि उक्थ्यानि। तदिदं प्रशंसति—

**अग्निष्टोमेन वै देवा असुरान्निगृह्य मध्यत उक्थैः प्रजया पशुभिः प्राजायन्ताऽग्निष्टोमेनैव भ्रातृव्यं निगृह्य मध्यत उक्थ्यैः प्रजया पशुभिः प्रजायते ॥ ५ ॥**

स्पष्टम् ॥ ५ ॥

अथाऽत्राऽग्निष्टोमानन्तरं यत् त्रिःकृत्वः उक्थ्यानुष्ठानमस्ति तत् प्रशंसति—

**(१)त्रिककुब्वा एष यज्ञः ॥ ६ ॥**

स्पष्टोऽर्थः ॥ ६ ॥

उक्तार्थज्ञस्याऽप्येतत्फलं भवतीत्याह—

**त्रिककुप् समानानाञ्च प्रजानाञ्च भवति य एवं वेद ॥ ७ ॥**

---

१. तै. सं. ७. २. ५. २. द्रष्टव्यम्।

ककुदेव ककुप्। ककुदिति उत्थितदेशस्य नाम। प्रकृतिभूतादग्निष्टोमादुत्थिता उक्थाः। तथाविधानां उक्थानां त्रयाणामत्र सम्भवादयं दशरात्रः त्रिककुप्। अत एतेन यजमानोऽपि समानानां प्रजानाञ्च मध्ये श्रुतशीलाचरणैस्त्रिभिः स्वयमप्युत्थितो भवतीत्यर्थः। अथाऽस्य 'अग्न आयूंषि पवस इत्यनुरूपश्चग्धूषु शचीपत इत्यभीवर्त्तो ब्रह्मसाम प्रसुन्वानायान्धस इत्यौदलदैवोदासे अभिप्रियाणीति यज्ञायज्ञीयमन्त्यं नमस्ते अग्न ओजस इति जराबोधीयमाग्निष्टोमसाम स्वासु वा समानमितरं प्रथमेनाऽह्ना जनकसप्तरात्रस्ये'त्ययं प्रथमः कल्पः। एवमितरेषां नवानामह्नां कल्पस्तत्रैव क्रमेण द्रष्टव्यः ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे द्वाविंशाध्यायस्य चतुर्दशः खण्डः ॥

---

## पञ्चदशः खण्डः ॥

अथ बहुभावफलसाधनकं द्वितीयं कुसुरुबिन्ददशरात्रमाह--

**त्रयास्त्रिवृतोऽग्निष्टोमास्त्रयः पञ्चदश उक्थ्यास्त्रयः सप्तदश उक्थ्या एकविंशोऽतिरात्रः कुसुरुबिन्ददशरात्रः ॥ १ ॥**

स्पष्टम् ॥ १ ॥

अथाऽधिकारिणमाह--

**यः कामयेत बहु स्यामिति स एतेन यजेत ॥ २ ॥**

पुत्रपौत्रद्वारा स्वयमेव बहुविधः स्यामिति यः कामयेत स तत्राऽधिकृतः ॥ २ ॥

तस्योपपत्तिं दर्शयति--

**यद्गणशः स्तोमो बहुरेव भवति ॥ ३ ॥**

स्पष्टोऽर्थः ॥ ३ ॥

अस्य गणस्तोमत्वं दर्शयति--

**सह त्रिवृतः सह पञ्चदशाः सह सप्तदशाः ॥४॥**

अथ त्रिवृतः आदौ सह भवन्ति, ततस्त्रयः पञ्चदशाः सह, सप्तदशाः सहेति स्तोमानाङ्गणत्वम् ॥ ४ ॥

अथाऽन्त्यस्याऽह्नः एकविंशत्वं प्रशंसति--

**एकविꣳशोऽतिरात्रो भवति प्रतिष्ठित्यै ॥ ५ ॥**

सिद्धमिदम् ॥ ५ ॥

अथैतज्ज्योतिष्टोमत्वेन प्रशंसति--

**ज्योतिर्वा एष विहृतः ॥ ६ ॥**

(१)'त्रिवृत्पञ्चदशः सप्तदशः एकविंशः एतानि वाव तानि ज्योतींषी'ति श्रुतेः ज्योतिष्टोमे चतुर्णां सम्भवादयं दशरात्रो विहृतो ज्योतिष्टोम एव खलु ॥ ६ ॥

उक्तार्थञ्च प्रशंसति--

**ज्योतिष्प्रजानां भवति य एवं वेद ॥ ७ ॥**

स्पष्टम् ॥ ७ ॥

अस्य चतुष्टोमत्वं प्रशंसति--

**चतुष्टोमो वा एष चतुष्पादाः पशवः पशुष्वेव प्रतितिष्ठति ॥ ८ ॥**

स्पष्टम् ॥ ८ ॥

अस्य चतुष्टोमत्वमेव प्रकारान्तरेण प्रशंसति--

**एकविꣳशꣳ स्तोमा नाऽतियन्ति प्रतिष्ठा वा एकविंशः प्रत्येव तिष्ठति ॥ ९ ॥**

सिद्धप्रायमेतत् ॥ ९ ॥

अथाऽस्य फलं सम्प्रोचनमाह--

**एतेन वै कुसुरुविन्द औद्दालकिरिष्ट्वा भूमानमाश्नुत ॥ १ ॥**

उद्दालकस्याऽपत्यमौद्दालकिः। स च कुसुरुविन्दनामकः ॥१०॥

---

१. तै. ब्रा. १. ५. ११.

उक्तार्थज्ञं प्रशंसति--

भूमानमश्नुते य एवं वेद ॥ ११ ॥

अस्य कल्पः--'या बृहस्पतिसवस्य सा कुसुरुबिन्दस्य प्रथमा तस्यै-अनुषेकच्चौ हाविष्मतस्य लोके यौक्ताश्वं स्वाशिरामर्कस्य हाविष्मतं कुसुरुबिन्दयो'रित्यादिकः ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे द्वाविंशाध्यायस्य पञ्चदशः खण्डः ॥

## षोडशः खण्डः ॥

अथ पशुफलसाधनं तृतीयं दशरात्रमाह--

अभ्यासंग्यः पञ्चाहश्चत्वारश्छन्दोमा विश्वजिद-तिरात्रः पशुकामो यजेत ॥ १ ॥

स्पष्टम् ॥ १ ॥

प्रथमपञ्चाहं स्तौति--

यदभ्यासंग्यः पञ्चाहः पुरस्ताद्भवति पाङ्क्तः पुरुषः पाङ्क्ताः पशवस्तेन पुरुषञ्च पशूंश्चाऽऽप्नोति ॥ २ ॥

गतमिदम् ॥ २ ॥

अथाऽनन्तरभाविचतुरहं प्रशंसति—

छन्दोमा मध्यतो भवन्ति पशवो वै छन्दोमाः पशू-नामवरुध्यै ॥ ३ ॥

स्पष्टम् ॥

अथाऽन्यमहः प्रशंसति—

विश्वजिदतिरात्रो भवति विश्वस्याऽऽभिजित्यै ॥४॥

अथाऽस्य कल्पः--'पृष्ठ्यावलम्बः पञ्चाहः प्रथमस्याऽह्नः प्लवद्बहि-ष्पवमानं पञ्चमस्याऽह्नोऽसृक्षतेत्यनुरूप' इत्यादिकः ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे द्वाविंशाध्यायस्य षोडशः खण्डः ॥

## सप्तदशः खण्डः ॥

अथ देवपुराख्यं चतुर्थं दशरात्रमाह--

त्रिष्टोमोऽग्निष्टोमो ज्योतिरुक्थ्यस्त्रिष्टोमोऽग्निष्टोमो गौरुक्थ्योऽभिजिदग्निष्टोमो गौरुक्थ्यो विश्वजिदग्निष्टोम आयुरुक्थ्यो विश्वजिदग्निष्टोमस्य सर्वस्तोमोऽतिरात्रः ॥ १ ॥

स्पष्टम् ॥ १ ॥

अथैतत् प्रशंसति--

(१)देवा वा असुरैर्हन्यमानास्ते प्रजापतिमुपाधावꣳस्तेभ्य एतां देवपुरं प्रायच्छत् तां प्राविशन् ॥ २ ॥

पूर्वं प्रजापतिरसुरैर्हन्यमानेभ्यो देवेभ्यस्तत्कृतोपद्रवपरिहारार्थं पुरस्थानीयमेतं दशरात्रं प्रायच्छत् । यथा पुरं द्वित्रिवारावृतैः प्राकारपरिघादिभिरन्यैर्दुरवगाहं भवति, एवं त्रिस्स्थानीयं त्रिष्टोमाग्निष्टोमज्योतिरादिभिर्वेष्टितं तमेव पुरस्थानीयं यज्ञं ते देवाः प्राविशन्नन्वतिष्ठन्नित्यर्थः । तेन शत्रूनजयन्नित्यभिप्रायः ॥ २ ॥

*अभिचार्य्यमाणं याजयेदेतामेव देवपुरं प्रविशत्यस्तृत्यै ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे द्वाविंशाध्यायस्य सप्तदशः खण्डः ॥

---

## अष्टादशः खण्डः ॥

अभ्यासंग्यः षडहस्त्रयश्छन्दोमाश्चतुष्टोमोऽग्निष्टोमो विश्वजिदतिरात्रः ॥ १ ॥

स्वाराज्यो वा एष यज्ञः ॥ २ ॥

---

१. तै.सं. ७.२.५.२. द्रष्टव्यम् । * इतः प्रभृति आध्यायसमाप्ति भाष्यं नोपलब्धम् ।

स्वाराज्यं गच्छति य एवं वेद ॥ ३ ॥

प्रजापतिर्हि स्वाराज्यं परमेष्ठी स्वाराज्यम् ॥ ४ ॥

परमेष्ठितां गच्छति य एवं वेद ॥ ५ ॥

उभे बृहद्रथन्तरे भवतस्तद्धि स्वाराज्यमयुतं दक्षिणास्तद्धि स्वाराज्यं षड्विंशस्तोमो भवति स हि स्वाराज्यं चतुष्टोमस्तोमः स ह्यन्तोऽन्ते श्रिया गच्छति य एवं वेद ॥ ६ ॥

एतेन वै चेम धृत्वा पौण्डरीकं इष्ट्वा सुदाम्नस्तीर उत्तरे ॥ ७ ॥

सर्वामृद्धिमादृध्नोत् सर्वामृद्धिमृध्नोति य एवं वेद ॥ ८ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयात् विद्यातीर्थमहेश्वरः ॥ ८ ॥

इति श्रीमहाराजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीर-
बुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते
माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे
द्वाविंशाध्यायस्य अष्टादशः खण्डः ॥
द्वाविंशाऽध्यायस्समाप्तिमगमत् ॥



# अथ त्रयोविंशोऽध्यायः ॥

## प्रथमः खण्डः ॥

यस्य निश्श्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

द्वादशाहप्रभृतिसत्रभेदोऽथ वर्ण्यते । द्वौ त्रयोदशरात्रौ तत्र प्रथमं आप्तद्वादशाख्यं सर्वर्द्धिसाधनं सत्रमाह--

**अतिरात्रः पृष्ठ्यः षडहः सर्वस्तोमोऽतिरात्रश्चत्वार-श्छन्दोमा अतिरात्रः ॥ १ ॥**

आद्यन्तावतिरात्रौ मध्येऽपि त्रिवृदादिसर्वस्तोमकोऽतिरात्रः । तस्य पृष्ठ्यः षडहः पूर्वं उपरिष्टाच्च । चत्वारश्छन्दोमाः । अविवाक्यमहश्चतु-र्थश्छन्दोमो भवति ॥ १ ॥

अथैतत् प्रशंसति--

**(१) एष वा आप्तो द्वादशाहो यत् त्रयोदशरात्रः ॥२॥**

त्रयोदशरात्रो यदस्ति एष खलु आप्तः सम्पूर्णो द्वादशाहः । यथा लोके धनादिके दिशति सति न्यूनताशङ्कापरिहाराय क्लृप्तसंख्यात ईषदधिकसंख्याकं वस्तु दीयते, तद्वत् द्वादशाहस्य यदि द्वादशैव स्युर-हानि ततो द्वादशाहः सम्पूर्णो न्यूनो वेति सन्दिग्धे । अहानि त्रयोदश स्युश्चेत् निश्शङ्कं द्वादशाहः सम्पूर्णो भवति । अतोऽस्य त्रयोदशरात्र-त्वात् अयमाप्तो द्वादशाह उच्यते ॥ २ ॥

आद्यन्ताभ्यामतिरात्राभ्यामेव तत् प्रशंसति--

**समानो ह्येष यत् प्रयणीयश्चोदयनीयश्चाऽतिरात्रौ यं कामं कामयन्ते तमेताभिरभ्यश्नुवते ॥ ३ ॥**

एष त्रयोदशरात्रः समानो हि आद्यन्तयोरेकरूपः खलु । तदेवोप-पादयति-यत्प्रायणीयश्चोदयनीयश्चेत्यादिना । असमानतालोको भव-ति । तदुच्यते—यं कामं कामयन्त इत्यादिना ॥ ३ ॥

---

१. तै. सं. ७. ३. ३. अनुवाको द्रष्टव्यः ।

अथ मध्यमस्याऽतिरात्रस्य सर्वस्तोमत्वं प्रशंसितुमाह—

**गृहपतेस्तु वागुपदासुका भवति तद्यन्मध्ये सर्वस्तो-मोऽतिरात्रो भवति तेन गृहपतेर्वागनुपदासुका भवति ॥**

(१)'वाग्वै द्वादशाह' इति श्रुतेः द्वादशाहात्मकस्य वाचो मध्येऽति-रात्रस्य कृतत्वात् यद्यपि समानत्वात् सम्पूर्णकामसाधकोऽयं, तथाऽपि गृहपतेर्यजमानस्य वागुपदासुका उपक्षयशीला भवति। तस्य कः परिहारः इति? उच्यते—तन्मध्येऽतिरात्रः सर्वस्तोमो भवति तत्तेन तस्य वागतथाभूता भवति। विच्छिन्नाया वाचः परिहाराय सर्वस्तोमस्य कारितत्वादित्यभिप्रायः ॥ ४ ॥

अथाऽस्य रात्रीणां सर्वर्द्धिफलसाधनत्वं प्रयोगद्वारोपपादयति—

**एता वा अर्यलगृहपतय आरुणिहोतारः सुभगा-सूपयन्ति ते सर्वामृद्धिमार्ध्नुवन् सर्वामृद्धिमृध्नुवन्ति य एता उपयन्ति ॥ ५ ॥**

पूर्वमेताः खलु त्रयोदशरात्रीरर्यलगृहपतयः अर्यलं गृहपतिं कुर्वा-णाः, आरुणिहोतारः आरुणिं होतारं कुर्वाणाः सत्रिणः सुभगासु प्रजासु हृद्येषु जनपदेष्वित्यर्थः। यद्वा सुलक्षणासु नदीषु एता रात्रीरुपयन्ति उपेयुरित्यर्थः। सर्वामृद्धिमित्यादि स्पष्टम। अत्र (२) 'दीक्षाक्रयप्रसवो-त्थानानि सर्वसत्रेषु पूर्वपक्ष उपपादयेयुरि' त्यादिकं सत्रसामान्यविषयं सूत्रं द्रष्टव्यम्। अत्र पृष्ठ्यः षडहश्छन्दोमाश्च विद्यन्ते। षडहः प्राकृतिक इति तद्विचारं वक्ष्यति। छन्दोमाः व्यूढसमूढविकल्पिताः विशेषाश्रव-णादिति प्राप्ते सूत्रकार आह-(३)'पूर्वस्मिंस्त्रयोदशरात्रे व्यूढाश्छन्दोमाः सोमसामादेशाद्गौरीवितस्य चाऽनादेशादि'ति। यदि समूढाश्छन्दोमाः स्युस्तदानीं 'प्रथमस्य छन्दोमस्य कण्वरथन्तरस्य लोके सोमसामे'ति कल्पकारो नाऽवक्ष्यत्। पूर्वमेव छन्दोमदशरात्रे छन्दोमानां समूढ-क्लृप्तौ तथैवोक्तत्वात्। तथा समूढपक्षे गौरीवितलोके सामान्तरमात्रे-यादिकं पूर्वमुक्तम्, तदिदानीं निवर्त्य गौरीवितं पुनरादेष्टव्यम्, सर्वसत्रे-ष्वार्भवे गौरीवितनियमात्। न च तदादिष्टम्। तदिदं व्यूढपक्षे एवो-पपद्यते। तदानीं यथाब्राह्मणं गौरीवितस्य सिद्धत्वादिति।

१. तै. सं. ७. ४. ५. ३. २. लाट्या. श्रौ. १०. १. १.
३. लाट्या. श्रौ. १०. ३. १२.

भवत्वेवम्, पृष्ठ्यस्तु कथम्? तत आह—(१) 'गवामयनन्यायेन पृष्ठ्य' इति। यथा गवामयने प्रतिमासं समूढः पृष्ठ्यः, तद्वदिति। कुत इत्याह—'अविच्छिन्नो हि तथा प्रवर्त्तेत' इति। छन्दोमेभ्योऽविच्छिन्नः पृथक्कृतः पृष्ठ्यः समूढानेव सर्वत्र प्रवर्त्तेत। अत्र सर्वस्तोमे न व्यावयेन्न पृथक्कुर्यादिति सिद्धान्तमाह-(२)'दशरात्रवत्त्वव्यतिरेकात्, सच्छन्दोमत्वादि'ति। यथा गवामयने दशरात्रे पृष्ठ्यो व्यूढस्तद्वदत्राऽपि स्यात्, छन्दोमसहितत्वात्। छन्दोमाभावे हि केवलषडहो व्यूढस्स्यात् अपूर्णत्वात्। (३) 'तदप्येवमिव ब्राह्मणं भवति नर्त्ते छन्दोमेभ्यः पृष्ठो व्यूहमानश' इति निदानकारेणोदाहृतं हेत्वन्तरञ्चाऽऽह-(४) 'व्यूहसमाधे'रि'ति। समाधिः साम्यव्यतिरेकः। व्यतिरेको विपर्ययः। व्यूहसाम्यस्य क्वचिदपि विपर्ययाभावात्। एतदुक्तं भवति—यदिदं छन्दोमेषु व्यूहः स्यात् तदा पृष्ठ्योऽपि व्यूहः कार्यः। यदि न स्यात् तदा पृष्ठ्योऽपि न कार्य इति। तदिदं व्यूहसाम्यं सर्वस्तोमेन व्यवायो नाऽऽदरणीय इति भाव इति। अथाऽस्य कल्पः—'त्रयोदशरात्रे प्रथमस्य छन्दोमस्य रूपवरथन्तरस्य लोके सोमसाम पुनानः सोम धारये'त्येतदिति। अत्राऽतिरात्रानन्तरं पृष्ठ्यषडहसम्भवात् 'अत्राऽतिरात्रात् पृष्ठ्यमुपयन्ति प्रथमस्याऽह्नः अस्य प्रत्नानुरूप' इति साधारणकल्पो भवितव्यः, तथाऽपि (५) 'प्रत्नवरुचाद्यबहिष्पवमानं परेण होनद्रस्य प्रत्नानुरूप इत्याहे' त्यादि सूत्रकारेण चतुर्दशप्रभृतिषु चाऽयं कल्प इति व्यवस्थापितत्वान्नाऽत्र प्रवर्त्तते ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोविंशाध्यायस्य प्रथमः खण्डः ॥

## द्वितीयः खण्डः ॥

अथ द्वितीयं त्रयोदशरात्रं प्रतिष्ठासाधनं सत्रमाह—

**अतिरात्रो द्वादशाहस्य दशाहानि महाव्रतं चाऽतिरात्रश्च ॥ १ ॥**

---

१. लाट्या. श्रौ. १०. ३. १३.
२. लाट्या. श्रौ. १०. ३. १४. १५.
३. नि. सू. ५. ६.
४. लाट्या. श्रौ. १०. ३. १६.
५. लाट्या. श्रौ. १०. ३. १७.

गावामयनिकं महाव्रतम्। शिष्टान्यहानि स्पष्टानि ॥ १ ॥

अथ तत् पूर्ववैलक्षण्येन स्तौति--

**वाग्वा एषा प्रतायते यदेष द्वादशाहस्तां विच्छि-न्द्युर्यन्मध्येऽतिरात्रं कुर्युः ॥ २ ॥**

द्वादशाहस्य वाग्रूपत्वात्तस्याऽनुष्ठानेन वाक्सन्तानमेव प्रतायते। यन्मध्ये पूर्ववदतिरात्रं कुर्युः तदानीं सन्ततां वाचं विच्छिन्द्युः ॥ २ ॥

अथाऽतिरात्राभावे वाग्विच्छेदः। यद्यपि तद्भावे वाग्विच्छेदः, तथाऽपि तदभावेऽह्नामजनकत्वाद्विच्छेदस्तदवस्थ एवेत्याशङ्क्य तत्परिहारमाह--

**यदुपरिष्टाद् व्रतमुपयन्ति न वाचं विच्छिन्दन्त्या-प्नुवन्ति त्रयोदशं मासम् ॥ ३ ॥**

अतिरात्रप्रतिनिधित्वेन द्वादशाहः। तेन महाव्रतस्य करणात् अह्नां त्रयोदशत्वसिद्धिमुपयन्ति(?)। त्रयोदशं मासमाप्नुवन्ति, मासत्रयोदश-कोपलक्षितान्बहून् संवत्सरान् जीवन्तीत्यर्थः ॥ ३ ॥

अथाऽस्य फलमाह--

**एता वै प्रतिष्ठितास्त्रयोदश रात्रयः प्रतितिष्ठन्ति य एता उपयन्ति ॥ ४ ॥**

प्रतिष्ठितसंवत्सरावयवभूतत्रयोदशमासा मासगतसंख्यासाम्यादे-तासां रात्रीणां प्रतिष्ठितत्वम्। अत्र कल्पः--'संवत्सरस्य त्रयोदशमा-सस्य कलाः सांवत्सरिकं व्रतमि'ति ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे त्रयोविंशाध्यायस्य द्वितीयः खण्डः ॥

## तृतीयः खण्डः ॥

अथ त्रयश्चतुर्दशरात्रयः। तत्र प्रथमं सर्वफलसाधनं चतुर्दशरात्रमाह--

**अतिरात्रः पृष्ठ्यः षडहः पृष्ठ्यः षडहस्त्रयस्त्रिंशा-रम्भणोऽतिरात्रः ॥ १ ॥**

आवृत्तः षडह इत्यर्थः ॥ १ ॥

अथैताः प्रशंसति--

**काम्यसनयो वा एता रात्रयः ॥ २ ॥**

स्पष्टम् ॥ २ ॥

तत् कथमिति तद्विभज्य दर्शयति--

**विराड्ढि दशाऽऽत्मैकादशी प्रजा द्वादशी पशवस्त्र-योदशी कामाय चतुर्दशी ॥ ३ ॥**

आदित्यतः दशरात्रो विराट् खलु (साक्षादन्नमित्यर्थः)। दशसंख्या-साम्यात् विराट् । एकादशी रात्रिः सा आत्मस्थानीया । द्वादशी रात्रिः प्रजास्थानीया । त्रयोदशी रात्रिः पशवः । चतुर्दशी रात्रिः उक्तव्यतिरिक्तसर्वफलस्थानीया ॥ ३ ॥

एवं कामसनित्वमस्योपपाद्याऽनुष्ठातॄणामपि सर्वकामसिद्धिर्भवतीत्याह—

**सर्वानेवैताभिः कामानवरुन्धते ॥ ४ ॥**

स्पष्टम् ॥ ४ ॥

अथैतान्यहान्यस्य छन्दोमस्य कण्वरथन्तरस्य लोके सोमसाम 'पुनानः सोमधारये'त्येतदित्यारोहं प्रशंसति--

**एता वाव ब्रध्नस्य विष्टपो यदेतौ त्रयस्त्रिꣳशौ मध्यतः सन्धीयेते तेन ब्रध्नस्य विष्टपꣳ रोहन्ति ॥ ५ ॥**

ब्रध्नस्य यस्मिन् ब्रह्मभूत आदित्ये बद्धा लोका वर्त्तन्ते, स ब्रध्नः। तस्य विष्टपो लोकः । एता वाव एता एव रात्रयः खल्विति । अस्त्वेवं किन्तत इति ? तदुपपादयति-यद्यस्मादेतौ त्रयस्त्रिंशौ स्तोमौ मध्यतः चतुर्दशरात्रस्य मध्ये प्रथमषडहः स्यात्तद्द्वितीयषड्हस्याऽऽदौ च सन्धीयते अव्यवधानेन प्रयुज्यते । तेन ब्रध्नस्याऽऽदित्यस्य विष्टपं लोकं रोहन्ति सत्रिणः ॥ ५ ॥

अथ यत् पृष्ठानां द्विरावर्त्तनमस्ति तत् प्रशंसति--

**द्विःपृष्ठान्युपयन्त्यभिपूर्वमेवैताभिरन्नाद्यं दधते ॥६॥**

'अन्नं वै पृष्ठानी'ति श्रुतेः । तत्क्रमेण पृष्ठानि द्विरुपयन्ति । तेनाऽनुवर्त्तते । तेनाऽन्नाद्यं अन्नयोग्यं व्रीहियवादिरूपमन्नं दधते ॥ ६ ॥

अथ प्रकारान्तरेण स्तौति—

**पक्षिण्यो वा एता रात्रयो यं कामं कामयन्ते तमेताभिरभ्यश्नुवते ॥ ७ ॥**

अतिरात्रावभिहितौ द्वौ पृष्ठ्यषडहपक्षौ। तद्वत्य एव चतुर्दशरात्रयः खलु। अस्त्वेवं किं तत इति? आह—अतः पक्षिणीभिरेवाऽहोरात्रिभिः ऐहिकं आमुष्मिकञ्च यं कामं कामयन्ते तं प्राप्नुवन्ति ॥ ७ ॥

रात्रीणां पक्षिणीत्वेन कथं कामप्राप्तिरिति? तद्दर्शयति—

**यत्र यत्र हि पक्षी कामयते तत्तदभ्यश्नुते ॥ ८ ॥**

गतमिदम् ॥ ८ ॥

आद्यन्तावतिरात्रौ प्रशंसति—

**त्रिवृता प्रयन्ति त्रिवृतोद्यन्ति प्राणा वै त्रिवृत् स्तोमानां प्राणैरेव प्रयन्ति प्राणेषु प्रतितिष्ठन्ति ॥ ९ ॥**

प्राणाः शीर्षण्याः सप्त, द्वाववाञ्चाविति। त्रिवृदपि नव स्तोत्रीयात्मक इति प्राणास्त्रिवृदित्युच्यते। यदा त्रिवृति त्रित्वसंख्याऽस्ति प्राणापानव्यान इति प्राणोऽपि त्र्यात्मकः। अतः प्राणास्त्रिवृत्। साधारणः कल्पः ॥ ९ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोविंशाध्यायस्य तृतीयः खण्डः ॥

---

## चतुर्थः खण्डः ॥

अथ द्वितीयं चतुर्दशरात्रमाह—

**अतिरात्रो ज्योतिर्गौरायुस्त्र्यहः पृष्ठ्यः षडह आयुर्गौर्ज्योतिरतिरात्रः ॥ १ ॥**

अनुलोमप्रतिलोमौ द्वौ त्रिकद्रुकौ पृष्ठ्यः षडहः। आद्यन्तयोरतिरात्र इति चतुर्दशरात्रः ॥ १ ॥

आसामधिकारिणमाह—

**यांस्तल्पे वोदके वा विवाहे वा मीमांसेरंस्त एता उपेयुः ॥ २ ॥**

यान् पुरुषान् तल्पे शयने वा उदके अभिषेकार्थं विवाहे वा मीमांसेरन् विवदेयुरन्ये ते मीमांसमाना एतद्रात्रीरुपेयुः। तल्पाद्यर्थेनाऽधिकरण इत्यर्थः ॥ २ ॥

आद्यं त्र्यहं प्रशंसति--

**यत् ज्योतिर्गौरायुस्त्र्यहः प्रज्ञाताꣳस्तोमानुपयन्ति ॥ ३ ॥**

स्पष्टम् ॥ ३ ॥

कथं प्रज्ञातत्वमिति तत्राऽऽह--

**इमानेव लोकानेष्वेव लोकेषु प्रतितिष्ठन्ति ॥ ४ ॥**

ज्योतिरादीनां भूरादिलोकात्मकत्वाद्भूरादीनां सर्वैः प्रज्ञातत्वात् स्तोमा अपि प्रज्ञाता इत्युच्यन्ते ॥ ४ ॥

अनन्तरभाविनं षडहं प्रशंसति--

**अथ यत् पृष्ठ्यः षडहो मध्यतो भवत्येष वाव देवतल्पो देवतल्पमेव तदारोहन्ति तल्प्या भवन्ति ॥ ५ ॥**

यथा लोकाः तल्पमारुह्य सुखेन शेरते एवं देवा अपि षडहमाश्रित्य तुष्यन्तीति षडहो देवतल्पः। यद्वा यथा गृहस्य मध्ये वर्त्तते एवमहोमध्ये संस्थानात्तल्प इत्युपचारः। अतः षडहं क्रमेण प्रयुञ्जानास्तेन षडहेन देवतल्पमेवाऽऽरोहन्ति, स्वयञ्च तल्प्याः शोभनतल्पार्हा भवन्ति ॥ ५ ॥

किञ्च—

**प्रवसीयसस्तल्पमाप्नुवन्ति ॥ ६ ॥**

सुमहत्तरस्य सुकृतिनो देवास्तल्पं प्राप्नुवन्ति। कर्म्मणि षष्ठी, प्रशस्ततल्पमित्यर्थः ॥ ६ ॥

अथाऽऽवृत्तं त्रिकद्रुकं प्रशंसति—

**अथ यदायुर्गौर्ज्योतिरतिरात्रो येनेतो यन्ति तेन पुनरायन्ति ॥ ७ ॥**

येन ज्योतिरादिक्रमेण इतोऽस्माल्लोकात् यन्ति स्वर्गं प्राप्नुवन्ति, तेनैवाऽवरोहक्रमेण पुनरायन्त्यमुं लकम्। स्वर्गे चिरकालमुषित्वा पुनरागच्छन्ति सत्रिणः। प्रयोगारोहावरोह एव स्वर्गारोहावरोहणम्। अथाऽस्य कल्पः—'रात्रातिरात्रात् पृष्ठमुपयन्ति प्रथमस्याऽह्नोऽस्य प्रत्ना·

नुरूपो यत्र वा त्रिकद्रुकस्य यत्र ज्योतिर्गौरायुरित्यहा ऐहिकास्ते गौरीवितस्वरा एत एवाऽऽवृत्तायुर्गौर्ज्योतिरतिरात्र' इत्यादिकः साधारणो द्रष्टव्यः ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोविंशाध्यायस्य चतुर्थः खण्डः ॥

---

## पञ्चमः खण्डः ॥

अथ तृतीयचतुर्दशरात्रं प्रतिष्ठासाधनं सत्रमाह—

**अतिरात्रो गौश्चाऽऽयुश्च द्वे अहनी द्वादशाहस्य दशाहान्यतिरात्रः ॥ १ ॥**

स्पष्टम् ॥ १ ॥

द्वितीये द्वे अहनी प्रशंसति—

**यद्गौश्चाऽऽयुश्च द्वे अहनी भवतो मिथुनौ स्तोमावुपयन्ति प्रजात्यै ॥ २ ॥**

गोआयुषी इति द्वौ स्तोमौ स्त्रीपुंसात्मकौ मिथुनौ । अतस्तदनुष्ठानं प्रजात्यै पुत्रादिप्रजननाय भवति ॥ २ ॥

अथाऽनन्तरभाविनं दशाहं प्रशंसति—

**अथ यानि द्वादशाहस्य दशाहानि वाचमविच्छिन्नामुपयन्ति प्रजननाय ॥ ३ ॥**

द्वादशाहस्य वागात्मकत्वात्तदन्तःपाती दशाहोऽपि वागात्मकः । अतस्तस्याऽविच्छिन्नप्रयोगेणाऽविच्छिन्नां वाचमुपयन्ति । तत्र प्रजननाय सन्तत्यविच्छेदाय भवतीत्यर्थः ॥ ३ ॥

अथ सर्वाश्चतुर्दशरात्रीः प्रशंसति—

**एता वै प्रतिष्ठिताश्चतुर्दश रात्रयः प्रतितिष्ठन्ति य एता उपयन्ति ॥ ४ ॥**

रात्रीणां समसंख्यासद्भावात् समसंख्यायाश्च 'द्विपाद्यजमानः प्रतिष्ठित्या' इत्यादि प्रतिष्ठात्मकत्वाद्रात्रीणां प्रतिष्ठितत्वम् । यद्वा द्वादशाहे

प्रतिष्ठितानां रात्रीणामत्राऽपि क्रियमाणत्वात् प्रतिष्ठितत्वम् । सिद्धमन्यत् । अत्र 'ज्योतिर्गौरायुरित्यद्ध ऐकाहिकास्त' इत्युक्त्वा 'एत एव गोआयुषी' इत्युक्तः साधारणः कल्पो द्रष्टव्यः ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे त्रयोविंशाध्यायस्य पञ्चमः खण्डः ॥

## षष्ठः खण्डः ॥

चत्वारः पञ्चदशरात्राः । तेषु देवत्वप्राप्तिसाधनं प्रथमं पञ्चदशरात्रं सत्रमाह—

**अतिरात्रः पृष्ठ्यः षडहो महाव्रतं पृष्ठ्यः षडहस्त्रयस्त्रिꣳशारम्भणोऽतिरात्रः ॥ १ ॥**

त्रयस्त्रिंशारम्भण इत्यनुवर्त्तत इत्यर्थः ॥ १ ॥

अथाऽस्य फलं सप्ररोचनमाह—

**एताभिर्वै देवा देवत्वमगच्छन् देवत्वं गच्छन्ति य एता उपयन्ति ॥ २ ॥**

स्पष्टम् ॥ २ ॥

अथैतद्देवसम्बन्धद्वारेण प्रशंसति—

**एतद्वै देवानाꣳसत्त्रं तदद्याऽपि देवाः सत्रमासते॥३॥**

यस्मादेतत् पूर्वं देवैरनुष्ठितं तत् तस्मादद्याऽपि तत्सत्रं देवा आसते । तत इदं प्रशस्तमित्यर्थः । ननु देवानां विग्रहाद्यभावादनुष्ठानानुपपत्त्या *यद्यपि कर्माधिकारो नाऽस्ति, तथाऽपि स्तुत्यर्थत्वादिति न विरोधः ॥ ३ ॥

अथाऽऽसां पञ्चदशरात्रीणां क्रमेणाऽहर्न्नियममाह—

**पौर्णमास्यतिरात्रोऽथ यानि षडहानि स पृष्ठ्यः षडह एकाष्टका महाव्रतमथ यानि षडहानि स पृष्ठ्यः षडहोऽमावास्यातिरात्रः ॥ ४ ॥**

---

* अत्र ग्रन्थपातोऽनुमीयते ।

पौर्णमास्यां प्रायणीयातिरात्रः । ततः प्रतिपदाद्यहष्षट्के क्रमेण पृष्ठ्यः षडहः कर्त्तव्यः। अपरपक्षाष्टम्येकाष्टका । तत्र महाव्रतमहर्भवति । ततोऽहष्षट्कः पृष्ठ्यः षडहः । अमावास्यायामुदयनीयोऽतिरात्र इति ॥

देवैरनुष्ठितत्वादयं यागो देवसुत एवं मनुष्यसुत इत्याह—

**तस्मात्तर्हि मनुष्याणां न सुतो देवानां हि तर्हि सुतः प्रत्यक्षमेवैताभिर्देवता अभ्यारोहन्ति ॥ ५ ॥**

तस्मात् देवैरनुष्ठितत्वात् कृष्णपक्षे सत्रसमापनाद्वा । तर्हि तथा सत्ययं मनुष्याणामुचितः सोमयागो न भवति । किन्तु तर्हि तथा सति देवानां सुतो हि, यतः प्रत्यक्षमेवैताभी रात्रीभिर्देवता अभ्यारोहन्ति । सत्रिणो मनुष्याः देवैरनुष्ठितस्यैतैरपि कृतत्वात् यद्यपि देहान्ते देवप्राप्तिः स्वर्गादेव तुल्या, तथाऽप्यस्य देवसत्रत्वात् प्रत्यक्षमेव सशरीरमेव देवता आभिमुख्येन गच्छन्ति ॥ ५ ॥

अथाऽस्य सत्रस्य सामान्यप्राप्तदीक्षोपसदो द्वादशत्वाङ्गीकारे प्रथमसुत्याङ्गभूतपौर्णमास्याः पूर्वं चतुर्विंशतिदिवसादर्वाक् दीक्षोपक्रमे सति कृष्णपक्षे दीक्षारम्भस्स्यात् तं पक्षं निराकृत्य पूर्वपक्षे दीक्षोपक्रमं विदधाति—

**प्रतिनोदात्तु भयमितरमनुपक्षो दीक्षेरन्नप्रतिनोदाय ॥**

तुशब्दो वैलक्षण्यद्योतनार्थः । सत्रत्वसामान्यप्रयुक्तद्वादशदीक्षा अस्मिन् पक्षे पौर्णमासीसुत्योपक्रमपक्षे कृष्णपक्षषष्ठ्यां यो दीक्षोपक्रमस्तस्मिन् पक्षे प्रतिनोदाद्देवत्वं प्राप्तवतां सत्रिणां देवकर्तृकात्स्वर्गान्निष्कासनाद्भयं भवति । अतस्तत्परिहारायेतरमनुपक्षः इतरं पक्षमनु शुक्लपक्षे दीक्षेरन् । सा च स्वर्गादप्रतिनोदाय भवति । अयमर्थस्सूत्रेणाऽपि सूत्रेण स्पष्टीभवति । अत्र सुत्यारम्भे मतभेदसिद्ध्यर्थं दीक्षारम्भं दर्शयति सूत्रकारः—(१)'प्रथमे पञ्चदशरात्र एकान्नविंशतिर्दीक्षा इति धानञ्जय्य' इति। स्पष्टम् । तत्कुत इत्यत आह—'एकाष्टकामहाव्रतममावास्यातिरात्र इति ह्याहे'ति । अयमर्थः—अपरपक्षाष्टम्येकाष्टका । तस्यां महाव्रतं अमावास्यायामुदयनीयातिरात्र इति ब्राह्मणे। अतस्तदानुगुण्येन कृष्णप्रतिपदि प्रायणीयम् । ततः पूर्वं द्वादशोपसदः। ततः पूर्वमेकान्नविंशतिर्दीक्षाः पौर्णमस्या सहेति सामर्थ्यात् सिद्धमिति । (२)'अ-

१. लाट्या. श्रौ. १०. १. ७,  २. लाट्या. श्रौ. १०. १. ८.

द्वादशेति गौतमः पौर्णमास्यतिरात्र इति ह्याहे'ति । अयमर्थः—'पौर्णमास्यां प्रायणीयोऽतिरात्र' इति वचनात् पञ्चदश्यामेव सुत्यारम्भो न प्रतिपदि । तथा सति पौर्णमासीसिद्धप्रतिपक्षणार्थस्स्यात् । तच्चाऽयुक्तम् । तेन पञ्चदश्याः पूर्वन्तूपसद्यतिरिक्तान्यष्टादशैवेति गौतममतम् ।

नन्वेवमेकाष्टकाशब्दः सप्तमीलक्षणार्थस्स्यात् । अमावास्याशब्दश्चतुर्दशीं लक्षयेदिति पदद्वयस्य श्रौतार्थभङ्गः स्यात् । सत्यं पदद्वयेऽपि तावल्लक्षणा दुर्वारा, सत्यं तत्र पौर्णमासीशब्दः प्रथमश्रुतत्वादसञ्जातविरोधो मुख्यस्येति गौतमस्याऽभिप्रायः । भूयसीन्यायेन पदद्वयस्य मुख्यार्थलाभो युक्त इति धानञ्जय्यस्याऽऽशयः । एवं दीक्षायां मतद्वयं प्रदर्श्याऽन्यत्स्वमतं दर्शयति सूत्रकारः–(१)'जातिकल्पो वे'ति । सत्रेऽपि सामान्यजातिः तत्प्रयुक्तकल्पो जातिकल्पः । तेषां या द्वादश दीक्षाः द्वादशोपसदः ता एवाऽत्राऽपि स्युरित्यर्थः ।

नन्वेवमितरमनुपक्षो दीक्षेरन्निति वचनविरोधोऽवगतः । नाऽयं विरोधः । कृष्णपक्षे दीक्षामभ्युपगम्य देवैः प्रतिनोदशङ्कया पक्षान्तरत्वेन विधानात् तेन विकल्प एव युक्तः । न च कृष्णपक्षे दीक्षोपक्रमकल्पो ब्राह्मणे न निर्दिष्ट इति वाच्यम् । प्रतिनोददोषस्योपन्यस्तत्वात् कृष्णपक्षे दीक्षोपक्रमाङ्गीकाराभावे प्रतिनोददोषस्यैवाऽनुदयात् कृष्णपक्षोपक्रमः सत्रसामान्यविहितो द्वादशदीक्षापक्षो ब्राह्मणे निर्दिष्टप्राय एवेति । अतः पूर्णमास्यां प्रतिपदि वा युक्त उपक्रम इति मतद्वयं सिद्धम् । एतज्जातिकल्पपक्षेऽपि समानम् । 'अथातद्वादशाहप्रभृतीनां सत्राणां सामान्यकल्पः सत्रेषु स्यादतिरात्रात् पृष्ठ्यमुपयन्ति प्रथमस्याऽह्नोऽस्य प्रत्नानुरूपो यत्र वा त्रिकद्रुकेभ्यो यत्र ज्योतिर्गौरायुस्त्र्यहं ऐकाहिकास्ते गौरीवितस्वरा एत एवाऽऽवृत्ता यदायुर्गौर्ज्योतिरातिरात्र एते एव गोआयुषी रात्रिसत्रेष्वन्यत्रयमतिरात्रेभ्यः संवत्सरसंमिताभ्यश्चेति क्लृप्तं प्रथमं पञ्चदशरात्रमि'ति कल्पः ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोविंशाध्यायस्य षष्ठः खण्डः ॥



---

१. लाट्या. श्रौ. १०. १. ९.

## सप्तमः खण्डः ॥

अथ ब्रह्मवर्चसफलसाधनं द्वितीयं पञ्चदशरात्रं सत्रमाह—

**अतिरात्रस्त्रिवृदग्निष्टुदग्निष्टोमो ज्योतिर्गौरायुरित्यहः पृष्ठ्यः षडह आयुर्गौर्ज्योतिरतिरात्रः ॥ १ ॥**

सर्वाग्नेये कश्चित् त्रिवृत्स्तोमक एवाऽहर्विशेषस्त्रिवृदग्निष्टुदग्निष्टोमः। शिष्टानि स्पष्टानि ॥ १ ॥

अथैता रात्रीः प्रशंसति—

**क्षत्रं वा एता रात्रयोऽभिनिर्वदन्ति ॥ २ ॥**

एताः पञ्चदशरात्रयः क्षत्रमित्यभिनिर्वदन्त्यभिज्ञाः। क्षत्रमित्येकत्वम्, अत्राऽह्नां पञ्चदशस्तोमवतां संख्यासादृश्यात्तस्य चोरसो बाहुभ्यां च (१)'पञ्चदशं निरमिमीते'त्युपक्रम्य 'राजन्यो मनुष्याणामि'ति श्रुतत्वेन क्षत्रसम्बन्धात् क्षत्रमित्यह्नां स्तुतिः ॥ २ ॥

अथाऽत्राऽधिकारिणमाह--

**ब्रह्मवर्चसकामा उपेयुः ॥ ३ ॥**

स्पष्टम् ॥ ३ ॥

प्रथममहस्तत्र त्रिवृद्द्वारा प्रशंसति—

**यत् त्रिवृदग्निष्टुदग्निष्टोमो भवति ब्रह्म तद्यशसार्द्धयति ॥ ४ ॥**

त्रिवृदग्निष्टुदग्निष्टोमकरणं यदस्ति तत्तेन ब्राह्मणजातिमेव यशसार्द्धयति समर्द्धयति ॥ ४ ॥

त्रिवृत्स्तोमब्राह्मणयोः कथं सम्बन्ध इति ? तत्राऽऽह—

**ब्रह्म वै त्रिवृत् ॥ ५ ॥**

प्रजापतिमुखात् त्रिवृतो ब्राह्मणस्य च सहोत्पत्तिसम्बन्धः ॥ ५ ॥

अथ त्रिकद्रुकमध्यभाजं पृष्ठ्यः षडहः आवृत्तं त्रिकद्रुकं च क्रमेण प्रशंसति--

**यत् ज्योतिर्गौरायुरित्यहः प्रज्ञातान् स्तोमानुपयन्ती-**

---

१. तै. सं. ७. १. १. ४.

मानेव लोकानेष्वेव लोकेषु प्रतितिष्ठन्त्यथ यत् पृष्ठ्यः षडहो मध्यतो भवत्यन्नं वै पृष्ठान्यन्नमेव तन्मध्यतो धीयते तस्मान् मध्ये सदन्नं धिनोत्यथ यदायुर्गौर्ज्योतिरतिरात्रो येनेतो यन्ति तेन पुनरायन्ति ॥ ६ ॥

गतोऽर्थः ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोविंशाध्यायस्य सप्तमः खण्डः ॥

## अष्टमः खण्डः ॥

अथाऽहीनसत्रोभयफलसाधनं तृतीयं पञ्चदशरात्रमाह--

त्रिवृदग्निष्टुदग्निष्टोमो ज्योतिर्गौरायुस्त्र्यहो द्वादशाहस्य दशाहान्यतिरात्रः ॥ १ ॥

स्पष्टम् ॥ १ ॥

एकतोऽतिरात्रत्वमहीनलिङ्गम् । अहस्सङ्घातात्मकत्वं सत्रलिङ्गम् । तदुभयस्याऽपि सद्भावादेतदुभयात्मकमिति प्रशंसितुमहीनसत्रयोर्विलक्षणप्रकृतिकत्वं दर्शयति--

अन्यस्मै वै कामाय सत्रमन्यस्मै यज्ञो न तत् सत्रेणाऽऽप्नोति यस्मै यज्ञो न तद्यज्ञेनाऽऽप्नोति यस्मै सत्रम् ॥ २ ॥

गतोऽर्थः ॥ २ ॥

एवं वैलक्षण्यमुपन्यस्य तदुभयलिङ्गं दर्शयति--

यदन्यतोऽतिरात्रास्तेन यज्ञोऽथ यानि द्वादशाहस्य दशाहानि तेन सत्रम् ॥ ३ ॥

स्पष्टम् ॥ ३ ॥

अस्तूभयात्मकत्वं ततः किमित्यत आह--

उभावेवैताभिः कामाववरुन्धते ॥ ४ ॥

'त्र्यहो ज्योतिर्गौरायुस्त्र्यह' इत्यादिकः साधारणः कल्पो द्रष्टव्यः ॥४॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोविंशाध्यायस्याऽष्टमःखण्डः ॥

## नवमः खण्डः ॥

अथ प्रजाफलसाधनं चतुर्थं पञ्चदशरात्रमाह--

**अतिरात्रो ज्योतिर्गौरायुस्त्र्यहो द्वादशाहस्य दशाहान्यतिरात्रः प्रजाकामा उपेयुः ॥ १ ॥**

स्पष्टम् ॥ १ ॥

अथाऽस्य प्रजाफलसाधनत्वं सम्प्ररोचनमाह--

**एताभिर्वै प्रजापतिः प्रजा असृजत प्र प्रजया प्र पशुभिर्जायन्ते य एता उपयन्ति ॥ २ ॥**

सुगमम् ॥ २ ॥

अथाऽऽदौ त्र्यहं प्रशंसति--

**यत् ज्योतिर्गौरायुस्त्र्यहः प्रज्ञातान् स्तोमानुपयन्तीमानेव लोकानेष्वेव लोकेषु प्रतितिष्ठन्ति ॥ ३ ॥**

भूरादिलोकानां प्रज्ञातत्वात् 'आदित्यो वै ज्योति' रित्यादिश्रुतेर्ज्योतिरादीनां भूरादिलोकात्मकत्वाच्चैषां स्तोमानां प्रज्ञातत्वम ॥ ३ ॥

अनन्तरभावीनि दशाहानि प्रशंसति--

**अथ यानि द्वादशाहस्य दशाहानि वाचमविच्छिन्नामुपयन्ति प्रजननाय ॥ ४ ॥**

'वाग्वै द्वादशाह' इति श्रुतेः तत्रत्यानां द्वादशानामह्नामविच्छेदेनाऽनुष्ठानादविच्छिन्नामेव वाचमुपयन्तीति । सा चोपलब्धिः प्रजननाय सन्तत्यविच्छेदाय फलोत्पत्तये वा भवति ॥ ४ ॥

एवमहानि विभज्याऽथ समुच्चित्य प्रशंसति--

**एता वै प्रतिष्ठिताः पञ्चदश रात्रयः प्रतितिष्ठन्ति य एता उपयन्ति ॥ ५ ॥**

विप्रकीर्णत्वाभावेनाऽन्यत्र व्यवस्थितानामेवाऽहस्सङ्घातानामत्र प्रयोगादह्नां प्रतिष्ठितत्वम् । यद्वा (१)'पञ्चदश वा अर्धमासस्य रात्रय' इति श्रुतेः प्रतिष्ठितसंवत्सरान्तर्भूतार्द्धमासरात्रिसंख्यासाम्यादासां प्रतिष्ठितत्वम् ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे सायणचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोविंशाध्यायस्य नवमः खण्डः ॥

---

१. तै. सं. २. ५. ८. २.

## दशमः खण्डः ॥

अथ परमविजयसाधनमैन्द्रं षोडशरात्रं सत्रमाह--

**एता एव समहाव्रताः ॥ १ ॥**

एता एवाऽतीतपञ्चदशरात्रगता उभयतोऽतिरात्रयुक्तास्त्रिकद्रुकसहिता द्वादशाहरूपा एव महाव्रतोपेताः षोडशरात्रं महाव्रतमुपान्त्यं वेदितव्यम् ॥ १ ॥

आसां फलं सप्ररोचनमाह--

**एताभिर्वा इन्द्रः परमां विजितिं व्यजयत परमामेवैताभिर्विजितिं विजयन्ते ॥ २ ॥**

सर्वलोकजयः परमो जयः । (१) 'विपराभ्याञ्जे'रित्यात्मनेपदम् ॥२॥

अथ पूर्वोक्तं पञ्चदशाहं वज्रत्वेन प्रशस्य महाव्रतं षोडशमहर्वज्रस्य धारणस्थानीयत्वेन प्रशंसति--

**पञ्चदशो वै वज्रो न वा अगृहीतेन वज्रेण वीर्य्यं करोति या षोडश्यारम्भणमेव तद्गृहीतेन वज्रेण वीर्य्यं करोति ॥ ३ ॥**

पूर्वोक्तः पञ्चदशरात्रः पञ्चदशः, स्तोमानां संख्यासामान्यात् पञ्चदशस्तोमेन सह प्रजापत्युरसो बाहुभ्याञ्चेत्यस्योत्पत्तेस्तस्य वज्रसम्बन्धात् पञ्चदशो वज्र इत्युच्यते । तस्य महाव्रतं षोडशमहरारम्भणस्थानीयम् । सुज्ञानमन्यत् । तृतीयपञ्चदशरात्रप्रभृति षोडशरात्रपर्य्यन्तस्य 'कलसद्वादशरात्रा' इत्यादिकः कल्पो द्रष्टव्यः ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोविंशाध्यायस्य दशमः खण्डः ॥



---

१. पा. सू. १. ३. १९

## एकादशः खण्डः ॥

अथ प्रजापतेस्सप्तदशरात्रं सत्रमाह--

**अतिरात्रो ज्योतिर्गौरायुर्गौरायुः पञ्चाहो द्वादशाहस्य दशाहान्यतिरात्रः ॥ १ ॥**

स्पष्टम् ॥ १ ॥

आसां फलं सप्ररोचनमाह--

**एताभिर्वै प्रजापतिरनन्ताꣳ श्रियमजयदनन्ता वा एता यत् पञ्चाहविधाः ॥ २ ॥**

अनन्तां श्रियं जयहेतुत्वोपपत्त्यर्थं--अनन्ता वा एता इत्याद्युपन्यासः । पञ्चाहविधाः पञ्चाहसदृशाः । तत्संख्याका रात्रय इत्यर्थः । अनन्तश्रीकामा ह्यत्राऽध्यधिकारिण इत्यर्थः ॥ २ ॥

अथाऽऽद्यं पञ्चाहं प्रशंसति--

**यत् पञ्चाहोऽनन्तादेव प्रजायन्ते ॥ ३ ॥**

पञ्चाहानामनन्तत्वादनन्तादेवैश्वर्याद्युक्ताः प्रजायन्तेऽनुष्ठातारोऽपि । अथ वैताभिर्वैत्यादिकस्सर्वोऽपि पञ्चाहार्थवादपरो द्रष्टव्यः ॥ ३ ॥

अथाऽनन्तरभाविद्वादशाहं प्रशंसति--

**अथ यानि द्वादशाहस्य दशाहानि वाचमविच्छिन्नामुपयन्ति प्रजननाय ॥ ४ ॥**

गतार्थोऽयम् ॥ ४ ॥

कृत्स्ना रात्रीः प्रशंसति--

**एता वै प्रतिष्ठिताः सप्तदश रात्रयः प्रतितिष्ठन्ति य एता उपयन्ति ॥ ५ ॥**

'सप्तदशो वै प्रजापति' रिति श्रुतेः प्रजापतेः प्रतिष्ठितत्वाच्च तत्समानसंख्याका एताः सप्तदश रात्रयोऽपि प्रतिष्ठिता इत्युच्यन्ते । एता वा इत्यादेः पञ्चाहस्तुतिपरत्वे प्रतिष्ठाकामा उपेयुरित्येतदधिकारवाक्यं द्रष्टव्यम् । 'सप्तदशरात्रे चत्वार्यभिप्लविकान्यहानि श्यैतनौधसं ब्रह्मसाम पौष्कलश्रुध्यौष्णिहानी' त्यादिकः कल्पो द्रष्टव्यः ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोविंशाध्यायस्यैकादशः खण्डः ॥

## द्वादशः खण्डः ॥

अथ सर्वायुर्लक्षणसाधनं देवानामष्टादशरात्रं सत्रमाह—

**अतिरात्रोऽभिप्लवः षडहो द्वादशाहस्य दशाहान्य-तिरात्रः ॥ १ ॥**

स्पष्टोऽर्थः ॥ १ ॥

अस्याऽमृतत्वसाधनत्वं सप्ररोचनमाह--

**देवा वै मृत्योरबिभयुस्ते प्रजापतिमुपाधावꣳस्तेभ्य एतेनाऽष्टादशरात्रेणाऽमृतत्वं प्रायच्छत् ॥ २ ॥**

स्पष्टोऽर्थः ॥ २ ॥

युक्तममृतत्वप्राप्तिरनेन देवानां, तेषां मरणाभावात् । कथन्तत् मनुष्याणां फलं स्यादित्याशंक्य तदुचितममृतत्वं दर्शयति--

**एतद्वाव मनुष्यस्याऽमृतत्वं यत् सर्वमायुरेति वसीयान् भवति ॥ ३ ॥**

स्पष्टम् ॥ ३ ॥

इदानीममृतत्वकामैरेतदनुष्ठेयमित्याह—

**सर्वमायुर्यन्ति वसीयाꣳसो भवन्ति य एता उपयन्ति ॥ ४ ॥**

सुगमम् ॥ ४ ॥

अथाऽऽसां रात्रीणां सर्वायुस्साधनत्वमुपपादयति--

**द्विर्वा एता नव नव प्राणा अभिपूर्वमेवैताभिरायुर्दधते ॥ ५ ॥**

एता अष्टादशरात्रयो द्विर्नव भवति खलु प्राणाश्च नव, शिरोगताः सप्त द्वाववाञ्चाविति । तथा सति अभिपूर्वमेव प्रथमं नवरात्रेण पूर्वं पञ्चाशद्वर्षलक्षणं आयुर्योगश्च द्वितीयेन चरममायुरित्यनुक्रमेणैवं ताभी रात्रीभिः सर्वमायुर्द्धारयन्ति । 'अथ यत्राऽतिरात्रादभिप्लवमुपयन्ति तत्र प्रथमस्याऽह्न एष प्रत्नानुरूप' इत्यादिकः कल्पो द्रष्टव्यः ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोविंशाध्यायस्य द्वादशः खण्डः ॥

---

## त्रयोदशः खण्डः ॥

अथ पश्वाधिपत्यसाधनं वायोरेकोनविंशतिरात्रमाह—

**एता एव समह्वाव्रताः ॥ १ ॥**

एताः पूर्वोक्ताः अष्टादशैव । अतिरात्रात् पूर्वभाविनैकेन महाव्रतेनाऽह्ना सहैकोनविंशतिरात्रयो भवन्ति ॥ १ ॥

अथाऽऽसां पशुसाधनत्वं सप्ररोचनमाह—

**एताभिर्वै वायुरारण्यानां पशूनामाधिपत्यमाश्नुतोभयेषां पशूनामाधिपत्यं गच्छन्ति य एता उपयन्ति ॥२॥**

एताभिरेकोनविंशतिरात्रीभिर्वायुरारण्यानां द्वीपिसूकरश्वापदपक्षिसरीसृपहस्तिमर्कटानां सप्तानामारण्यानां पशूनामाधिपत्यमाश्नुत प्राप्नोत् । यद्यप्येताभिरुभयविधाः पशव उलभ्यन्ते, तथाऽपि वायोर्गोष्ठेषु गवादिषु नैरपेक्ष्यादारण्येषु विशेषसम्बन्धाद्वायोरारण्यपश्वाधिपत्यमुक्तम् । उभयेषामित्यादि स्पष्टम् । तत्राऽऽरण्याः दर्शिताः । ग्राम्यास्तु गोजाविकपुरुषाश्वगर्दभोष्ट्राः । एतेन पश्वर्थिनोऽधिकारिण इत्युक्तं भवति ॥ २ ॥

प्रकारान्तरेणैताः प्रशंसति—

**मृगसत्रं वा एतत् ॥ ३ ॥**

मृगार्थं वायुनाऽनुष्ठितं सत्रं मृगसत्रम् ॥ ३ ॥

तदेव समर्थयते—

**एताभिर्वा आरण्याः पशवो नाऽकृताः प्रजायन्ते ॥४॥**

एताभिः खलु रात्रीभिर्वाय्वर्थमारण्याः पशवो नाऽकृताः आ ईषदर्थे कृतमिति भावे निष्ठा । न विद्यते ईषदपि कृतं कारणं रक्षणादिप्रयत्नो यषान्ते तथोक्ताः, तादृशाः सन्तः प्रजायन्ते । यद्वैवं व्याख्येयम्-मृगैर्वासप्रदानादन्नपालनप्रयत्नराहित्येन प्रजननार्थमनुष्ठितं सत्रम् । अस्ति मृगादीनामपि गवादीनामिवाऽधिकारः (१)'गावो वा एतत् सत्रमासते' त्यादिश्रुतेः । स चाऽर्थवादत्वान्न विरुध्यते । एताभिर्वा इत्यादि मृगसत्रसमर्थनम् ॥ ४ ॥

अस्त्वस्य मृगसत्रत्वं किमतो भवतीत्यत आह—

**अनाकृतमेषां प्रजायते य एता उपयन्ति ॥ ५ ॥**

---

१, तै. सं. ७. ५. १. १.

अस्याऽनुष्ठातॄणामपि पुत्रपश्वादिकमप्रयत्नेनैवोत्पद्यत इत्यर्थः । अथाऽष्टादशरात्रिप्रभृतीनां साधारणः कल्पः—'यत्राऽभिप्लवो रात्रिसत्त्रेषु श्यैतनौधसब्रह्मसामानः पौष्कलश्रुध्याग्निहोत्रसंवत्सरलंमिताभ्यः कॢप्तमाविंशतिरात्रादि'ति । अयमर्थः—अभिप्लवस्य प्रथमोत्पत्तौ प्रत्यहमभीवर्त्तो ब्रह्मसाम, तथा प्रत्यहमुष्णिक्षु सुज्ञानम् । रात्रिसत्त्रेष्वभीवर्त्तस्थाने श्यैतनौधसे व्यत्यासं कुर्यात् । सुज्ञानस्थाने पौष्कलश्रुध्यौष्णिहे व्यत्यासङ्कुर्यादिति । तथाऽपि रात्रिसत्त्रेष्वभीवर्त्तस्थाने श्यैतनौधसयोरन्यतरत् साम किमभीवर्त्तस्तोत्रीये स्यात् उत स्वस्तोत्रीय इति । सूत्रकारस्सम्पाद्य पूर्वोत्तरौ पक्षौ दर्शयति । तत्र पूर्वपक्षमाह—'अभीवर्त्तस्थाने श्यैतनौधसे तास्वेवे'ति । तास्वभीवर्त्तस्तोत्रीयास्वेवेत्यर्थः । दृष्टान्तमाह—'तथौष्णिहेयासु सुज्ञानमि'ति । यथा सुज्ञानस्य स्थाने विहिते पौष्कलश्रुध्ये यासु सुज्ञानं तास्वेव भवतस्तद्वदत्राऽपि भवत इति । सिद्धान्तमाह—'स्वासु त्वावर्त्तानि सामानि' । यस्य कस्यचित्स्थाने विहितानि स्वास्वेव भवन्तीत्यर्थः । दृष्टान्तमाह—'यथा बृहती वषट्कारनिधनं स्वकीयास्वेव भवति बृहद्रथन्तरञ्च तत् पृष्ठ्यः षडहः' इति । अयमर्थः—इषुर्नामैकाहः कल्पकारेण श्येनसधर्म्मः कॢप्तः । तत्र श्यैनिकस्य बृहतः स्थाने वषट्कारणिधनं स्वकीयास्वेव भवति । तथा 'बृहद्रथन्तरे पृष्ठ्यः षडह' इत्युक्तम् । वैरूपवैराजादिस्थानेष्वेव बृहद्रथन्तरे भवतः । तद्वदत्राऽपीति । श्यैतनौधसे यदि परकीयासु स्तोत्रीयासु स्यातां, तदा विशेषतस्ता निर्दिशेदेव । यथा नौधसस्यर्क्षु जनित्रं ब्रह्मसामेत्यादि निर्देशितः । तस्मात् स्वास्वेवेति सिद्धान्तः ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोविंशाध्यायस्य त्रयोदशः खण्डः ॥

---

## चतुर्दशः खण्डः ॥

अथ पुरुषफलसाधनं विंशतिरात्रं सत्रमाह—

**अतिरात्रोऽभिप्लवः षडहोऽभिजिच्च विश्वजिच्च द्वे अहनी द्वादशाहस्य दशाहान्यतिरात्रः ॥ १ ॥**

स्पष्टोऽर्थः ॥ १ ॥

अथाऽऽसां पुरुषफलसाधनत्वं सप्ररोचनमाह—

पुरुषकामा उपेयुरेताभिर्वै प्रजापतिः पुरुषमसृजत॥२॥

स्पष्टम् ॥ २ ॥

अथ पुरुषफले यत् साध्यं तस्यार्थवादमाह—

स सर्वस्याऽन्नाद्यस्याऽऽधिपत्यमगच्छत् सर्वस्याऽन्नाद्यस्याऽऽधिपत्यं गच्छन्ति य एता उपयन्ति ॥ ३ ॥

सुगमम् ॥ ३ ॥

अथैतत् सत्रं रात्रिसंख्याद्वारा प्रशंसति—

पुरुषसत्रं वा एतत् ॥ ४ ॥

स्पष्टोऽर्थः ॥ ४ ॥

तत् कथमिति? तदुपपादयति—

विꣳशो वै पुरुषो दश ह्नि हस्त्या अङ्गुल्यो दश पाद्याः ॥ ५ ॥

स्पष्टम् ॥ ५ ॥

अस्त्वेवम्, एतावता प्रकृते किमित्यत आह—

यदेता विꣳशती रात्रयो भवन्त्येष्वेवैताभिर्लोकेषु पुरुषं प्रतिष्ठापयन्ति ॥ ६ ॥

पुरुषाङ्गुलिसंख्यासाम्याद्विंशतिरात्रात्मकं सत्रमुपयन्ति । ते पुरुषमेष्वेव लोकेषु प्रतिष्ठापयन्ति । ते लोकेषु प्रतितिष्ठन्तीत्यर्थः ॥ ६ ॥

पुनरेताः रात्रीः प्रशंसति—

एता वै प्रतिष्ठिता विꣳशती रात्रयः प्रतितिष्ठन्ति य एता उपयन्ति ॥ ७ ॥

रात्रीणां पुरुषाङ्गुलिसंख्यासाम्यात्तस्य प्रतिष्ठितत्वादासामपि प्रतिष्ठितत्वम् । अथाऽत्र 'विंशतिरात्रे सांवत्सरिकौ विश्वजिदभिजितावि'त्यादिकः कल्पो द्रष्टव्यः ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोविंशाध्यायस्य चतुर्दशः खण्डः ॥

## पञ्चदशः खण्डः ॥

अथ द्वावेकविंशतिरात्रौ । तत्र पशुफलसाधनं प्रथमं एकविंशतिरात्रमाह—

**अतिरात्रोऽभिप्लवः षडहोऽतिरात्रोऽभिप्लवः षडहोऽभिप्लवः षडहोऽतिरात्रः पशुकामा उपेयुः ॥ १ ॥**

स्पष्टम् ॥ १ ॥

पशुफलं सार्थवादं दर्शयति—

**एताभिर्वा आदित्याः सप्त ग्राम्यान् पशूनुदसृजन्त पशूनेवैताभिरुत्सृजान्ति(न्ते) ॥ २ ॥**

उत्सृजन्ति उत्पादयन्ति लभन्त इत्यर्थः । पशवो गोऽजाश्वादयः॥२॥

एकविंशतिरात्रीणां पशुसाधनत्वमुक्तम् । एकविंशतेः सप्तसंख्यायाश्च कथं वैषम्यं स्यादिति ? तत् समर्थयते—

**त्रिर्वै सप्त सप्ताऽऽदित्याः ॥ ३ ॥**

यद्यप्येता एकविंशतिः, तथाऽपि विभागात् त्रिसप्त भवन्ति । वस्तुतोऽतिरात्रः षडहश्चेति सप्तैव, आदित्याश्च सप्त (१)आरोगभ्राजादयः । (२)'देवा आदित्या ये सप्ते'ति मन्त्रवर्णः । अत्र तूभयसंख्यासाम्यम् ॥ ३ ॥

रात्रीणामादित्यसमसंख्यात्वे कथं पशुफलकत्वमिति ? तदुपपादयति—

**पशव आदित्याः ॥ ४ ॥**

आदित्यानां पशूनाञ्च सृष्टिविभागसम्बन्धः । स च प्रदर्शित एव । यद्वा संख्यासाम्यसम्बन्धः ॥ ४ ॥

न केवलं रात्रीणामादित्यसंख्यासाम्यात् पशुफलसाधनत्वं, किन्तु लोकद्वयसमृद्धिहेतुरपि भवतीति वक्तुमाह—

**आदित्या अस्मिंल्लोके ऋद्धा आदित्या अमुष्मिन्॥५॥**

---

१. 'आरोगो भ्राजः पटरः पतङ्गः । स्वर्णरो ज्योतिषीमान् विभासः' ( तै. आ. १. ७. १. ) इति मन्त्रोक्ता आरोगादयस्सप्त सूर्याः ।

२. तै. आ. १. ७. ५.

स्पष्टम् ॥ ५ ॥

कथं लोकद्वयेषु तेषां समृद्धत्वमिति ? तदुपपादयति—

**पशवोऽस्मिन् ऋतवोऽमुष्मिन् ॥ ६ ॥**

'पशव आदित्या' इत्युक्तत्वात् पशूनामस्मिन् लोके समृद्धिः । आदित्या अप्यत्र समृद्धा एव । तथा अमुष्मिन् द्युलोके ऋतवः समृद्धाः । सप्ताऽऽदित्या इत्यमुष्मिन् द्युलोके आदित्यास्समृद्धाः ॥ ६ ॥

इदानीमादित्यसंख्याकैकविंशतिरात्रीरुपेयुषामपि लोकद्वयसमृद्धिर्भवतीत्याह—

**उभयोरनयोर्लोकयोर्ऋध्नुवन्ति देवलोके च मनुष्यलोके च य एता उपयन्ति ॥ ७ ॥**

अथाऽस्य कल्पः—'पूर्वस्यैकविंशतिरात्रस्याऽषोडशिकावतिरात्रावभितः षोडषिमान्मध्ये सर्वे वाऽषोडशिकाः ते च सर्वे ते चाऽषोडशिमन्त' इति । अत्रैकविंशतिरात्रे त्रयोऽभिप्लवाः षडहाः । तत्र तृतीयः प्रतिलोमोऽनुलोमो वेति संशये मतद्वयं दर्शयति सूत्रकारः। तथा हि— 'पूर्वस्मिन्नेकविंशतिरात्रेऽभिप्लवस्तृतीयोऽनुलोम आवृत्तिरिति कुत' इत्यादिना 'न ह्यावृत्तिर्विज्ञायते इति आवृत्तस्तृतीयोऽभिप्लवा'इत्यन्तेन। कुत इति नाऽस्ति वचनं इत्यर्थः। 'प्रतिलोमं शाण्डिल्यः द्वावभिप्लवावित्येकवचनादि'ति । द्वितीयतृतीययोरभिप्लवयोर्व्यवधानाभावात् द्वावभिप्लवावित्येकशेषं कृत्वा वक्तव्यम् । न च तथा कृतं ब्राह्मणे । किन्त्वभिप्लवोऽभिप्लव इति पृथगेव निर्दिष्टाः । तेन नूनं पृथग्धर्म्माः तृतीयः प्रतिलोमः यथा प्रथमं चतुर्दशरात्रे द्वयोः पृष्ठ्ययोः सह वक्तव्यात् प्रातिलोम्यादेव पृथङ्निर्देशः, तद्यथा पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भण इति तद्वदत्राऽपीति युक्तम् ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोविंशाध्यायस्य पञ्चदशः खण्डः ॥

## षोडशः खण्डः ॥

अथ द्वितीयमेकाविंशतिरात्रं ब्रह्मवर्चसफलसाधनमाह—

**अतिरात्रः पृष्ठ्यः षडहस्त्रयः स्वरसामानो दिवाकीर्त्यमहस्त्रयः स्वरसामानः पृष्ठ्यः षडहस्त्रयस्त्रिꣳशारम्भणोऽतिरात्रो ब्रह्मवर्चसकामा उपेयुः ॥ १ ॥**

ब्रह्मवर्चसं नाम तेजोविशेषः ॥ १ ॥

स च तमोहननमन्तरेण नोदेति। अतस्तद्रूपं फलं सार्थवादमस्य दर्शयितुमाह--

**स्वर्भानुर्वा आसुरः सूर्य्यं तमसाऽविध्यत्तस्मै देवाः प्रायश्चित्तिमैच्छꣳस्त एता अविन्दꣳस्ताभिरस्मात्तमोऽपाघ्नन् ॥ २ ॥**

पूर्वमासुरः असुरसम्बधी स्वर्भानुर्नामकः सूर्य्यं तमसा मायया अविध्यत् आवृतवान्। यद्वा आसुरः असुरः स्वार्थिकस्तद्धितः। तथा च मन्त्रसाधनवर्णः (?) तस्मै तमोविद्धाय सूर्य्याय देवाः प्रायश्चित्तिं तमोहननसाधनमैच्छन् विचारितवन्तः। ते तदा एता एकविंशतिरात्रीः साधनत्वेनाऽविन्दन् लब्धवन्तः। ताभिरनुष्ठिताभिरस्माद सूर्य्यात्तमोऽपाघ्नन् ॥ २ ॥

तदनुष्ठातॄणामप्येतत् फलं भवतीति दर्शयति--

**अप तमो घ्नते य एता उपयन्ति ॥ ३ ॥**

प्रतिबन्धकपापरूपं तमोऽपहत्य ब्रह्मवर्चसं तेजो लभन्त इत्यर्थः ॥३॥

अत्र राजनेरुग्रदेवस्य एतासां रात्रीणामनुष्ठानेन किलासोऽभवदिति वक्ष्यमाणत्वात्तत्परिहाराय केचित् प्रयोगविशेषाः कर्त्तव्याः। तत्र कश्चित् पशुविशेषमालभ्यं दर्शयति--

**सौमापौषं पशुमुपालभ्यमालभेरन् ॥ ४ ॥**

सोमपूषणौ तावुभौ देवते अस्य स पशुः सौमापौषः। स चोपालभ्यः सवनीयपशोः पश्चादालम्भनीयः। तं पशुमालभेरन् ॥ ४ ॥

अथ पशोरुक्तदेवतात्वं प्रशंसति—

**सोमो वै ब्राह्मणः पशवः पूषा स्वामेव तद्देवतां प- शुभिर्बंहयन्ते त्वचमेवाऽक्रत ॥ ५ ॥**

(१)'सोमोऽस्माकं ब्राह्मणानां राजा' इति श्रुतेः ब्राह्मणस्वामित्वात् स्वयमपि च ब्राह्मण एव। वैशब्दः प्रसिद्धिद्योतनार्थः । तन्त्रेणोक्त- देवतापशुकरणेन स्वामेव देवतां सोममेव पशुभिर्बंहयन्ते बहुकुर्व- न्ति। यद्वा बहेति वर्द्धनार्थः। किञ्च त्वचमेव सवृत्तिं रक्षामेव दीप्तं त्वग्धातुं वा कृतवन्तो भवन्ति। तथा च सौमापौष्णं पशुं प्रकृत्य श्रु- त्यन्तरम्—(२)'सौम्यो वै देवतया पुरुषः पौष्णाः पशवः स्वयैवाऽस्मै देवतया पशुभिस्त्वचं करोति न दुश्चर्मा भवती'ति ॥ ५ ॥

अत्र सामिधेनीषु विशेषमाह—

**मनोर्ऋचः सामिधेन्यो भवन्ति ॥ ६ ॥**

स्पष्टम् ॥ ६ ॥

मनुसम्बन्धं प्रशंसति—

**मनुर्वै यत् किञ्चाऽवदत्तद्भेषजं भेषजतायै ॥ ७ ॥**

रागद्वेषादिशोकापनोदकस्य मनोः परानुग्रहार्थं स यत् किञ्चाऽपि धर्म्मविषयं वाक्यमवदत् तद्भेषजं हितम्। अथ यस्तदीयधर्म्मः सा- मिधेनीकरणं भेषजतायै सकलदोषस्यौषधाय भवति ॥ ७ ॥

अस्य सत्रस्य कालविशेषमाह—

**नैदाघीय उपेयुः ॥ ८ ॥**

नैदाघीये निदाघसम्बन्धिनि काले ग्रीष्मर्त्तावित्यर्थः ॥ ८ ॥

तं कालं प्रशंसति—

**तद्ध्येष प्रति तेजिष्ठं तपति ॥ ९ ॥**

तत्र तस्मिन् निदाघे एषः सूर्य्यः तेजिष्ठं अत्यन्ततेजोयुक्तं खलु तपति इति ॥ ९ ॥

अस्त्वेवं ततः सत्रिणां किं स्यादित्यत आह—

**किलासत्वान्नु भयमातिभ्योऽपहन्ति ॥ १० ॥**

(सुविशेषोवास्तं पते तत् सत्रेण) किलासं सिध्म। किलासत्वात्

१. तै. सं. १. ८. १०. २. २. तै. सं. २. १. ४. ३.

दुश्चर्म्माविद्यवत्याऽधिकम्भवात् भयं भवति । अतो ग्रीष्मेऽनुष्ठाना-न्निष्पन्नादित्य एभ्यः सत्रिभ्यः सकाशादति अत्यधिकां अपहंति खलु भयम् । अतोऽयं काल उचित इत्यर्थः ॥ १० ॥

कथमस्य किलासस्साधनत्वमिति ? तत् समर्थयते--

**एता वा उग्रदेवो राजनिरुपैत् स किलासोऽभवत् ॥**

एता रात्रीः खलु राजनिः रजनस्याऽपत्यमुग्रदेव उपेत् । उपेत्य स उग्रदेवः किलासः किलासवानभवत् ॥ ११ ॥

अथोक्तार्थज्ञानपुरस्सरमेव सत्रानुष्ठानं प्रशंसति--

**अकिलासो भवति य एवं विद्वानेता उपैति ॥१२॥**

उग्रदेवस्यैकस्यैव प्रयोगः प्राप्तः । विद्वानुपैतीत्येककर्तृकत्वविधानात् । तेनाऽस्मिन् सत्रे एकोऽप्यधिकरोतीति वेदितव्यम् । यद्वा उपैतीति उभयत्र बहुवचनं कर्त्तव्यम् । अत्र कल्पः--'उत्तरस्यैकविंशतिरात्रस्य संवत्सरकल्प्तान्यहान्यनु कल्पतामीवर्त्तकाले यः पृष्ठ्यः श्वैतनौधसब्रह्मसामानः पौष्कलश्रुध्यौष्णिहो विषुवतः तस्य साम तृचस्य लोक आभीशव आयन्त इव सुर्य्यमिति विकर्णं समानमितरामिति तथा यस्मादतिरात्रात् पृष्ठ्यमुपयान्ति प्रथमस्याऽह्नोऽस्य प्रत्नानुरूप' इति साधारणः ॥१२॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे त्रयोविंशाध्यायस्य षोडशः खण्डः ॥

---

## सप्तदशः खण्डः ॥

अथाऽन्नाद्यफलसाधनं द्वाविंशतिरात्रं सत्रमाह—

**अतिरात्रो ज्योतिर्गौरायुस्त्र्यहोऽभिप्लवः षडहो द्वादशाहस्य दशाहानि महाव्रतश्चाऽतिरात्रश्चाऽन्नाद्यकामा उपेयुः ॥ १ ॥**

स्पष्टम् ॥ १ ॥

आसां रात्रीणां उक्तफलसाधनत्वं प्रदर्शयन् प्रशंसति—

**पञ्चर्त्तवो द्वादश मासास्त्रय इमे लोका असावादित्य एकविंशोऽन्नं द्वाविंशमेभ्यो लोकेभ्यः संवत्सरा-**

दमुष्मादादित्यादन्नाद्यमवरुन्धते य एता उपयन्ति ॥२॥

ऋतव आदित्यपर्यन्ता देवाः अन्नहेतवः। स्वस्थानीया एकविंशती रात्रयः द्वाविंशमहः तत् सम्बन्ध्यन्नं अन्नत एताभिरन्नाऽवरोधो युक्तः। अत्र 'यत्राऽतिरात्रादभिप्लवमुपयन्ति प्रथमस्याऽह्न एष प्रत्नानुरूपो यत्र वा त्रिकद्रुकेभ्यो यत्राऽभिप्लवो रात्रिसत्रेषु श्यैतनौधसब्रह्मसामानः पौष्कलश्रुध्यौष्णिहोऽन्यत्र संवत्सरसंमितादि'ति सामान्यकल्पो द्रष्टव्यः ॥२॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोविंशाध्यायस्य सप्तदशः खण्डः ॥

---

## अष्टादशः खण्डः ॥

अथ प्रतिष्ठासाधनं त्रयोविंशतिरात्रं सत्रमाह—

अतिरात्रो ज्योतिर्गौरायुर्गौरायुः पञ्चाहोऽभिप्लवः षडहो द्वादशाहस्य दशाहान्यतिरात्रः प्रतिष्ठाकामा उपेयुः ॥ १ ॥

स्पष्टम् ॥ १ ॥

प्रतिष्ठासाधनत्वं सप्ररोचनमाह—

एताभिर्वै प्रजापतिरेषु लोकेषु प्रत्यतिष्ठत् ॥ २ ॥

एषु भूरादिलोकेषु ॥ २ ॥

पुनस्त्रित्वद्वारैता रात्रीः प्रतिष्ठाफलस्योचिता इति प्रशंसति—

यदेतास्त्रयोविंशती रात्रयो भवन्ति त्रय इमे लोका एष्वेवैताभिर्लोकेषु प्रतितिष्ठन्ति ॥ ३ ॥

स्पष्टम् ॥ ३ ॥

रात्रीणां प्रतिष्ठितत्वादपि सत्रिणामपि प्रतिष्ठाफलं भवतीत्याह—

एता वै प्रतिष्ठितास्त्रयोविंशती रात्रयः प्रतितिष्ठन्ति य एता उपयन्ति ॥ ४ ॥

प्रजापतेः प्रतिष्ठासाधनत्वाद्वा प्रतिष्ठितलोकत्रयसमसंख्याकरात्रीणामाधिक्याद्वा एता अपि प्रतिष्ठिता इत्युच्यन्ते ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोविंशाध्यायस्याऽष्टादशः खण्डः ॥

-

## ऊनविंशः खण्डः ॥

द्वौ चतुर्विंशतिरात्रौ। तत्र स्वर्गोत्पत्तिसाधनं प्रथमं चतुर्विंशतिरात्रं सत्रमाह--

**अतिरात्रः पृष्ठ्यः स्तोमः षडहस्त्रयस्त्रिꣳशमहरनिरुक्तमुपहव्यस्य तन्त्रे क्लृप्तं तस्य कण्वरथन्तरं मध्यन्दिनेऽथ त्रयस्त्रिꣳशं निरुक्तं त्रिणवं द्वे एकविꣳशे त्रिणवं त्रयस्त्रिꣳशमहर्निरुक्तं त्रयस्त्रिꣳशमहरनिरुक्तं पृष्ठ्यः स्तोमः षडहः प्रत्यङ्त्रिवृदहरनिरुक्तं ज्योतिष्टोमोऽग्निष्टोमोऽतिरात्रः ॥ १ ॥**

पृष्ठ्यः स्तोमः षडह इति वैरूपादिपृष्ठचतुष्टयरहितो रथन्तरबृहद्भ्यामेव निर्वर्त्यः। रथन्तरपृष्ठान्यनुजानि बृहत्पृष्ठानीतराणीति व्यवस्था। स च द्वितीयः प्रत्यङिति, त्रयस्त्रिशारम्भण इत्यर्थः। प्रथमं त्रयस्त्रिशमहरनिरुक्तम्। तदुपहव्यस्य तन्त्रे क्लृप्तम्। उपहव्यो नामैकाहतन्त्रेणैव तदातिक्लृप्तम्। इयांस्ततो विशेषः--माध्यन्दिनसवने पवमाने कण्वरथन्तरं 'पुनानस्सोम धारये'त्येतासु कर्त्तव्यम्। शिष्टं स्पष्टम् ॥१॥

अस्य स्वर्गोत्पत्तिसाधनत्वं सप्ररोचनमाह--

**एताभिर्वै देवाः स्वर्गे लोके समसीदन् स्वर्गे लोके सीदामेत्येताः ॥ २ ॥**

पूर्वमेताभी रात्रिभिः स्वर्गे लोके सीदामेत्यभिसन्धायैता रात्रीरनुष्ठाय देवसंलक्षणे स्वर्गे समसीदन। अत एताः स्वर्ग्या इति शेषः। तथा च तैत्तिरीयकम्—(१) 'यथा वै मनुष्या एवं देवा अग्र आसन् तेऽकामयन्ताऽवर्त्तिं पाप्मानं मृत्युमपहत्य दैवीं संसदं गच्छामेति त एतं चतुर्विंशतिरात्रमपश्यन्नि'ति ॥ २ ॥

अथाऽऽसां स्वर्गत्वं साधयति—

**एता वाव ब्रध्नस्य विष्टपो यदेते त्रयस्तिꣳशा मध्यतः सन्धीयन्ते तेन ब्रध्नस्य विष्टपꣳरोहन्ति ॥ ३ ॥**

---

१. तै. सं. ७. ४. २. १.

एता वाव एता एव चतुर्विंशती रात्रयो ब्रध्नस्याऽऽदित्यस्य विष्टपो द्युलोक इत्यर्थः। (१) 'असौ वा आदित्यो ब्रध्न' इति हि श्रुत्यन्तरम्। एवं सति ब्रध्नस्य विष्टपस्थानीयासु रात्रिषु यद्यप्येते त्रयस्त्रिंशास्त्र यस्त्रिंशस्तोमकान्यहानि मध्यतस्सन्धीयन्ते सम्यक् प्रयुज्यन्ते । तेन साधनेन ब्रध्नस्य विष्टपमेव रोहन्ति सत्रिणः ॥ ३ ॥

अथाऽऽसां मध्ये यत् पृष्ठ्यस्तोमषडहद्वयं तत् प्रशंसति—

**मध्यतः पृष्ठान्युपयन्त्यन्नं वै पृष्ठान्यन्नमेव तन्मध्यतो धीयते तस्मान्मध्ये सदन्नं धिनोति ॥ ४ ॥**

अन्नसाधनत्वात् षट्सामात्मकानां संख्यासाम्यात् पृष्ठानां साम्येन स्तुतिः ॥ ४ ॥

अथाऽतिरात्रमग्निष्टोममुक्त्वा शिष्टा एकविंशतिरात्रीः सप्तधा विभज्य प्रशंसति—

**सप्ताहा वा एते ॥ ५ ॥**

स्पष्टम् ॥ ५ ॥

ततः किमित्यत आह—

**अतो वै प्रजाः प्रजायन्ते ॥ ६ ॥**

अतस्सप्ताहसकाशात् ॥ ६ ॥

ततश्च किमित्यत आह—

**प्र प्रजया प्र पशुभिर्जायन्ते य एता उपयन्ति ॥७॥**

स्पष्टम् ॥ ७ ॥

अथ पुनः सप्ताहरूपत्वमेव छन्दोमस्थानीयत्वेन प्रशंसति—

**अपशव्यं वा एतत् सत्रं यदच्छन्दोमं यत्सप्ताहास्तेन छन्दोमवत्यस्तेन पशव्याः ॥ ८ ॥**

'पशवश्छन्दोमा' इति श्रुतेस्तद्राहित्यादेतत्सत्रमपशव्यं खलु। तथा सति यत्सप्ताहा भवन्ति तेन छन्दोमवत्यः। अतः पशव्याः। मुख्यसप्तछन्दस्संख्यासाम्यात् छन्दोमत्वस्तुतिः ॥ ८ ॥

---

१. तै. सं. ५. ३. ३. ५.

अत्र त्रयस्त्रिंशत्रिवृतोश्च यदहरन्तरा व्यवहितमस्ति तत् प्रशंसति—

**त्रयस्त्रिंशस्त्रयस्त्रिंशमन्वेति त्रिवृत् त्रिवृतमग्रा- दग्रंरोहन्ति यत्त्रयस्त्रिंशस्त्रयस्त्रिंशमन्वेति प्राणात् प्राणेषु प्रतितिष्ठन्ति ॥ ९ ॥**

त्रयस्त्रिंशस्य त्रिवृदादिषट्कानामग्रत्वात्तयोरानन्तर्यात्सकलस्य स्वर्गादेरग्ररोहणं युक्तम् । त्रिवृच्छन्दोमस्तोत्रीयानवकात्मकत्वात् प्राणा- नां च नवकात्मकत्वात् प्राणेषु प्रतितिष्ठन्ति । प्राणेषु प्रतिष्ठा नाम चिरकालजीवनम् । त्रयस्त्रिंशयोरनुगतिः स्पष्टा ॥ ९ ॥

**यत् त्रिवृत् त्रिवृतम् ॥ १० ॥**

त्रिवृतो द्वितीयस्य पृष्ठ्यस्तोमषडहस्य प्रत्यक्त्वादन्तिमं त्रिवृद- हर्भवति । तत उत्तरमेकं त्रिवृदनिरुक्तमहः स्तुतम् । एवमतस्तयोर- नुगतिः ॥ १० ॥

अथाऽन्तिममग्निष्टोममहस्तदितरसम्पत्त्यर्थमिति प्रशंसति—

**विलोमानो वा एता रात्रयो यत् ज्योतिरग्निष्टोम उ- त्थानीयमहर्भवत्यक्लृप्तस्य क्लृप्त्यै ॥ ११ ॥**

त्रयस्त्रिंशानन्तरं त्रिणवमहस्ततः पश्चादेकविंशे द्वे इत्यादिव्युत्क्रमा- देता रात्रयो विलोमानः । अस्य स्त्रीलिङ्गेऽप्येवं रूपम् । तासां यद्यदि ज्योतिष्टोमोऽग्निष्टोम उत्थानीयः सत्रोत्थानसम्बन्ध्यहर्भवति, तदक्लृ- प्तस्य अनिर्दिष्टस्य प्रजापश्वादिव्यतिरिक्तस्य फलस्य क्लृप्त्यै सम्प- द्यते । ज्योतिष्टोमस्याऽह्नः एष प्रतानुरूपो गौरीवितमनुष्टुब्ध्यन्वहम् । अविक्लृप्तस्य सर्वसाधनत्वादिति भावः । अथ कल्पः—'अत्र संसदाम- तिरात्रः पृष्ठ्यः स्तोमः षडहः प्रथमक्लृप्तं चतुर्थमहः पञ्चमस्याऽह्न आकूपारस्य लोके त्वाष्ट्री साम यद्यनुतोदमि'त्यादिको द्रष्टव्यः ॥ ११ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ- प्रकाशे त्रयोविंशाध्यायस्यैकोनविंशः खण्डः ॥

## विंशः खण्डः ॥

अथ द्वितीयं चतुर्विंशतिरात्रं प्रजापश्वोरन्यतरकामानां सत्रमाह-

**अतिरात्रो द्वावभिप्लवौ षडहौ द्वादशाहस्य दशाहान्यतिरात्रः प्रजाकामा वा पशुकामा वोपेयुः ॥ १ ॥**

स्पष्टम् ॥ १ ॥

आद्यं षडहद्वयं प्रशंसति—

**क्लृप्ताद्वै योनेः प्रजाः पशवः प्रजायन्ते यत् क्लृप्तौ षडहावुपयन्ति क्लृप्तादेव योनेः प्रजया पशुभिः प्रजायन्ते॥२॥**

लोके खलु क्लृप्तादेवोत्पादनयोग्यादेव योनेः प्रजाः पशवश्चोत्पद्यन्ते। अस्तु तथा लोके। किं ततः? आह—यद्यदि क्लृप्तौ गवामयने सिद्धौ षडहावुपयन्ति सत्रिणः, तर्हि क्लृप्तादेव योनेः स्वयमपि प्रजाः पशुभिश्च प्रजायन्ते समृद्धा भवन्ति ॥ २ ॥

अथ दशाहं प्रशंसति—

**अथ यानि द्वादशाहस्य दशाहानि वाचमविच्छिन्नामुपयन्ति प्रजननाय ॥ ३ ॥**

गतार्थमिदम् ॥ ३ ॥

अथ सर्वा रात्रीः प्रशंसति--

**एता वै प्रतिष्ठिताश्चतुर्विंꣳशती रात्रयः प्रतितिष्ठन्ति य एता उपयन्ति ॥ ४ ॥**

प्रतिष्ठितस्य संवत्सरस्याऽवयवभूतानामर्द्धमासानां समानसंख्योपेतत्वादासामपि प्रतिष्ठितत्वमिति ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोविंशाध्यायस्य विंशः खण्डः ॥

---

## एकविंशः खण्डः ॥

अथाऽन्नाद्यफलसाधनं प्रजापतेः पञ्चविंशतिरात्रं सत्रमाह--

**एता एव समहाव्रताः ॥ १ ॥**

एता एव द्वितीयचतुर्विंशतिरात्रोक्ता एव ॥ १ ॥

आसामन्नाद्यफलसाधनत्वं सप्ररोचनमाह--

**एताभिर्वै प्रजापतिः सर्वमन्नाद्यमवारुन्ध ॥ २ ॥**

अत इदानीमप्यन्नाद्यमवरुन्धत इति ॥ २ ॥

अथाऽऽदिष्टमहाव्रतं मिलित्वाऽन्नाद्यफलसाधनमिति प्रशंसति--

**चतुर्विंꣳशतिः संवत्सरस्याऽर्द्धमासाः संवत्सरः पञ्चविंशोऽन्नं व्रतं संवत्सरादेताभिरन्नाद्यमवरुन्धते य एता उपयन्ति ॥ ३ ॥**

संवत्सरावयवभूताश्चतुर्विंशतिरर्द्धमासस्थानीयाश्चतुर्विंशतिरात्रयः । पञ्चविंशोऽवयवी संवत्सरः । तत्स्थानीयं महाव्रतमन्नम् । एवं सत्येते सत्रिणः संवत्सरादेवाऽन्नाद्यमवरुन्धते, संवत्सरे कृत्स्नान्ननिष्पत्तेः । के अवरुन्धत इति चेत्? य एता उपयन्ति ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोविंशाध्यायस्यैकविंशः खण्डः ॥

---

## द्वाविंशः खण्डः ॥

अथ षड्विंशतिरात्रं प्रतिष्ठासाधनं सत्रमाह--

**अतिरात्रो गौश्चाऽऽयुश्च द्वे अहनी द्वावभिप्लवौ षडहौ द्वादशाहस्य दशाहान्यतिरात्रः ॥ १ ॥**

स्पष्टम् ॥ १ ॥

आसां प्रतिष्ठासाधनत्वं सप्ररोचनमाह--

**ऋतवो न प्रत्यतिष्ठꣳस्त एताभिः प्रत्यतिष्ठन् प्रतिष्ठाकामा उपेयुः प्रत्येव तिष्ठन्ति ॥ २ ॥**

स्पष्टम् ॥ २ ॥

प्रतिष्ठामेव प्रयोक्तृगतसंख्यया प्रशंसति—

**षड्वा ऋतव ऋतुष्वेवैताभिः प्रतितिष्ठन्ति ॥ ३ ॥**

स्पष्टम् ॥ ३ ॥

आद्यौ द्वे अहनी प्रशंसति—

**यद्गौश्चाऽऽयुश्च द्वे अहनी भवतो मिथुनौ स्तोमावुपयन्ति प्रजात्यै ॥ ४ ॥**

गौः स्त्री आयुः पुरुष इति मिथुनौ । परस्परं प्रजात्यै प्रजननाय ॥४॥

अथ षडहौ प्रशंसति—

**यत्क्लृप्तौ षडहावुपयन्ति क्लृप्त्या एव ॥ ५ ॥**

विप्रकीर्णत्वाभावेन गवामयनं एतत्क्लृप्तौ प्रजादिक्लृप्तौ सम्पद्यते ॥ ५ ॥

अथ दशाहं प्रशंसति—

**अथ यानि द्वादशाहस्य दशाहानि वाचमविच्छिन्नामुपयन्ति प्रजननाय ॥ ६ ॥**

स्पष्टम् ॥ ६ ॥

अथ सर्वा मिलित्वा प्रशंसति—

**एता वै प्रतिष्ठिता षड्विंशती रात्रयः प्रतितिष्ठन्ति य एता उपयन्ति ॥ ७ ॥**

ऋतूनां प्रतिष्ठासाधनत्वात्तेषां च संवत्सरात्मकत्वेन प्रतिष्ठितत्वादासामपि प्रतिष्ठितत्वम् ॥ ७ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोविंशाध्यायस्य द्वाविंशः खण्डः ॥



## त्रयोविंशः खण्डः ॥

अथ सिद्धसाधनं नक्षत्राणां सप्तविंशतिरात्रमाह--

अतिरात्रो ज्योतिर्गौरायुस्त्र्यहो द्वावभिप्लवौ षडहौ द्वादशाहस्य दशाहान्यतिरात्र ऋद्धिकामा उपेयुः ॥१॥

गतार्थमेतत् ॥ १ ॥

ऋद्धिफलं प्रयोगद्वारोपपादयति--

एताभिर्वै नक्षत्राणि सर्वामृद्धिमार्ध्नुवन् सर्वामृद्धिमृध्नुवन्ति य एता उपयन्ति ॥ २ ॥

अत एता उपेयुषस्समृद्धा भवन्ति ॥ २ ॥

प्रयोक्तृसंख्यासाम्यादप्येताः प्रशस्ता इत्याह--

यदेता सप्तविंशती रात्रयो भवन्ति सप्तविꣳशतिर्नक्षत्राणि नक्षत्रसम्मिता वा एता रात्रयो नक्षत्राणामेवर्द्धिमृध्नुवन्ति ॥ ३ ॥

स्पष्टम् ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोविंशाध्यायस्य त्रयोविंशः खण्डः ॥

---

## चतुर्विंशः खण्डः ॥

अथ पशुफलसाधनमष्टाविंशतिरात्रं सत्रमाह--

एता एव समहाव्रताः पशुकामा उपेयुर्यदेता अष्टाविꣳशती रात्रयो भवन्त्यष्टाशफाः पशवः शफश एवैताभिः पशूनवरुन्धते ॥ १ ॥

सुगमम् ॥ १ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोविंशाध्यायस्य चतुर्विंशः खण्डः ॥

---

## पञ्चविंशः खण्डः ॥

अथाऽनन्तश्रीफलसाधकं प्रजापतेरेकोनत्रिंशद्रात्रं सत्रमाह--

**अतिरात्रो ज्योतिर्गौरायुर्गौरायुः पञ्चाहो द्वावभिप्लवौ षडहौ द्वादशाहस्य दशाहान्यतिरात्रः ॥ १ ॥**

स्पष्टम् ॥ १ ॥

आसां श्रीफलं सप्ररोचनमाह--

**एताभिर्वै प्रजापतिरनन्ताᳬं श्रियमजयत् ॥ २ ॥**

स्पष्टम् ॥ २ ॥

कथमनन्तश्रीफलसाधकत्वमस्येति ? तदुपपादयति--

**अनन्ता वा एता या एकयानत्रिᳬंशन्नेति वै वाचोऽनन्तम् ॥ ३ ॥**

एता रात्रयोऽनन्ता बह्वयः खलु । यद्वा अनन्ताः पञ्चाहषडहाद्याः अनन्तसङ्ख्यात्मकास्तु तथा । ततः कोऽतिशय इति ? तत्रोच्यते—एकयानत्रिंशदिति । तदेव वाचोऽनन्तं तद्भाव आनन्त्यं वा । (प्रतीतिः) ॥३॥

अस्त्वेवं सत्रिणां किमायातमिति तदुच्यते--

**यदेता एकयानत्रिᳬंशद्रात्रयो भवन्त्यनन्तामेवैताभिः श्रियं जयन्ति ॥ ४ ॥**

स्पष्टम् ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे त्रयोविंशाध्यायस्य पञ्चविंशः खण्डः ॥

---

## षड्विंशः खण्डः ॥

अथाऽन्नाद्यफलसाधनं त्रिंशद्रात्रं सत्रमाह--

**अतिरात्रस्त्रयोऽभिप्लवाः षडहा द्वादशाहस्य दशाहान्यतिरात्रोऽन्नाद्यकामा उपेयुः ॥ १ ॥**

स्पष्टम् ॥ १ ॥

अथैता अन्नाद्यसाधनानीति स्तौति--

परोक्षमन्यानि सत्राणि विराजं सम्पद्यन्ते प्रत्यक्ष-मेता विराजꣳसम्पन्नाः ॥ २ ॥

अन्यानि सत्राणि स्तोमपरिगणनादिना विराजं सम्पद्यन्ते । एत-त्सत्रगतास्तु रात्रयः प्रत्यक्षं विराजम्, त्रिंशत्संख्योपेतत्वात् । 'त्रिंशद-क्षरा विराडि'ति श्रुतेः ॥ २ ॥

अस्त्वेवं किं ततस्सत्रिणामिति ? अत आह--

प्रत्यक्षमेताभिरन्नाद्यमवरुन्धते य एता उपयन्ति॥३॥

'अन्नं विराडि'ति श्रुतेरेताभिरन्नावरोध इति ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे त्रयोविंशाध्यायस्य षड्विंशः खण्डः ॥

---

## सप्तविंशः खण्डः ॥

अथाऽन्नाद्यसाधनं प्रजापतेरेकत्रिंशद्रात्रं सत्रमाह--

एता एव समहाव्रता एताभिर्वै प्रजापतिरभिपूर्व-मन्नाद्यमवारुन्ध ॥ १ ॥

अभिपूर्वमनुक्रमेणैव ॥ १ ॥

कथमाभिरन्नाद्यस्याऽभिपूर्वमिति ? तदुपपादयति--

अन्नं विराडन्नं व्रतम् ॥ २ ॥

पूर्वोक्तत्रिंशद्रात्रस्याऽन्नसाधत्वम् । महाव्रतस्याऽन्नसाधनत्वं अस-कृदुक्तम् । अत उभयोरप्यन्नात्मकत्वादुभयानुष्ठानक्रमेणाऽन्नलाभः ॥२॥

अथाऽन्येषामपि एतदनुष्ठायिनामेतत्फलं भवतीत्याह--

अभिपूर्वमेवैताभिरन्नाद्यमवरुन्धते ॥ ३ ॥

स्पष्टम् ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे त्रयोविंशाध्यायस्य सप्तविंशः खण्डः ॥

---

## अष्टाविंशः खण्डः ॥

अथ पशुफलसाधनं द्वात्रिंशद्रात्रं सत्रमाह--

**अतिरात्रो गौश्चाऽऽयुश्च द्वे अहनी त्र्योऽभिप्लवाः षडहा द्वादशाहस्य दशाहान्यतिरात्रः पशुकामा उपेयुः ॥**

स्पष्टम् ॥ १ ॥

अथाऽस्य पशुसाधनत्वं वक्तुं तद्गतसंख्यामनुष्टुप्सम्पादनेन प्रशंसति—

**अनुष्टुब्वा एता रात्रयः ॥ २ ॥**

स्पष्टम् ॥ २ ॥

कथमिति ? तदुपपादयति--

**द्वात्रिꣳशदक्षराऽनुष्टुप् ॥ ३ ॥**

स्पष्टम् ॥ ३ ॥

अतः किमित्याह--

**वागनुष्टुप् ॥ ४ ॥**

स्पष्टम् ॥ ४ ॥

वागात्मकत्वेन पश्वात्मकत्वं दर्शयति--

**चतुष्पादाः पशवः ॥ ५ ॥**

अनुष्टुभश्चत्वारः पादाः, पशूनामपि तावन्त एव । अतस्तयोस्सम्बन्धः ॥ ५ ॥

अस्त्येवं किं तत इत्याह--

**वाचा पशून्दाधार ॥ ६ ॥**

पूर्वं प्रजापतिः वाचाऽनुष्टुबात्मना यान् पशून् दाधारेति । अनुष्टुभो वाग्रूपत्वमसकृद्दर्शितम् ॥ ६ ॥

कया वाचेति ? सोच्यते--

**एताभी रात्रीभिः ॥ ७ ॥**

रात्रीणां अनुष्टुभाश्च संख्यासाम्याद्वाचा दाधारेत्युपचर्यते ॥७॥

इदानीमपि पशूनां वाचा आगमनादिव्यवहार एतत्सम्बद्ध इत्याह—

**तस्मात्ते वाचा सिद्धा वाचाऽऽहूता आ यन्ति ॥ ८ ॥**

यस्मात् प्रजापतिः वाचा पशून् धृतवान् तस्मादिदानीमपि स्व-स्वामिवाचा सिद्धा वाङ्मात्रव्यवहारा आसन्। किञ्च वाचा एही-त्यादिरूपया वाचा आहूताः स्वामिसकाशमायान्ति। इदानीन्तनप्र-सिद्ध्या प्रजापतेर्वाचा पशुधारणं सम्मतं भवति। अत एवाऽऽभी रात्री-भिः पशुकामनोचितेत्यर्थः ॥ ८ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीर-
बुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते
माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे
त्रयोविंशाध्यायस्याऽष्टाविंशः खण्डः ॥

त्रयोविंशोऽध्यायस्समाप्तिमगमत् ॥



# अथ चतुर्विंशोऽध्यायः ॥

## प्रथमः खण्डः ॥

यस्य निश्श्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

त्रयोविंशाध्याये द्वात्रिंशद्रात्रिपर्य्यन्तानि सत्राणि निगदितानि । अथाऽस्मिंश्चतुर्विंशेऽध्याये त्रयस्त्रिंशद्रात्रमारभ्य संवत्सरपर्य्यन्तानि सत्राणि निरूप्यन्ते । तत्राऽऽदौ प्रतिष्ठाकामाय त्रयस्त्रिंशद्रात्रसंज्ञकं सत्रमाह—

अतिरात्रस्त्रयः पञ्चाहा विश्वजिदतिरात्र एकः पञ्चाहो द्वादशाहस्य दशाहान्यतिरात्रः ॥ १ ॥

स्पष्टम् ॥ १ ॥

एतस्मिन् सत्रेऽधिकारिणो दर्शयति—

प्रजापतिः प्रजा असृजत ता न प्रत्यतिष्ठꣳस्ता एताभिः प्रत्यतिष्ठन्निमे लोका न प्रत्यतिष्ठꣳस्त एताभिः प्रत्यतिष्ठन् प्रतिष्ठाकामा उपेयुः प्रत्येव तिष्ठन्ति ॥ २ ॥

प्रजापतिना सृष्टा देवमनुष्याद्याः प्रजाः पृथिव्यादिलोकाश्च न प्रत्यतिष्ठन् स्थैर्य्यं नाऽऽलभन्त । ततः प्रजापतिनाऽनुष्ठिताभिरेताभिस्त्रयस्त्रिंशद्रात्रीभिः प्रतिष्ठामलभन्त । तत्तस्मात् प्रतिष्ठाकामिनामस्मिन्नधिकारः ॥ २ ॥

अत्र पञ्चाहे बृहद्रथन्तरयोः साम्नोरन्योन्यस्थानव्यत्ययेनाऽनुष्ठानमभिप्रेत्य तत्प्रशंसति—

अरूपेण वा एताः सरूपा अरूपेण प्रजाः सरूपा अरूपेणमे लोकाः सरूपा यद्रथन्तरस्य लोकं बृहदापद्यते बृहतो रथन्तरमरूपेणैवैभ्यस्तत् सरूपं प्रजनयन्ति ॥ ३ ॥

सत्रावयवभूतास्त्रयस्त्रिंशद्रात्रयो यास्सन्ति एता अरूपेणैव सरूपास्सम्पन्नाः । इयं प्रथमा रात्रिरियं द्वितीयेत्येवं व्यत्ययं रूपमनुष्ठाना-

रूपं नाऽस्ति, पश्चात्तु सम्पत्तेः । तस्मादरूपं कारणं सरूपं कार्य्यम् । प्रजाश्च हस्तपादादिरूपरहितेन शुक्रशोणितात्मना बीजनियोजनोत्पादिता हस्तपादादिरूपोपेतास्सम्पन्नाः । पृथिव्यादिलोकाश्च रूपरहितेन परब्रह्मणोत्पादितरूपवन्तोऽभवन् । तद्वद्बृहद्रथन्तरसाम्नोरपि परस्परस्थानव्यत्यये सति स्वकीयस्थानराहित्यलक्षणं कृत्वा यद्रूपमस्ति, तत्तेनाऽरूपेणैवैभ्यः यजमानोपकारार्थं सामगानलक्षणा उद्गातारः प्रजनयन्ति ॥ ३ ॥

अत्र पञ्चाहप्रयुक्तं कञ्चिद्दोषमाशङ्क्य परिहरति—

**लुप्यते वा एतत् षष्ठमहर्यत् पञ्चाहानुपयन्ति नर्त्तवः कल्पन्ते यत् पृष्ठ्यः षडहस्तेन षष्ठमहर्न लुप्यते तेनर्त्तवः कल्पन्ते ॥ ४ ॥**

पञ्चाहानुपयन्त्यनुतिष्ठन्तीति यदस्ति एतदेतेनाऽनुष्ठानेन षष्ठस्याऽह्नो लोपे सति षट्संख्याका ऋतवो न कल्पन्ते । स्वस्वकालोचितफलदानसमर्था न भवन्ति, सोऽयं दोषः । द्वादशाहमध्ये पृष्ठ्यषडहानुष्ठानादुक्तदोषपरिहारो द्रष्टव्यः ॥ ४ ॥

षडहानुष्ठाने पञ्चाहानुष्ठानं विच्छिद्येतेत्याशङ्क्य दशाहस्य पञ्चाहद्वाररूपत्वान्न विच्छेद इत्यभिप्रायेणाऽऽह—

**अथ यानि द्वादशाहस्य दशाहानि तेन पञ्चाहेभ्यो न यन्ति ॥ ५ ॥**

अहर्लोपदोषसमाधानानन्तरं पञ्चाहविच्छेददोषसमाधानं द्रष्टव्यमिति शेषः । कथमिति चेत्? तदुच्यते—द्वादशाहस्य यानि दशाहानि विद्यन्ते, तेषां द्वेधा विभागे सति द्वौ पञ्चाहौ सम्पद्येते । तेन पञ्चाहद्वयसम्पन्नेनैव सत्रानुष्ठायिनः पञ्चाहेभ्यो न यन्ति नाऽपगच्छन्ति ॥ ५ ॥

अथाऽस्य यः त्रयस्त्रिंशद्रात्रसत्रस्य मध्ये योज्यो विश्वजिदतिरात्रस्तमेव प्रशंसितुं दृष्टान्तत्वविवक्षया लोकत्रये किञ्चिद्रूपकं परिकल्प्योपन्यसति—

**ऊधर्वा अन्तरिक्षं स्तनावभितोऽनेन वा एष देवेभ्यो दुग्धेऽमुना प्रजाभ्यः ॥ ६ ॥**

द्यावापृथिव्योर्मध्ये यदिदमन्तरिक्षमस्ति, तदिदं ब्रह्माण्डरूपाया

अजाया ऊधर्वै अजाधेनुमहिषादीनां प्रभूतक्षीरदेशः ऊधरित्युच्यते। अजासम्बन्धिन ऊधसः पार्श्वयोर्द्वौ स्तनौ भवतः। एवं ब्रह्माण्डरूपस्याऽजाशरीरस्याऽन्तरिक्षमूधस्थानीयम् , प्रभूतवर्षोपसंग्रहस्थानत्वात्। तस्य चाऽन्तरिक्षस्य ऊधसः तदुपरि अधस्ताच्च द्यावापृथिव्याख्यौ द्वौ स्तनौ भवतः। तयोर्मध्ये अनेन वै द्यावापृथिवीरूपेणैव स्तनेन देवेभ्य इन्द्रादिदेवार्थमेष जगदीश्वरो दुग्धे यागसम्बन्धिहविर्लक्षणं क्षीरं सम्पादयति। अमुना द्युलोकरूपेण स्तनेन प्रजाभ्यो मनुष्यपश्वाद्यर्थं दुग्धे वृष्ट्युदकरूपं सम्पादयति॥ ६॥

नन्वन्तरिक्षस्य कथमूधस्त्वं, कथं वा द्यावापृथिव्योस्तनद्वयरूपत्वम्? इत्याशङ्क्याऽऽह—

**इदं वा अन्तरिक्षं वियदिमौ स्तनावभितः॥ ७॥**

इदं वै दृश्यमानमेवाऽन्तरिक्षं वियत् व्यगमयत् द्यावापृथिव्यौ स्तनसंश्लेषवद्वर्त्तेते। तस्मादस्योधस्त्वात् देवमनुष्यापेक्षितस्य हविर्वृष्टिरूपस्य क्षीरद्वयस्य श्रवणादन्तरिक्षस्याऽभितो वर्त्तमानयोः द्यावापृथिव्योस्स्तनत्वं स्यात्॥ ७॥

यदेतत् द्यावापृथिव्योः स्तनद्वयत्वमुक्तं ब्राह्मणवाक्येन तस्य दार्ढ्यार्थं विसंवादिनीं काञ्चिदृचमीरयति—

**तदभ्यनूक्ता॥ ८॥**

तदुभे द्यावापृथिव्यौ देवमनुष्यतृप्तिहेतुत्वलक्षणं स्तनत्वं यदस्ति तदभिलक्ष्य उक्ता अनुकूला काचिदृक् समाम्नाता॥ ८॥

तामेतामृचं पृच्छति—

**त्रिंशति त्रयः परो ये देवा बर्हिरासतव्यं न ह द्विता तनेति॥ ९॥**

हविर्भुजो ये देवा बर्हिरासतव्यं सत्ररूपं यज्ञमवस्थिताः ते देवास्त्रिंशति त्रिंशत्संख्याकाः। तथा त्रयः परः अपरेऽपि त्रिसंख्याकाः। एते त्रयस्त्रिंशत्संख्याकाः देवा लोकत्रये विभज्य वर्त्तन्ते। एतच्च(१) 'ये देवा दिव्येकादशस्थे'त्यादिमन्त्रे स्पष्टमाम्नाताः। तनशब्दो धननामसु पठितः। द्वितेतिशब्दः द्वैविध्यमाचष्टे। हशब्द एवकारार्थः। व्यतिश-

१. तै. सं. १. ४. १०.

ऽदो धीगतिप्रजननकान्त्यशनखादनेष्विति धातोरुत्पन्नः अत्र प्रजननार्थमाचष्टे । तस्य वाक्यस्याऽयमर्थः—त्रयस्त्रिंशत्संख्याका देवा हविर्बुभिलक्षणं धनं लोकद्वयवर्त्तिनं द्विधा कृत्वा प्रजनयन्ति । इतिशब्दः समाप्त्यर्थः । इत्यन्ता मन्त्राः अन्तरिक्षस्यौधस्त्वं द्यावापृथिव्योः स्तनद्वयत्वं च सम्पादयन्ति ॥ ९ ॥

तद्दृष्टान्तेन प्रकृतक्रतावपि तत्सर्वं सम्पादयति—

**ऊधर्वै मध्यमोऽतिरात्रः स्तनावभितः ॥ १० ॥**

अस्मिन् क्रतावाद्यन्तयोरतिरात्रयोर्मध्यवर्त्ती योऽयं विश्वजिदतिरात्रः, सोऽयं ऊधर्वै क्रतुफलाख्यस्य बहुक्षीरस्य धारणस्थानमूधः । तस्य विश्वजिदतिरात्रस्याऽभितः पुरस्तात्पश्चाच्च यौ पश्चाहौ विद्येते तौ स्तनस्थानीयौ क्रतुफलदोहनहेतुत्वात् ॥ १० ॥

उक्तस्य विश्वजिदतिरात्रस्याऽभावे बाधमाह—

**यदेषोऽनतिरात्रः स्यादूधः प्रतिहरेत् ॥ ११ ॥**

यद्येष त्रयस्त्रिंशद्रात्ररूपः । क्रतुरनतिरात्रो विश्वजिदतिरात्ररहितः स्यात्, तदानीमेतस्याः सत्ररूपायाः कामधेनोरूधस्थानीयं फलदानसामर्थ्यं प्रतिहरेत् ॥ ११ ॥

अन्वयव्यतिरेकाभ्यां विश्वजिदतिरात्रं प्रोच्य कर्त्तव्यमुपसंहरति—

**तस्मादतिरात्रः कार्य्य ऊधसोऽप्रतिहाराय ॥१२॥**

यस्मात् कारणादयं विश्वजिदतिरात्रः ऊधस्थानीयः तदभावे फल सामर्थ्याख्यमूधो विनश्यति, तस्मात् कारणाद्विश्वजिदतिरात्रः ऊधसोऽविनाशायाऽनुष्ठेयः ॥ १२ ॥

अस्य क्रतोः समृद्धिहेतुत्वं दर्शयति—

**त्रयस्त्रिꣳशद्देवता एताभिराध्नुवꣳस्तेनर्द्धिस्तस्मादेताभिर्यजन्त ऋध्या एव ॥ १३ ॥**

याः त्रयस्त्रिंशत्संख्याका देवता हविर्भुजस्सन्ति, ताः सर्वा एताभिः सत्रगताभिस्त्रयस्त्रिंशद्रात्रिभिराध्नुवन् समृद्धिं प्राप्ताः । तेनेदं सत्रं ऋद्धिसंज्ञकं भवति । यस्माद्देवता आध्नुवन् तस्मादन्योऽपि एताभिर्यथोक्ताभिस्त्रयस्त्रिंशद्रात्रिभिर्यजन्ते ॥ १३ ॥

एतत्खण्डगतासु त्रयस्त्रिंशद्रात्रिषु ब्रह्मसाम्नां नानाविधत्वं प्रशंसति—

**नाना ब्रह्मसामान्युपयन्त्यहां नाना वीर्यतायै नानैव वीर्याण्यवरुन्धते ॥ १४ ॥**

अस्मिन् क्रतौ बहवः पञ्चाहास्सन्ति। तेषु ब्रह्मसामानि नाना परस्परविलक्षणानि उपयन्त्यनुतिष्ठेयुः। तद्यथा—प्रथमं पञ्चसु दिनेषु क्रमेण बृहद्रथन्तरं नौधसं श्यैतं महावैष्टम्भमित्येतानि ब्रह्मसामानि। द्वितीयपञ्चाहस्य प्रथमतो बृहत् पश्चाद्रथन्तरं ततो मानवं छन्दस्यं वासिष्ठमिति ब्रह्मसामानि। यद्यपि द्वितीयतृतीययोर्मानवमस्ति, तथाऽपि द्वितीये(१) 'त्वामिदाह्यो नर' इत्यस्यामृचि मानवम्। तृतीये तु(२) 'शग्ध्यूषु शचीपत' इत्यस्यामृचीति शेषः। तदेवं ब्रह्मसाम्नां नानाविधत्वमह्नां नानाविधवीर्यतायै सम्पद्यते। ततो यजमानाश्चाऽपि नानाविधान्येव वीर्याणि प्राप्नुवन्ति ॥ १४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे चतुर्विंशाध्यायस्य प्रथमः खण्डः ॥

---

## द्वितीयः खण्डः ॥

अथाऽपरं त्रयस्त्रिंशद्रात्रमृद्धिकामानां सत्रमाह—

**अतिरात्रोऽभिप्लवः षडहोऽतिरात्रोऽभिप्लवः षडहोऽतिरात्रोऽभिप्लवः षडहो द्वादशाहस्य दशाहानि महाव्रतञ्चाऽतिरात्रश्च ॥ १ ॥**

स्पष्टम् ॥ १ ॥

---

१. त्वामिदाह्यो नरोऽपीप्यन्वज्रिन्भूर्णयः।
स इन्द्र स्तोमवाहस इह श्रुध्युप स्वसरमा गहि ॥
सा. सं. उ. २. १. १४. १.

२. शग्ध्यूषु शचीपत इन्द्र विश्वाभिरूतिभिः।
भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि ॥
सा. सं. उ. ७. ३. ३. १.

तमेतं त्रयस्त्रिंशद्रात्रक्रतुं द्वेधा विभज्य तत्र द्वयरूपत्वं सम्पाद्य तेन सत्रद्वयेन समानं फलं दर्शयति—

**आदित्याश्चाऽङ्गिरसश्चैतत् सत्रꣳसमदधताऽऽदित्या-नामेकविꣳशतिरङ्गिरसां द्वादशाह आदित्या अस्मिँल्लोक ऋद्धा आदित्या अमुष्मिन्नङ्गिरसोऽस्मिन्नङ्गिरसोऽमुष्मि-न् द्वयꣳ सत्रं यावद्द्वयेन सत्रेणर्ध्नुवन्ति तावत्येतासा-मृद्धिः ॥ २ ॥**

यदिमे आदित्यास्सन्ति, ये चाऽन्येऽङ्गिरसस्सन्ति, तदुभयेऽपि मिलि-त्वा एतत् सत्रमन्वतिष्ठन्। अस्मिन् सत्रे त्रिभिरतिरात्रैरुपेतास्त्रयोऽभि-प्लवाः षडहाः । मिलित्वा एकविंशतिरात्रं सत्रं सम्पद्यते । स आदि-त्यानां भागः । अवशिष्टं द्वादशाहरूपं सत्रं सोऽयमङ्गिरसां भागः । तत्राऽऽदित्याः स्वकीयेन भागेन लोकद्वयसमृद्धिं प्राप्ताः । अङ्गिरसोऽपि स्वभागेन लोकद्वयसमृद्धिं प्राप्नुवन् । तदेतदादित्यानामङ्गिरसाञ्च द्वि-विधं सत्रं यावद्भवति तावच्च कृतसत्रगतानामेतासां त्रयस्त्रिंशद्रा-त्रीणां समृद्धिद्वयम् । सत्रमित्यस्य ऋद्धिरिति व्याख्यानम् । एकविंश-तिरात्रद्वादशाहरूपेण द्विविधेन सत्रेणाऽऽदित्या अङ्गिरसश्च समृद्धिं यथा प्राप्नुवन्ति तथैव त्रयस्त्रिंशद्रात्रेण लोकद्वये द्विगुणां समृद्धिं प्राप्नु-वन्ति ॥ २ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे चतुर्विंशाध्यायस्य द्वितीयः खण्डः ॥

---

## तृतीयः खण्डः ॥

अथ तृतीयं त्रयस्त्रिंशद्रात्रं सर्वकामसाधनमाह—

**अतिरात्रस्त्रयः पञ्चाहा विश्वजिदतिरात्रस्त्रयः प-ञ्चाहा अतिरात्रः ॥ १ ॥**

स्पष्टम् ॥ १ ॥

अस्मिन् सत्रे कञ्चिद्दोषमुद्भाव्य परिहरति—

**अपशव्यं वा एतत् सत्रं यदच्छन्दोमं यद्विश्वजिति छन्दोमानुपयन्ति तेन छन्दोमवत्यस्तेन पशव्याः ॥ २ ॥**

चतुर्विंशचतुश्चत्वारिंशाष्टाचत्वारिंशनामकाः स्तोमाः गायत्रीत्रिष्टुब्जगतीछन्दोभिरक्षरसंख्याभिर्मीयमानत्वाच्छन्दोमा इत्युच्यन्ते। ते च पशुप्राप्तिहेतुत्वात् पशव्याः। तैः छन्दोमैर्विरहितत्वादेतत्सत्रं अपशव्यं पशुप्राप्तिसाधनं न भवतीति दोषोद्भावनम्। अनुष्ठातारोऽत्र विश्वजिदतिरात्रे छन्दोमाननुतिष्ठन्ति। तेनैतत्सत्रगता रात्रयः छन्दोमवत्यो भवन्ति। तेन कारणेन पशुप्राप्तिहेतवश्च भवन्ति। यद्यप्यस्मिन् विश्वजिदतिरात्रे साक्षात् छन्दोमा न सन्ति तथाऽप्युपायेन छन्दोमास्सम्पादयितुं शक्यन्ते। कथमिति चेत्? तदुच्यते—त्रिवृत्पञ्चदशयोः स्तोमश्चतुर्विंशः सम्पद्यते। सप्तदशत्रिणवयोश्चतुश्चत्वारिंशः। पञ्चदशत्रयस्त्रिंशयोरष्टाचत्वारिंश इति सम्पादनम् ॥ २ ॥

उक्तस्य सत्रस्य पक्षिरूपत्वसम्पादनेन सर्वकामप्राप्तिहेतुत्वं दर्शयति—

**पक्षिण्यो वा एता रात्रयो यं कामं कामयन्ते तमेताभिरभ्यश्नुवते यत्र यत्र हि पक्षी कामयते तत्तदभ्यश्नुते ॥ ३ ॥**

अस्य सत्रस्य मध्ये विश्वजिदतिरात्रः पक्षिदेहं वर्द्धयते। तस्याऽभितो द्वौ पञ्चाहौ पक्षाविव स्थितौ। तस्मात् पक्षिसम्बन्धात् सत्रगता रात्रयः पक्षिण्य एव भवन्ति। तथा सत्येतत्सत्रानुष्ठायिनो यं कामं कामयन्ते तं काममेताभिः पक्षसमानरात्रीभिः सर्वतः प्राप्नुवन्ति। लोकेऽपि हि पक्षी यत्र यत्र कामयते तत्तत् स्थानमभितः प्राप्नोति। तद्वदत्राऽपि कामप्राप्तिरित्यर्थः ॥ ३ ॥

अत्र विश्वजिदतिरात्रात् पूर्वेषूत्तरेषु च या त्रित्वसंख्याऽस्ति तां प्रशंसति—

**त्रिवृता प्रयन्ति त्रिवृतोद्यन्ति प्राणा वै त्रिवृत् स्तोमानां प्राणैरेव प्रयन्ति प्राणेषु प्रतितिष्ठन्ति ॥ ४ ॥**

नाऽत्र त्रिवृच्छब्दः स्तोमवाची। किन्तु अहर्गतत्रिसंख्यामुपलक्षयति। तथा च निदाने—'(१)यत् त्रिवृता प्रयन्ति त्रिवृतोद्यन्तीति त्रयः पञ्चाहाः पुरस्तात् त्रय उपरिष्टादि'ति। त्रिसंख्यायोगात् त्रिवृदित्युक्तं भवतीत्यर्थः। त्रिवृत्त्वात् पूर्वभाविपञ्चाहगतया त्रिसंख्यया प्रयन्ति

१. नि. सू. १०. १.

प्रारभन्ते, त्रिवृत्त्वात्पञ्चाह्नाविपञ्चाहगतया त्रिसंख्यया योगादुद्यन्ति समापयन्ति । तस्मादिदं सत्रं प्रशस्तम् ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे चतुर्विंशाध्यायस्य तृतीयः खण्डः ॥

## चतुर्थः खण्डः ॥

अथ चतुस्त्रिंशद्रात्रमृद्धिकामानां सत्रमाह—

**अतिरात्रो ज्योतिर्गौरायुस्त्र्यहस्त्रयोऽभिप्लवाः षडहा द्वादशाहस्य दशाहानि महाव्रतञ्चाऽतिरात्रश्चर्द्धिकामा उपेयुः ॥ १ ॥**

ज्योतिर्गौरायुरिति तेषां त्रयाणामह्नां समाहार एवाऽत्र त्र्यहो द्रष्टव्यः ॥ १ ॥

अस्य सत्रस्य समृद्धिफलं कथम् ? तद्विशदयति—

**एताभिर्वै प्रजापतिः सर्वामृद्धिमार्ध्नोत्सर्वामृद्धिमृध्नुवन्ति य एता उपयन्ति ॥ २ ॥**

एताभिः सत्रगताभी रात्रिभिः । स्पष्टमन्यत् ॥ २ ॥

रात्रिगताश्चतुस्त्रिंशत्संख्यां प्रशंसति—

**यदेताश्चतुस्त्रिꣳशद्रात्रयो भवन्ति त्रयस्त्रिꣳशद्देवताः प्रजापतिश्चतुस्त्रिꣳशो देवतानां प्रजापतेरेवर्द्धिमृध्नुवन्ति ॥ ३ ॥**

यदेताः या एताश्चतुस्त्रिंशत्संख्याका रात्रयो भवन्ति, तासु विद्यमाना संख्या हविर्भुजो यत्त्रयस्त्रिंशद्देवताः तासु तदुत्पादके प्रजापतौ च विद्यते । अतस्संख्यासाम्याद्देवतानां प्रजापतेश्च सम्बन्धिनी येयमृद्धिरस्ति तां सर्वामृद्धिमृध्नुवन्ति प्राप्नुवन्ति ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे चतुर्विंशाध्यायस्य चतुर्थः खण्डः ॥

## पञ्चमः खण्डः ॥

अथ पञ्चत्रिंशद्रात्रं पशुकामानां सत्रमाह—

**अतिरात्रो ज्योतिर्गौरायुः पञ्चाहस्त्रयोऽभिप्लवाः षडहा द्वादशाहस्य दशाहान्यतिरात्रः पशुकामा उपेयुः ॥**

ज्योतिर्गौरायुरिति त्रीण्यहानि, गौरायुरिति द्वे अहनी। तत्समाहाररूपः पञ्चाहोऽवगन्तव्यः। स्पष्टमन्यत् ॥ १ ॥

रात्रिगतां पञ्चत्रिंशत्संख्यां प्रशंसति—

**यदेताः पञ्चत्रिंशद्रात्रयो भवन्ति पाङ्क्ताः पशवः पशूनेवैताभिरवरुन्धते॥ २ ॥**

पाङ्क्ताः पञ्चत्रिंशत्संख्याका रात्रयस्सन्ति। तास्वन्तर्भूताः पञ्च संख्या विद्यन्ते। पशवश्चतुर्भिः पादैः शिरसा च पञ्चभिरवयवैरुपेतत्वात् पाङ्क्ता इत्युच्यन्ते। तस्मात् पञ्चसंख्याद्वारकसम्बन्धसम्भवादेताभी रात्राभिर्यजमानाः पशूनवरुन्धत एव प्राप्नुवन्त्येव ॥ २ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे चतुर्विंशाध्यायस्य पञ्चमः खण्डः ॥

---

## षष्ठः खण्डः ॥

अथ षट्त्रिंशद्रात्रं पशुकामानां सत्रमाह—

**अतिरात्रश्चत्वारोऽभिप्लवाः षडहा द्वादशाहस्य दशाहान्यतिरात्रः पशुकामा उपेयुः ॥ १ ॥**

स्पष्टोऽर्थः ॥ १ ॥

फलान्तरमाह—

**एताभिर्वै देवा आदित्यमस्तभ्नुवन्नादित्यलोकं जयन्ति य एता उपयन्ति ॥ २ ॥**

पुरा देवा एतत्सत्रमनुष्ठाय एताभिः षट्त्रिंशद्रात्रीभिः आदित्य-

मस्तम्भुवन् आदित्य आकाशगामी सन् भूमौ यथा न पतति तथाऽऽस्तामिति समस्तम्भयन् । तस्मादेताभी रात्रीभिरनुष्ठातारो यजमाना आदित्यलोकं प्राप्नुवन्ति ॥ २ ॥

स्वाराज्यलक्षणं फलान्तरमाह—

**बृहती वा एता रात्रयः स्वाराज्यं छन्दसां बृहती यो वै पशूनां भूमानं गच्छति स स्वाराज्यं गच्छति प्र स्वाराज्यमाप्नुवन्ति य एता उपयन्ति ॥ ३ ॥**

एतत्सत्रगतासु रात्रीषु षट्त्रिंशत्संख्या विद्यन्ते । तथा च (१)तैत्तिरीयकाः इष्टकाचयनब्राह्मणे बृहत्या विजयं स्वाराज्यप्राप्तिं च समामनन्ति । अस्मिन्नपि सामब्राह्मणे प्रश्नोत्तराभ्यां बृहत्याः श्रेष्ठत्वं पुरस्तादाम्नातम् । (२)'यश्चित्याहुरन्यानि छन्दांसि वर्षीयांसि कस्माद्बृहत्युच्यत' इति प्रश्नः । 'एषा हीमान् लोकान् व्याप्नोन्नाऽन्यच्छन्दः किञ्चने'त्युत्तरम् । एवं सति रात्रीणां बृहतीसाम्यात् स्वाराज्यप्राप्तिहेतुत्वं सम्भाव्यते । किञ्च लोके यो वै यः कोऽपि पुमान् पशूनां भूमानं लक्षकोटिसंख्यारूपं बाहुल्यं गच्छति स पुमानन्येषामधिपतिस्सन् स्वाराज्यं प्राप्नोति । तद्वदेतासां रात्रीणमनुष्ठातारोऽपि बहुपशुलाभेन स्वाराज्यं प्राप्नुवन्ति ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे चतुर्विंशाध्यायस्य षष्ठः खण्डः ॥

## सप्तमः खण्डः ॥

अथ सप्तत्रिंशद्रात्रमन्नपशुरूपफलद्वयकामानां सत्रमाह—

**एता एव समहाव्रताः ॥ १ ॥**

याः षट्त्रिंशद्रात्रयः पूर्वखण्डेऽभिहिताः एता एव महाव्रतेनाऽह्ना सहिताः सप्तत्रिंशद्रात्रयो भवन्ति ॥ १ ॥

१. तै. सं. ५. ३. १. द्रष्टव्यम् । २. तां. ब्रा. ६. ४. ५.

एतासां रात्रीणां फलं दर्शयति—

एताभिर्वै प्रजापतिरुभौ कामाववारुन्धाऽन्नं व्रतं पशवो बृहत्युभावेवैताभिः कामाववरुन्धते ॥ २ ॥

व्रतं महाव्रताख्यमहः। अन्नं बृहती पशुसाधनत्वात्। एतावुभौ अन्नपशुरूपौ कामौ प्रजापतिरेताभिरेव सप्तत्रिंशद्रात्रिभिरेवाऽवारुन्ध प्राप्नोत्। तस्मादन्येऽपि यजमाना उभौ कामौ प्राप्नुवन्ति ॥ २ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-
प्रकाशे चतुर्विंशाध्यायस्य सप्तमः खण्डः ॥



## अष्टमः खण्डः ॥

अथाऽष्टात्रिंशद्रात्रं पशुकामानां सत्रमाह—

अतिरात्रो गौश्चाऽऽयुश्च द्वे अहनी चत्वारोऽभिप्लवाः षडहा द्वादशाहस्य दशाहान्यतिरात्रः पशुकामा उपेयुः ॥

स्पष्टोऽर्थः ॥ १ ॥

एतासां रात्रीणां पशुसाधनत्वं विशदयति—

यदेता अष्टात्रिंꣳशद्रात्रयो भवन्त्यष्टाशफाः पशवः शफश एवैताभिः पशूनवरुन्धते ॥ २ ॥

या एता अष्टात्रिंशद्रात्रयस्सन्ति, तास्वष्ट संख्या विद्यन्ते। गोमहिषादिपशवश्चाऽष्टसंख्याशफोपेताः। अतः शफश एव संख्यासाम्योपेतशफद्वारेणैव एताभिरष्टात्रिंशद्रात्रिभिर्यजमानाः पशून् प्राप्नुवन्ति ॥ २ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ
प्रकाशे चतुर्विंशाध्यायस्याऽष्टमः खण्डः ॥



## नवमः खण्डः ॥

एकोनचत्वारिंशद्रात्रं अनन्तश्रीजयकामानां सत्रमाह—

**अतिरात्रो ज्योतिर्गौरायुस्त्र्यहश्चत्वारोऽभिप्लवाः षडहा द्वादशाहस्य दशाहान्यतिरात्रः ॥ १ ॥**

स्पष्टोऽर्थः ॥ १ ॥

अत्राऽऽदावनन्तश्रीजयरूपं फलं वक्तुं तत्सद्भावमाह—

**एताभिर्वै प्रजापतिरनन्ताꣳ श्रियमजयदनन्ता वा एता या एकयानचत्वारिꣳशन्नेति वै वाचोऽनन्तम्॥२॥**

या रात्रय एकया रात्र्या अस्मिन् क्रतावविद्यमानया चत्वारिंशच्च भवन्ति एता एकोनचत्वारिंशद्रात्रयोऽनन्ता एव। कथमिति चेत्? तदुच्यते—नेति वै निषेधवाचकम्। नेत्येतत्पदमेव वाचोऽनन्तं वाचस्सम्बन्धिषु पदेषु अन्तराहितार्थवाचकम्। तथा हि याचकैर्द्धने याच्यमाने बहवः पुरुषा लोभयुक्तास्सन्तो नेति चोच्चार्य्य परिहरन्ति। स चाऽनन्तार्थवाचको नेत्यसौ शब्दः एकयानचत्वारिंशदित्यत्र विद्यते। तस्मादेताभी रात्रिभिः प्रजापतेरनन्तश्रीजयः सम्भाव्यते ॥ २ ॥

सम्भावितं तत्फलं यजमानानां दर्शयति—

**यदेता एकयानचत्वारिꣳशद्रात्रयो भवन्त्यनन्तामेवैताभिः श्रियं जयन्ति ॥ ३ ॥**

स्पष्टोऽर्थः ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे चतुर्विंशाध्यायस्य नवमः खण्डः ॥

---

## दशमः खण्डः ॥

अथ चत्वारिंशद्रात्रं परमराज्यप्रतिष्ठाकामानां सत्रमाह—

**एता एव समहाव्रताः ॥ १ ॥**

एताः पूर्वखण्डोक्ता एवैकोनचत्वारिंशद्रात्रयो महाव्रतेन सहाऽनुष्ठेयाः ॥ १ ॥

अस्य क्रतोः फलं वक्तुमत्र स्थितानां रात्रीणां विराड्रूपत्वमाह—

**सर्वा वा एता विराजो दशिनी प्रथमा विꣳशिनी द्वितीया त्रिꣳशिनी तृतीयैषा वै परमा विराड् यच्चत्वारिꣳशद्रात्रयः पङ्क्तिर्वै परमा विराट् ॥ २ ॥**

अस्मिन् क्रतौ या रात्रयस्सन्ति तास्सर्वाः विराज एव । कथमिति चेत्? तदुच्यते—दशानां रात्रीणां समावेशिनी प्रथमा विराड् भवति । 'दशाक्षरा विराडि'ति श्रूयमाणाया दशसंख्यायास्तत्र विद्यमानत्वात् । विंशतिसंख्याकानां रात्रीणां समष्टिर्विंशिनी । सा द्वितीया विराट्, द्विगुणीकृताया दशसंख्यायास्तत्र विद्यमानत्वात् । त्रिंशत्संख्याकानां रात्रीणां समष्टिस्त्रिंशिनी, त्रिगुणाया दशसंख्यायास्तत्र सद्भावात् । चत्वारिंशद्रात्रीणां समष्टिरेषैवाऽत्र विद्यमानानां विराजां मध्ये परमोत्तमा विराट् । चतुर्गुणायाः दशसंख्यायास्तत्र सद्भावात् । किञ्चेयं परमा विराट् पङ्क्तिर्वै ( पिपीलिकापङ्क्ति च इन्द्रायामानोनुष्ठीयमानत्वात् ) ॥ २ ॥

तादृशीं परमां विराजमनुतिष्ठतां यजमानानां वैराजप्रतिष्ठारूपं फलमाह—

**परमायामेव विराजि प्रतितिष्ठन्ति ॥ ३ ॥**

'अन्नं विराडि'ति श्रुतेः अन्नं विराट्शब्देन विवक्षितम् । अन्नेन सम्पृक्तेन प्रतितिष्ठन्तीत्यर्थः । यद्वा परमायां विराजि उत्तमे विशिष्टराज्ये प्रतिष्ठिता भवन्ति ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे चतुर्विंशाध्यायस्य दशमः खण्डः ॥

---

## एकादशः खण्डः ॥

अथ विधृतिसंज्ञकानामेकोनपञ्चाशद्रात्रीणां सत्तानां मध्ये प्रथमं सत्रं पाप्मव्यावृत्तिफलायाऽऽह—

**अतिरात्रस्त्रीणि त्रिवृन्त्यहान्यग्निष्टोममुखान्यतिरात्रो दश पञ्चदशा उक्थ्याः षोडशिमद्दशममहरति-**

**रात्रो द्वादश सप्तदशा उक्थ्या अतिरात्रः पृष्ठ्यः षडहोऽतिरात्रो द्वादशैकविंशा उक्थ्या अतिरात्रः ॥ १ ॥**

अत्र प्रथमं पञ्चमं षोडशं एकोनत्रिंशत् षट्त्रिंशमेकोनपञ्चाशदेतानि षट्संख्याकान्यतिरात्ररूपाणि । तेषु प्रथमपञ्चमयोर्मध्ये त्रिवृत्स्तोमेन युक्तानि त्रीण्यहानि, तानि चाऽग्निष्टोममुखानि । अग्निष्टोममुखं अग्निष्टोमरूपं प्रथममहः, उक्थ्यरूपे द्वे अहनी इत्यर्थः। पञ्चमषोडशयोर्मध्ये पञ्चदशस्तोमयुक्ता उक्थ्याः दशसंख्याकाः प्रयोक्तव्याः । तेषु यद्दशममहरस्ति, तत् षोडशिस्तोत्रयुक्तं कर्त्तव्यम् । षोडशैकोनत्रिंशयोर्मध्ये सप्तदशस्तोमयुक्ता उक्थ्या द्वादशसंख्याका अनुष्ठेयाः । एकोनत्रिंशषट्त्रिंशयोर्मध्ये पृष्ठ्यः षडहोऽनुष्ठेयः । षट्त्रिंशैकोनपञ्चाशयोर्मध्ये एकविंशस्तोमयुक्ता उक्थ्या द्वादशसंख्याकाः कर्त्तव्याः । तदेतदेकोनपञ्चाशद्रात्रं सत्रं भवति ॥ १ ॥

अत्र पापव्यावृत्तिरूपं फलं विवक्षुस्तत्सम्भावयितुमर्थवादमाह—

**प्रजापतिः प्रजा असृजत ता अविधृता असञ्ज्ञाना अन्योन्यामादंश्स्तेन प्रजापतिरशोचत्स एता अपश्यत्ततो वा इदं व्यावर्त्तत गावोऽभवन्नश्वा अश्वाः पुरुषाः पुरुषा मृगा मृगाः ॥ १ ॥**

प्रजापतिना सृष्टा गवाश्वमनुष्यादयः प्रजा अविधृताः अनियमिताः प्रजापतिना नियन्तुमशक्या असञ्ज्ञाना ऐकमत्यरहिता अन्योन्यामादन् परस्परविरोधात् प्रबला दुर्बलानां भक्षणमकुर्वन् । तेन नियन्तुमशक्यत्वेन प्रजापतिरशोचत् खिन्नोऽभूत् । स खिन्नः प्रजापतिस्तद्व्यावृत्त्युपायं पर्य्यालोच्य एता उक्ता एकोनपञ्चाशद्रात्रीस्तदुपायत्वेन दृष्ट्वाऽनुष्ठितवान् । ततोऽनन्तरमेतदनुष्ठानादनु इदमन्योन्यभक्षणं व्यावर्त्तत व्यावृत्तमुपरतमासीत् । तदनन्तरं गावः परद्रोहरहिता गावोऽभवन् , इतरभक्षणरूपस्याऽभावात् स्वकीयेन गोरूपेणैव व्यवस्थिताः । एवमश्वपुरुषमृगेषु योज्यम् ॥ २ ॥

इदानीं यजमानानां पापव्यावृत्तिरूपं फलं दर्शयति—

**वि पाप्मना वर्त्तन्ते य एता उपयन्ति ॥ ३ ॥**

स्पष्टोऽर्थः ॥ ३ ॥

**यदतिरात्रा अन्तरा विधृत्यै तस्मान्नेतर इतरस्मिन् रेतो दधाति ॥ ४ ॥**

अत्राऽहर्गणानां मध्ये अन्तरालेष्वनुष्ठिता अतिरात्रा विधृत्यै विभज्य धारणाय गणद्वयसाङ्कर्यपरिहाराय सम्पद्यन्ते । तस्मात् कारणादितरो गोजातीयपशुरितरस्मिन् महिषादिजातीयपशौ रेतो न दधाति गर्भधारणं न करोति । तथा महिषादिरपि जात्यन्तरे ॥ ४ ॥

अतिरात्रान् प्रशस्य पृष्ठ्यषडहं प्रशंसति—

**यत् पृष्ठ्याः स्तोमाः सꣳसृष्टास्तस्मादजावयः पशूनाꣳ सह चरन्ति तस्मादु गर्दभो वडवायाꣳरेतो दधाति ॥ ५ ॥**

पृष्ठ्यषडहस्य प्रथमेऽहनि त्रिवृदाद्यास्त्रयस्त्रिंशत्पर्यन्ताः स्तोमाः क्रमेणाऽनुष्ठीयन्ते । एवं द्वितीयादिष्वहस्सु पञ्चदशादि । तथा सति यद्यस्मात् कारणात् पृष्ठ्यषडहगताः स्तोमाः संसृष्टाः सर्वेष्वहस्स्वेकविधा अविलक्षणाः, तस्मात् कारणात् फलभूतानां पशूनामपि केचित् पशवोऽजाश्चाऽवयश्च सह चरन्ति, न तु परस्परं विरुध्यन्ते । तस्मादु तस्मादेव पृष्ठ्यस्तोमसंसर्गकारणाद्गर्दभो जात्यन्तरयुक्तः पुमान् वडवायां अश्वयोषिति रेतोऽवस्थापयति ॥ ५ ॥

अस्मिन् सत्रे कञ्चिद्दोषमुद्भाव्य परिहरति—

**अपशव्यं वा एतत्सत्रं यदच्छन्दोमं यत्सन्धिषामसु छन्दाꣳस्युपयन्ति तेन छन्दोमवत्यस्तेन पशव्याः॥**

अतीते तृतीये खण्डे छन्दोमराहित्यादपशव्यत्वात् दोषो यथोद्भावितः, तथाऽत्राऽप्युद्भाव्यते । तस्य परिहारः—यद्यस्मात् कारणादतिरात्राणाम्मध्ये सन्धिषु सन्धिस्तोत्रेषु यानि सामानि सन्ति तेषु सामसु गायत्र्यादीनि बृहत्यन्तानि सप्त छन्दांस्युपयन्ति यजमाना अनुतिष्ठन्ति । तेन कारणेनैतत्सत्रगता रात्रयः छन्दोमवत्यो भवन्ति । छन्दोमशब्दस्य मुख्यार्थानां चतुर्विंशचतुश्चत्वारिंशाष्टाचत्वारिंशद्रूपाणां स्तोमानामभावेऽपि तत्समानाक्षरसंख्यानां गायत्रीत्रिष्टुब्जगतीनामनुष्ठितत्वात् छन्दोमशब्देन तानि त्रीणि छन्दांसि उपलक्ष्यन्ते । तथा सत्यस्य सत्रस्य छन्दोमवत्त्वं सिध्यति । तेन छन्दोमवत्त्वेनैता रात्रयः पशव्या भवन्ति ॥ ६ ॥

ननु सन्धिसामसु किं साम कस्मिंश्छन्दसि प्रयुज्यत इत्याशङ्कायामाह—

**गायत्रीषु जराबोधीयमुष्णिक्षु श्रुध्यमनुष्टुप्सु नानदं बृहतीषु रथन्तरं पङ्क्तिषु रायोवाजीयं त्रिष्टुप्स्वौशनं जगतीषु कावम् ॥ ७ ॥**

स्पष्टोऽर्थः । यद्यपि षट्स्वतिरात्रेषु नानदव्यतिरिक्तानि जराबोधीयादीनि कावपर्यन्तानि षडेव सन्धिसामानि, तथाऽपि दशसूक्तेषु दशमेऽहनि सूर्य्यास्तमयवेलायां षोडशिस्तोत्रं नानदं प्रयुज्यते । तदपि सन्धिसामत्वेनोपचर्यते ॥ ७ ॥

गायत्र्यादीनां जगत्यन्तानां क्रमेणाऽनुष्ठानं प्रशंसति—

**ऊर्ध्वानि छन्दांस्युपयन्त्यनपभ्रंशाय ॥ ८ ॥**

गायत्र्या ऊर्ध्वमुष्णिक् चतुर्भिरक्षरैराधिका । अत ऊर्ध्वमनुष्टुप् । एवमुत्तराणि । तेन क्रमेणैतान्यूर्ध्वानीत्युच्यन्ते । तेषां क्रमानुष्ठाने सति तस्याऽपि छन्दोमानपभ्रंशो भवति ॥ ८ ॥

औशनकावयोः साम्नोः स्वरशब्दो निधनभागे भवति । तमेतं प्रशंसति—

**प्राणो वै स्वरो यत् स्वरावन्ततो भवतस्तस्माद् द्वावन्ततः प्राणौ ॥ ९ ॥**

निधनरूपः स्वरशब्दो गमनक्रियामाचष्टे, स्वरति गच्छतीति व्युत्पत्तेः । प्राणोऽपि गतिमान् । तथा स्वरशब्दरूपं निधनं प्राण एव भवति । यद्यस्मात् स्वरशब्दरूपौ निधनविशेषौ अन्ततो भवतः, अनयोरौशनकावयोस्साम्नोरन्ततो भवतः तस्माल्लोकेऽप्यन्ततो मरणकाले द्वौ प्राणौ उच्छ्वासनिच्छ्वासौ तीव्रौ भवतः ॥ ९ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे चतुर्विंशाध्यायस्यैकादशः खण्डः ॥



## द्वादशः खण्डः ॥

अथ द्वितीयमेकोनपञ्चाशद्रात्रं श्रीकामानां सत्रमाह—

**अतिरात्रौ द्वावभिप्लवौ षडहौ गौश्चाऽऽयुश्चाऽति-रात्रौ द्वावभिप्लवौ षडहावभिजिच्च विश्वजिच्चाऽतिरा-त्रावेकोऽभिप्लवः षडहः सर्वस्तोमश्च नव सप्तदशश्चाऽ-तिरात्रो द्वादशाऽहस्य दशाहानि महाव्रतश्चाऽतिरा-त्रश्च ॥ १ ॥**

अत्र द्विवचनान्तमतिरात्राविति पदं त्रिः प्रयुक्तम्। तत्राऽऽद्यं गौश्चा-युश्चेत्यनयोर्विशेषणं, द्वितीयं अभिजिद्विश्वजितोरनयोर्विशेषणं, तृती-यन्तु सर्वस्तोमश्च नवसप्तदशश्चेत्यनयोर्विशेषणम्। स्पष्टमन्यत् ॥१॥

एतत्सत्रगतानां रात्रीणां फलविशेषं कथयितुं तदनुकूलं संज्ञावि-शेषमाह—

**आदित्यानां यमातिरात्राः ॥ २ ॥**

आदित्यैर्दृष्टत्वादेता रात्रयः आदित्यानां सम्बन्धिन्यः ॥ २ ॥

तासां यमातिरात्रा इति संज्ञानुकूलं फलमाह—

**यमेवैषाꣳश्रीर्भवति य एता उपयन्ति ॥ ३ ॥**

ये यजमाना एता रात्रीरनुतिष्ठन्ति, तेषां यजमानानां यमेव श्री-र्भवति। यमशब्दः सहोत्पन्नयोर्द्वयोः पुरुषयोर्लोके प्रसिद्धः। स चा-ऽत्र द्वैगुण्यमुपलक्षयति। इवशब्द एवकारार्थः। यमा द्विगुणा श्रीर्भव-तीत्यर्थः ॥ ३ ॥

फलान्तरमाह—

**एताभिर्वा आदित्या द्वन्द्वमार्ध्नुवन्मित्रश्च वरुणश्च धाता चाऽर्यमा चाꣳशश्च भगश्चेन्द्रश्च विवस्वाꣳश्चैता-सामेव देवतानामृद्धिमृध्नुवन्ति य एता उपयन्ति ॥४॥**

मित्राद्या विवस्वदन्ता अष्टावदितेः पुत्रा आदित्याः। ते च द्वन्द्वं यथा भवति तथाऽऽर्ध्नुवन् द्वौ द्वौ मिलित्वा सर्वे समृद्धिं प्राप्ताः। तान्येव चत्वार्यादित्यानां द्वन्द्वानि मित्रश्चेत्यादिना स्पष्टीक्रियन्ते। ये

यजमाना एता रात्रीरनुतिष्ठन्ति, ते यजमाना एतासामेव मित्रादीनां देवतानां सर्वां समृद्धिं प्राप्नुवन्ति ॥ ४ ॥

ननु(१)'अष्टौ वसव एकादश रुद्रा द्वादशाऽऽदित्याः' इत्यादिश्रुत्या आदित्यानां द्वादशसंख्या प्रसिद्धा । इह तु मित्रश्चेत्यादिना कथमष्टावादित्या उच्यन्त इत्याशंक्य द्वादशानां मध्ये मुख्यानामष्टानां श्रुतिप्रसिद्धिं दर्शयितुं काञ्चिदृचमवतारयति—

**तदृभ्यनूक्ता ॥ ५ ॥**

तत् पूर्वोक्तमादित्यानामष्टसंख्योपेतत्वमभिलक्ष्याऽनूक्ता काचिदृक् समाम्नाता ॥ ५ ॥

तामेव ऋचं पठति—

**(२)अष्टौ पुत्रासो अदितेर्ये जातास्तन्वं परि । देवाँउपप्रैत् सप्तभिः परा मार्त्ताण्डमास्यदिति ॥ ६ ॥**

अदितेर्देवतायाः पुत्रासः पुत्राः अष्टौ सन्ति । ये पुत्राः जातास्सन्तस्तन्वं परि अदितिशरीरं परितो व्याप्य स्तनपानाद्यर्थमास्थिताः । तेषां मध्ये मित्राद्यैरिन्द्रान्तैः सप्तभिः पुत्रैः सह देवानुपसेवितुं प्रैत् प्राऽऽगच्छत् विवस्वत्संज्ञकमष्टमं मार्त्ताण्डं सूर्यं परास्यत परिक्षिप्तवती अस्य देवसेवाप्रयासो मा भूदिति कचिद्रोपितवतीत्यर्थः । इतिशब्द ऋक्समाप्त्यर्थः ॥ ६ ॥

आदित्यवद्यजमानानां लोकद्वये समृद्धिरूपं फलं दर्शयति—

**आदित्या अस्मिँल्लोक ऋद्धा आदित्या अमुष्मिन्नुभयोरनयोर्ल्लोकयोर्ऋध्नुवन्ति देवलोके च मनुष्यलोके च य एता उपयन्ति ॥ ७ ॥**

मित्राद्या अष्टावादित्याः । अतः सत्रानुष्ठानेन द्वयोर्ल्लोकयोः ऋद्धा यजमाना अपि भवन्ति ॥७॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे चतुर्विंशाध्यायस्य द्वादशः खण्डः ॥

---

१. तै. सं ३. ५. २. १.     २. तै. आ. १. १३. २. द्रष्टव्यम् ।

## त्रयोदशः खण्डः ॥

अथ तृतीयमेकोनपञ्चाशद्रात्रं सुरभिद्रव्याभ्यञ्जनकामानां सत्रमाह—

**अतिरात्रश्चत्वारोऽभिप्लवाः षडहाः सर्वस्तोमोऽतिरात्रो द्वावभिप्लवौ षडहौ द्वादशाहस्य दशाहान्यतिरात्रः ॥ १ ॥**

अत्र मध्यपठितातिरात्रपदं सर्वस्तोमपदस्य विशेषणम् । स्पष्टमन्यत् ॥ १ ॥

अत्राऽञ्जनाभ्यञ्जने विधातुं तयोस्स्तावकमर्थवादमाह—

**प्रजापतिः प्रजा असृजत स रूक्षोऽभवत्तꣳ रूक्षं नाऽजानन् स आ चाऽऽङ्क्ताऽभि चाऽऽङ्क्त ॥ २ ॥**

पुरा कदाचित् प्रजापतिः प्रजाः सृष्ट्वा रूक्षः शुष्कोऽभवत् सर्गप्रयासेन शरीरगतपुष्टिकान्तिरहितोऽभूदित्यर्थः । तं प्रजापतिं रूक्षं पुष्टिकान्तिहीनं नाऽजानन् प्रजापतिरयमिति प्रजाः सर्वा न ज्ञातवत्यः । ततस्स प्रजापतिः प्रजानां स्वप्रज्ञानार्थमा चाऽऽङ्क्त स्वकीययोरक्ष्णोरञ्जनमपि प्रक्षिप्तवान् । अभ्यङ्क्त च स्वशरीरे सुगन्धिद्रव्यैरभ्यञ्जमपि कृतवान् ॥ २ ॥

इत्थं प्रशस्य एतत्सत्राधिकारिणा प्रञ्जनाभ्यञ्जनं विधत्ते—

**य आत्मानं नेव जानीरꣳस्त एता उपेयुर्यदा चाऽञ्जतेऽभि चाऽञ्जते शुभमेवाऽऽत्मन्दधते जानन्त्येनान् ॥ ३ ॥**

ये पुरुषा आत्मानं नेव जानीरन् । इवशब्द एवकारार्थः । ये पुरुषाः सभामध्ये स्वात्मानं न प्रख्यापयितुं शक्ता इत्यर्थः । ते पुरुषा एता एकोनपञ्चाशद्रात्रीरनुतिष्ठेयुः । तासु रात्रिषु अञ्जनं चाऽभ्यञ्जनं च अक्ष्णोरञ्जनं शरीराभ्यसम्पादयेयुः । यद्यवसरादेवं कृतं तस्मात्ते यजमानाः शुभमेवाऽत्मन् दधते शोभनं स्वस्थापनचिह्नमेव स्वशरीरे धारयन्ति । तेन चिह्नेन समागताः प्रजा एतान्यजमानान् जानन्ति विद्याधनादिसम्पन्ना इत्यवगच्छन्ति ॥ ३ ॥

अञ्जनाभ्यञ्जनसाधनद्रव्याणि विधत्ते—

**गौग्गुलवेन प्रातस्सवने सौगन्धिकेन माध्यन्दिने**

**सवने पैतुदारवेण तृतीयसवने ॥ ४ ॥**

धूपसाधनविवासहेतुर्गुग्गुलुः प्रसिद्धः । तदीयेन विलेपनाऽञ्जनमभ्यञ्जनञ्च प्रातस्सवने कुर्य्युः । सुगन्धिशब्दः तृणविशेषवाची । तद्रसयुक्तेन विलेपन माध्यन्दिनसवने तदुभयङ्कुर्य्युः । पैतुदारव उदुम्बर इति केचित् । देवदार्वित्यन्ये । तदीयतैलेन तृतीयसवने तदुभयं कार्य्यम् ॥ ४ ॥

विहितानि गुग्गुल्वादीनि तदुत्पत्तिप्रदर्शनञ्च प्रशंसति—

**अग्निर्वै देवानाॅं होत्रमुपैष्यञ्छरीरमधूनुत तस्य यन्माॅंसमासीत्तद्गुग्गुल्वभवद्यत् स्नाव तत्सुगन्धितेजनं यदस्थि तत् पीतुदार्वेतानि वै देवसुरभीणि देवसुरभिभिरेव तदभ्यञ्जते ॥५॥**

पूर्वमग्निर्देवानां यज्ञे हौत्रं होतृकर्म्म उपैष्यन् स्वशरीरमधूनुताऽकम्पयत । तथा कुर्वतस्तस्य यन्मासं मांसलक्षणः तत्क्षणात् शरीरावयवोऽभूत आसीत्, एतत गुग्गुल्वभवत् । एवं स्नाय्वस्थिनी प्रक्षिप्तस्सुगन्धितेजनपीतुदारुणी चाऽभूताम् । अतो देवस्याऽग्नेः शरीरसम्बन्धादेतानि खलु देवसुरभीणि । अस्त्वेवम्, किं ततः ? इत्याह—ततो गुग्गुल्वाद्यभ्यञ्जनेन देवसुरभिभिरेवाभ्यञ्जते सत्रिणः । अत्र सूत्रम्—(१)'आञ्जनाभ्यञ्जनासु गार्हपत्य उपसत्सु सर्पींषि फाणयेयुः पृथग्देवसुरभिभिर्य्यान्युक्तानि ब्राह्मणेन, तैस्सुत्यासूपाकरणवेलायां सवनानां पूर्वेण हविर्द्धाने आसीना आञ्जीरन्नभ्यञ्जीरंश्च, भुक्त्वाग्नीध्रीय एवेति गौतमः, उक्तमानुपूर्व्यं ब्राह्मणेन, अहरहरेतत् कुर्य्युरिति धानञ्जय्यशाण्डिल्यौ, सर्वस्तोम एवेति गौतमः, पृष्ठ्य इत्येक' इति ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे चतुर्विंशाध्यायस्य त्रयोदशः खण्डः ॥



१. लाट्या. श्रौ. १०. ४. १०–१६.

# चतुर्दशः खण्डः ॥

अथ चतुर्थमेकोनपञ्चाशद्रात्रं सम्वत्सरसम्मिताख्यं ऋद्धिकामानां सत्रमाह—

**अतिरात्रश्चतुर्विंशं प्रायणीयमहस्त्रयोऽभिप्लवाः षडहा अभिजित्त्रयः स्वरसामानो दिवाकीर्त्यमहस्त्रयः स्वरसामानो विश्वजिदेकोऽभिप्लवः षडह आयुश्च गौश्च द्वे अहनी द्वादशाहस्य दशाहानि महाव्रतं चाऽतिरात्रश्च संवत्सरसम्मिता यावती संवत्सरस्यर्द्धिस्तावत्येतासामृद्धिः ॥ १ ॥**

कल्पनं स्पष्टम् । अहस्संघसाध्यं सत्रं संवत्सरसम्मिता गवामयनसंवत्सरसत्रेण समा । तत्रत्यानामह्नामत्र सद्भावादित्यभिप्रायः । तदेवोच्यते—यावती संवत्सरस्यर्द्धिः संवत्सरस्यर्द्धिरहःक्लृप्तिः तावती वै आसां रात्रीणां ऋद्धिः क्लृप्तिरित्यर्थः । संवत्सरसत्रे त्वावृत्ते अहान्यभ्याधिकानि स्युः, तथाऽपि प्राधान्येन यानि सन्ति तान्येवात्राऽपीत्यर्थः ॥१॥

प्रायणीयमहश्चतुर्विंशं कार्यमित्युक्तम्, तन्निरस्य त्रिवृत्कार्यमिति सप्ररोचनमाह—

**तदाहुर्यच्चतुर्विंशमहः प्रायणीयं कुर्युः संवत्सरमारभ्य न समापयेयुरिति त्रिवृदेव कार्यं प्राणा वै त्रिवृत् प्राणानेवोपयन्ति ॥ २ ॥**

तत्र प्रायणीयविषये आहुश्चोदयन्ति ब्रह्मवादिनः—यद्यदि प्रायणीयमहश्चतुर्विंशं कुर्युः, तदा तेन संवत्सरमारभ्योपक्रम्य न समापयेयुः । यथा गवामयने चतुर्विंशमारभ्य द्वादश मासान् समाप्नुयुः न तथाऽत्रेत्यर्थः । अतस्तत्परित्यज्य त्रिवृदेव कार्यः । अत्र त्रिवृच्छब्दं केचिद्दशरात्रस्य प्रथमं पृष्ठ्यमहस्त्रिवृत्स्तोमकं यदस्ति, तदेवाऽत्र कार्यम् । तस्याऽपि प्रायणीयत्वादिति व्याचक्षते । अपरे सांवत्सरिकं चतुर्विंशमहन्नाम्नातिदेशतः प्राप्तम् । तत्र चतुर्विंशत्वमपोह्य त्रिवृत्स्तोमकं कर्त्तव्यं, दाशरात्रिकस्य केवलस्यैकस्याऽह्नोऽतिदेशायोगादित्याहुः । प्राण इत्यादि स्पष्टम् ॥ २ ॥

अथोक्तं पक्षं निरस्य पूर्वोक्तमेव पक्षं पुनस्सिद्धान्तयति—

**अथो खल्वाहुश्चतुर्विंꣳशमेव कार्य्यꣳसमृद्ध्यै ॥ ३ ॥**

अस्याऽयमभिप्रायः—संवत्सरे गवामयने प्राधान्येन पञ्चविंशतिरेवाऽहानि विद्यन्त इति तेषां सर्वेषामत्र प्रयोगात् संवत्सरस्समापितस्स्यात् । अतस्तत्राऽसमाप्तिलक्षणदोषाभावादुक्तसमृद्ध्यर्थं चतुर्विंशमेव कार्य्यम् । त्रिवृत्करणे चतुर्विंशस्यैवाऽभावात् संवत्सरो न समाप्यते ॥ ३ ॥

अत्र यद्दिवाकीर्त्यमहस्तत् तदुभयस्वरसामत्वञ्च प्रशंसति—

**अथैते स्वरसामानः शिरो वै दिवाकीर्त्यं प्राणाः स्वरसामानो यद्दिवाकीर्त्यमभितः स्वरसामानो भवन्ति शिरस्येव तत् प्राणा धीयन्ते ॥ ४ ॥**

अथाऽभिजिदनन्तरं एते वक्ष्यमाणाः स्वरसामानो भवन्ति । तदनन्तरं दिवाकीर्त्यमहरस्ति । तच्छिरो वै प्रथममहः खलु, सर्वेषु तस्य मध्यमत्वेन प्रधानत्वात् । तथा सति प्राणरूपाः स्वरसामानः शिरस्स्थानीयस्य दिवाकीर्त्यस्याऽभितो भवन्ति तत्तेन शिरस्यवस्थानत्वात् समं कृत्वा प्राणाश्चक्षुरादयः धीयन्ते स्थापिता भवन्ति । एकत्वात् प्राधान्यपरिवारकत्वात्तस्य शिरस्त्वकल्पनम् । बहुत्वसंख्यायोगादन्याश्रयत्वेनोपसर्जनत्वाच्च स्वरसाम्नां प्राणत्वकल्पनम् ॥ ४ ॥

अथैतेषां स्वरसाम्नामभितो यौ विश्वजिदभिजितौ अभिप्लवषडहानन्तरं ये गोआयुषी अहनी ते प्रशंसति--

**अथ यावन्त्यौ प्राणौ तौ विश्वजिदभिजितावथैते गोआयुषी मिथुनौ स्तोमावुपयन्ति प्रजात्यै ॥ ५ ॥**

गोनामकं यदहस्तत्स्त्रियाः रूपम् । आयुस्तु पुरुषस्थानीयम् । तयोः सान्तत्यं प्राजात्यै भवति ॥ ५ ॥

अथोक्ताहस्समनन्तरभावीनि दशाहानि प्रशंसति--

**अथैतानि द्वादशाहस्य दशाहानि वाचमविच्छिन्नामुपयन्ति प्रजननाय ॥ ६ ॥**

वाचा स्तोत्रशस्त्रलक्षणया निष्पाद्यत्वाद्दशाहान्यपि वाग्रूपाणि ।

तान्यनुक्रमेण यदुपयन्ति तेनाऽविच्छिन्नां वाचमेवोपयन्ति प्रजननार्थम् ॥ ६ ॥

अथाऽनन्तरभाविमहाव्रतं प्रशंसति--

**अथैतद्व्रतमन्नं वै व्रतं न वा अन्यत्र मुखादन्नं धिनोति यदुपरिष्टाद्व्रतमुपयन्ति मुखत एव तदन्नाद्यं धियते तस्मान्मुखे सदन्नं धिनोति ॥ ७ ॥**

अथ वाग्रपदशाहानन्तरं एतद्व्रतं महाव्रतमुपयन्ति । तदन्नं वै अन्नरूपं खलु । लोके मुखादन्यत्र मुखातिरिक्तावयवान्तरे न वा धिनोति नैव प्रीणयत्यात्मानम् । अत एतदुपरिष्टाद्दशाहानामनन्तरं व्रतमुपयन्ति । शिष्टं स्पष्टम ॥ ७ ॥

अथाऽऽद्यन्ते अहनी प्रशंसति--

**अथैतौ प्रायणीयोदयनीयावतिरात्रौ येनैव प्राणेन प्रयन्ति तमभ्युद्यन्ति ॥ ८ ॥**

यद्येतौ प्रायणीयोदयनीयावुभावप्यतिरात्रौ भवतः, प्रायेन प्राणेन प्रयन्तुमुपक्रमते सत्रं तमेव प्राणमभिलक्ष्याऽभ्युद्यन्ति ऊर्ध्वं प्रापयन्ति॥८॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे चतुर्विंशाध्यायस्य चतुर्दशः खण्डः ॥

---

## पञ्चदशः खण्डः ॥

अथ सवितुः ककुभ इति संज्ञं पञ्चममेकोनपञ्चाशद्रात्रं प्रजाप्रसवसमत्वकामानां सत्रमाह--

**अतिरात्रो नव त्रिवृन्त्यहान्यग्निष्टोममुखष्षडहोऽथ यानि त्रीण्यहान्यग्निष्टोमावभित उक्थ्यं मध्यतो नव पञ्चदशान्यहान्यग्निष्टोममुखः षडहोऽथ यानि त्रीण्यहान्यग्निष्टोमावभित उक्थ्यं मध्यतो नव सप्तदशान्यहान्यग्निष्टोममुखः षडहोऽथ यानि त्रीण्यहान्यग्निष्टोमावभित उक्थ्यं मध्यतो नवैकविंशान्यहान्यग्निष्टोम-**

मुखः षडहोऽथ यानि त्रीण्यहान्यग्निष्टोमावभित उ-क्थ्यं मध्यतो द्वादशाहस्य दशाहानि महाव्रतञ्चाऽति-रात्रश्च ॥ १ ॥

अत्र क्रमेण चत्वारो नवाहाः त्रिवृदादिस्तोमकाः । तेषु सर्वेषु सा-मानि । आदितः षट्सु अहस्सु प्रथमोऽग्निष्टोमसंस्थः, अन्ये पञ्चाहा उक्थ्यसंस्थाः । अवशिष्टेषु त्रिष्वहस्सु आद्यन्ते अग्निष्टोमसंस्थे, मध्यम-महरुक्थ्यमित्यहर्नवकसङ्घचतुष्टयेषु षट्त्रिंशदहानि भवन्ति । दशाहा-नि महाव्रतमाद्यन्तावतिरात्रौ च मिलित्वा एकोनपञ्चाशदहःक्लृप्तिः॥१॥

अथ विहिता रात्रीः प्रशंसति--

एताभिर्वै सविता सर्वस्य प्रसवमगच्छत् ॥ २ ॥

प्रसवं प्रेरणं सर्वकामेष्वभ्यनुज्ञा ॥ २ ॥

अत्राऽधिकारिणमाह--

सर्वस्य प्रसवं गच्छन्ति य एता उपयन्ति ॥ ३ ॥

एतेन सर्वस्य सर्वार्थिनोऽत्राऽधिकारिण इत्युक्तं भवति ॥ ३ ॥

अत्रत्यं त्रिवृदादिस्तोमसङ्घत्वं प्रशंसति--

यद्गणशः स्तोमा बहव एव भवन्ति सह त्रिवृतः सह पञ्चदशाः सह सप्तदशाः सहैकविंशाः सवितुर्वा एताः ककुभः ॥ ४ ॥

यद्गणशः सङ्घशः स्तोमास्त्रिवृदादयो बहव एव क्रतुसंख्याका भव-न्ति । उक्तार्थमेवोपपादयति--सह त्रिवृत इत्यादिना । ये स्तोमसङ्घा एता वै सवितुः प्रेरकस्याऽऽदित्यस्य ककुभ उच्यन्ते ककुबित्युच्छ्रित-प्रदेश उच्यते ॥ ४ ॥

स्तोमसङ्घत्वप्रयुक्तं फलमाह--

ककुभः समानानां च प्रजानां च भवन्ति य एता उपयन्ति ॥ ५ ॥

समानानां समानविधैश्वर्योपेतानाञ्च प्रजानां च पुत्रभृत्यादीनां च ककुभः समुन्नताः श्रेष्ठा भवन्ति ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे चतुर्विंशाध्यायस्य पञ्चदशः खण्डः ॥

## षोडशः खण्डः ॥

अथ षष्ठमेकोनपञ्चाशद्रात्रं प्रतिष्ठाकामानां सत्रमाह—

अतिरात्रश्चत्वारोऽभिप्लवाः षडहा महाव्रतं द्वावभिप्लवौ षडहौ द्वादशाहस्य दशाहान्यतिरात्रः ॥१॥

स्पष्टम् ॥ १ ॥

अत्राऽधिकारिणो दर्शयति—

ऋतवो न प्रत्यतिष्ठꣳस्त एताभिः प्रत्यतिष्ठन् प्रतिष्ठाकामा उपेयुः ॥ २ ॥

ऋतुप्रतिष्ठासाधनत्वादेतासां प्रतिष्ठार्थिनोऽधिकारिणः ॥ २ ॥

अत्र षडहचतुष्टयं विद्यते । तत्र षट्संख्याद्वारैताः रात्रीः प्रशंसति—

प्रत्येव तिष्ठन्ति षड्वा ऋतव ऋतुष्वेवैताभिः प्रतितिष्ठन्ति यत् क्लृप्तान् षडहानुपयन्ति क्लृप्त्या एव॥३॥

स्पष्टम् ॥ ३ ॥

अथ महाव्रतस्य मध्यमस्थानत्वं प्रशंसति—

अथैतद्व्रतमन्नं वै व्रतं न वा अन्यत्र मध्यादन्नं धिनोति यद्व्रतं मध्यत उपयन्ति मध्यत एव तदन्नाद्यं धीयते तस्मान्मध्ये सदन्नं धिनोति ॥ ४ ॥

स्पष्टम् ॥ ४ ॥

अथ महाव्रतानन्तरभाविषडहद्वयं प्रशंसति—

यत् क्लृप्तौ षडहावुपयन्ति क्लृप्त्या एव ॥ ५ ॥

स्पष्टम् ॥ ५ ॥

अथ द्वादशाहस्य दशाहान्यतिरात्रौ च क्रमेण प्रशंसति—

अथैतानि द्वादशाहस्य दशाहानि वाचमविच्छिन्नामुपयन्ति प्रजननायाऽथैतौ प्रायणीयोदयनीयावतिरात्रौ येनैव प्राणेन प्रयन्ति तमभ्युद्यन्ति ॥ ६ ॥

उक्तार्थम् ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे चतुर्विंशाध्यायस्य षोडशः खण्डः ॥

## सप्तदशः खण्डः ॥

अथ सप्तममेकोनपञ्चाशद्रात्रमन्यन् प्रजामिभवकामानां सत्रमाह--

अतिरात्रः षडभिप्लवाः षडहा द्वादशाहस्य दशा-
हानि महाव्रतं चाऽतिरात्रश्च ॥ १ ॥

स्पष्टम् ॥ १ ॥

अथाऽऽसां प्रजाभिक्रमणसाधनत्वं प्रदर्शयन्नधिकारिणमाह--

एताभिर्वा इन्द्राग्नी अत्यन्या देवता अभवताम-
त्यन्याः प्रजा भवन्ति य एता उपयन्ति ॥ २ ॥

इन्द्राग्नी पूर्वं एताभी रात्रिभिः अन्या देवता अत्यभवतां देवानां श्रेष्ठावभूतामित्यर्थः । अत इदानीमप्येता अति अन्याः प्रजाश्च भवन्ति अभिक्रामन्त्यधिका भवन्तीत्यर्थः ॥ २ ॥

एता ओजोद्वारा प्रशंसति—

इन्द्राग्नी वै देवानामोजिष्ठा ओजिष्ठा भवन्ति य
एता उपयन्ति ॥ ३ ॥

स्पष्टम् ॥ ३ ॥

अथ षडहादीन् क्रमेण प्रशंसति--

यत् क्लृप्तान् षडहानुपयन्ति क्लृप्त्या एवाऽथैता-
नि द्वादशाहस्य दशाहानि वाचमविच्छिन्नामुपयन्ति
प्रजननायाऽथैतद्व्रतमथैतौ प्रायणीयोदयनीयावतिरात्रौ
येनैव प्राणेन प्रयन्ति तमभ्युद्यन्ति ॥ ४ ॥

उक्तप्रायमेतत् ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-
प्रकाशे चतुर्विंशाध्यायस्य सप्तदशः खण्डः ॥

---

## अष्टादशः खण्डः ॥

अथ ऋद्धिकामानामेकषष्टिरात्रं सत्रमाह--

**अतिरात्रश्चतुर्विंᳲशं प्रायणीयमहस्त्रयोऽभिप्लवाः षडहाः पृष्ठ्यः षडहोऽभिजित् त्रयस्स्वरसामानो दिवाकीर्त्यमहस्त्रयः स्वरसामानो विश्वजित्पृष्ठ्यः षडहस्त्रयस्त्रिᳲशारम्भण एकोऽभिप्लवः षडह आयुश्च गौश्च द्वे अहनी द्वादशाहस्य दशाहानि महाव्रतश्चाऽतिरात्रश्च तदेतदेकषष्टिरात्रं दैवानां व्रात्यानाम् ॥ १ ॥**

मध्येऽभिजित्प्रभृतीनि नवरात्राणि ततः पूर्वं पृष्ठ्यः षडहः। ततः पूर्वं त्रयोऽभिप्लवाः षडहाः। ततः पूर्वं आद्यौ प्रायणीयचतुर्विंशौ। नवरात्रात्परमावृत्तः षडहः। ततस्त्रयस्त्रिंशस्तोममुखः एकोऽभिप्लवष-डहः। ततः आयुश्च गौश्च द्वे अहनी। ततो द्वादशाहस्य दशाहानि। ततोऽन्त्योपान्त्यौ व्रतोदयनीयाविति क्लृप्तिः। एतदेकषष्टिरात्रं व्रात्यानां सङ्घात्मकानां वस्वादीनां सत्रम्। दैवानामिति स्वार्थिकस्त-द्धितः ॥ १ ॥

देववरुणेति मन्त्रेण देवयजनाध्यवसानानन्तरं होमः कर्त्तव्य इति विधास्यति। तदर्थमाख्यायिकामाह—

**दैवा वै व्रात्याः सत्रमासत बुधेन स्थपतिना ते ह वा अनिर्याच्य वरुणᳲ राजानं देवयजनं दिदीक्षुस्तान् ह वा वरुणो राजाऽनु व्याजहाराऽन्तरेमि वो यज्ञियाद्भागधेयान्न देवयानं पन्थानं प्रज्ञास्यथेति तस्मात्तेभ्यो न हविर्गृह्णन्ति न ग्रहम् ॥ २ ॥**

पूर्वं व्रात्या देवाः बुधेन स्थपतिना यजमानेन उक्ताः सत्रमासत। ततो यद्वरुणं देवराजानमनिर्याच्यैव दिदीक्षुः। दीक्षयमानान् देवान् वरुणो व्याजहारोक्तवान्—हे देवाः यतो यूयं देवयजनमनिर्याच्यैव दीक्षिताः स्थिताः, ततो वो युष्मान् यज्ञियाद्भागधेयात् सोमचर्वादिरूपादिकं भागं अन्तरेमि वियोजयामि। किञ्च देवयानं पन्थानं देवैर्गन्तव्यं यज्ञमार्गं न प्रज्ञास्यथ इति व्याजहार। तस्मात्तेभ्यो न हविर्गृह्णन्ति,

तथा सोमग्रहं न गृह्णन्ति । तस्माद्देवयजनायाचनेन देवान्वरुणः शशाप । अतः सत्रिभिर्वक्ष्यमाणमन्त्रेण होतव्यमित्यर्थः ॥ २ ॥

अथैतत्सत्रं सर्वनिधिसाधनमिति विवक्षुराह—

**अथ ह वै तर्हि नौषधीषु पय आसीन्न क्षीरे सर्पिर्न माꣳसे मेदो न त्वचि लोमानि न वनस्पतिषु पलाशानि तस्मा एतदेकषष्टिरात्रं देवा व्रात्या उपायꣳस्ततो वै तानि भूतान्येतैर्वीर्यैः समसृज्यन्त तेजस्वन्त्येवाऽऽसन् पयस्वन्ति ॥ ३ ॥**

अथ ह वै एवं सति पूर्वं वरुणायाचितदेवयजने सत्रेऽनुष्ठिते सति तर्हि तदानीं ओषधीषु पयः सारभूतो रसो नाऽऽसीत् । न क्षीर इत्यादि स्पष्टम् । मेदो मांसरसः । तथा सति यतो यस्मादेतत् एकषष्टिरात्रं व्रात्या देवा उपायन् ततस्तस्मात् स खलु तानि भूतकार्याण्योषध्यादीनि एतैर्वीर्यैः पय आदिलक्षणैः स्वसामर्थ्यैः सहिता असृज्यन्त सृष्टा अभूवन् । तदेव तेजस्वन्त्यासन् तेजोयुक्तान्यभवन् । पयस्वन्ति च प्रकृष्टपयोयुक्तानि च ॥ ३ ॥

उक्तार्थविश्वासाय पूर्वसिद्धं श्लोकबद्धं ब्राह्मणमुदाहरति—

**तदेष श्लोकोऽभ्यनूच्यते ॥ ४ ॥**

श्लोक इति जात्येकवचनम् । व्यत्ययेन श्लोका अभ्यनूच्यन्तेत्यर्थः ॥ ४ ॥

तत्र प्रथमं श्लोकमाह—

**किमकर्त्तेति यत्पुत्रान् मुहुर्देवाꣳ अपृच्छत मही बुधस्याऽऽसीद्दीक्षा स क्षीरे सर्पिराहरत् ॥ ५ ॥**

देवा यद्यदा पुत्रान् गणदेवान् किमकर्त्त किं कृतवन्तो यूयमिति मुहुरभीक्ष्णमोषध्यादीनां पय आदिप्राप्तिविषयमपृच्छत अपृच्छन्तेति वचनव्यत्ययः । यद्वा हे देवाः यूयं पुरा पृच्छतेत्यृषेर्वाक्यं तत् यदा अपृच्छन्त । अत्र व्रात्या देवास्तत्प्रश्नादुत्तरमब्रुवन्निति शेषः । बुधस्य मही महता दीक्षा आसीत् वरुणतो देवयजनप्रार्थनपूर्विकाऽभूत् । स बुधः क्षीरे अपगतं सर्पिराहरत् स्थापितवानिति ॥ ५ ॥

अथ द्वितीयमाह—

**महीं दीक्षाᳪं सौमायनो बुधो यदुदयच्छदनन्दत्स-र्वमाप्नोन्मन्माᳪंसे मेदोऽधा इति ॥ ६ ॥**

सौमायनः सोमपुत्रः महतीं दीक्षां उदयच्छत् कृतवान् । तदा सर्वं जगदनन्दत् तत्सर्वमाप्नोत् पय आदि । किञ्च मन्मांसे मदीय-मांसे मेदः पूर्वमपगतं अधाः अधत्त स्थापितवान् । पुरुषव्यत्ययः । एवं यद्यतोऽब्रुवन्निति देवा उत्तरं ददुः ॥ ६ ॥

अथ तृतीयमाह—

**दरिद्रा आसन् पशवः कृशाः सन्तो व्यस्थकाः सौ-मायनस्य दीक्षायाᳪंसमसृज्यन्त मेदसेति ॥ ७ ॥**

व्यस्थका अस्थिभी रहिताः । शिष्टं स्पष्टम् । ते वरुणप्रार्थनया सत्र-मुषित्वा पय आदीनि पुनर्लब्धवन्तः । तस्मै इत्युत्तरं भवति ॥ ७ ॥

एवमर्थवादेन वरुणतो देवयजनप्रार्थनं प्रशस्येदानीं समन्त्रकं देवयज-नाध्यवसानाङ्गहोमं विधत्ते—

**त्य एतदेकषाष्टिरात्रमुपेयुस्ते देवयजनमध्यवसाय गार्हपत्य आहुतिं जुहयुर्देव वरुण देवयजनं नो देहि स्वाहेति ते दत्ते देवजने यजन्ते ॥ ८ ॥**

तत्तस्माद्ये यजमाना एतत् निर्दिष्टमेकषष्टिरात्रमुपेयुः, ते देवयजन-मिदं भविष्यतीत्यध्यवसाय निश्चित्य गार्हपत्येऽग्नौ देव वरुणेति मन्त्रे-णाऽऽहुतिं जुहुयुः । प्रथमं ते इति पदं ये इति वाक्यादिभूतस्य सम्ब-न्धार्थम् । तत्तदा होमः देवयजने वरुणानुज्ञाते यजन्ते ॥ ८ ॥

उक्तार्थोपसंहारपूर्वकमधिकारिणो दर्शयति—

**ते सर्वामृद्धिमार्ध्नुवन् सर्वामृद्धिमृध्नुवन्ति य एत-दुपयन्ति ॥ ९ ॥**

ते व्रात्या देवा उक्तैकषष्टिरात्रं समाप्य सर्वामृद्धिमार्ध्नुवन्, अत स्समृद्ध्यर्थिनोऽत्राऽधिकारिण इत्युक्तं भवति ॥ ९ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे चतुर्विंशाध्यायस्याऽष्टादशः खण्डः ॥

## एकोनविंशः खण्डः ॥

अथाऽमृतत्वसाधनं शतरात्रं सत्रमाह—

**अतिरात्रो ज्योतिर्गौरायुस्त्र्यहश्चतुर्दशाऽभिप्लवाः षडहा द्वादशाहस्य दशाऽहानि महाव्रतञ्चाऽतिरात्रश्च॥१॥**

स्पष्टम् ॥ १ ॥

अस्य फलं सार्थवादमाह--

**देवा वै मृत्योरबिभयुस्ते प्रजापतिमुपाधावꣳस्तेभ्य एतेन शतरात्रेणाऽमृतत्वं प्रायच्छदेतद्वाव मनुष्यस्याऽमृतत्वं यत् सर्वमायुरेति वसीयान् भवति सर्वमायुर्यन्ति वसीयाꣳसो भवन्ति य एतदुपयन्ति ॥ २ ॥**

मृत्योर्भीतेभ्यो देवेभ्यः प्रजापतिरेतेन शतरात्रसत्रेणाऽमृतत्वं प्रायच्छत् अमृतत्वस्यैतत्साधनमिति प्रायच्छादित्यर्थः । अमृतत्वमविनाशलक्षणं देवानाम्, मनुष्याणान्तु किममृतत्वमिति? तत्राऽऽह—सर्वं प्रजापतिना क्लृप्तं शतमायुरेति वसीयान् भवति जीवनकाले । एतद्वाव एतदेव मनुष्यस्याऽमृतत्वम् । एतदुपयन्तीत्यादि स्पष्टम् ॥ २ ॥

अस्याऽनुष्ठाने कञ्चिन्नियममाह--

**अभिप्रयायमभिषुण्वन्त्यभिक्रान्त्यै समानत्राऽभिषुण्वन्ति प्रतिष्ठित्यै ॥ ३ ॥**

अभिप्रयायं सारस्वतसत्रादभिगत्याऽभिगत्य प्रतिदिनमभिषुण्वन्ति उत्तरोत्तरमभिक्रान्त्यै अभिवृद्ध्यै भवति । समानत्रेति विकल्पः स्यात् । अत्र सूत्रम्--(१) 'शतरात्रेऽभिप्रयायमभिषुण्वन्त्यभिक्रान्त्यै समानत्राऽभिषुण्वन्ति प्रतिष्ठित्या इति स विकल्पः स्यात्, याऽन्तस्सुनुयुर्यथा सारस्वतेषु, यत्र तु क्व च, समानदेशे वा यथाऽन्येषामयान्त एव, चक्रीवन्ति सदोहविर्द्धानानि कारयित्वाऽहस्संस्थासु चक्राणि विपरिवर्त्तयेयुरित्याचार्य्यास्तदभिप्रयात्तद्रूपमप्रयाणाच्च समानत्राऽभिषवः, अहरहरेतव् कुर्य्युरिति धानञ्जय्यशाण्डिल्यौ, अभिप्लवेष्वेवेति गौतमः, त्रिकद्रुकेष्वित्येक' इति । 'अभिप्रयायमभिषुण्वन्त्यस्मिन् पक्षेऽहरहरेतकुर्य्युरि'त्यादिकल्पो द्रष्टव्यः ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे चतुर्विंशाध्यायस्यैकोनविंशः खण्डः ॥

---

१. लाट्या. श्रौ. १०. ५. ९-१६.

## विंशः खण्डः ॥

अथ सर्वकामसाधनं गवामयनाख्यं संवत्सरं सर्वप्रकृतिभूतं सत्रमाह--

**अतिरात्रश्चतुर्विंशं प्रायणीयमहश्चत्वारोऽभिप्लवाः षडहाः पृष्ठ्य षडहः स मासः स द्वितीयः स तृतीयः स चतुर्थः स पञ्चमस्त्रयोऽभिप्लवाः षडहाः पृष्ठ्यः षडहोऽभिजित् त्रयः स्वरसामानो दिवाकीर्त्यमहस्त्रयः स्वरसामानो विश्वजित् पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणास्त्रयोऽभिप्लवाः षडहाः पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणाश्चत्वारोऽभिप्लवाः षडहाः स मासः स द्वितीयः स तृतीयः स चतुर्थस्त्रयोऽभिप्लवाः षडहा आयुश्च गौश्च द्वे अहनी द्वादशाहस्य दशाऽहानि महाव्रश्चाऽतिरात्रश्च ॥ १ ॥**

स्पष्टम् ॥ १ ॥

अथ पूर्वविहितं गवामयनिकं ब्राह्मणमत्राऽतिदिशति—

**संवत्सरब्राह्मणं ब्राह्मणम् ॥ २ ॥**

यत्संवत्सरब्राह्मणं 'गावो वा एतत् सत्रमासते' इत्यारभ्य प्रथमपञ्जिकायां चतुर्थपञ्चमाध्यायाभ्यामुक्तं, तदेवाऽत्राऽपि ब्राह्मणमिति द्रष्टव्यम् । ननु किमर्थमत्र विधानं, पूर्वमेव विहितत्वात । न; अस्त्यत्र प्रसङ्गः, संवत्सरप्रकृत्यर्थं विधातव्यत्वात् । तर्हि पूर्वत्र वा किमर्थं विधानम्? तत्सर्वं प्रकृतिभूतान्यहानि गवामयने विद्यन्ते । अतोऽग्निष्टोमादीनां तदपेक्षत्वात् पूर्वं वक्तव्यमेव। तर्ह्यत्राऽतिदेशमात्रेणैवाऽलम्, किमहःकल्पनया? सत्यमेवम्, तथाऽपि सुखबोधार्थं पुनः प्रदर्शितमित्यदोषः ॥ २ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयात् विद्यातीर्थमहेश्वरः ॥

इति श्रीमहाराजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीर-
बुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते
माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे
चतुर्विंशाध्यायस्य विंशः खण्डः ॥
चतुर्विंशाध्यायस्समाप्तिमगमत् ॥



# अथ पञ्चविंशोऽध्यायः ॥

## प्रथमः खण्डः ॥

यस्य निश्श्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अथ स्वर्गसाधनमादित्यानां मध्ये पृष्ठ्यमयनमाह—

अतिरात्रश्चतुर्विंꣳशं प्रायणीयमहर्द्वौ त्रिवृत्पञ्चदशौ षडहौ पृष्ठ्यः षडहो द्वौ त्रिवृत्पञ्चदशौ षडहौ स मासः स द्वितीयः स तृतीयः स चतुर्थः स पञ्चमस्त्रयास्त्रिवृत्पञ्चदशाः षडहाः पृष्ठ्यः षडहस्त्रिवृद्बृहस्पतिस्तोमस्त्रयः स्वरसामानो दिवाकीर्त्यमहस्त्रयः स्वरसामानः पञ्चदश इन्द्रस्तोम उक्थ्यः पृष्ठ्यः षडहस्त्रयस्त्रिꣳशारम्भण एकः पञ्चदशास्त्रिवृत् षडहो द्वादशाहस्य दशाऽहानि व्यूढा अग्निष्टोमास्त्रिवृत उद्भिच्च बलभिच्च द्वे अहनी द्वौ पञ्चदशात्रिवृतौ षडहौ पृष्ठ्यः षडहो द्वौ पञ्चदशात्रिवृतौ षडहौ स मासः स द्वितीयः स तृतीयः स चतुर्थः पञ्चदशात्रिवृत् षडहः पृष्ठ्यः षडहः पञ्चदशात्रिवृत् षडहो गौश्चाऽऽयुश्च द्वे अहनी छन्दोमदशाहोऽष्टाचत्वारिꣳशं प्रथममहरथ चतुश्चत्वारिꣳशं चत्वारिꣳशꣳषट्त्रिꣳशं द्वात्रिꣳशं त्रिꣳशं द्वे अष्टाविꣳशे पञ्चविꣳशं चतुर्विꣳशं महाव्रतश्चाऽतिरात्रश्च ॥ १ ॥

अत्राऽऽदितो द्वे अहनी षष्ठमासस्याऽन्त्योपान्त्ये भवतः। द्वौ त्रिवृदित्यादिना पञ्चमासाः पूरणीयाः । तत्राऽयुग्मान्यहानि त्रिवृन्ति, युग्मानि तु पञ्चदशानीति षडहेषु त्रिवृत्पञ्चदशयोर्विवेकः। त्रयस्त्रिवृत्पञ्चदश इत्यादि स्वरसामान इत्यन्तेन षष्ठमासस्याऽष्टाविंशत्यहानि आद्ये द्वे इति तत्पूर्त्तिः । तत्राऽभिजित्स्थानीयस्त्रिवृद्बृहस्पतिस्तोमः । दिवाकीर्त्यन्तु मध्यममहर्न मासान्तर्भावि, अयं प्रथमः पक्षः । सप्तमे

मासि त्रयः स्वरसामानः। ततो विश्वजित्स्थानीयः पञ्चदशस्तोम उक्थ्यसंस्थ इन्द्रस्तोमः। तत आवृत्तः पृष्ठ्यः षडहः एकः, पञ्चदश त्रिवृत्षडहः। अत्र पूर्ववैपरीत्येनाऽयुग्मान्यहानि पञ्चदशानि, युग्मानि तु त्रिवृन्ति, ततो द्वादशाहस्य दशाहानि। तानि च व्यूढच्छन्दसः त्रिवृत्स्तोमकान्यग्निष्टोमसंस्थानि। तत उद्भिद्वलभिदौ। ततोऽन्ते महाव्रतोदयनीये। अत्र मिलित्वैको मासः। ततो द्वौ द्वौ पञ्चदशत्रिवृतावित्यादिसंख्यया अष्टमनवमदशमैकादशमासाः पूरणीयाः। ततः पञ्चदशत्रिवृत्षडहौ प्रथमतृतीयौ द्वितीयः पृष्ठ्यः षडह इत्यष्टादशाहानि। ततो गोष्टोम आयुष्टोमाविति विंशत्यहानि। ततश्छन्दोमदशाह इति द्वादशमासपूर्त्तिः। छन्दोमदशाह इत्थम्—अष्टाचत्वारिंशं जागतं प्रथममहश्चतुश्चत्वारिंशं त्रैष्टुभं द्वितीयञ्चत्वारिंशं पाङ्क्तं तृतीयं, षड्विंशं बार्हतञ्चतुर्थं, द्वात्रिंशमानुष्टुभं पञ्चमं त्रिंशं वैराजं षष्ठं, अष्टाविंशे औष्णिहे सप्तमाष्टमे, पञ्चविंशं पाङ्क्तं नवमं, पूर्वन्तु पाङ्क्तं अष्टाक्षरपादपञ्चकापेक्षया द्वितीयं पञ्चाक्षरपादपञ्चकापेक्षयेति, चतुर्विंशं गायत्रं दशममिति ॥ १ ॥

अथाऽस्य नाम दर्शयति—

**आदित्यानाम्मध्ये पृष्ठ्यम् ॥ २ ॥**

स्पष्टम् ॥ २ ॥

अस्य फलमाह—

**मध्ये पृष्ठ्येन वा आदित्याः स्वर्गं लोकमाक्रमन्त यन्मध्ये पृष्ठान्युपयन्ति स्वर्गस्य लोकस्याऽऽक्रान्त्यै ॥३॥**

स्पष्टोऽर्थः ॥ ३ ॥

अथ पृष्ठानि प्रशंसति—

**अन्नं वै पृष्ठान्यन्नमेव तन्मध्यतो धीयते तस्मान्मध्ये सदन्नं धिनोति ॥ ४ ॥**

पृष्ठानां प्रयोगेणाऽन्नस्य सिद्धेः पृष्ठान्यन्नमित्युपचर्य्यते। तेषां मध्ये प्रयोगेण अन्नमेव मध्यदेशे स्थापितं भवति ॥ ४ ॥

अथ तानि पुनः पशुरूपेण प्रशंसति—

**पशवः पृष्ठानि पशुष्वेव प्रतितिष्ठन्ति ॥ ५ ॥**

स्पष्टम् ॥ ५ ॥

अथ पृष्ठगतं त्रिवृत्पञ्चदशस्तोमत्वं प्रशंसति—

चक्रे वा एते साकंवृतीयत् त्रिवृत्पञ्चदशौ स्तोमौ यं कामं कामयन्ते तमेतेनाऽभ्यश्नुवते यत्र यत्र हि चक्रीवता कामयते तत्तदभ्यश्नुते ॥ ६ ॥

त्रिवृत्पञ्चदशौ स्तोमाविति यत् यौ स्तः ते एते साकंवृतीयत् सहैव वर्त्तमाने द्वे चक्रे खलु । यथा रथस्य चक्रे परिभ्रमतः एवं सर्वेष्वहस्सु एतौ प्रायेण परिभ्रमतः । एतेन स्तोमद्वयेनेत्यर्थः । चक्रीवता चक्रस्थानीयोक्तस्तोमद्वयवता पृष्ठे यत्र यत्र यद्यत् कामयते तत्र तत्र तत्काम्यमश्नुते ॥ ६ ॥

अथ बृहस्पतिस्तोमं स्तौति—

अथैष त्रिवृद्बृहस्पतिस्तोम एतेन वै बृहस्पतिर्देवानां पुरोधामगच्छत् पुरोधकामा उपेयुर्गच्छन्ति पुरोधां पुर एनान्दधते ॥ ७ ॥

स्पष्टोऽर्थः ॥ ७ ॥

अथ स्वरसामानो दिवाकीर्त्यञ्च सह प्रशंसति—

अथैते स्वरसामानः शिरो वै दिवाकीर्त्यं प्राणाः स्वरसामानो यद्दिवाकीर्त्यमभितः स्वरसामानो भवन्ति शिरस्येव तत्प्राणा धीयन्ते ॥ ८ ॥

उक्तार्थमिदम् ॥ ८ ॥

अथेन्द्रस्तोमं प्रशंसति—

अथैष पञ्चदश इन्द्रस्तोम उक्थ्य एतेन वा इन्द्रोऽत्यन्या देवता अभवदत्यन्याः प्रजा भवन्ति य एतदुपयन्ति ॥ ९ ॥

अथ स्वरसामानन्तरं पञ्चदशस्तोमक उक्थ्यसंस्थ इन्द्रस्तोमः कर्त्तव्यः ॥ ९ ॥

अथ द्वादशाहस्य दशाहानि स्तोमसंस्थाविकृतीनि प्रशंसति—

अथैतानि द्वादशाहस्य दशाहानि व्यूढा अग्निष्टोमास्त्रिवृतो मध्यतः पाप्मनो मुच्यन्त एष वाव देवतल्पो

देवतल्पमेव तदारोहन्ति तल्प्या भवन्ति प्रवसीयसस्त-ल्पमाप्नुवन्ति ॥ १० ॥

अग्निष्टोमत्वात् त्रिवृत्त्वाच्च दशाहानि तेजोरूपाणि । अत एतदनु-ष्ठानात्तमोरूपात् पाप्मनो मुच्यन्त इत्युक्तम् । किञ्च एष दशरात्रः समग्रान्तर्वर्त्तित्वात्तल्प इत्युपचर्य्यते । यथा लौकिकस्तल्पो गृहस्याऽ-न्तः । यद्वा देवानां निवासयोग्यत्वात्तल्पत्वम् । अतस्तदेतदनुष्ठातारो-ऽपि देवतल्पमेव रोहन्ति । अस्त्वेवम्, किन्तत इति ? आह—तल्प्या तल्पार्हा भवन्ति । तस्यैव विवरणमुत्तरं वाक्यम् ॥ १० ॥

अथोद्भिद्बलभिदौ स्तूयेते—

अथैतावुद्भिद्बलभिदावेताभ्यां वै बृहस्पतिर्देवेभ्यः प-शूनुदसृजत्पशूनेवैताभ्यामुत्सृजन्ते ॥ ११ ॥

उद्भिद्यते गवादिलक्षणं फलमिति उद्भित् । तथा बलेन भिद्यते उत्पाद्यते फलमिति बलभित् । अथ वा बलनामानमसुरं देवगवार्थं बृह स्पतिः भिन्नवाननेनेति उद्भिद्बलभिदेतावेकाहौ । शिष्टं स्पष्टम् ॥ ११ ॥

अथ गोआयुषी प्रशंसति—

अथैते गो आयुषी मिथुनौ स्तोमावुपयन्ति प्रजात्यै ॥

गौस्स्त्री आयुः पुमान् इत्यनयोर्मिथुनत्वम् ॥ १२ ॥

अथ छन्दोमदशाहः स्तूयते—

अथैष छन्दोमदशाहश्छन्दसां दोहोऽर्वाञ्चि छन्दांꣳ-स्युपयन्ति तस्मादर्वाञ्चो भुञ्जन्तः पशव उपतिष्ठन्ते ॥१३॥

छन्दोमः छन्दोभिर्निर्मितो दशाहः । एष एव छन्दसां दोहः । एवं सति अष्टाचत्वारिंशं जागतं प्रथममहरित्यादिक्रमेण छन्दसामवरोहे-णोपयन्ति सत्रिणः । तस्माद्भुञ्जन्तः पय आदिना पालयन्तो गवादि-पशवः, अर्वाञ्चोऽधोमुखाः सायं स्वामिगृहमुपतिष्ठन्ते ॥ १३ ॥

अथ महाव्रतं प्रशंसति—

अथैद्व्रतमन्नं वै व्रतं न वा अन्यत्र मुखादन्नं धिनो-ति यदुपरिष्टाद्व्रतमुपयन्ति मुखत एव तदन्नाद्यं धीयते तस्मान्मुख सदन्नं धिनोति ॥ १४ ॥

गतमिदम् ॥ १४ ॥

अथाऽऽद्यन्ते अहनी प्रशंसति—

**अथैतौ प्रायणीयोदयनीयावतिरात्रौ येनैव प्राणेन प्रयन्ति तमभ्युद्यन्ति ॥ १९ ॥**

एतदपि गतम् । अथाऽऽदित्यानामयनस्य कल्पः—'मध्ये पृष्ठस्य क्लृप्तोऽतिरात्रः क्लृप्तं चतुर्विंशमहराभिप्लविकस्य प्रथमस्याऽह्नः प्र सोमासो विपश्चित' इत्यादिको द्रष्टव्यः ॥ १९ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे पञ्चविंशाध्यायस्य प्रथमः खण्डः ॥

---

## द्वितीयः खण्डः ॥

अथ पुरस्तात् पृष्ठ्याख्यमाङ्गिरसामयनमाह—

**अतिरात्रश्चतुर्विंꣳशं प्रायणीयमहः पृष्ठ्यः षडहश्चत्वारस्त्रिवृतोऽभिप्लवाः षडहाः स मासः स द्वितीयः स तृतीयः स चतुर्थः स पञ्चमस्त्रयस्त्रिवृतोऽभिप्लवाः षडहाः पृष्ठ्यः षडहस्त्रिवृद् बृहस्पतिस्तोमस्त्रयः स्वरसामानो दिवाकीर्त्यमहस्त्रयः स्वरसामानः पञ्चदश इन्द्रस्तोम उक्थ्यः पृष्ठ्यः षडहस्त्रयस्त्रिꣳशारम्भण एकस्त्रिवृदभिप्लवः षडहो द्वादशाहस्य दशाऽहानि व्यूढा अग्निष्टोमास्त्रिवृत उद्भिच्च बलभिच्च द्वे अहनी चत्वारस्त्रिवृतोऽभिप्लवाः षडहाः पृष्ठ्यः षडहः स मासः स द्वितीयः स तृतीयः स चतुर्थो द्वौ त्रिवृतावभिप्लवौ षडहौ पृष्ठ्यः षडह आयुश्च गौश्च द्वे अहनी छन्दोमदशाहश्चतुर्विंꣳशं प्रथममहर्द्वे अष्टाविꣳशे त्रिꣳशं द्वात्रिꣳशꣳ षट्त्रिꣳशश्चत्वारिꣳशश्चतुश्चत्वारिꣳशमष्टाचत्वारिꣳशश्चतुर्विꣳशं महाव्रतश्चाऽतिरात्रश्चाऽङ्गिरसां पुरस्तात् पृष्ठ्यम् ॥ १ ॥**

आद्ये अहनी पूर्ववत् षष्ठमासान्त्ये भवतः । पृष्ठ्यषडहमुखैश्चतुर्भिरभिप्लवषडहैरेको मास इत्येवमादितः पञ्चमासाः स्युः । ते चाऽभिप्लवाः सर्वेऽपि त्रिवृत्स्तोमकाः । षष्ठे मासि त्रयस्त्रिवृदभिप्लवाः पृष्ठ्यः षडहोऽभिजित्स्थानीयको बृहस्पतिस्तोमः, ततस्त्रयः स्वरसामानः, आद्ये अहनी इति षष्ठो मासः । ततो दिवाकीर्त्यमहः पूर्ववदेव सप्तमो मासः, त्रयः स्वरसामान इन्द्रस्तोमश्च तत आवृत्तः पृष्ठ्यः षडहस्त्रिवृदभिप्लव एकः, ततो द्वादशाहस्य दशाहानि व्यूढादीनि पूर्ववद्दशाहाविशेषणानि, तत उद्भिद्वलभिदौ, ततोऽन्त्ये महाव्रतोदयनीये द्वे अहनी इति त्रिंशदहानि । अथाऽष्टमादिचत्वारो मासाश्चतुर्भिरावृत्तैरभिप्लवैरेकेन पृष्ठ्येन चैकैकमासकल्पनया आप्तव्यः । द्वादशस्तु मासः द्वाभ्यां त्रिवृदभिप्लवाभ्यां आवृत्तेनैकेन पृष्ठ्यषडहेन सायुर्गोभिश्छन्दोमदशाहैः पूर्यते । छन्दोमदशाहेषु चतुर्विंशप्रभृतीन्यष्टाचत्वारिंशत्पर्यन्तान्यनुक्रमेणैव । पञ्चविंशं न विद्यते, तत्स्थाने चतुर्विंशम् । तस्माऽन्ततो दशमं भवति । एतत्सत्रमाङ्गिरसां पुरस्तात्पृष्ठ्यमित्युच्यते । प्रथमत एव पृष्ठ्यषडहस्य प्रयोज्यत्वात् ॥ १ ॥

अथाऽस्य फलं सप्ररोचनमाह—

**पुरस्तात्पृष्ठ्येन वा अङ्गिरसः स्वर्गं लोकमाक्रमन्त यत्पुरस्तात्पृष्ठान्युपयन्ति स्वर्गस्य लोकस्याऽऽक्रान्त्यै ॥२॥**

स्पष्टम् ॥ २ ॥

अथ पृष्ठान्यन्नपशुत्वेन प्रशंसति—

**अन्नं वै पृष्ठान्यन्नमेव तन्मुखतो धीयते तस्मान्मुखे सदन्नं धिनोति पशवः पृष्ठानि पशुष्वेव प्रतितिष्ठन्ति॥३॥**

स्पष्टम् ॥ ३ ॥

अथ छन्दोमदशाहपर्यन्तस्याऽहर्वर्द्धनं सम्पाद्य पूर्वसत्रस्याऽऽदित्यानामयनस्याऽर्थवादमतिदिशति—

**यदन्यच्चक्राभ्याᳪं साकंवृद्भ्यां तत्समानमा छन्दोमदशाहात् ॥ ४ ॥**

अत्राऽभिप्लवे पञ्चदशस्याऽभावात् पूर्ववैषम्यात्(१) 'चक्रे वा एते साकंवृतीयत त्रिवृत्पञ्चदशौ स्तोमावि' त्युक्तादन्यत् छन्दोमदशाहपर्यन्तं

१. तां ब्रा. २५. १. ६.

ब्राह्मणमत्राऽपि समानमित्यर्थः । यद्यप्यत्राऽऽयुर्गौरिति क्रमः, तथाऽपि मिथुनत्वार्थवादस्समान एव ॥ ४ ॥

अथ छन्दोमदशाहं प्रशंसति—

**अथैष छन्दोमदशाहश्छन्दसां दोह ऊर्ध्वानि छन्दाᳫंस्युपयन्त्ययनपभ्रᳫंशायैष वाव देवयानः पन्थाः प्र देवयानं पन्थानमाप्नुवन्ति य एतदुपयन्त्यथैतद्व्रतम् ॥५॥**

छन्दसामवरोहक्रमेणाऽनुष्ठाने क्रमेण कस्यचिच्छन्दसोऽपभ्रंशः स्यात् । अतस्तदभावाय भवत्यूर्ध्वमुखच्छन्दसामवाप्तिः । एष एव छन्दोनुक्रमो देवलोकगमनमार्गः देवयजनमार्गः । अथैतद्व्रतमित्यत्र प्रतीकग्रहणं पूर्वोक्तार्थवादानुकर्षणार्थम् ॥ ५ ॥

आद्यन्ते अहनी प्रशंसति—

**अथैतौ प्रायणीयोदयनीयावतिरात्रौ येनैव प्राणेन प्रयन्ति तमभ्युद्यन्ति ॥ ६ ॥**

गतमिदम् । अस्याऽयनस्य 'पुरस्तात् पृष्ठ्यस्य क्लृप्तोऽतिरात्रः क्लृप्तश्चतुर्विंशमहः क्लृप्तः पृष्ठ्यः क्लृप्तं प्रथममहराभिप्लवस्य यथा मध्ये पृष्ठ्य' इत्यादिकल्पो द्रष्टव्यः ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे पञ्चविंशाध्यायस्य द्वितीयः खण्डः ॥

## तृतीयः खण्डः ॥

अथ दृतिवातवतोरयनमाह—

**अतिरात्रस्त्रिवृता मासं पञ्चदशेन मासᳫं सप्तदशेन मासमेकविᳫंशेन मासं त्रिणवेन मासं त्रयस्त्रिᳫंशेन मासं महाव्रतं त्रयस्त्रिᳫंशेन मासं त्रिणवेन मासमेकविᳫंशेन मासᳫं सप्तदशेन मासं पञ्चदशेन मासं त्रिवृता मासमतिरात्रः ॥ १ ॥**

प्रथमं प्रायणीयोऽतिरात्रः । ततस्त्रिवृदादित्रयस्त्रिंशान्ताः आदितः

षण्मासा आसव्याः। विषुवतः स्थाने महाव्रतं भवति। त एव त्रिवृदादिमासा उत्तरस्मिन् पक्षसि द्वादशादिसप्तमासान्ताः षण्मासाः स्युः। तत उदयनीयमहः। एतानि त्रिषष्ट्युत्तरशतत्रयमहानि स्युः। अधिकयोर्द्वयोरह्नोर्व्यवस्थाविषये सूत्रकारः—(१)'द्दतिवातवतोरयने द्वावेकोनौ मासौ सुनुयुस्त्रिवृताविति गौतमः, त्रयस्त्रिंशाविति धानञ्जय्यः, उभौ वा त्रिंशिनौ स्यातां यथैतद्ब्राह्मणमि' ति। 'त्रयस्त्रिंशावेकोनावि' ति कल्पकारस्य मतम्॥ १॥

अथाऽस्य फलं सप्ररोचनमाह—

**ऋतवो न प्रत्यतिष्ठꣳस्त एतेन प्रत्यतिष्ठन् प्रतिष्ठाकामा उपेयुः प्रत्येव तिष्ठन्ति षड्वा ऋतव ऋतुष्वेवैतेन प्रतितिष्ठन्ति ॥ २ ॥**

स्पष्टम्। ऋतुषु प्रतिष्ठानं नाम तत्तदृतूचितभोगास्पदत्वम्॥ २॥

अथ मध्यमं महाव्रतमहः प्रशंसति—

**यद्व्रतं मध्यत उपयन्ति मध्यत एव तदन्नाद्यं धीयते तस्मान्मध्ये सदन्नं धिनोति ॥ ३ ॥**

गतमेतत्॥ ३॥

अथ कृत्स्नमयनं पक्षित्वेन प्रशंसति—

**पक्षि वा एतत्सत्त्रायणं यं कामं कामयन्ते तमेतेनाऽभ्यश्नुवते यत्र यत्र हि पक्षी कामयते तत्तदभ्यश्नुते॥४॥**

पूर्वोत्तरमासषट्करूपपक्षद्वययुक्तमेतत्सत्त्रायणम्। अस्त्वेवं किन्तत इति? आह—यं कामं कामयन्त इत्यादिना। अथ सर्वकामसाधनमेवोपपादयति—यत्र यत्र हि पक्षी इत्यादिना। यद्वा पक्षि वेत्यादि महाव्रतस्यैव स्तुतिः। तच्च मध्यमाहस्त्वेन प्रधानत्वात् पक्ष्यपि भवति। अत एव सत्रनिर्वाहकत्वात् सत्त्रायणमित्युच्यते॥ ४॥

आद्यन्तयोर्मासयोर्यत् त्रिवृत्त्वं तत् प्रशंसति—

**त्रिवृता प्रयन्ति त्रिवृतोद्यन्ति प्राणा वै त्रिवृत् स्तोमानां प्राणैरेव प्रयन्ति प्राणेषु प्रतितिष्ठन्ति ॥ ५ ॥**

त्रिवृतः प्राणत्वमसकृदुक्तम्॥ ५॥

---

१. लाट्या. श्रौ. १०. १०. ७–९.

अथैतदयनं कर्तृद्वारा प्रशंसति--

एतद्वै दृतिवातवन्तौ खाण्डव उपेतो विषुवति वातवानुत्तिष्ठति समापयति दृतिस्तस्मात्तनीयाꣳसो वातवता भूयाꣳसो दार्त्तेयाः ॥ ६ ॥

एतत्सत्रायणं दृतिश्च वातवांश्चेत्युभौ यजमानौ खाण्डवे वने उपेतः अन्वतिष्ठातामित्यर्थः । भूतकाले व्यत्ययेन वर्त्तमानप्रत्ययः । एवमुत्तरयोरव्याख्यातयोर्द्रष्टव्यम् । तयोरनुष्ठानप्रयुक्तं किञ्चित् फलवैषम्यं वक्तुमाह—वातवान् विषुवति महाव्रते सम्पूर्णे उत्तिष्ठति उदतिष्ठत् सत्रं समापितवान् । दृतिस्तु द्वादशाऽपि मासानास्थाय समापयत् । यस्मादेवं तस्माद्वातवता वातवतो वंश्यास्तनीयांसः अत्यर्थं तनवः कृशा अभवन् । दार्त्तेया इतरवंश्यास्तु भूयांसो बहुतराः प्रवृद्धा अभवन् अत उभयस्याऽनुष्ठानसद्भावेऽपि कृत्स्नानुष्ठानं प्रशस्तफलवदित्युक्तं भवति । अत्र 'विधृतिभिः क्लृप्तं दृतिवातवतोरयनमात्रिणवेभ्यस्त्रिवृद्भ्य उद्धरत्युक्थानि पञ्चदशेभ्यः षोडशिनमि'त्यादिकः कल्पो द्रष्टव्यः ॥६॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे पञ्चविंशाध्यायस्य तृतीयः खण्डः ॥

## चतुर्थः खण्डः ॥

अथ सर्वर्द्धिसाधनं कुण्डपायिनामयनमाह—

मासं दीक्षिता भवन्ति ते मासि सोमं क्रीणन्ति तेषां द्वादशोपसद उपसद्भिश्चरित्वा सोममुपनह्य मासमग्निहोत्रं जुह्वति मासं दर्शपूर्णमासाभ्यां यजन्ते मासं वैश्वदेवेन मासं वरुणप्रघासैर्म्मासꣳ साकमेधैर्म्मासꣳ शुनासीर्य्येण त्रिवृता मासꣳ पञ्चदशेन मासꣳ सप्तदशेन मासमेकविꣳशेन मासं त्रिणवेन मासमष्टादश

**अथ त्रिंशान्यहानि द्वादशाऽहस्य दशाहानि महाव्रतञ्चाऽतिरात्रश्च ॥ १ ॥**

मासं माससंपूर्त्तैर्दीक्षिता भवन्ति दीक्षितधर्म्माननुतिष्ठेयुः । त एव मासि दीक्षासम्बन्धिनि सम्पूर्णे प्रायणीयायां कृतायां प्रथमप्रवर्ग्योपसद्दिवसे सोमं क्रीणन्ति क्रीणीयुः । तेषां द्वादशोपसदो भवन्ति । ततः कृतोपसद्दहःपूर्वक्रीतं सोममुपनह्य उपरि देशे संरक्ष्य । ततः मासमग्निहोत्रमित्यारभ्य त्रिणवेन मासमित्यन्तं निगदसिद्धम् । आदितः षण्मासा हविर्य्यज्ञका इतरेतु सौमिकाः । द्वादशस्य मासस्य त्रयस्त्रिंशकान्यष्टादशान्यहानि, ततो द्वादशाहस्य दशाहानि, ततो महाव्रतं चाऽतिरात्रश्चेति त्रिंशदहानीति द्वादशमासाः ॥ १ ॥

अथ क्रमेणाऽनुष्ठेयमग्निहोत्रादिचतुष्टयं प्रशंसति—

**अग्निहोत्रं दशहोता दर्शपूर्णमासौ चतुर्होता चातुर्म्मास्यानि पञ्चहोता सौम्योऽध्वरः सप्तहोता ॥ २ ॥**

यदेतत् प्रथमे मास्यनुष्ठेयमग्निहोत्रमस्ति तच्च(१)'चित्तिस्स्रुगि'त्यनुवाकोक्तो दशहोता । तेन यो होमोऽस्ति सोऽनेन कृतो भवतीत्यर्थः । एवमुत्तरवाक्येष्वपि द्रष्टव्यम् । दर्शपूर्णमासौ द्वितीयमास्यनुष्ठेयावेव चतुर्होता । तथा मासचतुष्टये क्रमेणाऽनुष्ठेयानि चातुर्मास्यान्येव पञ्चहोता । यः सौम्योऽध्वरः उत्तरमासषट्कसम्बन्धी स एव सप्तहोता । अग्निहोत्रादिचतुष्टयमध्वर्य्युब्राह्मणे स्पष्टमाम्नातम्-(२)'पृथिवी होता' (३)'अग्निर्होता'(४)'महाहविर्होते'ति। तानि क्रमेण चतुर्होतृपञ्चहोतृसप्तहोतॄणां प्रतीकाः । दशहोतुः प्रतीकस्तु प्रदर्शित एव ॥ २ ॥

अथैतेषां फलमाह—

**एते वाव सर्वेण यज्ञेन यजन्ते य एतदुपयन्ति सर्वे एव भवन्ति ॥ ३ ॥**

ये सत्रिण एतदुपयन्ति एते वाव एते एव सर्वे अग्निहोत्रादिभेदेन प्रकृतिविकृत्यात्मना च यो यज्ञोऽस्ति तेन कृत्स्नेनाऽभीष्टा भवन्ति । अत एव पशुपुत्रधनस्वर्गादिफलैः समृद्धा भवन्ति ॥ ३ ॥

---

१. तै. आ. ३. १. १.
२. तै. आ. ३. २. १.
३. तै. आ. ३. ३. १.
४. तै आ. ३. ५. १.

अथैषां शेषभक्षणे कञ्चिद्विशेषमाह—

**ते सर्वे कुण्डपायिनोऽत्सरुकैश्चमसैर्भक्षयन्ति ॥ ४ ॥**

सर्वे सत्रिणः कुण्डैः पातारो भवन्ति । अत एवाऽस्यैतन्नाम सम्पन्नम् । अत्सरुकैः अत्सरुर्नाम दण्डरहितो मध्येऽत्यन्तमवनतः स्थूलः पात्रविशेषः । तादृशैश्चमसैर्भक्षयन्ति हुताशिष्टसोमम् ॥ ४ ॥

अत्राऽऽर्त्विज्यसमानतां विधत्ते—

**यो होता सोऽध्वर्युः स पोता य उद्गाता स नेष्टा सोऽच्छावाको यो मैत्रावरुणः स ब्रह्मा स प्रतिहर्त्ता यः प्रस्तोता स ब्राह्मणाच्छंसी स ग्रावस्तुत् यः प्रतिप्रस्थाता सोऽग्नीत्स उन्नेता गृहपतिर्गृहपतिः सुब्रह्मण्यस्सुब्रह्मण्यः ॥ ५ ॥**

सुगमम् ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे पञ्चविंशाध्यायस्य चतुर्थः खण्डः ॥

---

## पञ्चमः खण्डः ॥

अथ सर्वसमृद्धिसाधनं तपाश्चितामयनं सत्रमाह—

**संवत्सरं दीक्षिता भवन्ति संवत्सरमुपसद्भिश्चरन्ति संवत्सरं प्रसुतो भवति ॥ १ ॥**

संवत्सरं प्रसुतो भवति संवत्सरं प्रसुनुयुरित्यर्थः । सिद्धमन्यत् । अत्राऽह्नां विशेषकल्पना सत्रप्रकृतिभूतगवामयनाहःकॢप्तिवत् । यद्वा सर्वप्रकृतिभूतज्योतिष्टोमेनाऽह्नां कॢप्तिर्द्रष्टव्या । तथा चाऽऽर्षेयकल्पः—'गमवायनेन कृतं तपाश्चितामयनं ज्योतिष्टोमेन वा विकॢप्तेने'ति ॥ १ ॥

**तत्संवत्सरं दीक्षिता भवन्ति तप एव तेन तप्यन्ते यत्संवत्सरमुपसद्भिश्चरन्ति पुनत एव तेन यत्संवत्सरं**

**प्रसुतो भवति देवलोकमेव तेनाऽपि यन्ति ॥ २ ॥**

दीक्षायां पयोव्रतादिनियमसद्भावात् दीक्षासंवत्सरेण तप एव तप्तं भवति । ततस्संवत्सरोपसदनुष्ठानेन देवत्वप्राप्तये सत्कृता भवन्त्येव । ततस्संवत्सरलोमयागेन पूताः देवलोकं देवनिवासस्थानं प्राप्नुवन्ति ॥ २ ॥

अस्य फलं सप्ररोचनमाह—

**एतेन वै तपश्चितो देवाः सर्व्वामृद्धिमार्ध्नुवन् सर्वामृद्धिमृध्नुवन्ति य एतदुपयन्ति ॥ ३ ॥**

स्पष्टोऽर्थः ॥ ३ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे पञ्चविंशाध्यायस्य पञ्चमः खण्डः ॥

---

## षष्ठः खण्डः ॥

अथ सर्वर्द्धिसाधनं प्रजापतेर्द्वादशसंवत्सराख्यं सत्रमाह—

**त्रयस्त्रिवृतः संवत्सरास्त्रयः पञ्चदशास्त्रयः सप्तदशास्त्रय एकविंशाः प्रजापतेर्द्वादशसंवत्सरम् ॥ १ ॥**

सुज्ञानमिदम् ॥ १ ॥

अथाऽस्य फलं सप्ररोचनमाह—

**एतेन वै प्रजापतिः सर्वस्य प्रसवमगच्छत्सर्वस्य प्रसवं गच्छन्ति य एतदुपयन्ति ॥ २ ॥**

सर्वस्य प्रसवं प्रेरणम् । तत्सर्वसमृद्धस्यैव नाऽन्यस्येति सर्वर्द्धिकामा अत्राऽधिकारिणः ॥ २ ॥

अथ विहितसंवत्सरत्रयचतुष्टयं क्रमेण प्रशंसति—

**यत् त्रयस्त्रिवृतः संवत्सरा भवन्ति तेजो ब्राह्मवर्चसं त्रिवृत्तेज एव ब्रह्मवर्चसमवरुन्धते यत् त्रयः पञ्चदशा ओजो वीर्यं पञ्चदश ओज एव वीर्यमवरुन्धते**

यत् त्रयः सप्तदशा अन्नं वै सप्तदशोऽन्नाद्यमेवाऽवरुन्धते यत् त्रय एकविंशाः प्रतिष्ठा वा एकविंशोऽन्तत एव यज्ञस्य प्रतितिष्ठन्ति ॥ ३ ॥

अग्निना सह त्रिवृतः प्रजापतिमुखादुत्पन्नत्वात् तस्य च गायत्रीसंबन्धाद्गायत्र्या ब्रह्मवर्चससाधनत्वाद् ब्रह्मवर्चसं तेज एव त्रिवृत्। अतस्तदनुष्ठातारोऽपि तदेवाऽवरुन्धते। एवं पञ्चदशादिष्वपि द्रष्टव्यम् ॥ ३ ॥

अथाऽस्य प्रयोक्तृप्रशंसाद्वारेण सर्वासिद्धिलक्षणं फलं दर्शयति--

एतेन वै नैमिशीयाः सर्वामृद्धिमार्ध्नुवन् सर्वामृद्धिमृध्नुवन्ति य एतदुपयन्ति ॥ ४ ॥

नैमिशीया नैमिशारण्यवासिनः ॥ ४ ॥

अथाऽस्य सत्रस्य नववार्षिकप्रयोगोऽपि विद्यत इत्याह--

ते ह सप्तदशेभ्य एवाऽध्युत्तस्थुस्त उ होचुर्यो नः प्रजायामृध्यातै स एतत्सत्रꣳ समापयादिति तदेतत्समीप्सन्तो ब्राह्मणास्सत्रमासते ॥ ५ ॥

ते नैमिशीयाः सप्तदशेभ्य एव सप्तदशस्तोमकेभ्यस्त्रिभ्यः संवत्सरेभ्यः सप्तदशं समाप्यैवाऽध्युत्तस्थुः सत्रादुत्थिता आसन्। त उ ह त एते खलु तदेवमूचुः--यो दीक्षितो नोऽस्माकं प्रजायां पुत्रपौत्रादिलक्षणायां ऋध्यातै यज्ञाङ्गैः समृद्धस्स्यात्, स एतत् सत्रं एकविंशवर्षत्रयमप्यननुष्ठाय समापयेदिति। एतावताऽस्य नवसंवत्सरानुष्ठानं विद्यते। तथाऽपि साधनसमृद्धावप्यनापदि सप्तदशेभ्य उत्थापनं कुर्यादित्युक्तं भवति। यस्माद्यो नः प्रजायामृध्याता इति नैमिशीयैरुक्तं तस्मादित्यर्थः। तत्सत्रं समीप्सन्तः समापयितुमिच्छन्तो ब्राह्मणा द्वादशसंवत्सरमेव सत्रमासते ॥ ५ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे पञ्चविंशाध्यायस्य षष्ठः खण्डः ॥

## सप्तमः खण्डः ॥

अथ सर्वर्द्धिसाधनं षट्त्रिंशत्संवत्सराख्यं शाक्त्यानां सत्रमाह—

नव त्रिवृतः संवत्सरा नव पञ्चदशा नव सप्तदशा नवैकविंꣳशाः शाक्त्यानाꣳ षट्त्रिंꣳशत्सम्वत्सरम् ॥

शाक्त्या शक्तिगोत्रोत्पन्ना ऋषयः ॥ १ ॥

अथाऽस्याऽनुष्ठाने किञ्चिद्विशेषसमृद्धिसाधनं दर्शयति—

एतेन वै गौरीवितिः शाक्त्यस्तरसपुरोडाशो यक्ष्वाऽस्याꣳ सर्वामृद्धिमार्ध्नोत् सर्वामृद्धिमृध्नुवन्ति य एतदुपयन्ति ॥ २ ॥

गौरीवितिर्नाम ऋषिः। तरसं मांसं तदेव सवनीयः पुरोडाशो यस्याऽसौ तरसपुरोडाशः। यक्ष्वावती नाम नदी। सिद्धमन्यत् ॥ २ ॥

अथैतत्संवत्सरगतसंख्याद्वारा प्रशंसति—

बृहती वा एतत्सत्रायणꣳ स्वाराज्यं छन्दसां बृहती प्र स्वाराज्यमाप्नुवन्ति य एतदुपयन्ति ॥ ३ ॥

सत्रञ्च तदयनञ्च सत्रायणम्। एतत् सत्रायणं बृहती वै। बृहत्यपि षट्त्रिंशदक्षरा, अस्याऽपि संवत्सरगता षट्त्रिंꣳशत्संख्याऽस्ति। अतस्तद्द्वारा एतत् बृहती। अस्त्वेवम्, किन्ततः इति? अत आह—बृहती छन्दसां मध्ये स्वाराज्यमित्युक्तम्। अत एतदनुष्ठातारोऽपि स्वाराज्यमाप्नुवन्ति ॥ ३ ॥

अथैतद्बहुपुत्रसाधनत्वेन प्रशंसति—

तदेतच्छाक्त्यानां दशवीरमेषां दश वीरा जायन्ते य एतदुपयन्ति ॥ ४ ॥

तदेतदुक्तं सत्रं शाक्त्यानां दशवीरं वीरयन्त्यमित्रानिति वीराः पुत्रास्तेषां दशसंख्यानां साधकम्। अतो ये दीक्षिता एतदुपयन्ति तेषामपि दश वीराः पुत्रा जायन्ते ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे पञ्चविंशाध्यायस्य सप्तमः खण्डः ॥



## अष्टमः खण्डः ॥

अथ स्वर्गसाधनं साध्यानां शतसंवत्सरं सत्रमाह—

पञ्चविꣳशतिस्त्रिवृतः संवत्सराः पञ्चविꣳशतिः पञ्चदशाः पञ्चविꣳशतिः सप्तदशाः पञ्चविꣳशतिरेकविꣳशाः साध्यानाꣳ शतसंवत्सरम् ॥ १ ॥

स्पष्टम् ॥ १ ॥

अथैतस्य प्रयोक्तृप्रशंसनद्वारा स्वर्गसाधनत्वमाह—

साध्या वै नाम देवेभ्यो देवाः पूर्व आसꣳस्त एतꣳसत्रायणमुपायꣳस्तेनाऽऽर्ध्नुवꣳस्ते सगवः सपुरुषाः सर्व एव सह स्वर्गं लोकमायन्नेवं वाव ते सह स्वर्गं लोकं यन्ति य एतदुपयन्ति ॥ २ ॥

पूर्वं साध्याख्याः देवाः वस्वादयो देवेभ्यः इदानीं ज्योतिष्टोमादिककर्म कृत्वा देवतात्वं प्राप्नुवद्भ्यः पूर्वं आसन् । ते स्वदेवत्वप्राप्त्यर्थमेतच्छतसंवत्सरं सत्रायणमुपेत्य समृद्धा अभवन् । इह लोकात्पश्चात्तैः सपुरुषाः सपरिचारकाः सर्व एव कार्त्स्न्येन स्वर्गं लोकमायन् । एवमेवेदानीमपि ते स्वर्गमित्यादि स्पष्टम् । अत एव साध्यानां सम्बन्धात् साध्यानां शतसंवत्सरमिति नाम सम्पन्नम् ॥ २ ॥

अथैतच्छतसंवत्सरगतसंख्याद्वारेण प्रशंसति—

आयुर्वा एतत्सत्रायणꣳशतायुः पुरुषो यावदेवाऽऽयुस्तदवरुन्धते न ह्यत्यायुषꣳसत्रमस्ति ॥ ३ ॥

यतः शतायुः पुरुषः, अतस्तत्संख्याकसंवत्सरसद्भावादेतत्सत्रायणमायुरित्युच्यते । अतो यावदेवाऽऽयुः पुरुषस्य प्रजापतिना शतमिति क्लृप्तं तत्कार्त्स्न्येनाऽवरुन्धते, न मध्ये म्रियते । न ह्यत्यायुषं आयुरतिक्रान्तं आयुषो मध्ये मरणसाधनं सत्रं नाऽस्ति । अतः शतमायूंषि पुरुषस्याऽपेक्षितव्यानि ॥ ३ ॥

उक्तार्थे ऋचमुदाहरति—

तदभ्यनूक्ता—

तानीदहानि बहुलान्यासन्या प्राचीनमुदिता सूर्यस्य ।

यतः परि जार इवाऽऽचरन्त्युषा ददृशे न पुनर्यतीवेति ॥

अस्यामृचि बह्वपेक्षितमित्येतावदेव निदर्शनं क्रियते-उषसः स्तुतिरेषा। तानीत् तानि तेजांस्येवाऽहानि बहुलान्यासन् अह्नामपेक्षितत्वात् आसन्नित्याशीरर्थे। अतोऽस्माकं सन्त्वित्यर्थः। तानीत्युक्तं कानीत्याह—या यानि तेजांसि प्राचीनं पूर्वस्मिन् काले सूर्यस्य उदिता उदिते उदये सति उत्पन्नानि। यतः तपनपरिस्पन्दजनिततेजस्समूह एवैकमहः खलु। अतस्तथाविधानि बहूनि सन्त्वित्यभिप्रायः। अतो येभ्यस्तेजोभ्यस्तदर्थं जारे पत्यौ परित आचरन्ती पत्युः समीपं सञ्चरन्ती नारी योषा जारे रात्रेर्जरयितरि आदित्ये पर्य्याचरन्ती सती ददृशे सर्वैः। किन्तु न पुनर्यतीव पुरुषान्तरं प्रति गच्छन्ती पुंश्चलीव न ददृशे तानीति सम्बन्धः ॥ ४ ॥

अथैतत् ज्योतिष्टोमस्य सादृश्येन प्रशंसति—

ज्योतिष्टोमस्याऽयनेन यन्ति ज्योतिरेव भवन्ति ॥५॥

ज्योतिष्टोमस्य यदयनं प्रायणं त्रिवृदादिस्तोमचतुष्टयरूपमस्ति तेनैवेतं यन्ति। अतस्तेऽपि ज्योतिरेव तेजोरूपा एव भवन्ति ॥ ५ ॥

अथैतदन्त्यद्वारेण प्रशंसति—

एकविंशोऽन्ततः स्तोमानां भवति प्रतिष्ठा वा एकविंशोऽन्तत एव यज्ञस्य प्रतितिष्ठन्ति ॥ ६ ॥

स्तोमानां त्रिवृदादीनां मध्ये अन्ततः समान्ते एकविंशस्तोमो भवति। सिद्धमन्यत् ॥ ६ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे पञ्चविंशाध्यायस्याऽष्टमः खण्डः ॥



## नवमः खण्डः ॥

अथाऽग्नेः सहस्रसाव्यं सहस्रात्रं सर्वाद्याद्यफलसाधनं सत्रमाह-

**अतिरात्रः सहस्रमहान्यतिरात्रोऽग्नेः सहस्रसाव्यम् ॥ १ ॥**

सहस्राण्यहानि कात्स्न्र्येन सूयते अभिषूयते सोम इति सहस्रसाव्यम्। एतदग्नेः सम्बन्धि सहस्रसाव्यं सत्रम्। अस्याऽऽदावन्ते चाऽतिरात्रौ भवत इति केचित्। अस्यैवाऽऽद्यन्ते अहनी अतिरात्रावित्यपरे। तथा च सूत्रम्--(१)'सहस्रसाव्ये सहातिरात्राभ्यां सहस्रमहनीत्याचार्याः सहस्रसाव्यमिति ह्याहेत्यन्तरेणेति शौचिवृक्षिरि'ति ॥ १ ॥

अथाऽस्य फलं सप्ररोचनमाह—

**एतेन वा अग्निः सर्वस्य प्रसवमगच्छत् सर्वस्य प्रसवं गच्छन्ति य एतदुपयन्ति ॥ २ ॥**

स्पष्टम् ॥ २ ॥

अथाऽस्य कर्तृद्वारा फलान्तरं दर्शयति—

**अग्नेर्वै सर्वमाद्यꣳ सर्वमेषामाद्यं भवति य एतदुपयन्ति ॥ ३ ॥**

एतत्पूर्वमनुष्ठितवतोऽग्नेः खलु एतदनुष्ठानसामर्थ्यात् सर्वमपि आद्यं अदनीयमासीत्। सर्वमित्यादि स्पष्टम् ॥ ३ ॥

अस्याऽहर्गतसंख्याद्वारेणैतत्प्रशंसति—

**अथ यत् सहस्रसाव्यं भवति सहस्राक्षरा वै परमा विराट् परमायामेव विराजि प्रतितिष्ठन्ति ॥ ४ ॥**

परमा विराट् संख्यानां मध्ये शतं हि परम्। अतस्तावत्संख्या वै विराट् परमेत्युच्यते 'सहस्राक्षरा विराडि'ति श्रुतेः। एकैकस्या दशसंख्यात्वात् सहस्राक्षरा भवति। सिद्धमन्यत् ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे पञ्चविंशाध्यायस्य नवमः खण्डः ॥

---

१. लाट्या. श्रौ. १०, १४. ११.

## दशमः खण्डः ॥

अथ त्रीणि सारस्वतानि सत्राणि—मित्रावरुणयोः प्रथममिन्द्राग्न्योर्द्वितीयमर्यम्णस्तृतीयम् । तत्र मित्रावरुणयोः प्रथमं सत्रमाह—

**सरस्वत्या विनशने दीक्षन्ते ॥ १ ॥**

सरस्वती नाम नदी प्रत्यक्स्रोताः प्रवहति । तस्याः प्रागपरभागौ सर्वलोकप्रत्यक्षौ । मध्यमस्तु भागो भूम्यामन्तर्निमग्नः प्रवहति । नाऽसौ केनाचिद्दृश्यते । तद्विनशनमित्युच्यते । तस्योपक्रमे दक्षिणे तीरे दीक्षन्ते ॥ १ ॥

सत्रस्य सारस्वतीयस्य दीक्षोपसदोरियत्तामाह—

**तेषां द्वादश दीक्षा द्वादशोपसदः ॥ २ ॥**

अथ कस्मिन् दिवसे दीक्षारम्भ इति जिज्ञासायां सूत्रकारो मतभेदमाह-(१) 'षष्ठ्यां पक्षस्येति गौतमः, अमावास्यायामतिरात्रस्स्यादि' ति । पूर्वपक्षस्य षष्ठ्यामित्यर्थः । तत्रोपपत्तिं स्वपक्षं चाऽऽह—'एवं स्वस्थानमामावास्यं प्रयुज्यते' इति । अस्याऽयमर्थः—एवं सति शुक्लपक्षस्य प्रथमायां साम्नाय्यब्राह्मणविहितं प्रयुक्तं स्यात् । पक्षान्तरमाह—(२)'सप्तम्यां वा दीक्षित्वाऽमावास्याया यजनीयेऽहन्यतिरात्रः स्यादिति धानञ्जय्यः, समाधय उत्तराभ्यां सुत्याभ्यामि'ति । अस्याऽयमर्थः—अमावास्यायामुत्तरेद्युर्यजनीये शुक्लप्रथमायामेवाऽतिरात्रः । कुतः ? उत्तराभ्यां गोष्टोमायुष्टोमाभ्यां ब्राह्मणोक्ताभ्यां साम्यासिध्यर्थं, प्रथमायामेव हि तयोरनुष्ठानमिति ।

नन्वेवं सति द्वितीयायां करणात् साम्नाय्यस्य स्थानभ्रंशः स्यादित्याशंक्य स्वयमेव परिहरति-(३)'स्वस्थानं चैवाऽऽमावास्यं प्रयुज्यत' इति । अतः कारणात् न साम्नाय्यस्याऽपभ्रंश इत्यर्थः । तदपि कुत इति?तत्राऽऽह (४)'पूर्वपक्षो ह्यामावास्यस्थानमि'ति । अयमभिप्रायः—पूर्वपक्षो हि कात्स्न्येन साम्नाय्यस्य स्थानं, न केवलं प्रथमैवेति । अथ दीक्षोपसदोर्मध्ये प्रयोगक्रमः—पूर्वोक्तदीक्षोपक्रमयोरन्यतरं पक्षं परिगृह्य द्वादशदिवसपर्यन्तं दीक्षा । दीक्षान्ते प्रायणीयया प्रचर्य राजानं क्रीत्वोपनह्य निधाय पश्चात् द्वादशोपसद इति ॥ २ ॥

---

१, लाट्या. श्रौ. १०. १५. १, २.
२. लाट्या. श्रौ. १०. १५. ३, ४.
३. लाट्या. श्रौ. १०. १५. ५.
४. लाट्या. श्रौ. १०. १५. ६.

अथोपसदनन्तरमतिरात्रमनुष्ठाय तस्मिन् दिवसे सान्नाय्यार्थं वत्सानपाकृत्य श्वोभूते तेन यष्टव्यमित्याह—

**यदहरतिरात्रो भवति तदहर्वत्सानपाकुर्वन्ति सꣳस्थितेऽतिरात्रे सान्नाय्येन यजन्ते ॥ ३ ॥**

यदहर्यस्मिन्नहनि प्रायणीयोऽतिरात्रो भवति, तस्मिन्नहनि सान्नाय्यार्थं वत्सानपाकुर्य्युः पश्चादस्तमयात् पूर्व्वं स्वकाले दोहयेयुः।दध्यर्थं पुनश्च रात्रौ वत्सानपाकृत्य श्वः संस्थितेऽतिरात्रे इष्ट्यर्थं प्रक्रम्य पात्रासादनप्रोक्षणानन्तरं प्रातर्दोहं दोहयेयुरित्यर्थः । प्रकृतौ तु दर्शे पुरोडाशसद्भावात् कपालोपधानानन्तरं प्रातर्दोहः। अत्र द्राह्यायणः—(१)'पुरा रात्रेः सायं दोहं दोहयेरन् संस्थितेऽतिरात्रे प्रातर्दोहमि'ति । अतिरात्रसमाप्त्यनन्तरं तत्रैव देशे सान्नाय्येन यजेरन् ॥ ३ ॥

अथ सान्नाय्यानुष्ठानानन्तरमुपरिभूतानुष्ठानाय गार्हपत्याहवनीययोर्निर्म्माणप्रकारमाह—

**सान्नाय्येनेष्ट्वाऽध्वर्युः शम्यां परास्यति सा यत्र निपतति तद्गार्हपत्यस्ततः षट्त्रिꣳशतं प्रक्रमान् प्रक्रमति तदाहवनीयः ॥ ४ ॥**

सान्नाय्ययागानन्तरं तस्मिन्नेवाऽहनि आहवनीयसमीपेऽध्वर्य्युस्तिष्ठन् प्राङ्मुखः शम्यां परास्यति । स्वशक्त्या सा शम्या यत्र निपतति तत्र गार्हपत्यः कर्त्तव्यः । ततोऽध्वर्य्युः षट्त्रिंशत्प्रक्रमान् प्रक्रामति । तत्राऽऽहवनीय औत्तरवेदिकः। अत्र द्राह्यायणः—(२)'सान्नाय्येनेष्ट्वाऽध्वर्य्युः शम्यां परास्यतीत्याहवनीयन्यन्तेन तिष्ठन् प्राङ्मुखो नित्यमिष्टिसंस्थासु प्रास्येदि'ति । आहवनीयन्यन्तेनेत्यतः पूर्वं ब्राह्मणप्रतीकोपादानम्। न्यन्तेन समीप इत्यर्थः ॥ ४ ॥

अथ सदः प्रभृतीनां निर्म्माणप्रकारमाह—

**चक्रीवत् सदश्चक्रीवद्धविर्द्धानं चक्रीवदाग्नीध्रमुलूखलबुध्नो यूपः प्रकृष्य उपोप्त एव नोपरवान् खनन्ति ॥५॥**

चक्रीवत् चक्री चक्रं 'अक्षुण्णचक्र्यो'रित्यादौ तथा दर्शनात्। सद आदिकं चक्रं चतुःफलकादिनिर्म्मितं कार्य्यमिति केचित् । अपरे तु

१. लाट्यायनश्रौतसूत्रं ( १०. १५. ७. ) द्रष्टव्यम् ।

२. लाट्यायनश्रौतसूत्रं ( १०. १५. ८. ) द्रष्टव्यम् ।

चक्री रथः शकटो वा तदुक्तं सदआदि कार्य्यमिति । प्रथमनिर्म्मितैरेव सदः प्रभृतिभिरत्रोत्थानानुष्ठानादुपर्य्यतिदेशप्रापणाच सदआदिषु पृथक् पृथक् रथं वा शकटं वा सम्पादयेयुरित्यर्थः।अत्राऽनुक्तयोरपि पत्नीशालाशामित्रयोश्चक्रीवतोर्निर्म्माणमाह सूत्रकारः(१)—'तथाऽपि पत्नीशाला स्याच्छामित्रश्चे'ति । एतेषां प्रायणे विशेषं सूत्रकार आह—(२) 'समश्चेद्भूमिभागः स्यादनुपूर्वं विषमे, वेदेः पांसून् हरेयुस्तथोत्तरवेदेर्धिष्ण्येभ्यश्च, तान्निविश्य यथायतनं निवपेयुरि'ति । पुरो देशो यदि समस्स्यात्तदा सद आदिकं यथा संस्थानमेवोपेयुः।विषमदेशश्चेत् तदानीं शकटगमनयोग्येन प्रदेशेन पृष्ठतः पृष्ठतो नयेयुरित्यर्थः । ततस्सदः प्रभृतिषु स्थापितेषु यथाऽऽयतनं पूर्वमानीतान् पांसून् निवपेयुः, न तत्र मन्त्रपूर्वकं वेद्यादेः करणमस्ति । तथा यूपोऽपि उलूखलबुध्नः उलूखलस्य मूलभागो यथा स्थविष्ठस्तथैव कर्त्तव्यः । स एव प्रकृष्य पुरोदेशं प्रति भूम्यामेवाऽऽकर्षणीयः न तूपरि धारणीयः। स च वेदिदेशे उपोप्त एव पांसुभिः परितः प्रच्छाद्य एव, न तु खानयीत । तथा उपरवान् अधिषवणफलकयोरधस्तात् न खनेयुः, किन्तु रेखा एव कुर्य्युः । अत्र सूत्रम्—(३) 'उलूखलबुध्नो यूप इति पृथुबुध्नः स्यात्, प्रकृष्य इति तं पूर्वं कर्षेयुरेवाऽऽनुद्यच्छन्तः, उपोप्त एवेत्यनिखातस्तिष्ठेत् पांसुभिः पर्य्युप्तः, नोपरवान् खनन्तीत्यधिषवणफलकयोरधस्तादुपरवानामश्वभ्रास्तेषां प्रतिषेध आलिखेयुरि'ति ॥ ५ ॥

अथ साम्नाय्येनैव स शुक्लपक्षे समापनीय इत्याह—

ते तमापूर्य्यमाणमामावास्येन यन्ति ॥ ६ ॥

ऐन्द्रेण माहेन्द्रेण वा प्रत्यहं यजमानाः साम्नाय्येन यजन्तीत्यर्थः ॥६॥

अथ तदनन्तरभाविपूर्णिमायामनुष्ठेयं विदधाति—

तेषां पौर्णमास्यां गोष्टोमस्तोमो भवत्युक्थ्यो बृहत्सामा ॥ ७ ॥

तेषां साम्नाय्येन यजतां पौर्णमास्यां गोष्टोमस्तोम उक्थसंस्थो बृहत्सामा बृहत्पृष्ठः ऐकाहिकः कर्त्तव्य इति केचिदाचक्षते । कुतो लक्षणास्वीकरणमिति ? तदाहुः—यस्मात् संस्थिते गोष्टोमे पौर्णमासमिति हि संस्थानान्ताद्विदधाति, गोष्टोमसमाप्तिदिवस एव पौर्णमासकर्त्त-

---

१. लाट्या. श्रौ. १०. १५. ९. २. लाट्या. श्रौ. १०. १५. १०—१३.
३. लाट्या. श्रौ. १०. १५. १४—१७.

व्यतां विदधाति । तच्च आमावास्यं कर्म्म कृत्वाऽऽपूर्य्यमाणपक्षस्यनुष्ठितः स्यात् पौर्णमास्यां तदनुष्ठानमिति । सूत्रकारस्तु पौर्णमास्यामेव गोष्टोमः कर्त्तव्यः । कुतः?[1]'तेषां पौर्णमास्यां गोष्टोमस्तोमो भवती'ति मुख्यपौर्णमासीश्रवणात् । अतः 'संस्थिते गोष्टोम' इति वचनेन पौर्व्वापर्य्यं चोद्यते न तु तस्मिन्नेवाऽहनि कर्त्तव्यतां ब्रूते।तच्च पौर्वापर्यं पौर्णमास्यां गोष्टोमे प्रतिपदि पौर्णमासोपक्रमेऽपि न विरुध्यते । तथाऽऽपूर्य्यमाणमिति वचनमपि भूयोभिप्रायिकमिति । अयं न्यायः 'तेषाममावास्यायामायुष्टोम' इत्यत्राऽपि समानः । अत्र(१) 'तेषां पौर्णमास्यां गोष्टोमस्तोमो भवतीति यजनीयेऽहनि स्यादित्याचार्य्याः' इत्यादिकं सूत्रं द्रष्टव्यम् ॥ ७ ॥

अथ गोष्टोमानन्तरं यदनुष्ठेयं तद्विदधाति--

**सꣳस्थिते गोष्टोमे पौर्णमासं निर्वपन्ते ते तमपक्षीयमाणं पौर्णमासेन यन्ति तेषाममावास्यायामायुष्टोमस्तोमो भवत्युक्थ्यो रथन्तरसामा ॥ ८ ॥**

आयुष्टोमो यथैकाहिकः । सिद्धमन्यत् । अत्रेष्ट्ययनेषु विनाऽन्वाधानं पत्नीसंयाजान्तं तन्त्रम् ॥ ८ ॥

उक्ताहस्साध्यस्याऽस्य सत्रस्य नाम प्रदर्शयति—

**मित्रावरुणयोरयनम् ॥ ९ ॥**

स्पष्टम् ॥ ९ ॥

एतत्सत्रं मित्रावरुणसम्बन्धप्रदर्शनद्वारा प्रशंसति—

**एतेन वै मित्रावरुणाविमान् लोकानाजयतामहोरात्रौ वै मित्रावरुणावहर्मित्रो रात्रिर्वरुणोऽर्द्धमासौ वै मित्रावरुणौ य आपूर्य्यते स मित्रो योऽपक्षीयते स वरुणः स एष मित्रो वरुणे रेतः सिञ्चति ॥ १० ॥**

मित्रः अहरशुक्लपक्षयोरभिमानी देवः । रात्रिकृष्णपक्षयोरभिमानी वरुणः । रेतः स्वसामर्थ्यं सिञ्चति । शिष्टमुक्तप्रायम् ॥ १० ॥

अथ बृहतीप्रशंसनद्वारेण सरस्वत्याः कुब्जत्वं प्रशंसति—

**सरस्वत्या वै देवा आदित्यमस्तभ्नुवन् सा नाऽय-**

---

[1] लाट्या. श्रौ. १०. १६. १.

च्छत् साऽभ्यकल्रीयत तस्मात् सा कुब्जिमतीव तं बृहत्याऽस्तभ्नुवन् साऽयच्छत्तस्माद्बृहती छन्दसां वीर्यवत्तमाऽऽदित्यꣳ हि तयाऽस्तभ्नुवन् ॥ ११ ॥

पूर्वं भूम्यां वर्त्तमानमादित्यं द्युलोके निधाय सरस्वत्या अस्तभ्नुवन् स्तम्भितुमैच्छन्। सा नाऽयच्छत् नियन्तुं नाऽशक्नोत्, किन्तु अभ्यक्लीयत शिथिलाऽभूत् । तस्मात्सा सरस्वती कुब्जिमती कुब्जिका वक्रोपेताऽभूत् । तं बृहत्याऽस्तभ्नुवन्नित्यादि स्पष्टम् ॥ ११ ॥

अथाऽन्यं विशेषमाह—

प्रतीपं यन्ति न ह्यन्वीपमस्ति वै पूर्वेण पक्षसा यन्ति ॥

प्रत्यङ्मुखी खलु सरस्वती प्रवहति । अतस्तद्दक्षिणे कूले प्रतीपं प्रतिलोमं प्राञ्चो यन्ति ॥ १२ ॥

तदेव व्यतिरेकासम्भवेन द्रढयति—

तद्धि प्रत्येकाऽप्येति ॥ १३ ॥

तद्धि पूर्वं पक्षं प्रति तस्याऽन्ते एका नदी सरस्वतीमप्येति ॥ १३ ॥

एकेत्युक्तं सा विशेष्यते—

दृषद्वत्येव ॥ १४ ॥

सरस्वत्या विनशनादारभ्य प्लक्षप्रास्रवणपर्यन्तोऽनुष्ठानदेशः । तस्योर्ध्वप्रदेशेऽपि दृषद्वत्या अप्ययः । तावत्पर्यन्तं पूर्वेण पक्षसा यन्त्यनुतिष्ठन्तो गच्छेयुरित्यर्थः ॥ १४ ॥

तदप्यये कर्त्तव्यमाह—

दृषद्वत्या अप्ययेऽपोनप्त्रीयं चरुं निरुप्याऽथाऽतियन्ति ॥ १५ ॥

तत्सङ्गमप्रदेशे अपोनप्तृदेवताकं चरुं जलातिक्रमदोषपरिहारार्थं निरुप्य पश्चादतिक्रम्य यन्ति । अत्र सूत्रम्(१) 'दृषद्वत्या अप्ययेऽपोनप्त्रीयामिष्टिं निर्वपेरन्यदि सोदका स्यात्, अप्यनुदकायामिति धानञ्जय्यः' इति ॥ १५ ॥

---

१. लाट्या. श्रौ. १०. १७. १, २.

अथ विनशनादारभ्य प्लक्षप्रस्रवणपर्यन्तानुष्ठानं प्रशंसति--

**चतुश्चत्वारिँशदाश्वीनानि सरस्वत्या विनशनात् प्लक्षः प्रास्रवणस्तावदितः स्वर्गो लोकः सरस्वतीसम्मितेनाऽध्वना स्वर्गं लोकं यन्ति ॥ १६ ॥**

सरस्वतीविनशनप्रदेशादारभ्य चतुश्चत्वारिंशदाश्वीनप्रमाणः प्लक्षः प्रास्रवणः । एकोऽश्व एकेनाऽहोरात्रेण यावन्तमध्वानं गच्छति तावानेकाश्वीनः । तथाविधश्चतुश्चत्वारिंशदाश्वीनैर्यावानध्वा भवति तावान् प्लक्षप्रास्रवणो भवति । आश्वीन इत्यस्यैकाहगताश्वीनेत्यर्थः । ननु इतः स्वर्गो लोक इत्युक्तम् । नैष दोषः, सहस्राश्वीनेऽस्याऽन्तर्भावात् ॥

अथाऽस्मात् सत्रादुत्थानं चतुर्विधम् । तत्रैकमुत्थानं विवक्षुराह--

**एतेन वै नमी साप्यो वैदेहो राजाऽञ्जसा स्वर्गं लोकमैदञ्जसाऽऽगामेति तदञ्जस्कीयानामञ्जस्कीयत्वम् ॥१७॥**

पूर्वमतेन सत्रेण साप्यपुत्रो वैदेहो विदेहदेशाधिपतिर्नमी नाम राजा अञ्जसा शीघ्रं स्वर्गं लोकमैत् । तस्माद्वयमपि स्वर्गमञ्जसा आगामेति । तत् तस्मादञ्जस्कीयानां सारस्वतसत्रावयवभूतानामञ्जस्कीयत्वम् ॥ १७ ॥

अथ साप्यस्य सत्रोत्थानविधिं दर्शयति--

**स एतदवभृथमभ्यवैद्य एष उत्तरेण स्थूलार्मँ ह्रदस्तद्धास्य शतं गावः सहस्रँ सम्पेदुः ॥ १८ ॥**

स नमी एतत् एतस्मादवभृथमभ्यवैदागच्छत् । एतच्छब्दोक्तं विवृणोति-य एष प्रसिद्धः सरस्वत्या उत्तरेण स्थूलार्मन्देशमतुलो ह्रदो वर्तते तस्मिन्नित्यर्थः । कुतस्तस्मिन्नेव नमी प्राप्तवानिति ? तदुच्यते-तद्धा तस्मिन् हि शतसंख्याका गावो ब्राह्मणभोजनाद्यर्थमानीताः अपत्योत्पादनद्वारा सहस्रं सम्पेदुः सम्पन्ना अभवन् ॥ १८ ॥

तदुत्थानमाह--

**शते गोष्वृषभमप्यृजन्ति ता यदा सहस्रँ सम्पद्यन्तेऽथोत्थानम् ॥ १९ ॥**

ये शते गोषु शतं वत्सतरीषु गवां प्रजननार्थं वृषभमप्युत्सृजन्ति अतिसृजन्ति । स्पष्टमन्यत् । अत्रोत्थाने सूत्रकारः कश्चिद्विशेषमाह--

(१) 'गोवृषभमत्यृजन्तीति वत्सतरी शते गर्भिणीषु, ता यत्र गव्य-मभयं स्यात्तत्र रक्षेयुः, पुङ्गवैस्तासां भुञ्जीरन् सर्पिषा च, तासु सहस्रं सम्पन्नासु पूर्वपक्षे गामतिरात्रं कृत्वा दत्वैता उत्तिष्ठेयुरि'ति । पुङ्गवै-र्भोगः स्वोपकरणवाहनादिद्वारकः ॥ १९ ॥

अथ द्वितीयमुत्थानं दर्शयति—

**यदा सर्वज्यानिं जीयन्तेऽथोत्थानं यदा गृहपति-र्म्रियतेऽथोत्थानम् ॥ २० ॥**

सर्वज्यानिः सर्वहानिः ॥ २० ॥

अथ तृतीयमुत्थानं दर्शयति—

**यदा प्लक्षं प्रास्रवणमागच्छन्त्यथोत्थानम् ॥ २१ ॥**

यत्र प्लक्षं प्रास्रवणं तद्धि सरस्वत्या उत्पत्तिस्थानम् । तदागत्य पू-र्वोक्तनिमित्ताभावेऽपि सत्रादुत्तिष्ठेयुः ॥ २१ ॥

अस्मिन्नुत्थानेऽनुष्ठेये विशेषमाह—

**प्लक्षं प्रास्रवणमागम्याऽग्नये कामायेष्टिं निर्वपन्ते त-स्यामश्वां च पुरुषीं च धेनुके दत्वा ॥ २२ ॥**

तं समागम्याऽतिरात्रात् पूर्वमग्नये कामायेष्टिः कर्त्तव्येत्येके । अ-तिरात्रात्परमन्ये । पुरुषी दासी । धेनुके नवप्रसूतिके सवत्से इत्यर्थः । तथा च सूत्रम्-'(२)यदा प्लक्षं प्रास्रवणमागच्छन्त्यथोत्थानमिति तथा प्रास्येयुर्यथैनं पूर्वपक्ष आगच्छेयुरिति गौतमः, यदेनात्किञ्चिदुत्थानमा-गच्छेदिति धानञ्जय्यः, प्लक्षं प्रास्रवणमागम्य पुरस्तादतिरात्रस्याऽग्नये कामायेष्टिः स्यादिति शाण्डिल्यः, उपरिष्टादिति धानञ्जय्यः, तस्याम-श्वाञ्च पुरुषीञ्च धेनुके यज्ञोपकरणशेषांश्चाऽभिरूपायाऽन्यस्मै दद्युः, स्वामिनो हि सर्वे सत्रेषु । तेषां प्रतिग्रहं न विद्यते, उक्तोऽवभृथो ब्रा-ह्मणेनाऽपृष्ठशमनीयमेतदि'ति ॥ २२ ॥

अथाऽवभृथे विशेषमाह—

**कारपचवं प्रति यमुनामवभृथमभ्यवयन्ति ॥ २३ ॥**

कारपचवो जनपदविशेषः । तन्मध्ये यमुना गच्छति । तां प्राप्य तत्राऽवभृथं कुर्य्युः, कदाचिदपि सरस्वत्यामवभृथो न कर्त्तव्यः ।

---

१. लाट्या. श्रौ. १०. १७. ३-६. २. लाट्या. श्रौ. १०. १७, १२-१९.

तथा च सूत्रकारः--(१) 'न सकृत्सन सरस्वत्यामवभृथमभ्यवेयुर्हैवय-जनभूता ह्येषां भवति, अविद्यमाने सरस्वत्या एवोद्धारं पार्श्वतस्त्वि' ति । अविद्यमाने सरस्वतीप्रान्ते नद्या ह्यसम्भवे सरस्वत्या एव जल-मुद्धृत्याऽवभृथार्थं, उद्धृत्याऽपि जलं पार्श्वत एवाऽवभृथः कर्त्त-व्यः, न त्वन्यत्रेत्यर्थः ॥ २३ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थ-प्रकाशे पञ्चविंशाध्यायस्य दशमः खण्डः ॥

## एकादशः खण्डः ॥

अथेन्द्राग्न्योरयनाख्यं प्रजापतिभवनसाधनं सारस्वतं द्वितीयं सत्र-माह--

**अतिरात्रस्त्रिवृत्पञ्चदशमिन्द्राग्न्योरयनं गोआयुषी इन्द्रकुक्षी अतिरात्रः ॥ १ ॥**

प्रायणीयोऽतिरात्रः प्रथममहः । अथ त्रिवृत्पञ्चदशौ व्यत्यासेन पक्षद्वयेऽप्यनुष्ठातव्यौ । तदिन्द्राग्न्योरयनम् । अत्र गोआयुषी पक्षयोरन्ते इत्यहां क्रम इति केचित् । अपरे तु पक्षयोस्त्रिवृत्पञ्चदशयोर्व्यत्यासः । त्रिवृत्पक्षान्ते गोष्टोमः पञ्चदशपक्षान्ते आयुष्टोम इत्याहुः । चतुर्विधो-त्थानमत्राऽपि पूर्ववदेव ॥ १ ॥

अथाऽस्य फलं सप्ररोचनमाह--

**एतेन वा इन्द्राग्नी अत्यन्या देवता अभवतामत्य-न्याः प्रजा भवन्ति य एतदुपयन्ति ॥ २ ॥**

सिद्धमिदम् ॥ २ ॥

अथ कर्त्तृद्वारा प्रशंसति--

**इन्द्राग्नी वै देवानामोजिष्ठा ओजिष्ठा भवन्ति य एतदुदयन्ति ॥ ३ ॥**

गतमिदम् ॥ ३ ॥

---

१. लाट्या. श्रौ. १०. १७. १०, ११.

अथ विहितक्रमेणैवाऽनुष्ठेयं प्रशंसति—

**अथ यत् त्रिवृत्पञ्चदशाविन्द्राग्न्योरयनं गोआयुषी इन्द्रकुक्षी भवतोऽसंव्याथाय ॥ ४ ॥**

असंव्याथाय दार्ढ्यायेत्यर्थः। केवलं त्रिवृत्पञ्चदशाभ्यामेव सत्रसमापने अदार्ढ्यं स्यात्, अतस्तत्परिहाराय गोआयुषी भवतः। ताभ्यां वै कथं दृढत्वमिति? तदुच्यते—'गोआयुषी ऐकाहिके गौरीवितस्वरे' इति कल्पकारेणोक्तत्वादैकाहिके। अतस्तत्र त्रिवृदादीनाञ्चतुर्णामनुष्ठानसम्भवादसंव्याथत्वम्। अत्र सत्रान्तविषये सूत्रम्—(१)'एतेनैवोत्तरे व्याख्याते, तत्राऽग्नये कामायेष्टिरपोनप्त्रीया च स्रुवहोमौ स्यातामिष्टिरेवाऽग्नये कामायोपरिष्टाच्चेदतिरात्रस्येति शाण्डिल्यः' इति। अनयोः सारस्वतयोः पूर्ववदुत्थानाभावादन्तिमातिरात्रमध्ये एवोक्तेष्टिविधानमिति। सूत्रकारमते 'अग्नये कामाय स्वाहा, अपान्नप्त्रे स्वाहे'ति स्रुवेणैवाऽपरहोमौ न त्विष्टितन्त्रमस्ति, अन्यथा सुत्याव्यवधानं स्यादतिरात्रात्परमिति। शाण्डिल्यपक्षे इष्टिरेव कर्त्तव्या न पुनः स्रुवहोमाविति सूत्रार्थः।

त्रिवृत्पञ्चदशयोः पक्षयोर्व्यत्यासवतोरेवमहां व्यात्यास इति पक्षावुक्तौ। तत्र सूत्रकारः—(२) 'पर्वणोरिन्द्रकुक्षी, पूर्वस्याऽग्निष्टोमौ त्रिवृतौ राथन्तरबार्हते पूर्वपक्ष उक्थ्ये पञ्चदशे राथन्तरबार्हते अपरपक्ष इति गौतमः, ते न पक्षयोः सञ्चारयेत्, सर्वत्र त्वेव त्रिवृत्पञ्चदशे व्यत्यासं स्यातां, तयोर्यस्मिन्ननुपेते पर्वाऽऽगच्छेत्तेनोत्तरं पक्षमुपक्रमेत, एतेनोक्तमुत्तरस्य त्रिकद्रुकेष्वि'ति। गोआयुषी विश्वजिदभिजितावेन्द्रस्य कुक्षिस्थानीयत्वादिन्द्रकुक्षी इति नामधेयम्। तावनयोः सारस्वतयोः क्रमेण पर्वणोर्भवतः। उत्तरस्मिन् सारस्वते तु व्यत्यासे पौर्णमास्यामभिजिदमावास्यायां विश्वजिदिति क्रमः। अथ गौतमस्य पक्षव्यत्यासं दर्शयति—द्वयोः पूर्वस्य सत्रस्य पूर्वपक्षे सर्वत्र त्रिवृदग्निष्टोम एव कार्यः, अपरपक्षे पञ्चदश उक्थ्य इति ब्राह्मणार्थः। तत्र राथन्तरं प्रथममहः द्वितीयं बार्हतमिति व्यत्यासमजामितार्थम्। 'ते न पक्षयोस्सञ्चारयेदि'त्यस्याऽयमर्थः—त्रिवृत्पञ्चदशे न कदाचिदपि पक्षयोः सञ्चारयेत्, तत्र नियतावेव भवेतामित्यर्थः। यथा पूर्वस्मिन् पक्षे दर्शः पौर्णमासश्च निपतेत् तद्वदत्राऽपि त्रिवृत्पञ्चदशाविति गौतमः। अथ स्वमतमाह— सर्वत्र त्वित्यादिना। तस्याऽयमर्थः—यथा पूर्वपक्षे उभावपि

---

१. लाट्या. श्रौ. १०. १८. १-३. २. लाट्या. श्रौ. १०. १८. ४-९.

साम्येन व्यत्यासं स्यातां तद्वदपरपक्षेऽपीति । यदा वृद्धिक्षयवत् स्यादेकस्मिन् पक्षे समप्रयोगो न सिध्यति तदा कथमित्याह—'तयोर्यस्मिन्ननुपेते' इत्यादिना । अनयोरेव व्यत्यासकरणे यस्मिन्ननुष्ठिते पर्वाऽऽगच्छेत् तत्रेन्द्रकुक्षिं कृत्वा तदनन्तरं उत्तरं पक्षमुपक्रमेत, न पुनः प्रथमप्रवृत्तेरिति । अयं न्यायः उत्तरत्रिकद्रुकेष्वपि समानः । 'अथ द्वितीयस्य सारस्वतस्य षोडशिमन्तावतिरात्रौ इतिवातवतोरयनेन क्लृप्ते त्रिवृत्पञ्चदशे अग्निष्टोमस्त्रिवृदुक्थ्यं पञ्चदशं राथन्तरं त्रिवृद्बार्हतं पञ्चदशं ऐकाहिके गोआयुषी' इत्यादि मशककल्पो द्रष्टव्यः ॥ ४ ॥

इति ताण्ड्यमहाब्राह्मणे सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे पञ्चविंशाध्यायस्यैकादशः खण्डः ॥

## द्वादशः खण्डः ॥

अथाऽर्यम्णोऽयनाख्यं स्वर्गसाधनं तृतीयं सारस्वतं सत्रमाह—

**अतिरात्रो ज्योतिर्गौरायुस्त्र्यहो विश्वजिदभिजिताविन्द्रकुक्षी अतिरात्रः ॥ १ ॥**

अमावास्यायामुपक्रम्य आपरिसमाप्तेः ज्योतिर्गौरायुरिति त्र्यह एवाऽनुष्ठेयः । पश्चाद्विश्वजिदभिजितावातिरात्र इति केचित् । सूत्रकारमतन्तु—पर्वणोरेवाऽभिजित्पश्चाद्विश्वजित् , यस्मिन्ननुपेते पर्वाऽऽगच्छेदित्यादिकं पूर्वमेव प्रदर्शितम् । अत्र 'तृतीयस्य सारस्वतस्य षोडशिमन्तावातिरात्रावैकाहिकास्त्रिकद्रुकाः विश्वजिदभिजितौ वा गौरीवितस्वरा' इत्यादिकः कल्पो द्रष्टव्यः ॥ १ ॥

अथ विहितसत्रस्य स्वर्गसाधनत्वं वक्तुमर्यम्णोऽयनेन स्वर्गप्राप्तिं दर्शयति—

**एतेन वाऽर्यमैतं लोकमजयत् ॥ २ ॥**

स्पष्टम् ॥ २ ॥

एतेनेत्युक्तं विवृणोति—

**यदाहुरर्यम्णः पन्था इत्येष वाव देवयानः पन्थाः ॥**

यदर्यम्ण आदित्यमूर्त्तिभेदस्य पन्था अयमित्याहुः, स एष एव खलु देवयानः पन्थाः ॥ ३ ॥

